# श्रीकृष्णचरितामृतम्

( हिन्दीभाषानुवादसहितम् )

## महाकाव्यम्

भारतशासनस्य शिक्षामन्त्रालय-
संस्कृतविभाग ( दिल्ली-केन्द्र ) तः
सम्प्राप्तार्थिकसाहाय्यम्

कविरत्नम्
कृष्णप्रसाद शर्मा घिमिरे

प्रकाशक: श्रीकृष्णग्रन्थमाला-प्रकाशन
न० १७।३५६ टङ्गाल-गहिरीधारा
काण्ठमाण्डू, नेपाल

संस्करणम् प्रथमम्-सहस्रमात्रम्
प्रकाशनतिथिः वि स २०२८, शक स १८९३, ख्रि स १९७१

भारतसर्वकारशिक्षामन्त्रालयतो
निर्धारितमूल्यम्

भारतीयमुद्रासु अङ्केषु ३० ००, अक्षरेषु तीस रुपये
नेपालीयमुद्रासु अङ्केषु ४२ ००, अक्षरेषु बयालीस रुपैयाँ

मार्गव्ययादिकं तदन्यत्

मुद्रक: विश्वम्भरनाथ द्विवेद
आनन्दकानन-मुद्रणालय
सीके ३६।२०, ढुण्ढिराज वाराणसी–१

॥ श्रीकृष्णो विजयते ॥

# यत्किञ्चित्

पूज्यपादाः !

नास्त्यस्मिन् विषये मदीयं किञ्चिदपि वक्तव्यम्। यदासीत् तत्सर्वमपि काव्यान्तर्हिततत्तत्स्थलेष्ववलोक्यत एव तत्रभवद्भिः संप्रदत्तसूक्ष्मदृष्टिभिः।

तथाऽन्यत्र यैर्नाम महानुभावैर्विद्वद्वरैर्महात्मभिश्च तदेतत्काव्यमुद्रणात् पूर्वं पश्चाच्च निरीक्षणपरीक्षणप्रोत्साहनसुसम्मतिप्रदानाभिनन्दनकविरत्नेत्युपाधिवितरणादिभिः सभाजितश्चोपकृतस्तेषां त्वहं चिरकृतज्ञोऽस्म्येव। जयन्तु ते सहृदयहृदयाह्लादकाः परगुणगृघ्नवो विद्वांसः सर्वदैवेत्थंरूपेणैव।

ततोऽन्यद्वाराणसेय (सं० वि० वि०) प्राध्यापकवर्यैः राजशास्त्रविभागाध्यक्षैः पाण्डेय-श्रीरामनारायणदत्तशास्त्रिमहोदयैः काव्यस्याऽस्य मुद्रणादिक्रियासु मत्कृतहिन्द्यनुवादसंशोधनसम्पादनादिव्यवस्थासु च यत्साहाय्यमाचरितं तदेतस्य कृते स्वकृतज्ञतां निदर्शयन् समर्पयंश्चाऽस्मै स्तुत्यचरित्राय भूरिशः साधुवादान् विरमामि विस्तरादिति शम्।

श्रीमतां श्रीचरणधूलिः

कृष्णप्रसादधिमिरे

वि० स० २०२८ माघी पौर्णमासी
मृडानीजाने पुरी

विभो !

आश्वासनं यमभयाकुलतामृतानां
सञ्जीवनं भवदवव्यथया मृतानाम्।
आलम्बनं सुकविराजगिरामृतानां
सङ्कीर्तनं जयति ते चरितामृतानाम्॥



## महाकाव्येऽस्मिन् सम्मतिप्रदातृमहानुभावानां

## सन्नामानुक्रमणिका



**पूज्या जगद्गुरवः शङ्कराचार्याः**

१ श्री शृङ्गेरीस्थो महाराजः
२ श्री द्वारकास्थो महाराज
३ श्री बदरीकास्थो महाराजः
४ श्री पुरीस्थो महाराजः
५ श्री महेश्वरानन्दो महाराज
६ श्री काञ्चीस्थो महाराजः
७ श्री करपात्रो महाराज
८ श्री अखण्डानन्दो महाराजः
९ श्रीकृष्णबोधाश्रमो महाराज

**वाराणसेया विद्वांसः**

१० श्री राजेश्वरशास्त्री द्राविड
११ श्री पट्टाभिरामशास्त्री
१२ श्री कविपति उमापति
१३ श्री हजारीप्रसाद द्विवेदी
१४ श्री राजनारायणशास्त्री
१५ श्री हरिरामशुक्लः
१६ श्री रामनारायणदत्तशास्त्री
१७ श्री रामप्रसाद त्रिपाठी
१८ श्री गोविन्दप्रसाद सुवेदी
१९ श्री निरीक्षणपति मिश्रः
२० श्री सातकडि मुखोपाध्यायः
२१ श्री बलदेव उपाध्यायः
२२ श्री कृष्णपन्त

**सम्पादकाः**

२३ श्री सूर्योदयसम्पादकः
२४ श्री गाण्डिवम्-सम्पादकः
२५ श्री कल्याणसम्पादक
२६ श्री विवेकरश्मिसम्पादकः
२७ श्री चिन्तामणिसम्पादकः

**विहारप्रदेशस्थाः**

२८ श्री रामपदार्थ शर्मा
२९ श्री अयोध्याप्रसाद सिंहः
३० श्री वेचन झा
३१ श्रीहरिप्रपन्न द्विवेदी
३२ श्री कपिलदेव शर्मा
३३ श्री विष्णुकान्त झा
३४ श्री उपेन्द्र झा
३५ श्री रुक्मिणीरमणसिंह.
३६ श्री जानकीवल्लभ शर्मा
३७ श्री उमाशङ्कर प्रसाद
३८ श्री उमाकान्त झा, श्यामापद-भट्टाचार्य, उमेश मिश्रः

**वङ्ग (कलिकाता) स्थाः**

३९ श्री सुनीतिकुमार चटर्जी
४० श्री कालीपद तर्काचार्यः
४१ श्री मधुसूदन भट्टाचार्य
४२ श्री अवधविहारी त्रिपाठी
४३ श्री ब्रह्मदत्त-रामनाथौ
४४ श्री भगवानदत्त जोशी

**उडिसाप्रदेशस्थाः**

४५ श्री श्रीनिवास रथः

**मद्र ( मद्रास ) पुरीस्थाः**

४६ श्री वेङ्कट राघवन्
४७ श्री कुञ्जुणिराजः
४८ श्री वा० ह० सुब्रह्मण्यशास्त्री
४९ श्री पि० पि० लक्ष्मीनारायण महीशूरस्थः
५० श्री कुप्पुस्वामी, अन्ये च

**महाराष्ट्रियाः**

५१ श्री एस० सुब्रह्मण्य शास्त्री
५२ श्री दत्तवामन पोतदार
५३ श्री क० माणिकलाल मुन्शी
५४ श्री आर० एन० दाण्डेकर
५५ श्री चिन्तामणि काश्यपकर
५६ श्री श्रीधर भास्कर वर्णेकर

**गुजरातस्थाः**

५७ श्री उमाशङ्कर जोशी
५८ श्री भगवदाचार्य
५९ श्रीकृष्णानन्द , काशिकानन्दः
६०. श्री रामेश्वरानन्द
६१ आर० एस वस्तनी
६२ श्री हरिनारायण झा

**सौराष्ट्रस्थाः**

६३ श्री जितेन्द्र जेटली
६४ श्री लक्ष्मीश्वर झा
६५. श्री शोभानन्द झा

**मध्यप्रदेशस्था·**

६६ श्री सुरेन्द्रनाथ शास्त्री
६७ श्री शिवमङ्गलसिंह ( सुमन )
६८ श्री एल० बो० जोशी
६९ श्री सूर्यनारायण व्यास

**राजधानी ( दिल्ली ) स्थाः**

७० श्री आदित्यनाथ झा
७१ श्री रामकरण शर्मा
७२ श्री सी० आर० स्वामिनाथन्
७३ श्री बी० पी० सिह्ना
७४ श्री योगी रामनाथः

**उत्तरप्रदेशस्थाः**

७५ श्री कमलापति त्रिपाठी
७६ श्री महाकवि वनमालीदासः
७७ श्री वैद्यनाथ झा
७८ श्री व्रजवल्लभशरण
७९ श्री रासविहारी गोस्वामी
८० श्री रङ्गिलीशरणदेवाचार्यः
८१ श्री लज्जाराम ललामः
८२ श्री निरञ्जनदेवाचार्य
८३ श्री राघवाचार्यः
८४ श्री पुण्डरीकाचार्य
८५ श्री वेदानन्द झा
८६ श्री महेश्वरानन्द
८७ श्री रामस्वरूपाचार्यः
८८ श्री श्यामसुन्दर
८९ श्री प्रभुदत्त ब्रह्मचारी
९० श्री सीतारामाचार्य

**नेपालदेशस्थाः**

९१ श्री योगी नरहरिनाथः
९२ श्री डिल्लीराम तिमसिना
९३ श्री लोकनाथ रेग्मी
९४ श्री चन्द्रकान्त अधिकारी
९५ श्री हरिदेव मिश्र
९६ श्री जीवनाथ झा
९७ श्री शिवशङ्कर झा
९८ श्री पूर्णप्रसाद ब्राह्मण
९९. श्री चूडानाथ भट्टराय
१०० श्री माधवप्रसाद देवकोटा
१०१ श्री शेषराज रेग्मी

●

# सम्मतयः

●

– १ –

**श्रीमदभिनवविद्यातीर्थस्वामिमहाराजः**

जगद्गुरु शङ्कराचार्यः शृङ्गेरीपीठाधीश्वरः

अस्मदत्यन्तप्रियशिष्यनेपालदेशवासिश्रीकृष्णप्रसादशर्मविषये नारायणस्मरणपूर्वकं विरचिताशिष समुल्लसन्तुतराम्। भवन्त आबाल्यात् सुरसरस्वती ससेव्य लब्धवैदुष्याः सरसकविताचातुरीसमलङ्कृता विराजन्ते। श्रीवेदव्यासमुनिप्रणीत भागवत सम्यगधीत्य सरसतत्कथावबोधक भक्तिरसाप्लावित भवदारचित श्रीकृष्णचरितामृताभिधेय महाकाव्यम-स्मानश्रावयश्च भवन्त। रसानुगुणपदबन्धुरमिद काव्य सहृदयहृदयावर्जकमस्तीति प्रतीम। भवद्भिरेवमन्यान्यपि काव्यान्याकलितानीति जानीमो दृश्यश्रव्यमयानि। श्रीशारदाचन्द्रमौलीश्व-रयोरकम्पानुकम्पापरम्परया काव्यानीमानि सूरिकरपल्लवान्यलकुर्वन्तु। भवन्तश्चायुरारोग्यै-श्वर्यादिभिश्चिर समेधन्तामित्याशास्ते।

● ● ●

– २ –

**श्री अभिनवसच्चिदानन्दतीर्थो महाराजः**

जगद्गुरु शङ्कराचार्यो द्वारकाशारदापीठाधीश्वरः

नेपालीयविद्वद्वरकवितारचनाचतुरश्रीकृष्णप्रसादशर्मप्रणीत भागवतमनुलक्ष्याऽऽरचित ललितपदविन्यासमधुरमतिरमणीय श्रीकृष्णचरितामृत रसिकजनमन समावर्जयतीति प्रहृष्टान्तरङ्गा शुभाशोराशिपरम्परा हृदा प्रयुञ्ज्महे यद्भगवतोर्द्वारकाधीशश्रीचन्द्रमौलीश्वर-योरनुकम्पयाऽकम्पया काव्यमिदमन्ये चैतदीया ग्रन्था. प्रचुरम्प्रचारमाप्नुयुरेतन्निबन्धा चायुरारोग्यैश्वर्यं समाप्नुयादिति शम्।

● ● ●

– ३ –

**श्री शान्तानन्दसरस्वती महाराजः**

जगद्गुरुः शङ्कराचार्यो ज्योतिर्मठाधीश्वरः

**सुधाराशयः !**

परमप्रतिभाशालिना कविवरेण श्रीकृष्णप्रसादघिमिरेण विरचितमिदमतुलितगुणधाम श्रीकृष्णचरितामृत नामाऽभिरामरामणीयक रुचिरपदावलिललितमवलोक्य साम्प्रतममन्दमा-नन्दमनुभवतितरा नितरा मदीयोऽन्तरात्मा। अपूर्वैव मनोहारिणी शैली सलक्ष्यते श्रीकृष्ण-चरितामृतस्य। अनुपममाधुर्यं दधानमिद श्रीकृष्णचरितामृत मह्यमतितरा रोचते स्म। अतोऽ-हमस्य दिशि-दिशि देशे-देशे च प्रचुरं प्रचार प्रसारञ्चाऽभीप्सन् प्रणेतारमेतस्य शुभाशीराशिभि संवर्द्धयामिति शुभ भूयात्।

● ● ●

– ४ –

**श्रीनिरञ्जनदेवतीर्थो महाराजः**

**जगद्गुरुः शङ्कराचार्यं पुरीस्थगोबर्धनपीठाधीश्वरः**

नेपालदेशाजानकविश्रीकृष्णप्रसादशर्मविरचित श्रीकृष्णचरितामृतकाव्यं श्रुत्वा प्रसीदाम᳟ । तत एवाऽस्य प्रचार प्रसारञ्च सर्वतोमुख भवत्विति श्रीचन्द्रमौलीश्वरविमलाम्बा-चरणारविन्दयो प्रार्थयामश्च । येनाऽस्य कवेरपि यश᳟ शरीर सदानन्दतुन्दलित स्यादिति ।

● ● ●

– ५ –

**श्री महेश्वरानन्दसरस्वती महाराजः**

**जगद्गुरु शङ्कराचार्यं काशीस्थसुमेरुपीठाधीश्वरः**

श्रीकृष्णप्रसादशर्ममहाभागै कविकर्मनदोष्णैर्विरचनकर्मता नीतैर्नैकैर्महनीयमहोत्त-मकाव्यकलाकलापै समज्ञाशिखरासीनैर्विरचनकर्मक्रीडाबद्धकौतुकैर्माधुर्यौदार्योदात्तावदात क्रियाकौशल्यैर्न्यवन्धि श्रीकृष्णचरितामृत नाम महाकाव्यम् । तत्र श्रीमद्भागवतानुबन्धीनि सरससरलानि प्रसादमाधुर्यप्रशसनीयरमणीयानि समुच्छलद्रसप्रवाहसन्दोहतुन्दिलानि सौदामनी-गुम्फनानीव चमत्कारचञ्चुराणि वासन्तानीव सौरभसभारसभृतानि सुमन पुञ्जरञ्जनानि त्वङ्गतुङ्गतरङ्गरङ्गमङ्गमञ्चमारोहन्ति गाङ्गे धवलनिर्मले पूरप्रवाहे सलिलधारावृन्दानीवा-नवद्यानि हृद्यानि पद्यकदम्बकानि स्वाभाविकानि राजवर्त्मनीवाऽऽयामसुन्दराणि रसभार-भरितकलसमङ्गलानीव प्रवाहमापनीपद्यमानानि सौरभाणि दर्श-दर्शं श्राव-श्राव सहृदयमहोदयास्तृप्यन्ति धारयितुमिवाऽऽत्मान न क्षमन्ते चाऽऽपादमस्तक सम्पूर्यन्त इवाऽऽह्लादसुधासरोवराऽवगाहनै᳟ । तदेतल्लावण्यकारुण्यारुण्यनिधानाय कोटिकोटिकाम-कमनीयाय शृङ्गोरोद्गारगौरवाऽऽगूरितदीप्तये भगवते श्रीकृष्णचन्द्राय समर्प्यमाणमपि तदनुग्रहगृह्यम।णमपि मनीषिनिवहेभ्योऽन्तेवासिसहस्रेभ्यो जनतासौजन्यविस्फुरितेभ्योऽवश्य-मवश्य तोषकर भूयो-भूयो विभूयादित्याशास्ते ।

● ● ●

– ६ –

**श्री चन्द्रशेखरेन्द्रसरस्वती महाराजः**

**जगद्गुरु शङ्कराचार्यं कञ्चीकामकोटीपीठाधीश्वर**

Sri Krishna Prasad Sharma Ghimire, visited this place and had darshan of His Holiness

He showed his manuscript copy of "Srikrishna Charitamritam" and Kathopanishad Kavyam," Poornahuti Natakam" to their Holinesses and read out excerpts from the same Their Holinesses were pleased to note the style and the Bhakti Rasa in his works

I am directed to convey Their Blessings for his long life and prosperity so that he may being out many more useful books in Sanskrit

● ● ●

– ७ –

**करपात्रस्वामी**

नारदघाट, वाराणसी

स्वाभाविककविताप्रवाह सरससरलगीर्वाणगिरा समुद्गमद्भि श्रीकृष्णप्रसादशर्ममहाभागैरुद्ग्रथित श्रीकृष्णचरितामृतकाव्यरस निपीय भृश प्रसीदति चेत । सर्वथा श्रीमद्भागवतरसानुकारिसन्दर्भ सर्वस्य श्रेयसे भूयादिति नारायणस्मरणात्मक शुभाशीराशि वितराम ।

• • •

– ८ –

**श्री स्वामी अखण्डानन्द सरस्वती**

अध्यक्षो भारतसाधुसमाजस्य । वृन्दावनम्

यतस्तत कविमुखेनैव विश्रुत तद्रचित श्रीकृष्णचरितामृताभिधेय भगवत. सुश्लोक्य महाकाव्यमय विविधालङ्कारध्वनिलक्षणादिभि. समुज्जृम्भित तद्यशोऽस्माभि । नितरा प्रमोदतेऽन्तरङ्गम् । लोकेऽस्य प्रसिद्धिरस्तु ।

• • •

– ९ –

**श्रीकृष्णबोधाश्रमो महाराजः**

जगद्गुरु शङ्कराचार्यः ( जोशीमठ )

अविरलपदपक्ति पद्मनाभस्य पुण्या चरणकमलधूलिग्राहिणी भारतीयम् ।
घनतरमुपघात श्रेयस श्रोत्रसङ्घात् सुरसरिदिव सद्यो मार्ष्टु माङ्गल्यहेतु ॥
स्वस्ति व पाराय तमस परस्तात् ।

• • •

– १० –

**पद्मभूषण, पण्डितराजः, श्री राजेश्वरशास्त्री द्राविडः**

विद्वच्छिरोमणि शास्त्ररत्नाकर., ब्रह्माघाट वाराणसी

"यं प्रशसन्ति विद्वास स ज्ञेय पुरुषोत्तम" इति न्यायेन विद्वत्प्रशसैवैकमत्येन क्रियमाणा विद्याया अवदातत्व प्रकाशयतीति हेतोरय कविर्लोकोत्तर यश प्राप्तवानित्यस्माभिर्विलोक्यते। प्रेम्णाऽस्य सर्वविधामुन्नतिं जगदीश्वरो विदध्यादिति तच्चरणकमलयोः प्रार्थ्यते चेति ।

• • •

– ११ –

**श्री पट्टाभिरामशास्त्री**
विद्यासागरः, शास्त्ररत्नाकर, विद्यावाचस्पतिः
सस्कृतविश्वविद्यालय, वाराणसी

नेपालाभिजनेन श्रीकृष्णप्रसाद-घिमिरे महोदयेन विरचित 'श्रीकृष्णचरितामृतम्' इति ग्रन्थ यत्रतत्रावालोकयम्। श्रीमद्भागवतस्य प्राय सर्वोऽप्यश पण्डितवरेण पद्यरूपेण वर्णित। अष्टपञ्चाशत्सर्गपरिमितोऽय ग्रन्थो विशालकाय, पद्यानि सुललितानि, सरसानि, विविधैश्छन्दोभिर्ग्रथितानि विदुषा मनोरञ्जकानि च वर्तन्ते। तत्र-तत्र भक्तिरस सुचारु ग्रन्थकारेण प्रवाहित। ग्रन्थोऽयमतोवोपादेय, प्रकाशनार्हश्च। ग्रन्थकारस्य सर्वविध श्रेय कामयमानो भगवन्तं पशुपतिनाथमभ्यर्थये—यदस्य ग्रन्थस्य देशे सर्वत्र भूयान् प्रचारो भवत्विति।

• • •

– १२ –

**श्री उमापति कविपतिः**
मदैनी—वाराणसी

## कविकाव्ययोः शुभाशंसनम्

(१)

नेपालभू स्वजनुषाऽलमभूषि येन कृष्णप्रसादकविना कविनायकेन।
तस्याऽतिचारुरचनोपचित व्यलोकि सद्धामकृष्णचरितामृतनाम काव्यम्॥

(२)

नामाऽपि यस्य निखिलोत्तरमाधुरीणा धामाधरीकृतसुध वसुधाऽभिरामम्।
श्रेयोवह हृदयहारि रसातिरेकाद् गोत गिरा श्रवणयोरुतवौपनीतम्॥

(३)

तस्यैव चेद्भगवतो व्रजकेलिपूर्वं पूर्णं चरित्रमिह चित्रितमस्ति काव्ये।
एतावतैव गरिमाऽस्य गिरामगम्य किं वर्ण्यता सुकवितारससप्लुतश्चेत्॥

(४)

काव्य त्विद सरलहृद्यपदोपबद्धै नानासुवृत्तसदलकृतिशालिपद्यै।
सगुम्फित सहृदयस्य न कस्य जायात् चेतोहर हरिकथामृतसारधारम्॥

(५)

धीमेर्युपाधिकमहाकविरेष नाम्ना कृष्णप्रसाद इह साधितवाक्प्रसाद।
काव्यं विधाय गुरुकायमथाऽयमन्यान् कत्यातनोत् सुरुचिरान् प्रचुरान्प्रबन्धान्॥

(६)

सस्मारयन्नयमतीतकवीन् कवित्वशक्त्या स्वया जयति दीपितदिव्यकीर्त्ति।
जीव्याच्छरच्छतमुमापतिमिष्टमेतद् याचेतरा कविपति कमलापतिञ्च॥

• • •

– १३ –

**श्री डा० हजारीप्रसाद द्विवेदी**

का० हि० विश्वविद्यालय।

नेपालके विद्वान् सस्कृत-कवि प० कृष्णप्रसाद घिमिरेजीके ‘श्रीकृष्णचरितामृत’ काव्यको देखकर बडी प्रसन्नता हुई। कोई ५८ सर्गोमे २६०० सौ श्लोकोका यह महाकाव्य बडी ही प्राजल-भाषामे लिखा गया है। प० कृष्णप्रसादजीका सस्कृत-छन्दोपर पूरा अधिकार है। अलकार उनकी भाषामे अनायास आ जाते है और सरस-पदावली तो उनके काव्यका निजी गुण है। इस युगमे जब सस्कृतभाषाके अध्ययनकी ओर लोगोके प्रयास शिथिल हो रहे हैं प० कृष्ण प्रसाद जैसे विद्वान्-कविको देखकर आशा होती है कि अभी भी इस भाषामे अद्भुत प्राणशक्ति विद्यमान है।

प० कृष्णप्रसाद घिमिरे जैसे मनस्वी विद्वान्का उचित सम्मान होना चाहिए। मुझे यह जानकर कष्ट हुआ कि उनका यथोचित सम्मान नही हो रहा है। वे संस्कृत-भाषाके योग्य कवि और विद्वान् हैं, ‘यथालाभ-सन्तोष’ वृत्तिवाले प्राचीन पडितोके महान् आदर्शके अनुगामो हैं। इस उत्तम-काव्यकी रचना करके वे सभी सस्कृत-प्रेमी सहृदयोकी बधाईके उचित-पात्र सिद्ध हुए है। सस्कृतमे रुचि रखनेवाले अधिकारीवर्ग अवश्य विचार करेगे हा।

● ● ●

– १४ –

**श्री राजनारायण शास्त्री**

सञ्चालक: शास्त्रार्थमहाविद्यालयस्य

प्रधानमन्त्री काशीविद्वत्परिषद

अध्यक्ष उ० प्र० सस्कृतविद्यालयाध्यापकसङ्घस्य

विविधशास्त्रालोचनप्रत्यालोचनप्राप्तदीक्षै पण्डितप्रवरैर्विलक्षणा काव्यनिर्मिति-नैपुणीमादधानै श्रीकृष्णप्रसादशास्त्रिघिमिरे-महाशयै कलिकल्मषापनोदि रसायन तत्रभगवद्-द्वैपायनचर्चित महापुराण श्रीमद्भागवत नाम श्रीकृष्णचरितामृताभिधानेन परिवर्त्त्य सुबोधया सरलातिसरलया भावगभीरया श्रुतिसारसर्वस्वदुधा रीत्या निबद्धम्। तदिदमालोच्य स्वल्पीयसाऽयासेन साक्षाद् भगवतो निरवद्य चरित्रज्ञान समधिगम्यत इति।

नयपालदेशीयमहाकविभि कृतोऽय विलक्षण प्रयास सकलस्य सस्कृतवाङ्मयस्य समग्रस्य च सस्कृतसमाजस्य कृते महदिव गौरवमुपस्थापयति। यथास्थान छन्द परिवर्त्तन-माकर्षकभावशैलीसमारोहणे दार्शनिकदिशा सिद्धान्तसमुपस्थापने विशेषतो दशमस्कन्धी-यार्थग्रहणे मनागपि मनो नापरज्यति।

मन्येऽवश्यमेतद्ग्रन्थकर्तुर्ग्रन्थाना ग्रन्थस्य चास्य काव्यकथाभावभक्तिरसिकै. क्रियेत समादरातिशय इति कामयते।

● ● ●

— १५ —

**श्री हरिरामशुक्ल:, नव्यन्यायाचार्यः**
**ब्रह्माघाट वाराणसी**

श्रीमद्भि कृष्णप्रसादशर्मघिमिरेमहोदयैर्निर्मित श्रीकृष्णचरितामृतामिध महाकाय महाकाव्य मया यत्र-तत्र श्रुतम्। कविवरस्येय कृति समेषामपि विद्यावतामवश्यमवश्यमपूर्वं महानन्द यद्ब्रह्मानन्दसहोदरमभिधीयते, विदधातीति चैतदीयप्रशसापत्रसमूहमवलोकयता स्फुटमेवेति। शीघ्रमेवाऽस्य प्रकाशनेन लोकोपकारो भविष्यतीति विश्वसिति।

• • •

— १६ —

**पाण्डेयः श्री रामनारायणदत्तशास्त्री**
**व्याकरणसाहित्याचार्यः प्राचार्य. स० वि० वि० वाराणसी**

## श्रीकृष्णचरितामृतकाव्यस्य कवेश्चाऽभिनन्दनम्

भातुनन्दिन्याश्चेतश्चन्दनस्य यशोदानन्दनन्दनस्य निखिलैनसा निकन्दनस्य सतर्जितसक्रन्दनस्याऽऽवर्जितसनन्दनस्य जितवामदेवस्य जीवितकामदेवस्य नतनामदेवस्य जयदेवाऽऽराध्यदेवस्य देवाधिदेवस्य ग्रीवाविलसितसितकुन्दस्य भगवतो मुकुन्दस्य पादारविन्दमकरन्दगुणाना रसिका रसिकाग्रगण्या समुपार्जितश्रीकृष्णप्रसादशर्माण श्रीकृष्णप्रसादशर्माण सहृदयशिरोमणयो दिवि द्युमणय इव मरीचिभि प्रतिभावीचिभिर्भुवि विद्योतमाना निधयो नानाविद्योत्तमाना मानातीतगुणग्रामाभिरामा लक्षितलोकविवरा महाकविवरा: ।

सादर सानन्दभर चाऽभिनन्दन श्रीमता धीमता तत्रभवता भवता कृतेऽस्माभिर्विहित हित विलसतुतरा सुतराम्।

मधुमधुरिमस्फीतो निपीतो मया समया तत्रभवतो लीलाशुकमुखादिव श्रीमतामेव श्रीमुखारविन्दाभिगलितोऽमृतद्रवमय पुराणपारिजातफलसमुद्भूत इव काव्यरसोऽननुभूतपूर्वं पूर्वकवीना काव्यसमुदायादप्युत्कृष्टतमतमोध्वसनशीलत्वादमृतत्वप्रदानपाटवाच्च।

किमुच्यतामिह कियल्ललितोचितसन्निवेशचारुत्वम्? कियान् मधुरो बन्ध.? कियद्वासुधासोदर मोदरङ्गप्रदमनन्यसाधारण साधु माधुर्य्यम्? प्रतिपद्य कोऽप्यनवद्यो भावराशिरुन्मिषति। कोऽप्यगणनीयो गुणाना गरिमा गर्जति? अन्यत्राऽघटिता घटना सघटना किमप्यद्भुत पाण्डित्य प्रकटयति। इह सर्वकमणा समन्वयोऽनन्वय । दर्शनानि चादर्शस्वरूपाणि संस्थितानि। भक्तिभावाम्भोधिस्तुत्तालतरङ्गतामुद्वेलताञ्चाऽऽलिङ्गति। पदे पदे रसनिर्झरो झरति। श्लोके-श्लोके पुण्यश्लोकस्य भगवत सुश्लोक्य यशोऽवलोक्यते समुद्भासित सितम्। वय तु विचारयामो धारयामश्चेम विश्वास यत् काव्यस्यैतस्याहो! प्रौढिपरिपाक! अहो गाम्भीर्यम्! किञ्चीहो! गीस्तरङ्गभङ्गी! किमधिकेन प्रतिपदमेतस्य साहित्यसारसञ्चयैश्चिर चेतश्चमत्कुरुते चेति भावुकजनमानसप्रत्यक्षैकसाक्षिकमिति। काव्यस्याऽस्य रसपानेन नितरा मोमुद्यमानमानसा वयमधुना मधुना मत्ता इव कलकण्ठा सोत्कण्ठं नवभिरनवद्यै. पद्यैर्युष्मानायुष्मत कवीन् काव्यञ्चेद सस्तुम —

श्रीश्रीकृष्णप्रसादशर्मकविराट्वक्त्रात् समाकर्ण्यं तत्
तेनोन्नीतमतीव सौष्ठवपरं काव्य रसव्यञ्जनम् ।
नव्यं भव्यमलङ्कृत धृतगुण वैदर्भरीत्या रत
भावोद्रेकभृत सभक्तिविभव मोमुद्यते मानसम् ॥ १ ॥

कालीदासोऽपि दासोऽभवदिह भुवने भासते नाऽपि भासो
वीतोत्कर्षं स हर्षोऽमरुरपि समभून्नाभिनन्दोऽभिनन्द्य ।
माघ' साघ स वा भारविरपि समभूद्भारविक्रान्तचेता
जेता श्रीकृष्णशर्मा सुकविरभिनवोऽय समेषा कवीनाम् ॥ २ ॥

विद्वॅल्लोकेऽवलोके तव विमलयशश्चन्द्रिकाया चिताया
राका सा काऽप्यमाऽभूत् सपदि समभवस्तेऽपि काका बलाका ।
कैलासप्राप्तिरूप्यात् प्रतिगिरि गिरिजा मार्गते भार्गवेज्य
पद्मा पद्मायताक्षोऽप्यभिलषति धिया नीरधौ क्षीरसिन्धो ॥ ३ ॥

कलिन्दकुलनन्दिनीमभिनवामहो ! नव्यया
कवित्वकलयाऽनया रतिमयी हरेरानयन् ।
अवाङ्मनसगोचर मनसि वाचि सचारयन्
समुज्ज्वलविभान्वितो जयति कृष्णरूपो भवान् ॥ ४ ॥

पुराणनिगमाटवीपरिवृढोऽसि पञ्चाननोऽ-
थवाऽस्यखिलदर्शनाब्ध्यटनशीललीलस्तिमि ।
सुकीर्तिकुलकन्यकाकरसरोजलाल्योऽथवा-
निकुञ्जरसभृत्कथामृतझरोऽसि लीलाशुक ॥ ५ ॥

ससारे रसरहिते च सारशून्ये कसारेर्नवचरितामृत विधातु ।
केऽमो रे वयमबुधा बुधेन्दुमौलेर्घेमोरे इति सुकवेर्गुणान् प्रगातुम् ॥ ६ ॥

काव्येऽतिकमनीयेऽस्मिन् सर्वधर्मसमन्वय ।
सर्वदर्शनसिद्धान्तसगृहीति समीक्ष्यते ॥ ७ ॥

भक्तिर्भागीरथी भाति कर्मयुक्ति कलिन्दजा ।
काव्यत्रिवेण्यामेतस्या ज्ञानसारा सरस्वती ॥ ८ ॥

श्रीकृष्णरचित काव्य श्रीकृष्णचरितामृतम् ।
श्रीकृष्णप्रीतये भूयाच्चेतश्चोर सचेतसाम् ॥ ९ ॥

• • •

– १७ –

**श्री रामप्रसाद त्रिपाठी**

प्रा० व्या० द० आचार्य, व्याकरणविभागाध्यक्षः,
स० वि० वि० वाराणसी

निखिलशास्त्रपारावारपारदृश्वानो महात्मानो विद्वांसो वैराग्यरागरसिकाः सन्तश्चेदं जानन्त्येव, यदनादिकालतः परिसृतप्रवाहे दुरवगाहेऽगाधे चस्मिन् भीमे भवार्णवे निमज्जतां स्वोद्धाराय कञ्चिदनपायमुपायमजानतां परमं विषीदतां च जनानामेकमेव सुदृढं सन्तरणोपायभूतं श्रीमद्भागवतं शास्त्रम् ।

निगमकल्पतरोः फलं श्रुतिसारसर्वस्वं चैतद् भगवतः श्रीकृष्णस्य प्रत्यक्षा वाङ्मयी मूर्तिरद्याऽपि कराले कलिकाले विराजमानं गर्जति भक्तजनसमुद्धाराय चेति परमं हर्षास्पदम् ।

तदेव श्रीमद्भागवतं तत्तदंशतो गृहीत्वा श्रीकृष्णचरितामृताभिधानं महाकाव्यं विरचय्य 'घिमिरे, इत्युपाधिभाजो नयपालदेशाभिजना कविप्रवरा श्री-श्रीकृष्णप्रसादशर्मशास्त्रिणः स्वर्णं सौरभयोगं प्रापकाशन्निति चाऽनिर्वचनीयप्रमोदावसरं समुपस्थितं सचेतसां विदुषाम् । महाकवयश्चेमे कठोपनिषदीयं नाचिकेतोपाख्यानमप्यधिकृत्य महाकाव्यं प्रास्तुवन् ।

एतादृशस्य महनीयमहाकाव्यस्य प्रकाशनं राष्ट्रस्य परमकर्तव्येष्वन्यतममस्ति, येन समाजः शाश्वतिकीं शान्तिममन्दमानन्दं च लभेत । भगवन्तं भवानीपतिं प्रार्थये यदस्य महाकवेर्दीर्घायुष्यमस्य कृतीनां महान् प्रचारश्च भूयादिति ।

● ● ●

– १८ –

**श्री डा० गोविन्दप्रसाद सुवेदी**

एम० ए०, द० व्या० सा० आयुर्वेदाचार्यः,
प्राचार्यः स० वि० वि० वाराणसी

स्वजनुषा नेपालराज्यमलङ्कुर्वद्भिः श्रीकृष्णप्रसादशर्मकविवर्यैर्विरचितं श्रीकृष्णचरितामृताभिधेयं महाकायं महाकाव्यं तदास्यमुखारविन्दादेव मयाऽश्रावि सुभृशं सम्प्रदत्तमनोयोगेन । विलक्षणप्रतिभावभासितवपुष एते महानुभावाः काव्येऽस्मिन् स्वकीये स्वबुद्धिवैलक्षण्यं प्रदर्शयन्तः स्थले-स्थले मार्मिकदार्शनिकसिद्धान्तचमत्कारसनाथं श्लेषोत्प्रेक्षोपमायमकाऽर्थान्तरन्यासादिविविधालङ्कारविहितयथास्थानसमावेशं वैदर्भीरीतिप्रायं सप्रसादं प्राञ्जलं समुत्कृष्टतरं नैकविधसमुज्जृम्भितरसविचित्रवृत्तिविशेषं गुणगणगरिमावभासमानं सल्लक्षणलक्षितं नानावृत्तिविराजितपूजितं श्रुतिमनोहरच्छन्दोविचितिपरिपूजितकूजितं नीतिवाक्यामृतविलसितं समस्तजगतीतलमुकुटायमानस्यैकमात्रावशिष्टसनातनहिन्दूराष्ट्रस्य गोरक्षकस्य नयपालदेशस्य सन्महिमानुरूपं विश्वसर्गविसर्गादिदशलक्षणलक्षितस्य श्रीकृष्णाभिधेयस्य परमतत्त्वस्य प्रतिपदं प्रतिपादकं श्रीमद्भागवतमहापुराणस्य सत्सारस्वरूपमनुत्तममिदं महाकाव्यमलं विरचय्य सुरभारतीवरिवस्याव्रतपरिपूर्तिमिव चक्रुरिति मन्ये ।

● ● ●

– १९ –

**श्री निरीक्षणपति मिश्रः**

व्याकरणविभागाध्यक्ष , काशी हिन्दू-विश्वविद्यालय

श्रीमद्भगवत्पशुपतिनाथसनाथपरमपवित्रनेपालदेशवास्तव्येन सुगृहीतनामधेयेन विद्वद्वरेण कविशिरोमणिना श्रीकृष्णप्रसादशर्मंघिमिरेमहोदयेन निर्मित श्रीकृष्णरसपीयूषपूरित सुधीभूय सुधियामन्त सन्तोषप्रद सकलमहाकाव्यलक्षणोपेत बृहदाकारमष्टपञ्चाशत्सर्गात्मकमन्वर्थनामक 'श्रीकृष्णचरितामृतम्' महाकाव्यमक्षिसमक्षीकृत्य न मन्दमानन्दमविन्दम् । अस्य महाकाव्यस्य प्रसादगुणोपेतानि नावद्यानि हृद्यानि पद्यानि हिन्दीभाषायामनुवादञ्च निपुण निरीक्ष्य 'गद्यपद्यमय वाक्य भवेद् गङ्गाप्रवाहवत्' । 'तया कवितया कि वा कि वा वनितया तया । पदविन्यासमात्रेण यया नाऽपहृत मन '॥ इत्यादिवचासि विनायास प्रागेव स्मृतिपथमायान्ति । अस्य कविकर्मणो विशिष्ट वैशिष्ट्य मनसि निधायैव गुणगृह्या भारतस्य विभिन्नप्रान्तनिवासिन पूज्यचरणा जगद्गुरवो धर्माचार्या महामनसस्तपोधना महात्मान, वन्दनीया विद्वद्वरेण्या भारतीयसस्कृतिसस्कृतसरक्षणतत्परा अधिकारिणश्च गुणाधिके वस्तुनि मौनिता दोषमवधार्य महाकाव्यस्याऽस्य विषये समादरभराणि स्पृहणीयानि गुणवर्णनपराणि प्रशस्तिपत्राणि शेमुषीजुषेऽस्मै विदुषे वितीर्य महाकविमेन सभाजितवन्त, सत्कृतवन्तश्च 'सूर्योदयपत्रसम्पादका विद्वद्वरश्रीवैजापुरकरमहोदया 'श्रीकृष्णचरितामृतस्य' परिचय कानिचित्पद्यानि च सूर्योदयपत्रे विगतवर्षे सादर प्रकाश्य ।

'कृष्णभावरसभाविता मति क्रीयता यदि कुतोऽपि लभ्यते । तत्र मूल्यमपि लौल्यमेकल जन्मकोटिसुकृतैरवाप्यते' ॥ इति रीतिमनुसरदिद महाकाव्यमवश्य कलिमलापह भारतीयसस्कृतिगीर्वाणवाणीसौभाग्यवर्धकमाचन्द्रतारक श्रीकृष्णशर्मयशोराशिप्रकाशक सुचिर सर्वत्र प्रचार निजगुणमहिम्ना प्राप्नुयादिति भगवन्तमाशुतोष श्रीविश्वनाथ सम्प्रार्थ्य विरमति महाकवेरस्य सर्वविधकल्याणसतृष्णमतिर्मिश्रो निरीक्षणपति ।

● ● ●

– २० –

**श्री सातकडिमुखोपाध्यायशर्मा**

प्रकाशनाधिकारी, वाराणसीवास्तव्य

नेपालदेशाभिजनै सुकविवर्यै श्रीमद्भि कृष्णप्रसादशर्मभिर्विनिर्मित श्रीकृष्णचरितामृताख्य महाकाव्य मया कृत्स्नतो व्यालोकि । अशतस्तु स्वय कविवराणा मुखारविन्दात् कर्णरसायनतानलयसमुपेततया श्रुत च । यद्यपि कवे साफल्य सहृदयै रसज्ञैरेव निरूपयितु शक्यते, नाऽस्मादृशैर्व्याकरणन्यायशास्त्रपरिशीलनकर्कशमतिभिस्तथापि यदस्य महाकाव्यस्य पाठेन श्रवणेन चाऽमन्दानन्दसन्दोहमनुभवति मे चेत इति साग्रह मुक्तकण्ठ चोररीकरोमि । भगवत श्रीकृष्णस्य चरित पञ्चसहस्रसवत्सरैरनेकैरनेकधा कथित वर्णित श्रुत च तथापि मधुमासे द्रुमा इव प्रतियुग प्रतिकवि तन्महनीय चरित नवनवायते इति न परोक्ष सचेतसाम् । इदानी तत्तु पुनरपि श्रीकृष्णशर्मविरचिते काव्ये सत्यतामापेति निर्विवादम् ।

काव्येऽस्मिन्, प्रतिसर्ग प्रतिपद्य छन्दोग्रथनचातुरी, अलङ्कारविन्यासवैदग्धी, रससञ्चारनैपुणी पदे-पद आवर्जयन्ति सहृदयाना हृदयानि । प्रसादगुणभूयिष्ठत्वान्नाऽत्र केवल

शास्त्रेषु कृतश्रमाणां विदुषां प्रवेशोऽपि त्वन्येषामपि कथञ्चित् लब्धगीर्वाणवाणीपरिचयानां सुखसञ्चार ।

कामये महाकाव्यस्याऽस्य कृत्स्ने जगतीतले संस्कृतानुरागिषु भूयास प्रचारम् । कवेश्च सुचिरमायुरारोग्यादिक येनाऽयमित्थ काव्यप्रसूनैर्गीर्वाणसरस्वतीपादपङ्कज समर्चयितु शक्नुयात् । इति निवेदयति ।

• • •

– २१ –

श्री बलदेव उपाध्यायः
प्राक्तनकार्यसञ्चालक, अनुसन्धान-संस्थान
हिन्दू विश्वविद्यालय, वाराणसी

नेपालदेशीयकविवरश्रीकृष्णप्रसादघिमिरे–विरचित श्रीकृष्णचरितामृतमहाकाव्य नितान्त रससन्दोहसवलित सुभगवच पेशल श्रुतिमधुर च श्राव श्राव नितराप्रसीदति मदीय मानसम् । प्रथमतस्तु भगवत श्रीकृष्णस्य चरितमेव मधुर वर्तते । तदुपरि गीर्वाण-वाण्येव कमपि मधुरिमानमावहति । उभयो सयोगो महाकवे॰ प्रतिभया समुल्लसितो माधुर्यातिरेकमातनुत इत्यत्र किमपि वक्तव्य वर्तते नाम । महाकाव्यमिदं रसिकजनेषु समादर-भाव भजतामिति निवेदयते ।

• • •

– २२ –

श्रीकृष्णपन्तः साहित्याचार्यः
अध्यक्षः सम्पादकश्चाच्युतग्रन्थमालायाः
अध्यक्षः गो० संस्कृतविद्यालयस्य, वाराणसी

'घिमिरे' इत्युपनामा विजयते कृष्णप्रसादशर्मा कविपुगव । वचनरचनाऽऽवर्जित विचक्षणविलक्षणमनसोऽस्य कृष्णचरितामृत नाम विद्वन्मनोमोदमावहन् महाकाव्य स्थाली-पुलाकन्यायेन यत्रतत्राऽवलोक्य नितरा प्रसीदत्यस्माक चेत । श्रीकृष्णस्वरूपनिर्देशनपरेऽस्मिन् महति महाकाव्ये चाऽष्टपञ्चाशत्सर्गा विविधछन्दोविचितिनिबद्धा विद्यन्ते । अनवद्यानि निखिलानि पद्यानि चाऽतीवहृद्यानि सुललितपदकदम्बगुम्फितानि भावगभीराणि कवेरस्य नैसर्गिकी काव्यनिर्माणशक्ति भृश द्योतयन्ति ।

अत्र महाकाव्ये मञ्जुलानि पदानि रसा भावा अलङ्कृतयो गुणगणा रीतिततयश्च वाचामधिदेवताया निरवग्रहानुग्रहेण कविपुगवस्य वश्यानीवाऽहमहमिकया यथास्थान स्वय पुर स्फुरन्तीव विलोक्यन्ते ।

धन्योऽय कविपुगवो भगवत श्रीविश्वनाथस्याऽनुग्रहेण शतायुर्भवतु । अन्यान्यपि एतादृशान्युत्तमकाव्यानि निर्माय लोककल्याण विदधात्विति शुभाशसाभिरनन्ताभिरस्य महाकाव्यदर्शनविमुग्धहृदयोऽह रससिद्धमेन कविवरमभिनन्दयामीति ।

• • •

**श्री गोविन्द नरहरि वैजापुरकर**
एम० ए०, न्याय-वेदान्त-साहित्याचार्यः
सम्पादक : सूर्योदयस्य
श्रीगङ्गाधरशास्त्रि-भवनम् घासीटोला वाराणसी

सरससाहितीस्रोतस्विनीविहरणवैदग्धिजुषा कवितावनितास्वयवृतदयिताना तत्र भवता श्रीकृष्णप्रसादघिमिरे-कविरत्नानां 'श्रीकृष्णचरितामृतम्' नाम महामहाकाव्य दृष्ट्वैव तस्मिन् रत्नाकरेऽवगाहनमोहपरवशैरस्माभिरकस्मात् प्रायो वर्षद्वयात्पूर्वमवगाहितम्। तत्र च समुपलब्धानि रत्नानि सूर्योदयस्यैकस्मिन्नङ्के सयोज्य सहृदयाना पुरत· समुपस्थापितानि च। नून घिमिरेमहोदय आनखशिख कवितोपादानद्रव्यैरेव वेधसा निर्मित इति महान् प्रमोदावसरो गर्वावहञ्च वृत्त हिन्दूराष्ट्रस्य नेपालस्य तदीयसस्कृतिप्रसविनो भारतराष्ट्रस्य चाऽभिजनाना विदुषाम्। महामहाकाव्यमिद निगमकल्पतरुफलायमानस्य भागवतस्य सारसर्वस्वमिति कथने नातिशयोक्तिलेशोऽपि। सत्येवमपि तदीयसंवादोऽय कवे·पूर्वकल्पना विलसितेन नितरा नवायमाण·। अत प्रत्न-नूत्न-सङ्गमस्थलीभूत महामहाकाव्यं भावुकानां भक्ताना सारस्वतानाञ्चोभयो कृत आप्यायनकरम्। घिमिरे-कविरत्नैरन्यान्यपि नैकानि महाकाव्यानि, खण्डकाव्यानि, मुक्तकानि, दृश्यकाव्यानि च विरचितानि। अविच्छिन्न विरच्यते च। अद्यावधि तैस्त्रयोदश-दृश्य-श्रव्यकाव्यानि सग्रथितानि तानि चाऽस्माभिरवलोक्य दृशो पारणा विहिता।

सौभाग्यमस्माक यदेनेषु महामहाकाव्यस्याऽस्य प्रथमखण्डो हिन्दीभाषानुवादसमङ्कृत प्राकाश्यमुपगच्छति। यो हि ५८ अष्टपञ्चाशत्सर्गात्मक शताना षड्विंशतिश्लोकै समलङ्कृतो दृश्यते। नूनमेतद् दृष्ट्वा सहृदया· सरस्वतीसमुपासकास्तु नितरा मोदवार्धौ निमग्ना भवेयु। तथापि व्यवहारे लक्ष्मीसमुपासकानामपि कर्तव्य यदेतादृशस्य काव्यस्य समुचित सम्मानन विधेयम्। तदैव तेऽरसिकत्वापवादनिर्धौता सारस्वतधारासमाप्लाविताश्च भवेयु। अत एव भारतशासनस्य प्रदेशशासनाना नेपालराष्ट्रशासनस्य वैश्विकाना सस्कृतप्रणयिना राष्ट्राणा च साहित्यिकसम्मानकर्तृणा 'राष्ट्रिय-एकेडेमी' ज्ञानपीठादिसस्थानानामिद कर्त्तव्यं यदय महाकविर्यथा निरतिशय प्रोत्साहित इतोऽपि प्रशस्यतमा काव्यसृष्टि विदध्यात्तथा प्रयतेरन्। नूनमस्माक दृष्ट्या महामहाकाव्यमिद वर्तमानयुगीनसर्वोच्चभारतीयसस्कृतसाहित्यप्रतिनिधिभूतम्। शासनै· साहित्यिकसस्थानैर्विद्वद्भि सहृदयैश्च काव्यरत्नमिद तदीयगौरवानुरूप प्रोत्साह्येत चेत् तेषामेव गुणैकपक्षपातित्वमभिव्यञ्जयेत। कवेरस्य पुनस्तेन न किमपि ह्रीयेत, नापि वर्धेत, यतोऽय निरूपाधिको देववाणीसमुपासक कर्तव्यमिदमितिकरोत्येव। आशास्यते यत्सम्बद्धा सर्वे विज्ञा महामहाकाव्यस्याऽस्य समुचिता सत्क्रियाञ्चाऽपचिति विधाय स्वात्मन· सहृदयत्वं प्रकटयिष्यन्तीति मया निवेद्यते।

● ● ●

– २४ –

**श्रीरामबालकशास्त्री**
सस्कृतगाण्डीवमित्यस्य सम्पादक
रामापुरा वाराणसी

सच्चिदानन्दश्रीकृष्णचन्द्राद्भुतचरितमधिकृत्य घिमिरे-श्रीकृष्णप्रसादविरचित श्रीकृष्ण-चरितामृतमिति महाकाव्यस्य कतिपयस्थान श्रीकृष्णप्रसादाच्छ्रुतमस्माभिर्गतवर्षे। पूर्वन्तु श्रीकृष्णचरितमेवाऽद्भुत तदुपरि तस्य रचयिता चापि श्रीकृष्ण एव स्यात् तदा तदद्भुतत्वाति-शायित्व कथ न प्राप्तमत्रेति प्रतिपादयतो मम चेतो नितरा प्रसीदति काव्यस्याऽस्य साङ्गोपाङ्गसम्वादगतयोगेन। अतोऽत्र महाकाव्यप्रणयने रचनाकौशलेन सह प्रणेतु धैर्य-प्राज्यमपि सहज साधुवादमर्जयेत्। वर्धकिकार्य नापितेन, नापितकार्यं वर्धकिना चेति विचित्रा दुर्नीतिमवलम्बमाने शासनेऽस्यापि सहृदयस्येति शुभा भावुकता सर्वोपरिताञ्चाऽऽशसन् तन्मुद्रितरूप द्रष्टु पुन पुन श्रीविश्वेश्वर प्रार्थयामि।

• • •

– २५ –

**श्री चिम्मनलाल गोस्वामी**
गीतावाटिका ( गोरखपुर )
सम्पादक—कल्याण तथा कल्याण-कल्पतरु

पण्डितश्रीकृष्णप्रसादशर्मघिमिरे–कविना विरचित श्रीकृष्णचरितामृताभिधेय महाकाय महाकाव्य विविधरसभावच्छन्दोलङ्कारादिपरिपूरित दृष्ट्वा विश्रुत्य चाऽस्य कवे सुमुखादेव यत्र-तत्रत्यान् कतिपयसर्गस्थश्लोकान् भृश प्रसीदति मदीय मन। कवेरस्य रचना निरतिशय चातुर्य्यमादधाना सुमनसामपि नितरा सुमनोहारिणी सुभृश ललिता भगवद्भक्तिपरिपूरिता च दरीदृश्यत एव सर्वैर्विद्वद्वरै। तदह कामये भक्तिमयी सैषा कवे कृति कृतिवरस्याऽस्य सर्वमनोहारिण्येव सभवेत् सस्कृत-सस्कृतिप्रिया। भक्तवराश्च तदस्या समादर कुर्युरिति।

• • •

– २६ –

**श्री सुदर्शनसिंह 'चक्र'**
सम्पादक विवेकरश्मि, मानसमणि

'श्रीकृष्णचरितामृतम्' देखनेका अवसर मिला। आजके युगमे सस्कृत-साहित्यमे यह एक नवीन कडी है। अवश्य प्राचीन साहित्यके सन्दर्भमे यह एक अद्भुत साहसका काम है। श्रीकृष्ण-प्रेमियोके लिए इसमे साधन-सम्बल प्राप्त होगा। कविके इस काव्यामृतसे जनता-जनार्दन लाभ उठाकर आशा है सस्कृतानुरागियोका उत्साह-बर्द्धन करेगा।

• • •

– २७ –

सम्पादक : 'चिन्तामणि'

'श्रीकृष्णचरितामृतम्-महाकाव्य' के प्रकाशन—क्रममे श्रीघिमिरेजीसे सम्पर्क बढ़ा और बढता गया। इनकी तत्परता और लगन, इतने निकटसे देखनेका अवसर मिलेगा मनमे कभी इस प्रकारकी कल्पना भी नही थी। इस ग्रन्थमे इनकी विद्वत्ता और काव्य-क्षमताका रसास्वादन तो सुविज्ञ-रसिक जन करेगे ही। यहाँ इस सन्दर्भमे यह बताना आवश्यक समझता हूँ कि एक अहिन्दीभाषी देशान्तरके निवासी होनेपर भी इन्होने किस आयास श्रमसे जो आदर्श उपस्थित किया है, वह भारतीय साहित्यिको-कलाविदोके लिए निश्चित ही अनवरत प्रेरणाप्रद होगा। आशा है, कवि और काव्यका सुसस्कृत जन सदा सम्मान करेगे। इसके बावजूद इनके विनम्र व्यक्तित्व, मिलनसारिताकी गहरी छाप अमिट बनी रहेगी। मेरी रुचि थी इस ग्रन्थमे पाठकोके लाभार्थं इनके जीवनकी कुछ झाँकिया प्रस्तुत करूँ और महाकाव्यपर एक विहङ्गम दृष्टि भी। किन्तु मुद्रणके काल-व्यय और साधन-सकोचसे अभी थोडेमे ही विराम करना श्रेयस्कर जान पडता है। अत श्रीकृष्णप्रसाद घिमिरेकी प्रतिभाका दिनो-दिन निखार होता रहे और वे सर्वजन-सुखाय साहित्यका सृजन करते रहे। भगवान् सदाशिवसे यह मेरी शुभ कामना है।

• • •

– २८ –

**श्री रामपदार्थ शर्मा, सचिवः**
**बिहार—सस्कृत-शिक्षापरिषदः**

श्रीकृष्णप्रसादशर्मविरचित सरसं महाकाव्य श्रीकृष्णचरितामृताभिधेय सस्कृतसाहित्य-ससारे नवीनमपूर्वं च किमपि ज्योत्स्नाजातमाविष्करोति। अद्यत्वेऽपि चेदृशा सस्कृतविद्वासः कवयश्च वेविद्यन्त इति नितरा मोमुदीति मानसं सुरसरस्वतीसमुपासकानाम्। श्रीहर्ष-माघ-भारवि-कालिदासादिसत्कविसेवितायाः भारत्याः सेवापरायणोऽय विद्वान् समेषा भारतीयानां साधुवादानर्हति। अस्य महाकाव्यस्य केचनाशाः मया श्रुताः श्रोत्रेन्द्रियलाभसुख च साधु समुपलब्धम्। अस्य काव्यस्य प्रकाशन नितरामपेक्षितम्। एतदर्थं सर्वैः सहृदयैः साहाय्य कार्यमिति प्रार्थ्यते।

• • •

– २९ –

**श्री अयोध्याप्रसाद सिंह**
**प्राध्यापक, स्नातकोत्तर-सस्कृतविभाग, पटना-विश्वविद्यालय**

कविवरश्रीकृष्णशर्मप्रणीत श्रीकृष्णचरितामृताख्यमहाकाव्यमशत श्रुतम्। महाकायमिदं यथार्थत एव महद्गुणालङ्काररसादिसत्काव्यतत्त्वोपेत कवे प्रज्ञाया समुत्कर्षं वितनोति। आशासे काव्यस्याऽस्य प्रकाशन शीघ्रमेव भविष्यति। अनेन खल्वद्यतनसस्कृतकाव्यसरणिः समलङ्कृता भविष्यतीत्यत्र नास्ति सशयलेशोऽस्माक मनसि।

• • •

– ३० –

**श्री बेचन झा. एम० ए० डि० लिट्०, साहित्याचार्यः**
**संस्कृतविभागाध्यक्षः, पटना-विश्वविद्यालय**

अद्याऽहं श्रीमता कृष्णप्रसादघिमिरेशर्मणामनवद्यपद्यरचनाचातुरीमज्ञासिषम् । एतद्विरचितञ्च श्रीकृष्णचरितामृताभिधेयं महाकायं महाकाव्यं तन्निर्मितान्यतरनाचिकेतसनामकेनाऽष्टाविंशतिसर्गात्मकेन महाकाव्येनाऽन्येन पूर्णात्यभिधेयेन दृश्यकाव्यनैव च समं श्रावं-श्रावं दर्शं-दर्शं च नितरामानन्दसन्दोहमन्वभवम् । आशासे चाऽचिरात् प्रकाशिताऽस्य कवेः कृतयो भारते तथाऽन्येषु तत्तद्विभिन्नभूखण्डप्रान्तेषु च निरन्तरं पूज्या भवेयुरिति ।

● ● ●

– ३१ –

**श्रीहरिप्रपन्नो द्विवेदी**
**एम० ए०, पी-एच० डी०, शास्त्री**
**अध्यक्षः, संस्कृतविभाग, बि० एन० कलेज० पटना**

नेपालदेशवास्तव्येन गीर्वाणवाणीसमाराधनपरेण सुधिया श्रीकृष्णप्रसादशर्मणा घिमिरेमहोदयेन निबद्धं श्रीकृष्णचरितामृतं नाम महाकाव्यकुसुमं विलोक्य चञ्चरीकायत इव मे मनः । संस्कृतोत्सादनपरेऽस्मिन् युगेऽपि कश्चिद्रत्नाकरकृतेः हरविजयस्याऽपि विस्पर्द्धिनोऽष्टपञ्चाशत्सर्गात्मकस्य महाकाव्यरत्नस्य प्रणेतेति न मे मनः सहसा प्रत्येति । ग्रन्थकर्तुर्नाचिकेतसनाम महाकाव्यं दृश्यकाव्यञ्च पूर्णाहुत्यभिधेयं मयाऽवलोकितम् । मुद्रितयोरनयोर्ग्रन्थयोर्दर्शनार्थं च भृशं लालायितं मे मनः ।

दृष्ट्वेदं काव्यकर्तृत्वं गुम्फितं सकलैर्गुणैः ।
न मे संशीतिलेशोऽपि संस्कृतमुद्धरिष्यते ।

● ● ●

– ३२ –

**श्री कपिलदेव शर्मा**
**अखिलभारतीयदेवभाषापरिषत्सेवकः**
**( छपरा-विहार )**

श्रीकृष्णप्रसादशर्म-घिमिरे कविना विरचितानि दृश्य-काव्यानि श्रव्य-काव्यानि च ( पूर्णाहुति-नाचिकेतस-श्रीकृष्णचरितामृतनामकानि ) विलोक्य नितरां मोदते मे मनः । अस्मिन् कामिनी-काञ्चन-कीर्ति-लोलुपे जगति, विद्या-विमुखे च युगे, अस्य, नयपालदेशाऽलङ्कारभूतस्य भारतनयपाल-सत्कृतस्य कवेः घिमिरे-महोदयस्य मनः कवितायामेव रमत इति दर्शं-दर्शं, श्रावं-श्रावं च तद्रचित-ग्रन्थानां गद्य-पद्यांशान्, कविवरमिमं हृदयेनैव समभिनन्दामि ।

सुकवेरस्य ग्रन्थानां मुद्रणार्थं भारतसर्वकारेण त्रिसहस्ररूप्याणि दत्तानि । एतदर्थं भारतसर्वकारः सर्वथा धन्यवादार्हः । किन्तु त्रिसहस्ररूप्यकमात्रेण चोपर्युक्तमहाग्रन्थानां मुद्रणमसम्भवम् । अतः प्रार्थये—नयपालसर्वकारो भारतस्य सर्वेषां राज्यानां सर्वकाराश्च, तथा समुचितमार्थिकं साहाय्यं कुर्वन्तु । यथोपर्युक्तानि सर्वाणि ग्रन्थरत्नानि शीघ्रातिशीघ्रं मुद्रितानि भवेयुरिति ।

● ● ●

– ३३ –

**श्री पण्डित विष्णुकान्त झा, साहित्यालङ्कारः**
ज्योतिषरत्न, ज्योतिषाचार्य, दैवज्ञशिरोमणि
चौहट्टा—पटना

श्रीकृष्णस्य विभो पदाम्बुजलसद्भक्तिप्रद पावन
काव्योत्कृष्टगुणान्वित सुललित विद्वत्प्रमोदावहम् ।
श्रेष्ठ तच्चरितामृत सुविशद कृष्णेतिपूर्व प्रिय
दृष्ट्वा मोदमुपैति मानसमिद 'कृष्णप्रसादै' कृतम् ।।

सन्नेपालसुदेशवासिविदुषा विप्रेण मान्येन तत्
पद्यै सुष्ठुतमै सुभावभरितैश्चाऽलङ्कृत सत्तमम् ।
नानासाधुकथान्वित प्रमहित कृष्णेतियुक्तं श्रुत
पीत्वाऽह चरितामृत परमिद मुग्धोऽभव सर्वथा ।।

मान्याय साधुशीलाय विद्यागुणभृते सते
श्रीमत्कृष्णप्रसादाय पद्याञ्जलिमिहाऽर्पये ।।

● ● ●

– ३४ –

**श्री उपेन्द्र झा, व्याकरणन्यायाचार्यः**
प्रिन्सिपल—महारानी अधिरानी श्री ३
रमेश्वरलता-सस्कृतमहाविद्यालय, दरभङ्गा

श्रीपशुपतिनाथपवित्रीकृतनेपालदेशाश्रितपण्डितप्रवरश्रीकृष्णप्रसादशास्त्रिविरचित पीयूष-वर्षि श्रीकृष्णचरितामृत नाम महाकाव्य विविधालङ्कारच्छन्दोभरित कविमुखादेव क्वचित् क्वचित्तदीयैरेव सरसै स्वरै श्रावश्राव ग्रन्थप्रणेतुरगाध वैदुष्यमुपलभ्य चेतो नितरा प्रासीसदत् । मन्ये चाऽमुष्य कृतिन कृतिरिय मुद्रिता जनानामाह्लादिनी भवेदिति शम् ।

● ● ●

– ३५ –

**श्री रुक्मिणीरमणसिंहः**
साहित्याचार्यः, विद्यारत्नम्
श्रीसदनम्-रीगा, मुजफ्फरपुरम्

कृष्णप्रसादकविकाव्यमिद निशम्य चेतो मदीयमुपयाति सुख नितान्तम् ।
स्वान्त सुखाय रचित हरिभक्तिपूत काव्य शुभ सुयशसे सुकवे सदा स्यात् ।।
कवयन्ति वपन्ति शब्दजाल बहुव पद्यमय विशेषशून्यम् ।
सविशेषगिरस्तु शक्तिमन्तो बत केचित्, कविरेष तेषु गण्यः ।।

● ● ●

– ३६ –

**श्री जानकीवल्लभशास्त्री**
चतुर्भुजस्थान, मुजफ्फरपुरम्

अभिनवमहाकविना घिमिर इत्युपाधिना श्रीकृष्णप्रसादशर्म्मणा भागवताऽपराभिधानेन प्रणीत श्रीकृष्णचरितामृत कविशिखरिणस्सद्यस्स्रवत्सारस्वतामृतमिव पाय पायममन्दानन्दसन्दोहमवाप्तवानस्मि । चिरादेतादृशं काव्यपाटवमन्यत्राऽनवलोकितमद्य साक्षात्कृतम् । सूक्ष्मेक्षिकया निरीक्षणक्षणे काव्येऽस्मिन् पदे पदे कवेरस्य प्रातिभोत्कर्षविशेष कमपि गिरिग्रावप्रख्यान्तरङ्ग प्रचलयितुमलमिति निभृत विश्वसिमि । सहृदयास्तु स्वयमेव सौरभ्याकृष्टमधुकरायमाणा अस्याऽनास्वादितपूर्वं माधुर्य्यं सस्पृहमास्वाद्य भविष्यन्ति मत्ततरा ।

दौर्भाग्यमस्य देशस्य यदेतादृशप्रतिभाव्युत्पत्यभ्याससम्पन्नो महाकविर्महाकाव्यस्याऽस्य प्रकाशनार्थं कियतःप्रदेशान् परिक्रम्य नाऽद्यापि सञ्चितप्रचुरवित्त इति चित्तम्भवत्युद्विग्नम् । वाचिकाभ्यर्थयाऽलमलञ्च शपथेन मृगमदामोदविभावनया । केवलमस्य देशस्य शास्तारश्श्रीमन्तश्च सप्रश्रयमावेद्यन्ते सम्प्रति यत्तैर्यथार्यथ साहाय्यम्प्रदाय महाकाव्यमणेरस्य प्रकाशने त्वरा विधेया येनाऽमरभारत्या अमरोऽय महाकविराशु स्वानुरूप यशो लभता नव्यतर नाचिकेतस श्रव्यकाव्य दृश्यकाव्यञ्च पूर्णाहुत्यभिधेय शीघ्रमेव सहृदयेभ्य उपायनीकर्तुं शक्नुयादिति ।

• • •

– ३७ –

**श्री उमाशङ्कर प्रसाद**, बी० एस० सी०
**रमना**, मुजफ्फरपुरम्

मुझे नेपालके कविवर श्री पण्डित कृष्णप्रसादशर्म्मा घिमिरे कृत श्रीकृष्णचरितामृत महाकाव्यका कुछ अश सुननेका सौभाग्य प्राप्त हुआ । कविवरने बहुत सुललित एव सुन्दर पदावली लिखी है । आजकल सस्कृतमे ऐसी कविता कम देखनेमे आती है और लिखी भी कम हो जाती है । इस रचनाके लिए वे बधाईके पात्र है । पुरस्कृत होनेके पात्र है ।

भारतके विशिष्ट विद्वानोने इस कृतिको मुक्तकण्ठसे सराहना की है और भारतसरकारने इसके लिए अनुदान दिया है । मै आशा करता हूँ कि विभिन्न-राज्य भी इसओर ध्यान देगे और कविवरकी समीचीन सहायता करेगे ।

• • •

– ३८ –

**श्री उमाकान्त झा शर्म्मा**
ज्यौतिषगणितफलिताचार्यः, ज्यौतिषतीर्थश्च

**श्री श्यामापद भट्टाचार्यः**
व्याकरणतर्कतीर्थः न्यायाचार्यः

**उमेश मिश्रः**, व्याकरणाचार्यः साहित्यशास्त्री

अद्य नेपालभूसुरतिलकेन पदलालित्योपमार्थगौरवै. कवित्रयीमतिशयानेन कविकुलालङ्कारेण, सुरसरस्वतीसेवासमुपजाताशेषवैदुष्येण पण्डितप्रकाण्डेन तत्रभवता

श्रीमता घिमिरे इत्युपाधिभाजा समधिगतकृष्णप्रसादेन कृष्णप्रसादेन विरचित 'श्रीकृष्ण-चरितामृत' नाम महाकाव्यम्, कठोपनिषदमनुवदत् खण्डकाव्यम्, पूर्णाहुत्यभिधेय नाटकञ्च समुचितच्छन्दोऽलङ्कारगुणरीतिभि· समुज्जृम्भित रसभावभृत समवलोक्य श्रुत्वा च कविकोकिलकण्ठत परमानन्दसन्दोहमनुभवन्तो वैद्यनाथधामान्तर्गताश्रमकरणीवादस्य श्रीबालानन्दसस्कृतमहाविद्यालयस्य सप्राचार्यप्राध्यापका वय प्रमुदितेनान्त करणेन सुकवीना-मेतेषा यशसा दीर्घायुषा च सदैवाचिरमेव काव्यत्रयस्याऽस्य प्रकाश प्रचारञ्च कामयामहे। येन विकरालेऽस्मिन् कलिकाले सत्पथानवलोकनेन इतस्ततो बम्भ्रम्यमाणा अपि जना परा शान्ति लभेरन्।

● ● ●

– ३९ –

**श्री सुनीतिकुमार चटर्जी**

वङ्ग ( कलिकाता ) स्थः

आर्षविद्यास्वनूचानो विप्रो नैपालक सुधी। पशुपतिप्रपूजको विष्णुभक्तिपरायण॰॥
काश्यपगोत्रसभूतो घिमिरे कुलदीपक। श्रीकेदारात्मजो नाम्ना सोऽय कृष्णप्रसादक॥
काष्ठमण्डपमित्याह्वे कान्तिपुराऽपराऽभिधे। राजोषिते पुरेरम्ये वसति यः सदा मुदा॥
गुरुकुले निवासो हि काश्या येन प्रकल्पित। बहुशास्त्रे कृतश्रम पूजा प्राप्ता विपश्चिताम्॥
नानाछन्दोनिबद्धे च काव्येऽस्मिन् चित्तहारिणि। पुण्य कृष्णायन हृद्य वृत्त तेन सुवर्णितम्॥
कविता रुचिरा तस्य मनोजाता प्रसादिनी। अर्पिता कृष्णसेवाया धन्योऽसौ विदुषा वर॥
अधुना देवभाषाया वक्ता श्रोता च दुर्लभ। दातारो नाऽपि दृश्यन्ते म्रियमाणाऽथ देवगी॥
काव्य मनोहर चैतन्नवीन हर्षवर्धनम्। मुद्रणीय द्रुत मन्ये भक्तिप्रीतिप्रदायकम्॥
राजशक्ति प्रजाशक्ति पूरयेता परस्परम्। गुणग्राहिप्रसादेन काव्यमेतत्प्रकाश्यताम्॥

इति विनिवेदयति सर्वकारसमक्ष सस्कृतानुरागिजनसमक्ष च काश्यपचाटुर्ज्या-कुलजातो गौडवङ्गीय सुनीतिकुमारदेवशर्मा। मानविकीविद्यासु भारतस्य जातीय आचार्यो, भारतशासनीयसस्कृतायोगस्य भूतपूर्वस्याधिष्ठाता, भारतीयसर्वभाषासाहित्यपरिषत्सभापतिश्च।

● ● ●

– ४० –

**श्री कालीपदतर्काचार्य्य शर्मा**

महामहोपाध्यायः

वङ्गराज्याधिकृतकलिकातासस्कृतमहाविद्यालयस्थः

श्रीमत्कृष्णप्रसादेन कविना पुण्यकर्मणा। निबद्ध रससम्पूर्णं श्रीकृष्णचरितामृतम्॥
काव्यस्याऽस्य रसो नून पीयूषरसजित्वर। सम्मोहयति चेतासि कविता भावितात्मनाम्॥
अत्र काव्यगुणा दिव्या दीव्यन्ति सुकविप्रिया। प्रशस्ति सुकवेरस्य वेदयामि ततो मुदा॥
अधुना विप्लवे प्राप्ते संस्कृतध्यानकर्मणो। दुर्लभैतादृशी काव्यसृष्टिरिष्टा विपश्चिताम्॥
परमेशप्रसादेन चिर जीवन्नय सुखम्। कवि कृष्णप्रसादाख्य. कीर्ति विन्दतु पुष्कलाम्॥
काव्यस्याऽस्य प्रचारे च भारतस्य शिवप्रिय। सर्वकार प्रसन्नात्मा ददातु स्वा सहायताम्॥

इति कविकाव्यगुणमुग्धः प्रार्थयते।

● ● ●

– ४१ –

**श्री मधुसूदन भट्टाचार्यः**
गवेषणाविभागाध्यापकः सस्कृत कालेज, कलिकाता

काष्ठमण्डपनेपालवास्तव्येन श्रीकेदारनाथतनुजन्मना काश्यपेन सुकविना श्रीमता-कृष्णप्रसादशर्मघिमिरे-महाभागेन विरचित श्रीकृष्णचरितामृत नाम महाकाव्य, तदन्यदपि मया समवीतम् । महाकाव्येऽस्मिन्नलौकिको ब्रह्मानन्दसहोदर· काव्यरसास्वाद आस्वाद्यतेऽस्माभि । तथा चाऽस्मिन् भगवत श्रीकृष्णस्य सुललितपद्यै श्रीमद्भागवतविवर्णितसुचरित्र-गाथा निबद्धा दरीदृश्यते । भृश मोमुद्यते चाऽस्माक मनोऽनुभूयैतत् सर्वं महाकविजनोचित-विविधालङ्काररञ्जितानि ध्वनिलक्षणादिसमुद्भासितान्यत्रत्यानि सहृदयहृदयमनोहराणि पद्यकदम्बकानि दर्शं दर्श प्रसादगुणराजिभिर्विभूषितानि नानाविधछन्दोभिर्ग्रथितानि सुमनोमनोहराणि विशेषमाधुर्यव्यञ्जकानि चाऽवश्यमवश्य सहृदयहृदयान्यावर्ज्याऽऽनन्दयन्ति चेति प्रतीम । इद महाकाव्य यदि सर्वकारसहायेनाऽचिरेणैव मुद्रित प्रचारित च स्यात्तदा काव्यरसिकाना विदुषा भगवद्भक्ताना सामाजिकानाञ्च परम श्रेयो विदधन्महाकाव्यमिद महदुपकारक भविष्यतीति विषयेऽस्मिन् राष्ट्राधिकारिणा साधिकारिणाञ्च सविवेका शुभदृष्टिराकृष्यते ।

• • •

– ४२ –

**श्री अवधविहारी त्रिपाठी**
व्याकरणाचार्य , काव्यतीर्थ
अध्यापक पतञ्जलिसाङ्गवेदविद्यालय , कलिकाता

अयि सहृदयहृदयानन्ददायका अनवद्यविद्याध्ययनाध्यापनपूतान्त करणा सद्विद्या-भ्यसनव्यसनिनो नग्ननर्तनदृश्यकाव्यकलादर्शनसुखानुभवास्वादस्वदिनो भावुका विपश्चिद्वरा ! श्रव्यकाव्येऽस्मिन् विदाङ्कुर्वन्तु तत्र श्रीमन्तो भवन्तो यत्—

काव्यस्वरूपमिदमद्भुतरङ्गमञ्च दृष्ट्वा मया सुनिपुण विधृतश्च सार ।
यस्मिन्नहो ! विजयते स्वगति प्रदर्श्य कृष्णप्रसादघिमिरे कविसूत्रधार ॥
तद्ब्रह्मकृष्ण उरुशक्तिधरो नटोऽसौ विक्रीडतेऽत्र रुचिर प्रियभक्तिनट्या ।
तन्नग्ननर्तनमिद तु निरीक्षितु भो ! आगच्छताऽहह ! वय स्वरतिप्रिया यत् ॥

धर्मो विवर्णित इह प्रतिभान्वितेन कृष्णेन कृष्णपरकेन, सदर्थदेन ।
कामो विदर्शित उभौ परलोकलोकश्रेयप्रदे विलसतोऽत्र सदर्थमुक्ती ॥
गृह्णन्तु तत् सुधिय एत्य सुख प्रवेशपत्र विलोकयितुमत्र तयो सुनृत्यम् ।
शान्ता भविष्यथ भविष्यति सनिविष्टाश्चेतोधन न तु हरेत् परमत्र चौर ॥

• • •

– ४३ –

**श्रीब्रह्मदत्तत्रिवेदी-रामनाथदाधीचौ शास्त्रिणौ**
**श्री नारायणस्वामिपादानां चञ्चरीकौ, कलिकातास्थौ**

श्रीकृष्णचरितामृत नाम दिव्यकलासम्मित रसपरिणति श्रीमच्छास्त्रिकृष्णप्रसाद-महोदयश्रावित भव्यभावसुमनोभिश्छन्दोभि सुरुचिर सुनिपुण श्राव-श्राव परमामोदभरं प्राप्नुमो वयम् ।

महाकविनाऽनेन कविरत्नशेखरो जगद्धरभट्ट सुतरामस्मद्दृष्टिपथि समानीत । कृष्णप्रशस्तिविलसित कविकर्मेद जगतोऽमन्दानन्दसन्दोह कुर्यादिति भूयो भूय परमेश्वर प्रार्थयाम , कामयामहे चैतस्याऽविलम्ब मुद्रण येन जगति भूयो भव्या भारती सुविलासविज्जृम्भणेन विजयतेतराम् ।

● ● ●

– ४४ –

**श्री भगवानदत्त जोशी**
**वि० ए० विशारद**
**दहीहट्टा ष्ट्रीट, कलकत्ता**

नेपालके प्रसिद्ध कविवर श्रीकृष्णप्रसाद घिमिरे द्वारा विरचित श्रीकृष्णतत्त्वनिदर्शन-शील सर्वधर्मसमन्वयपरक श्रीकृष्णचरितामृतम् काव्यके कुछ अशोको सभाके बीचो-बीच सुनकर अनेको सभ्योके साथ मै भी मन्त्र-विमुग्ध बन गया । हृदयमे अत्यन्त प्रसन्नता हुई । इस युगमे भी ऐसे सस्कृतके कविद्वारा ऐसा सुललित पद्यनिबन्धित काव्योका निर्माण निश्चय ही महान् आश्चर्यकी बात है । इतनी माधुर्यपूर्ण श्रीकृष्ण-कथाकी रचना अभूतपूर्व है और अत्यन्त आदन्ददायक तथा महोत्साहवर्धक है । इसलिए भी सारे भारतवासियोके लिए निरन्तर श्रवणीय, मननीय एव निदिध्यासनीय है ।

● ● ●

– ४५ –

**श्री श्रीनिवासरथः**
**एम० ए० साहित्याचार्यः**
**सस्कृताध्यापक, विक्रमविश्वविद्यालयः ( उडिसास्थः )**

श्रीकृष्णप्रसादघिमिरेमहोदय-रचित श्रीकृष्णचरितामृतकाव्यरसं पाय-पाय नितरा मुग्धोऽस्मि । महाकवेरस्य कोमलकान्तपदावलीग्रथिता भारती भारतीयानामस्माक नितरा महानन्दप्रसू । विजयता श्रीकृष्णप्रसादघिमिरे प्रसाधितसुरभारती । तदेतस्य कृते भृश सम्माननीयोऽसौ सर्वैराधिकारिभिरिति कविकाव्यगुणगुग्धत्वाद्विनिवेदयामि ।

● ● ●

– ४६ –

**कविकोकिल, डा० वेङ्कटराघवन्, एम० ए०, पि० एच० डी०**
**पं० जवाहरलालनेहरुसहचरः ( मद्रास )**

नेपालजेन वरसस्कृतपण्डितेन कृष्णप्रसादशुभनामभृता द्विजेन।
कृष्णप्रसाद विलसत्कविताविलासधन्येन ये विरचिता सरसा निबन्धा ॥ १ ॥
सक्षिप्तभागवतमाश्रितकाव्यमेतच्छ्रीनाचिकेतयमतत्त्वकथ प्रबन्ध ।
पूर्णाहुतिप्रथितभारतराजसूयवस्तूत्थनाटकमपीह मया त्रयस्ते ॥ २ ॥
आलोकिता कुतुकिना पठिता बहुत्र भागेषु काव्यगुणलोभितमानसेन।
मन्येऽचिरेण कविरेष कृती भवेत् स्वसाहित्यमुद्रणयशोधनभाग्यलाभात्॥ ३ ॥
इत्यादरेण 'कविकोकिल' राघवोऽयमाशसतेपशुपते कृपया 'घिमीरे'।
इत्याख्यया विदित एष समेधता श्रीकृष्णप्रसादकविराप्तसमस्तकाम ॥ ४ ॥

● ● ●

– ४७ –

**श्री डॉ० के० कुञ्जुण्णिराजः, एम० ए० पि० एच० डी०**
सस्कृत विभागाध्यक्ष , मद्रास-विश्वविद्यालयः
**तत्सहचराश्चेमे—श्री० र० तङ्गस्वामी**
**श्री० मु० रामकृष्ण शास्त्री, श्री मु० नरसिंहाचार्यः**
**श्री० न० गङ्गाधरः श्री के० बी० शेषाद्रिनाथः**

श्रीमद्भि घिमिरे-कृष्णप्रसादमहाकविभि. विरचित श्रीकृष्णस्तवात्मक श्रीमद्भागवत-सारभूत महाकाव्य श्रीकृष्णचरितामृताभिध तन्मुखत श्रुतमस्माभि । तेषा शैली ललितललिता, उदन्त उदात्त, भावश्च गभीर' । एतै कविवरैरन्येऽपि चौपनिषद-पौराणिकप्रबन्धा विनिर्मिता सहृदयावर्जका' ।

भारतसर्वकारैरन्यै सस्कृतभाषाभिमानिभि सहृदयै सस्कृतसस्थानिर्वाहकैश्चैतेषा कविवराणा प्रोत्साह समधिको विधेय इति चाशास्महे।

● ● ●

– ४८ –

**श्री वा० ह० सुब्रह्मण्यशास्त्री,** अध्यक्षः मद्रपुरीसस्कृतविद्याशालाध्यापकश्च
**श्री का० राममूर्तिशास्त्रिणः,** उभयमीमासाविशारदाः
**श्री वे० जगदीश्वरशास्त्रिणः** श्री मीमासाकेसरी, पण्डितराजः
व्याकरणशिरोमणिः, साहित्यालङ्कारः
**श्री वि० सुब्रह्मण्यशास्त्री,** कलाशालाध्यक्ष
पण्डितराज शास्त्ररत्नाकरः, वेदान्ताध्यापकः
**श्री के० बालसुब्रह्मण्यशास्त्री**
श्री० कृष्णमूर्तिशास्त्रिणः वेदान्ताध्यापकः

'कवितल्लजैर्घिमिरे-कृष्णप्रसादशर्मभिर्विरचित श्रीकृष्णचरितामृताभिध महाकाव्यमष्ट-पञ्चाशत्सर्गं यावत्प्रपूर्णं नाचिकेतसाभिधेयमनुपमं काव्य नाटकमन्यच्च पूर्णाहुत्याख्य यावदलो-

कितमस्माभिरनुभूत च स्वान्तस्तले यद्भगवतो वासुदेवस्य लीलाविशेषादेव सोऽय कविवर· स्वलिखितानीमानि काव्यकदम्बकान्यस्मान् निदर्शयितु समर्थोऽभवदिति। सहृदयहृदयावर्ज नक्षमाणि चैतानि विदृश्यन्तेऽनुभूयन्ते चेत्यत्र न कश्चिदपि सन्देहलेश । विशेषेण नूतनतया समून्मीलन्नय श्रीकृष्णचरितामृताभिधेयकाव्यपूर्णचन्द्र. पूर्णचन्द्र इवाकाशस्थो जगदिव सस्कृतकाव्यलोक विद्योतयेदित्यस्माक सुदृढो विश्वास । वेदान्ततत्त्वावेदक काठकोत्थ नाचिकेतसाभिधेय काव्यमन्यचत्र रुचिरातिरुचिरमेतेषा कृतिष्वन्यतममवगच्छाम. । तयोरन्यतम दृश्यकाव्य पूर्णाहुतिनामक च विजृम्भतेतरा काव्यरसास्वादनपराणा विद्वज्जनाना समक्षम्। एवमश्रान्त सस्कृतभारतीसेवन सविदधानानामेषा कविवराणा भारतीयराज्यनिर्वाहकैरन्यैश्च सस्कृतिसस्कृतप्रणयिभि समादरण प्रोत्साहन च नैरन्तर्येणैव विधेयमित्यस्माकमाभ्यन्तर सद्भाव च सप्रमोदमावेदयामः।

● ● ●

— ४९ —

**पी० पी० लक्ष्मीनारायणोपाध्याय·** पण्डितभूषणम्
महीशूरास्थानविद्वान्, ज्योतिषतर्कविद्वान्,
ज्योतिषप्रधानाध्यापकः ( मद्रास )

श्रीमता कृष्णप्रसादघिमिरे इत्युपाह्वेन लिखित काव्यसन्दोह व्यलोकिषि । कवितारसोऽत्रत्यो भक्तिरसाप्लावित सुललितपदसन्दोहसुवर्णचषकपरिपूर्णो नितान्त सर्वानपि रसिकजनान् सहृदयवर्गांश्चानन्दसन्दोहे सल्लीनान् करोत्येव । हन्ताऽस्मिन्नपि काले महान् कविवरोऽयमस्मत्सस्कृतपण्डितगोष्ठीमलङ्करोतीति हंहो ! भागधेयमस्माकम् ।

● ● ●

— ५० —

**श्री ए० कुप्पूस्वामी**
**सेक्रेटरी सस्कृतसाहित्य-परिषद्**
**त्रिचिरापल्ली, मद्रास**

I have great pleasure in going through the manuscript of Srikrishna Charitamritam many eminent men have spoken in evlogistic terms Sri Krishna Piasad Sharma Ghimire is a great scholar with the gift of the in use, the grace of Sri Saraswati I pray that God will vouchsafe the blessings to get the manuscript published early The Govt Has done a great service to the country helping the author to pubilish it I wish him success in his noble endeavour

● ● ●

– ५१ –

**श्री एस० सुब्रह्मण्यशास्त्री**, शास्त्ररत्नाकरः, पण्डितराजः
मुम्बादेवी-संस्कृतविद्यालयः ( भारतीयविद्याभवन )

श्रीमन्तः !

कृष्णप्रसादकविता मञ्जुला सुमनोहरा ।
रसालङ्कारभरिता भक्ति वर्धयते हरौ ॥
श्रुत्वेद कविसारस्य मग्ना आनन्दवारिधौ ।
श्लाघन्ते सशिरःकम्प तत्कवित्व विपश्चित ॥
यशो धन च माङ्गल्य पण्डिताना पुरस्कृतिम् ।
दद्यादस्य कवेस्तुष्टा सर्वदात्री सरस्वती ॥

● ● ●

– ५२ –

**श्री दत्तोवामन पोतदारः**, महामहोपाध्यायः
साहित्यवाचस्पति , शनिवारपेठ, पूना

नेपालदेशीया कविप्रवरा. श्रीकृष्णप्रसादघिमिरे-महोदया अद्य प्रातरेव मद्दर्शनार्थं समागता । शीतबाधाग्रस्ता नेपाल स्वगृह काशीतो गन्तुकामा । तैर्विरचित श्रीमद्भागवतानुवादप्रकाशक श्रीकृष्णचरितामृत नाम महाकाव्य यत्र तत्र किञ्चिदवलोकितम्, श्रुतञ्च तन्मुखादेव बहुषु स्थलेषु । झटित्येव प्रतीत यत्तेषा श्रीकृष्णप्रसादकवीना रचनाऽशेष प्रसादयुक्ता सरला चिन्ताकर्षणसमर्था सर्वथा श्रव्यकाव्यभक्तिसंस्कृतिपोषकाणा रसिकानामादरणीया प्रभवेद्, दार्शनिकाश्च सप्रसीदेयु । एते न केवल धन्यवादानर्हन्ति किन्तु यद्यत्साहाय्य प्रकाशनादिविषये चाऽऽवश्यक तत्सर्वमेतेषा कृते देयमिति प्रार्थये साधिकारिण ।

● ● ●

– ५३ –

**श्री डा० कन्हैयालाल, मानिकलाल मुन्शी**
अध्यक्षः, भारतीयविद्याभवन, बम्बई

श्रीकृष्णप्रसादकविना स्वकृतस्य श्रीकृष्णचरितामृतकाव्यस्य कतिचन भागा मत्सन्निधौ सुपठिता । श्लोका विविधवृत्तेषु सस्थिता सुललिता श्रवणमनोहरा रसवन्तश्च विदृश्यन्ते । कविरयसर्वेषामप्यस्माक भारतसंस्कृतसंस्कृतिप्रियाणा निरन्तरमुत्तेजनस्य भाजनञ्च सभवेत् । ग्रन्थस्याऽस्य प्रचार प्रसारश्च धाराप्रवाहरूपेणैव सर्वत्रैव विभूयादित्याशास्ते ।

● ● ●

– ५४ –

**श्री रामचन्द्र-नारायण दाण्डेकर**
भाण्डारकरप्राच्यविद्यासंशोधनमन्दिरम्, पूना

श्रीमद्भिः कृष्णप्रसादशर्मभिर्विरचित श्रीकृष्णचरितामृतसञ्ज्ञक काव्य दृष्टमल्पतया पठित च मया। येन महान् संतोष. सजात । अचिरादेवेद काव्य प्रकाश्येतेत्येव मम बलवत्याशा । येनाऽस्माक संस्कृतसंस्कृतिपरिवर्धिता भविष्यतीति ।

● ● ●

– ५५ –

**श्री चिन्तामणि-गणेश काश्यकरः**

पूर्णे विद्यापीठ, संस्कृतप्रगताध्ययनकेन्द्रम्

श्रीमता कृष्णप्रसादशर्मणा श्रीकृष्णचरितामृतसंज्ञकं संस्कृतमहाकाव्यमद्य भगवतः प्रसादेन दृष्टिपथमागतम्। दृष्ट्वा परीक्ष्य विश्रुत्य च महान्तं सन्तोषमन्वभवम्। नेपालदेशे संस्कृतविद्याऽपि सविशेषं जागर्तीति चाकलय्य संस्कृतभाषाया प्रचारविषये शुभाशा प्रवर्धते। एतेषां कविवराणामिदं महाकाव्यं प्रसादादिगुणयुक्तं ध्वनिलक्षणालङ्कारादिभिः समन्वितं वर्तते। तदचिरादेवाऽस्य काव्यस्य प्रकाशनादिका शोभना व्यवस्था त्वरया संभवेदिति बलवती मदाशा।

* * *

– ५६ –

**डा० श्रीधर भास्कर वर्णेकर**

एम० ए० डि० लिट्०

अध्यापक नागपुर-विश्वविद्यालयः

लोके लोकसहस्रेषु कश्चिदेको हि जायते।
यस्मै श्लोकसहस्रेषु कश्चिदेको न रोचते॥

नगाधिराजोत्सङ्गलालितान्नेपालदेशादस्मद्गृहमागत्य श्रीकृष्णचरणैकान्तभक्तेन श्रीकृष्णप्रसादशर्मणा श्रावितमिदं श्रीकृष्णचरितामृतं नाम महाकाव्यमितस्ततः। शब्दब्रह्मणो हि विवर्तभूतं काव्यं नाम श्रोत्रपेयं दिव्यानन्दसन्दोहजनकं किमप्यमृतमेव। तदनेन कवि-सुहृद्वरेण श्रीकृष्णचरितामृतरूपेण परिणमय्य रसिकभक्तजनानां भृशं खलूपकृतम्। यावत्काल-पर्यन्तं श्रीकृष्णनामस्मरणमात्रेण समुल्लसन्ति भावुकानां चेतांसि भूतलेऽस्मिंस्तावत्कालपर्यन्तं कविवरस्य श्रीकृष्णप्रसादस्य कवित्वयशांसि च समुल्लसन्तुतरामिति च प्रार्थयते श्रीकृष्ण-भक्तचरणारविन्दरजश्चञ्चरीकः।

* * *

– ५७ –

**श्री उमाशङ्कर जोशी**

उपकुलपति, गुजरात-विश्वविद्यालयः

Shri Krishnaprasad Sharma Ghimire, a Sanskrit poet from Nepal, read out a few verses to me from his epic 'Shri Krishnacharitamritam' and a long poem entitled 'Nachiketasam' I was impressed by the easy flow of metrical composition and ornatediction In these days when Sanskrit seems to have fallen on evil days, it is really heartening to come across a person who is Sanskrit-drunk and finds leisure enough to compose epical works Needless to say, Sanskrit is a language which lends it self easily to poetic efforts, which is not to say that it is less exacting I have no hesitation in commending these works to all lovers of Sanskrit

* * *

– ५८ –

**श्री भगवदाचार्यः**, वेदादिभाष्यकारः
राजनगर सोसाइटी, अहमदाबाद

कविवराः श्रीकृष्णप्रसादा अद्य श्रीकृष्णचरितामृत-नाचिकेतस-पूर्णाहुत्यमिधेय काव्य समादायोपस्थिता । श्रुताश्च मया केचन सर्गास्तयोरुभयोकाव्ययोर्थैव विश्रुतश्च दृष्टकाव्यस्याऽपि कश्चिदश । प्रसीदच्च मदीय चेत यथा चैते सरला स्वभावेण तथैवैषा कविता-कामिन्यपि सारल्यमनुसरति। बहूना विदुषामत्रसुकटाक्षनिक्षेप सजातोऽवश्यमेव तेषा-मपि चान्तर प्रासीदच्चेति तेषा लेखेनैव प्रायेण च प्रत्यक्षीकृतमस्माभि । अन्येऽपि च ये विद्वासो भविष्यन्ति द्रक्ष्यन्ति चैतत् काव्यरत्नत्रय तेऽपि स्वान्त सुखमनुभविष्यन्तीत्यत्र न कोऽपि शङ्कावकाश । आशा च विद्यते ये नाम धनिका महोदया सन्ति तेऽप्यत्र ग्रन्थानामेतेषा समृद्धिमवलोक्य स्व धनमुपयुक्त प्रकुर्युरन्ये च ज्ञानसमृद्धा भवेयुरिति स्वा समृद्धि पुरस्कृत्यै-तादृशी सम्मतिमेव प्रदाय विरमाम्यहम् ।

● ● ●

– ५९ –

**महामण्डलेश्वरः स्वामि श्री कृष्णानन्दजी महाराजः**
**श्री स्वामि काशिकानन्दश्च**, अहमदाबाद

पण्डितप्रवरश्रीमत्कृष्णप्रसादशर्मनिर्मित प्रसादगुणसपन्न भावगम्भीर भगवन्मा-हात्म्यवर्णनपर पर महाकाव्यमवलोक्य परम मनः प्रसादमगमम् । आशासे विपुलकलेवरमिद काव्यमनन्तगुणगणगरिम्णो भगवतो यशोवर्णनपरिपूर्ण जनानामसारससार सागरनिमज्जनो-न्मज्जनक्लान्तस्वान्तानां कान्तासमितोपदेशयुग्भिर्मधूपमव चोभिर्भक्तिरूपा नाव मुद्भाव्योप-करिष्यतीति ।

● ● ●

– ६० –

**श्री स्वामि रामेश्वरानन्दाचार्यः**
साहित्यरत्न, व्याकरण-वेदान्ताचार्य,
कोशलेन्द्रमठ अहमदाबाद

सुरभारतीरसरसिको नयपालदेशीयश्रीकृष्णप्रसादशर्मघिमिरे' इत्युपाह्वोऽनन्तकरुणा-वरुणालयानन्तकल्याणगुणगुम्फितचरणारविन्दस्य परमकारुणिकस्येदृशससारोद्भवस्थिति-सहारकस्याऽनन्तभुवनाधिपतेस्तत्रभगवत श्रीकृष्णस्य सद्गुणगरिमाभिराममनोहर श्रीकृष्ण-चरितामृताऽभिधेय महाकाव्य यत्सुललितान्त्यानुप्रासयमकाद्यलङ्कारध्वनिलक्षणादिभि समन्वित सहृदयहृदयाह्लादक जग्रन्थ तदेवाऽस्माक कृते महान् प्रमोदस्य विषय ।

करालेऽस्मिन् कलिकालेऽपि चैतादृशा काव्यरसरसिका विद्वास कवयश्च विद्यन्त इति निरीक्ष्य परीक्ष्य च तत्काव्य दृष्ट्वा च तन्निर्मिते अन्ये नाचिकेतसपूर्णाहुतिनामधेये श्रव्य-दृश्यकाव्ये चानुभूय च विशुद्धेनाऽन्तरात्मना तद्गतरसान् नितान्त मोमुद्यते च मे स्वान्तम् । भवेद्यदि साकल्येन प्रकृतकविवरविरचितनिखिलग्रन्थाना शीघ्रमेव प्रकाशन तेनैतेनाऽपि

महाँल्लोकोपकार सम्भविष्यतीति। आशासे चाऽत्राऽखिलब्रह्माण्डनायको 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रत्यभिसविशन्तीति'श्रुत्युदितमहिमाऽनन्तगुणाकरो भगवाञ्जानकीजानि श्रेयो विधास्यति कविवराणा मनोरथाञ्च पूरयिष्यतीति। पुनश्च भगवत्कलाकलनकुशलहृदयस्याऽस्य कवे सान्निध्य समाप्य य कोऽपि जनो ह्रस्वतरोऽपि-क्षणोऽतिवाह्यति चेत् सोऽपि धन्य प्रभवेदिति चाऽह मन्ये।

• • •

– ६१ –

**P, S Betvi,**
Reader in Sanskrit
Gujarat Vidyapith
Ahmedabad

I am so glad to meet a scholar and poet from Nepal Shri Krishna Prasad Sharma I had great delight in hearing some verses from his works and with happiness I find that Sanskrit learning and love for Sanskrit are alive as ever, I heartily congratulate him and wish him and success and fame in his pursuit of Sanskrit

• • •

– ६२ –

**श्री पं० हरिनारायणमिश्रः**, न्या० व्या० वेदान्ताचार्यः
श्री काशीविश्वनाथ-सस्कृतमहाविद्यालय, अहमदाबाद

विदितमेवास्ति खल्विह जगति समेषामेवाऽशेषशेमुषीजुषा विदुषा यदज्ञानतिमिरपटलापहाराय समुद्धाराय चैषा मोहमदिरामदोन्मत्तजगतामनुपल करुणानिकरकरम्बितचेतसा जनकल्याणकारिकाव्यजगत्सर्गनिसर्गवेधसा सामान्यविशेषाभ्या सर्वं वस्तु वस्तुतो भूयोभूयोऽनुभूय निखिलनिगमागमरहस्यज्ञानवता 'व्यासोच्छिष्ट जगत्सर्वमि' त्युक्ति सत्यापयता ब्रह्मसूत्रकृता भगवता विभक्तवेदेन वेदव्यासेन लोकशोकापहारायोपहारीकृत निगमकल्पतरोर्गलित फल शुकमुखादमृतद्रवसयुत मुहुर्मुहु रसिकभावुकैऽपरिपेपीयमान श्रीमद्भागवत नाम रसायन बारम्बार निपीयाऽनिश भृश श्रम-क्रमाभ्या विधिवदधीयानेन चिरतरनिरन्तरसत्काराम्भेवितै श्रवणमनननिदिध्यासनै साधनै प्रकाश्य तद्रहस्यसमवाप्तजगदीशश्रीकृष्णप्रसादेन श्रीगौरीसनाथपशुपतिनाथपदपाथोजरजोराशिजुषा विशदचक्षुषाऽतिमञ्जुलमृदुलललितकविताकामिनीकृपाकटाक्षनिरीक्षितेन कविकर्मरक्षादीक्षितेन पालितनयनयपालजनपदवास्तव्यभव्याचारविचाराविरतनिरतभूसुरवशजन्मानुमीयमानपुरातनसत्कर्मणा श्रीकृष्णप्रसादशर्म्मणा रचित रुचिरतराखिलकाव्यलक्षणलाञ्छित प्रेमरसामृताञ्चित सुविलक्षण विचक्षणचेतश्चमत्कृतिकर चञ्चच्चन्द्रमरीचिचयवदतीवरुचिकर 'श्रीकृष्णचरितामृत' नामाऽतिश्रव्य महाकाव्य कठोपनिषदनुसारि 'नाचिकेतस' पूर्णाहुति' नाम नाटकञ्च निरीक्ष्य परीक्ष्य च कञ्चिदशमधीत्यचैतेषा समाकर्ण्य च बहुतराश कविमुखादेव सगद्गदरोमाञ्च

तद्रसास्वादार्णवनिमग्नमानसोऽस्मितरामहमनुभवामि तरामि च नितरामवाङ्मनसगोचरां कामप्यनिर्वचनीया दशा ब्रह्मास्वादसहोदरानन्दसुधारससन्ततिसन्तता सन्ततम् । प्रार्थये च नितान्त नितान्तकरुणावन्त भगवन्त भूतनाथ पशुपतिनाथ यत्किल रसभावविदोऽस्य कविकोकिलस्य कृतिरिय कृतिकुलचित्तचमत्कृतिकारिता द्रुततरमासाद्य सपदि सुधासरिणी-व सकर्णकर्णारण्यान्त सञ्चारिणी स्यादिति शिवम् ।

● ● ●

– ६३ –

डॉ० जितेन्द्र सु० जेटली०
एम० ए०, पी एच० डी०
नियामक, द्वारकासस्कृतविद्यापीठ ( सौराष्ट्र )

श्रीमद्भि' कृष्णप्रसादशर्मघिमिरेमहोदयै सौभाग्यवशाद् द्वारकाधीश्वरदर्शनार्थं समागतै स्वरचितेभ्यो महाकाव्येभ्य कानिचित्पद्यकदम्बानि मह्यमपि श्रावितानि । श्रुत्वा चाऽस्य महाकाव्यस्य कतिचित् पद्याशान् सहृष्टान्तरङ्गोऽह सोद्गार कथयामि यत्सस्कृतभाषा मृतभाषेति कथ्यते नैतत्सत्यम् । अमरा खल्वेषा गी कालवैकल्येन पूर्वं मृतप्राया या दृश्यते स्म तदस्माक दृष्टिदोष एव । कवयितु काव्यवैषयिकी प्रतिभाऽपि सरसा सुमधुरा सरलाऽङ्कु-तैव । तदस्मिन् प्रोत्साहयितव्योऽसौ कवि साधिकारिभि' ।

● ● ●

– ६४ –

श्री लक्ष्मीश्वर झा, प्रधानाचार्यः
द्वारकास्थवेदभवनमहाविद्यालय ( सौराष्ट्र )

नूनमेवाऽद्याऽस्माक सुमहत सौभाग्यस्यावसर समुद्भूतो यच्छ्रुत नेपालदेशादागतै कविवरै श्रीकृष्णप्रसादशास्त्रिमहोदयै श्रावित तन्मुखारविन्दाद्विगलित श्रीकृष्णचरितामृत नामाऽपूर्वं काव्यामृतम् ।

जानन्त्येव सर्वेऽपि विद्वद्वर्या अमी महाभागा कविकुलकैरवाः सुधियो विद्वद्वरिष्ठा विपश्चिदपश्चिमा गुणैकपक्षपातिनो भूरिकृतभक्तिभावस्य सुललितपदमाधुर्यमयस्य सरस-सरलसुन्दरसहृदयहृदयानन्दकारिणोऽनुपमाह्लादप्रदायिन कनककृष्णचरितकाननकुञ्जे विलसद्विलासभामिनीव सुमनसा मनोहारिणोऽस्य महाकाव्यस्य प्रणेतार इति । प्रतिसर्ग स्थाने स्थाने कविना स्वकोकिलकण्ठत एव स्वरलयतानपरिपूरितरीत्या वाक्परिपाट्या श्रावितम् । श्रुतञ्चाऽस्माभिर्विशेषतस्तद्गतसर्वेन्द्रियैर्लब्धञ्चालौकिकचमत्कारजनक सर्वथाऽऽह्लादक-मानन्द यद्ब्रह्मानन्दसहोदरमभिधीयते । तत्कविरय सुभृश प्रशस्य प्रोत्साहयितव्यश्च ।

● ● ●

– ६५ –

श्री शोभानन्द झा, न्या० व्या० वेदान्ताचार्य'
प्राध्यापक–द्वारकासस्कृतविद्यापीठ

श्रीमन्त श्रीकृष्णप्रसादशर्माण 'घिमिरे' इत्युपाधिका नेपालराज्यस्था महाकविवरा सयोगवशाद् द्वारकाधीशसन्दर्शनसमागतास्तत्रभवतो भगवतो जगदीश्वरान् स्वरचितानि दृश्यश्रव्यमयानि काव्यकदम्बकानि श्रावयन्त सभक्ति सुस्वर लयतालतानपरिपूर्णपाठेना-ऽस्मानप्यश्रावयन् प्रसङ्गवशात्तत्र जगद्विभो श्रीमण्डपप्राङ्गणे ब्रह्मण्यस्य सुदामसखस्य तस्यैव

समक्षम् । श्रीकृष्णचरितामृताभिधेय महाकाय महाकाव्यमिद श्रावयित्वैवाऽस्मानपि सुतरा भक्तिरससमुद्रे क्षिपन्तोऽस्मद्भि साकमेव श्रुतवद्भि सहृदयमहापुरुषैर्भक्तवरैश्च तत्रत्यैर्भृश-माह्लादिताञ्चकार्षु । तत्काव्यगतसद्गुणमुग्धोऽह तत्रत्यैर्मन्दिरप्राङ्गणस्थैर्भक्तवरैर्विद्वद्भि-रन्यैर्महानुभावैश्च प्रेरितो मुखरीकृतश्च तत्प्रतिनिधीभूयेत्थरूपेणैव साधिकारिण सस्कृत-सस्कृतिसरक्षणप्रवर्धनतत्परान् विद्वद्वरान् साञ्जलिबन्ध विनिवेदयामि—एतदीयकाव्यरचनाशैली सुष्ठुतरा सुमधुरा सरलातिसरला समर्थयामि च यदनेन महाकाव्येन भारतीयविद्वत्परिषद-लङ्कृत सद्देशान्तरमपि निरन्तर स्वसद्गुणेनाऽऽत्मसात् करिष्यत एवेति कामयते ।

● ● ●

( क ) – ६५ –

**श्री हरिशङ्कर-प्रभाशङ्कर शास्त्री**

भू० सु० प्र० प्रा०म्यूजियम

**प्रभास-सोमनाथ क्षेत्रम्**

अद्य प्रभासपुण्यतीर्थेश्वर भगवन्त श्रीसोमनाथ दर्शनार्थं समागता नेपालदेशीया घिमिरे चेत्युपाह्वा श्रीकृष्णप्रसादशर्माणोऽस्मद्गृह समागत्य स्वनिर्मितानि दृश्यश्रव्यमयानि काव्यरत्नानि मामदर्शयन्नश्रावयश्च। यानि दृष्ट्वा विश्रुत्य च तद्गतरसास्वादनपरेण स्वहृदा-नुभूय च तत्रत्यामृतफलरसानिव ब्रह्मानन्दसहोदरान् काव्यरसान् नितरा प्रसीदामि। कथयामि च समर्थतरान् धार्मिकान् धनिकान् प्रादेशिकान् भारतसर्वकाराश्चैतादृशान् सहृदय-हृदयाह्लादकान् ग्रन्थान् प्रदायार्थिकसाहाय्य मुद्रापयित्वा शीघ्रातिशीघ्रमेवाऽस्माक नयन-गोचरीभूतान् कुर्यु कारयेयुश्चेति । विशेषत स्वयप्रकाशस्याऽस्य भगवत सोमेश्वरस्य प्रभो सुकृपा काव्यरत्नेऽस्मिन् काव्यलेखके चाऽमृतवर्षिणी प्रभवेदिति चाशास्यैतादृशाना ग्रन्थ-रत्नाना नेपाल-भारतसर्वकारयो सकाशात् परिवृद्धिर्भवितुमर्हतीति चैतादृशसस्कृत-सस्कृति प्रियाणा विद्वद्वराणा समक्ष विनिवेद्य विरमामि विस्तरादिति ।

● ● ●

– ६६ –

**श्री सुरेन्द्रनाथशास्त्री, आचार्यस्तीर्थश्च**

एम० ए०, डि० फिल०, एल. एल बी., एफ आर. ए. एस.

भू० पू० उपकुलपति स० वि० वि० काशी, इन्दौरस्थ.

अद्य दिष्ट्या वृन्दावनमधिवसता स्वामिवर्याणा श्रीमदखण्डानन्दानामाश्रमपरिसरे श्रीलेन कृष्णप्रसादघिमिरे-कविवरेण्येन साकञ्जात परिचय । तदीयप्रतिभाविलाससभाजितोऽह तत्प्रणीतश्रीकृष्णचरितामृत नाम महाकाव्य तदन्यत् कठोपनिषदमधिकृत्य विलिखित महाकाव्य च श्राव-श्राव नितान्त प्रमोमुदी । अत्र भवत कवे काव्यप्रणयनपरिपाटी पर रसस्रोतस्विनी नव्येऽपि युगे भव्य सस्कृतसारस्य विद्योतयन्ती सहृदयाना चेतासि नूनमावर्ज-यति । परञ्चाऽधुनातनाना सस्कृतकोविदाना कृते परमोपकारिणी तेषामभ्युदयाय कल्पिष्यत इत्यत्र न कोऽपि विचिकित्सितुमीश । एतादृशाना नवकाव्याना प्रणयनात् श्लाघ्योऽभीष्ट कविवर सर्वेराधिकारिभि परमौदार्येण पुरस्करणीय साहाय्यप्रदानेन प्रोत्साहनीय. । परञ्च सर्वकारेण सार्वकालिकानुरूपवृत्तिप्रदानेन पोषणीय । काव्ययो. प्रकाशनार्थमुपयुक्तव्यय-प्रदानाङ्गीकारेण सर्वथोपकरणीय इति साम्रेड सबल परामृशन्ननुरुणद्धि सुशासकवृन्दम् । कामयते च कविवरस्याऽनुदिनमेधमाना कीर्तिमभ्युदयञ्चेति । ● ● ●

— ६७ —

डा० शिवमङ्गलसिंह 'सुमन'
एम० ए० डि० लिट्
उपकुलपति—विक्रमविश्वविद्यालय, उज्जैन

दिव्य साधनापीठ नेपालके प्रसिद्ध कविर्मनीषी श्रीकृष्णप्रसादजी घिमिरेद्वारा रचित 'श्रीकृष्णचरितामृतम्' नामक प्रबन्ध-काव्य सुनकर मन्त्रमुग्ध रह गया। बहुत दिनो बाद ऐसा रसात्मक एव भावमोहक काव्य सुननेका सुयोग सुलभ हुआ। आश्चर्य भी हुआ कि आज भी ऐसे भावुक-भक्त कवि आविर्भूत है। जिनकी वाणीमे श्रीमद्भागवतका समस्त भावना-वैभव सपुटित होकर नये भावपरिवेशमे उपलब्ध हो जाता है। घिमिरेजीकी तन्मयता समर्पणशीलता और अनन्यता उनकी आलङ्कारिक और विम्बात्मकशैलीमे समस्त कथाको सजीव बना देती है और भाषाके मार्दवका सहज प्रसाद-गुण पाठकको मन्त्र-मुग्ध कर देता है। ऐसा ललित और प्रबुद्ध प्रबन्ध-काव्य भारत और नेपालके प्रत्येक गृहस्थके सरस्वती-भण्डारका अलङ्कार बनना चाहिए और उसके प्रचार और प्रसारद्वारा भारतीके अधुनातन भव्य-स्वरूपका आकलन करना चाहिए। निश्चय ही घिमिरेजी नेपाल और भारतके सास्कृतिक-सेतु हैं। उनकी वाणी वरेण्य और स्पृहणीय है। मै उनकी मौलिक प्रतिभाके प्रति अपनी हार्दिक श्रद्धाभावना अर्पित करता हूँ और हार्दिक मङ्गलकामना करता हूँ कि उनकी यशस्विनी-लेखनी भारतीका गौरव बने।

• • •

— ६८ —

एल ओ जोशी एम. ए
शिक्षा आयुक्त एव सचिव, म० प्र० शासन, भोपाल

लीला-पुरुषोत्तम अर्जुनसारथी जगद्गुरु भगवान् श्रीकृष्णके अद्भुत और पावन चरितका आश्रय लेकर रचित इस अर्वाचीन सस्कृत-महाकाव्य 'श्रीकृष्णचरितामृत' का भक्तो और विद्वद्वर्गोमे समान समादर होगा ही। कृष्णप्रसादजीकी इस सुन्दर रचनामे प्रसाद-गुण सर्वत्र व्याप्त है और भगवद्-भक्तिसे यह ओत-प्रोत है, जैसा कि उन्होने स्वय कहा है कृष्ण द्वैपायन ( व्यास ) के ससूत्र कृष्ण-चरित्र गायनका यह नवीन काव्यभाष्यरूपमे है। इसके श्रवण-पठनसे आत्मा निर्मल हो, यह लक्ष्य पूरा हो 'सिद्धि' साध्ये सतामस्तु' यह मेरी कामना है।

• • •

— ६९ —

श्री सूर्यनारायण व्यास, पद्मभूषण
डि० लिट्० साहित्यवाचस्पति, भारतीयभवन, उज्जैन

श्री पण्डित कृष्णप्रसाद घिमिरेजीकी सस्कृत-काव्य माधुरी एव निर्माण-चातुरीने मुझे विमुग्ध कर दिया। उनके निर्मित काव्योके बहुत अश सुने, जो अत्यन्त ही ललित, अत्यन्त सुन्दर, चित्ताह्लादक तथा आकर्षक एवं प्रभावोत्पादक है। मुझे विश्वास है कि ऐसे उत्कृष्ट महाकाव्योके प्रकाशनके लिए भारत-सरकारके सस्कृत विभागको सम्पूर्ण सहयोग देना चाहिए और कविवर प० कृष्णप्रसादजी नेपालनिवासी है। इसलिए भी नेपालके लिए यह गौरवकी

बात होगी कि स्वय नेपाल-सरकार भी ऐसे ग्रन्थ-रत्नको प्रकाशनमे लानेका अवसर देकर यशका भागी बने, कविकी अतुल-प्रतिभाका विकास जन-जनके मन-मनमे करे। सस्कृति-सस्कृत-प्रवर्धनशील जनता अवश्य ही इस काव्यका उचित सम्मान करेगी ही। मुझे ऐसी आशा है और मै महाकविका हृदयसे अभिनन्दन करता हूँ।

• • •

– ७० –

**श्री आदित्यनाथ झा**

उपराज्यपाल, राजनिवास, दिल्ली

श्रीकृष्णकविना प्रणीतानि सुललितानि सालङ्काराणि पद्यानि मया श्रुतानि। श्रुत्वा हृष्टोऽभवम्। श्लोकपुञ्जस्य मुद्रण सर्वजनसुखाय चात्यन्तमावश्यकम्। सस्कृतसस्कृतिसंरक्षण-प्रवर्धनपरैरेतादृशा कवयो निरन्तरमेव सम्माननीया प्रोत्साहयितव्याश्चेति शम्।

• • •

– ७१ –

**डा० रामकरण शर्मा**

ए० ५१ साउथ एक्सटेनशन, नई दिल्ली

रमणीयमिदं काव्य हरति प्रसभ मन। इत्यलम्

• • •

– ७२ –

**श्री सी० आर० स्वामीनाथन्**

क्यूरेक्टर नेशनल आर्किव, नई दिल्ली

भो वाणीसेवनरता सुहृद !

कृष्णप्रसाद! भवत कविताङ्गनेय कृष्णप्रसादजननी व्रजसुन्दरीव।
मुग्धाऽप्यतीव सरलालपना मनोज्ञा स्निग्धा तमालरुचिरे वसुदेवपोते॥
शब्दापयत्यमृतता गतमात्मसूनु व्यासे सुतप्रणयिनि प्रचुराभिमानात्।
तातेति वन्यगिरिगह्वरगुल्मवृक्षान् प्रत्यारवैर्मुखरितान् व्यतनोच्छुको य॥
तस्यानुभावविषयायितकृष्णलीलापीयूषवार्द्धिपरिमग्ननिजान्तरस्य।
कृष्णप्रसाद! भवतो रचनाप्रसून तुष्ट्यै भवेन्मधुकरायितसज्जनानाम्॥
लीलाशुकेन शुकतुल्यगिरा प्रणीत पद्मावतीप्रणयिना बहुधा विगीतम्।
श्रीभट्टपादवचसाममृतत्त्वकारि वाक्चातुरीविलसित कुलशेखरस्य॥
गोपीकुचान्तरलसद्धरिनीलरत्नमाहात्म्यमुच्चतरभक्तिरसप्रवाहम्।
भावत्ककाव्यरचनाह्रदग निपीय मोमुद्यतेऽद्य हृदय सुतरा सखे! मे॥
शैवोऽपि यत्त्वमतसीकुसुमावभासे नन्दात्मजे दृढरति भजसे तदेतत्।
ब्रह्मानुभूतिरिव काव्यरसानुभूतिर्भेदप्रतीतिशमनीति निरूपित किम्॥
कोऽह ? कवित्वमपि नास्ति न चापि भक्तिर्गीर्वाणवाचि न च सन्मतिरस्त्यनिन्द्या।
मूर्खोऽस्मि कृष्णचरितस्य गुणान् विवेक्तु कृष्णप्रसाद! कथमद्य समुद्यतस्ते॥
एवं स्थिते प्रियसखे! तव भक्तिभावसगुम्फित भगवतश्चरितामृत तत्।
कर्णे प्रविश्य मुखरामकरोन् ममेमा जिह्वामपीह कलुषामपि जाड्यजुष्टाम्॥

• • •

— ७३ —

**श्री बच्चुप्रसाद सिह सिह्ना**

हिन्दीविशेषाधिकारी, परराष्ट्रमन्त्रालय, दिल्ली

पडित श्रीकृष्णप्रसाद शर्मा घिमिरेके दर्शन और उनके मुखारविन्दसे उनकी बहु-प्रशसित रचना 'श्रीकृष्णचरितामृतम्'के कुछ अश सुननेका सुयोग सौभाग्यवश आज प्राप्त हुआ। कवि और भक्तका अपूर्व योग इनके व्यक्तित्वकी निजी विशेषता है और इनका निश्छल व्यवहार किसीको भी प्रभावित करनेमे सक्षम है।

'श्रीकृष्णचरितामृतम्'की रचना कर श्री घिमिरेजीने सस्कृत-साहित्यके स्वर्णिम अतीत एव अपूर्व अभिव्यञ्जना-शक्तिको नवजीवन प्रदान किया है और इस ग्रन्थके प्रकाशनमे योग-दानका निश्चय कर भारत सरकारने सस्कृतसाहित्य-प्रेमियोका बडा ही कल्याण किया है। फिर इस ग्रन्थमे हिन्दी-अनुवाद जुड जानेसे इसकी उपयोगिता भी बहुत ही बढ गई है।

भगवानसे मेरी प्रार्थना है कि श्री घिमिरेजी इसी प्रकार सरस्वतीके मन्दिरका शृगार अपनी समर्थ सरस लेखनीद्वारा अनन्तकालतक करते रहे।

● ● ●

— ७४ —

**श्री योगी रामनाथः, शास्त्री**

मोतीनाथ सस्कृतविद्यालय ( दिल्ली )

चिरकालात् सस्कृतलेखकाना महाकवीनाञ्चाभावमये नीरसमये समयेऽस्मिन् भगवतो जगन्मोहनस्य श्रीकृष्णस्य परब्रह्मणोऽनुग्रहेण सस्कृतभाषाया रसभावभरितस्य विविधच्छन्दो-ऽलङ्कारध्वनिलक्षणादिभि परिपूरितस्य विद्वज्जनसन्तोषप्रदस्य सर्वजनश्रुतिमनोहरस्य शुभ-काव्यस्यैतादृशस्य—श्रीकृष्णचरितामृत—नाचिकेतस-पूर्णाहुतिश्रव्यदृश्यमयकाव्यत्रयस्य प्रणेतार इमे महाकविवरा कृष्णप्रसादशर्मघिमिरेमहोदया' स्वजन्मनाऽलङ्कृत्य शाङ्करी नयपालराज-धानीमेतर्हि समागत्याऽस्मान् यदश्रावयस्तत्काव्यत्रय तदेव प्रमोदास्पदमस्माकमन्येषाञ्च सस्कृतसस्कृतिप्रियाणा विद्वद्वराणाञ्च।

तदत्र मदीया सद्भावनेय वरीवर्ति यदेतदीया इमे ग्रन्था सस्कृतानुरागिभिर्विश्वविद्या-लयमहाविद्यालयादिषु पठनपाठनक्रमे नियतरूपेणैव सस्थाप्या पाठयितव्याश्च निरन्तर समादरणीयाश्च ते तादृशैरधिकारिभिरपि। पुरस्करणीयश्चासौ महाकवि सदुपाधिप्रदाना-दिभिरिति च कामयते—

● ● ●

— ७५ —

**श्री कमलापति त्रिपाठी**

मुख्यमन्त्री, उत्तरप्रदेश कैम्प—वाराणसी

श्रीकृष्णप्रसाद घिमिरेके श्रीकृष्णचरितामृतमहाकाव्यम् का मैने दर्शन किया। अभी इसके ५८ सर्गोका प्रथमखण्ड प्रकाशित हो सका है। भगवान् श्रीकृष्णका चरित्र स्वय महाकाव्य है। श्रीमद्भागवतकारसे लेकर आजतक भारतके सहस्रो कवियोने श्रीकृष्णचरितकी कथाशको लेकर प्राय समस्त भाषाओमे रचना की है। भगवान् श्रीकृष्ण अलौकिक चरित्रवाले लीलापुरुष थे। एक ओर वे भक्ति-भावना और मधुरोपासनाके आलबन हैं तो दूसरी ओर श्रीमद्भगवद्गीताके उपदेशक और महाभारतके सर्वपूज्य नायक हैं। ऐसे लीलावतार भगवान्के

चरित्रको आधार लेकर नेपालके सस्कृत-कवि श्री कृष्णप्रसादजीने जिस महाकाव्यका यह प्रथमखण्ड प्रकाशित किया है, वह भी निश्चय ही आधुनिक युगमे उपयुक्त शृखलाका सफल, सरस, साहित्य-गुणसम्पन्न काव्य सिद्ध होगा। विद्वज्जनोद्वारा प्रशसित इस काव्यको लोग पढे और श्रीकृष्ण-चरित्रकी पावन-महिमाके कथामृतका साहित्यिक माध्यमसे पान करे। यह मेरी शुभकामना है।

मै आशा करता हूँ कि उपनिषदोमे वर्णित 'रसो वै स' से शुद्धसत्त्व-रसका किंचित् परिचय करानेमे यह ग्रन्थ सफल होगा।

● ● ●

– ७६ –

**श्री महाकवि, वनमालीदास शास्त्री**

श्री मन्मध्वपथानुगः गोपालचम्पूटीकाकारः

श्री वृन्दावनवास्तव्यः

कृष्णप्रसाद-घिमिरे सुकवावमुस्मिन् कृष्णप्रसादकविता लसतीह नूनम्।
तन्निर्मिते सुपठने निजसम्मतिं द्राक् प्रेम्णा ददाति सुकविर्वनमालिदास ॥

● ● ●

– ७७ –

**श्री वैद्यनाथ झा, प्रधानाचार्यः**

व्या० वे० ( शाकर-निम्बार्क ) आचार्यः

'एम० ए०, साहित्यरत्न' न्या० शास्त्री

कवर्गीय-श्रीनिम्बार्कसस्कृतमहाविद्यालय, वृन्दावन मथुरा

अद्य कविशेखरेण भारतीवरदपुत्रेण पण्डितप्रवरेण श्रीकृष्णप्रसादशर्मणा विरचित महाकाव्य विलोक्य सश्रुत्य च लेखकमुखेनैवास्य कतिपयानमूल्यश्लोकान् नितरा प्रासीदम्। इदमाज्ञाय मन प्रभूत परितोषमप्यलभत, यदद्याऽपि भारतखण्ड एवविधा विद्वासो लेखका विराजन्ते।

प्रसन्नताया नेदमेव कारणमस्ति, यदिद महाकाव्य निखिलकाव्यगुणोपेतं, रसमय्या सुरभारत्या विरचित, पदे पदे चात्र कवेरनेकशास्त्रवैदुष्य प्रकटितम्। अस्य रचना इयती प्रौढास्ति, यदस्य विशतिशताब्दीनिर्मितत्वेऽपि सशेते स्वान्तम्। अपि तु काव्यमिद परात्पर-परमात्मनो रसिकशेखरस्य भगवत श्रीकृष्णस्य गुणानुवर्णने लिखितमस्ति। अत्र पदे पदे वृन्दावनचन्द्रस्य श्रीनन्दनन्दस्य महिमाऽनुवर्णितोऽस्ति। अत प्रशसार्ह प्रसन्नतार्हश्चैष ग्रन्थ।

यदिद काव्य सर्वाङ्गपूर्णसदपि श्रीहरिगुणगानवञ्चित स्यात् तदा भगवतो व्यासस्य शब्दे वायसतीर्थमात्र भवेत्, यत्र च काकतुल्या प्राकृता एव रमेरन्। त्रुटिपूर्णमपि काव्य श्रीभगवद्गुणगानसमुपेत भवति विश्वकल्याणकारि जनताघहारि च। दृष्ट्याऽनया भागवत-भूतस्यास्य महाकाव्यस्य प्रशसन शब्दैरशक्यमेव।

यद्यप्यस्य प्रकाशन यस्येद गुणगान, यदिच्छया वास्य निर्माण, तत्कृपाधीनमेव, तथापि नात्र सशयो यदस्य प्रकाशका प्रचारका पाठकाश्च भविष्यन्ति प्रभूतपुण्यभाज। अह तु श्रीकृष्णगुणगानभूत महाकाव्यमिद नाम नामं भागवतप्रवर परमपुण्यात्मानमस्य लेखकमहाभागमेव नत्वैवाऽऽत्मान कृतकृत्य मन्ये।

● ● ●

– ७८ –

**श्री व्रजवल्लभशरण, वेदान्ताचार्यः**

पञ्चतीर्थ, श्रीजीकुञ्जाधिकारी, वृन्दावनम्

श्रीमद्व्रजेन्द्रनन्दनपदारविन्दयशोनुगानं हि मानवजन्मसार्थकरं मोक्षदञ्च लोके शास्त्रे प्रसिद्धम्। भगवदवतारेण श्रीवेदव्यासेन भगवता विरचितस्य भागवतस्य भगवद्यशोगानादेव सर्वोच्चमहत्त्वमस्ति। तस्यैव दशमस्कन्धीयपूर्वभागे ब्रह्मस्तुतिकौमारलीलापर्यन्तस्य प्रायश सार्धद्वयसहस्रललितपद्यैर्नेपालीयपण्डितेन श्रीकृष्णप्रसादशर्मणा टीका कृता। इमां रचनां सदृश्य मे मनसि महान् प्रमोदो जातः। रचनेयमलङ्कारपूर्णौज प्रसादादिसद्गुणमण्डिता विदुषामविदुषां वा मनांसि प्रसादयिष्यतीति मदीयो विश्वासः। टीकेयं सर्वोपकारिणीति सर्वः सुपठनीयेति पद्यद्वयात्मिका मदीया सम्मतिः।

लोकेऽस्मिन् भगवद्गुणानुगणनं सर्वार्थससाधकं
श्रीमद्भागवतं तथैव गदितं तस्यैव दिक्स्कन्धगा।
टीका कृष्णप्रसादशर्मरचिता पद्यात्मिका शोभना
रत्नाभा भगवत्कथा रसमयी सद्भिः सदा सेव्यताम्॥
श्रीनिम्बार्कमहामुनीन्द्रचरणा आचार्यपीठाधिपा-
स्तेषां कुञ्जमहास्थले व्रजभुवि श्रीधाम वृन्दावने।
सम्मत्या व्रजवल्लभाख्यविदुषा कृष्णप्रसादः कविः
सत्कृत्वाऽतिसभाजितो हृदयतः श्रीकृष्णलीलाकृतौ॥

• • •

– ७९ –

**श्री रासविहारी-गोस्वामी शास्त्री**

व्या० का० वे० दर्शनतीर्थ श्रीचैतन्यसम्प्रदायानुग, वृन्दावनम्

श्रीकृष्णचरितामृतमहाकाव्यं श्रीकृष्णप्रसादशर्म-घिमिरे महाविदुषा प्रकटितमिति-स्थालीपुलाकन्यायेन मयेतस्ततो व्यलोकि। किमिति श्रीमद्भागवतस्य महत्त्वमिति को वा न वेत्ति। सैव वाणी तावेव कर्णौ यौ भगवच्चरित्रे सर्वदा रमेते। अतिप्रसन्नोऽस्मि। तदेतेन शुभोदर्केन कर्मणा सन्तुष्टान्तरङ्ग सर्वथाप्रचम्।

• • •

– ८० –

**श्री स्वामिरङ्गिलीशरणदेवाचार्यः**, निम्बार्काचार्यानुगः

साहित्यवेदान्ताचार्य, रमणरेती वृन्दावनम्

श्रीकृष्णप्रसादमासाद्य प्रसद्य सद्य श्रीकृष्णप्रसादकरकमलकलितललितकाव्यकला-कौशलं निपुणं निभाल्य गहनगगनमालिनीं सलिलश्यामलां मेघमालामिव निभाल्य मदीयो मनोमयूरः सानन्दं नरीनृत्यते। यतो हि परमपुनीतं श्रीकृष्णचरितामृतं श्रीकृष्णप्रसादस्य भव्यभावनाभावितभावुकभक्ति विविधालङ्कारालङ्कृता भारतभारतीनिबद्धा काव्यकलाकला-पाकलनकुशलता समाकलय्य कविमुखादेव वसुधायां काव्यकथासुधां निपीय नितरां परि-तृप्तोऽस्मि। प्राचीनसमीचीनकविकुलकौशलं चात्र दरीदृश्यते। अतो भृशं प्रसीदति मदीयं मनः।

राधाकान्तकोमलकमनीयश्रीचरणकमलयो कमनीयां कामनां कुर्मं· काव्यकलाकलनकुशलक-विरय रविरिव स्वप्रकाश प्रकाशयन् सन् रससमं समय लभमानश्चिरायुष्कश्चिरयशष्क श्रीराधासर्वेश्वरकीर्तितर्ति वितत्वन् स्वकीया कीर्तितति विस्तारयत्विति कामयते। भारतीय-सर्वकारस्य जनतायाश्चाऽत्र सुदृष्टिरवश्यमवश्य पतेदित्याशास्ते च।

● ● ●

– ८१ –

**श्री लज्जाराम ललाम आचार्य**

वृन्दावन—विद्यापीठ

कविवर श्रीकृष्णप्रसादशर्मा घिमिरेजीने कृपाकर अपनेसे निर्मित महाकाव्योका कुछ अश प्रेमपूर्वक हमको भी सुनाया, जिनको सुनकर सभ्योंके साथ मैं भी मन्त्रमुग्ध रह गया। श्रीमद्भागवतपर एक अत्युत्तम नवीन पद्धतिसे जिस प्रकार वे काव्यनिर्माणकी कलाको सर्वोच्च दिखानेके लिए उद्योगकर रहे हैं, वह बहुत ही विद्वज्जनमनोहरणशील है। यह धार्मिक एव भावुक व्यक्ति-विशेषोके लिए तथा व्यक्तिमात्रके लिए मगलमय हो और अपनी इष्टसिद्धि करानेमे सदैव सफल हो। यही मेरी सद्भावनामयी कामना है।

● ● ●

– ८२ –

**श्री निरञ्जनदेवाचार्यः**

आयुर्वेदालङ्कारः, गुरुकुल-कागड़ी

अस्मिन्नपि युगे श्रीकृष्णप्रसादसदृशा· सस्कृतभाषाविदो विद्वास सन्ति, कुर्वन्ति च काव्यरचना माधुर्यमयीमिति प्रसीदति चेतो नितराम्। अनेन हि विदुषा यदिद श्रीकृष्णचरित नाम सुविशाल महाकाव्य प्रणीत तन्मया श्रुत, श्रुत्वा च परा तृप्तिमन्वभवम्। अयं हि महाकविर्नेपालदेशीय। चित्रमिद यन्नाऽसौ समादृतस्तत्रत्येन नृपतिना नाऽपि तद्देशीयैर्विद्वद्भिः शासकैर्वाऽपि। सौभाग्येन भारते समागतेनाऽनेन समुपलब्धमवलम्बनमल्पमेव शासकानामत्र-त्यानाम्। अन्येऽपि गीर्वाणवाणीसेवका काव्यरसिका धनिनश्च जना अस्य महानुभावस्य साहाय्य कुर्युरिति समभिलषति जनोऽयम्।

● ● ●

– ८३ –

**श्री राघवाचार्यः, प्रधानाचार्यः**

आदर्शदर्शनमहाविद्यालय, ऋषीकेशः

कृष्णप्रसादघिमिरेशर्मभि श्रीकृष्णचरितामृत नाम महाकाव्य व्यरचि। अत्र च समेषा सम्प्रदायाना समन्वयात्मक सन्दर्भ प्रत्यपादि। स च सर्वेषा विदुषा चाह्लादकर.। अथ च श्रीकृष्णभक्ताना वैशेष्येण मुक्तिपथ सङ्गन्तु सुलभ। अत सर्वै कोविदै सग्राह्योऽय ग्रन्थ समादरणीयश्चेत्यावेदयति विदुषामनुचर।

● ● ●

— ८४ —

श्री पुण्डरीकाक्षाचार्यः, साख्ययोगाचार्यः
श्रीआदर्शदर्शनमहाविद्यालय, ऋषीकेश

इयास्तु विशेष एतस्मिन् ग्रन्थविषये प्रचुरलेखनीयमासीत् किन्तु समयाभावात् सक्षेपरूपेणैव स्वकीया सम्मति प्रयच्छामि। यदेतेनैव विद्वासो मोदिष्यन्तीति। आचार्यचरणैर्विलिखितमेवाऽत्र ग्रन्थे पर्याप्तमतो नाऽधिक लिख्यते। किञ्च दृष्ट्वा श्रुत्वा विचार्य चेम ग्रन्थ भृश मोदते स्वान्त नितान्तमिति शम्। अधिकारिणा सुदृष्टिरत्रावश्य पतेदितिशम्।

• • •

— ८५ —

श्री वेदानन्द झा, व्या० वे० सा० न्यायाचार्यः
पोद्दाचार्य, साहित्यरत्न, एम० ए०
प्रधानाचार्य—प० स० महाविद्यालयस्य, हरिद्वार

सकलकलस्याप्यविकलस्य, वामनस्याप्यवामनस्य, खर्वीकृतगर्वस्याप्यखर्वस्य, महतोऽप्यमहतोऽद्वितीयस्याऽपि मायामानापनोदनविनोदहासपरिहासपेशललीलाकलाकलापसाधनसद्वितीयस्य, लोकलीलाकौतुकप्रपञ्चमञ्चनटस्य प्रकृतिनटीविटस्य शृङ्गारसागरस्य सर्वरसस्याऽऽप्तकामस्य नित्यतृप्तस्य राधिकाराधितस्य तस्य भगवतो या कापि लीला निगमतरौ कुसुमिता व्यासपदारविन्दसन्दानिता शुकमुखपद्मामन्दमकरन्दविन्दुतरङ्गिता जयदेवगीतिसङ्गीता सा नूनमेतर्हि श्रीकृष्णप्रसादपद्यौघसुधाधवलप्रासादोच्छलदच्छस्मयमोदमानवियन्मानसहसतामुपेयुषी नैकविधाविरलरसधारामध्यूषुषी श्रीकृष्णचरितामृतात्मकपरतत्त्वकथा समीयुषी केषा न सचेतसा सुरभारतीजुषा विदुषामुच्छलदमन्दानन्दसन्दोह परम्परामावहति।

कालिदासभासभारविमाघहर्षदण्डिबाणादिकविपरम्परावाहिनि जगत्प्रवाहेऽस्मिन् को नु जानीते स्म—भगवद्भक्तिकविता त्रिपुरसुन्दरीकेशवेशभूषणविन्यासनिपुणसुकविमालामणिषु भविष्यति कश्चन चन्द्रकान्तमणिरिव सहृदयहृदयाह्लादकर कवि श्रीकृष्णप्रसादाख्योऽपि सुमणि।

नैकविधकमनीयकोमलकान्तपदनूपुरानुरणनावर्जिताखिलजनश्रवणा स्वभावरमणीयालङ्कारसमाकर्षितसभ्यान्त करणा ध्वनितविविधसरसभावसुभगा समभिवर्षितस्फारस्वरसासारशीकरनिकरावरणीया निर्भयाऽस्य कवेर्भव्या भारती कविराजिषु प्रत्यजिर चिर कीर्तिधराया राजताम्।

भव्या भावुका भगवद्भक्तितल्लजा कविकृते स्वाध्यायकीर्तनचिन्तनैरास्वाद्य चमत्कृतिसार रस कुर्वन्तु जीवन सप्रयोजनम्। विजयता श्रीकृष्णप्रसादात् तत्र भवान् श्रीकृष्णप्रसाद कवि। कृतिरच कौस्तुभहारीभवतु हरेर्मुदे चेत्यमुमुद्गार समुद्गिरति भावविह्वलो विदुषा वशवदः।

• • •

– ८६ –

**श्री स्वामी महेश्वरानन्द, महामण्डलेश्वर**

कनखल, हरिद्वार

हिन्दुराष्ट्रनेपालनिवासिना पण्डितप्रवरेण श्रीकृष्णप्रसादशर्ममहोदयेन विरचितस्य श्रीकृष्णचरितामृतकाव्यस्य कानिचित् पद्यानि मया श्रुतानि । श्रवणेन पद्याना किमपि लालित्य प्रकटीभवति । जगद्गुरो श्रीकृष्णस्य भगवतश्चरित सर्वत्र विस्तृत भवेत् । पण्डितप्रवरस्य महान् परिश्रमश्च सफल· स्यादिति मे मगलकामना । त काव्यप्रणेतार पण्डितप्रवरं सुधन्यवादैरभिनन्दामि ।

● ● ●

– ८७ –

**श्री स्वामी रामस्वरूप महामण्डलेश्वर** वेदान्ताचार्य,

गुरुमण्डल-आश्रम, हरिद्वार

वासुदेव· पर· कृष्ण श्रोता कृष्णस्तथार्जुन ।
गीतालेखकरूपेण कृष्ण सत्यवती सुत ॥ १ ॥
कृष्णप्रसादलिखित श्रीकृष्णचरितामृतम् ।
कृष्णप्रसादमूर्तं यदमूर्तं मत्सरात्मनाम् ॥ २ ॥
कवि कृष्णस्तथा काव्य श्रीकृष्णमिदमद्भुतम् ।
रामरावणयोर्युद्धमित्यन्वयसुसगतम् ॥ ३ ॥
रससागरसभूत कविमन्दरलोडितम् ।
देवैरपि दुरासाद्य श्रीकृष्णचरितामृतम् ॥ ४ ॥
दिव्यालकारसद्भावध्वनिरीतिरणत्कृति ।
समेषा मोदमाधत्ता कवे कृतिश्चमत्कृति ॥ ५ ॥
धन्या हैमवती गगा भगीरथकविस्तुता ।
नेपाले कृष्णशुक्लात्मा कृष्णशुक्लफलप्रदा ॥ ६ ॥
नेपालभूमिमाणिक्यविद्वद्वृन्दैकवन्दित ।
कृष्णप्रसादमेधावी मेधया चिरमेधताम् ॥ ७ ॥

● ● ●

– ८८ –

**डा० स्वामी श्यामसुन्दरदास शास्त्री**

वेदान्ताचार्य, साख्ययोगाचार्य, B I M S

प्रधानाचार्य श्री गरीबदासीयसाधु-

सस्कृतविद्यालय, हरिद्वार

**विद्ययाऽमृतमश्नुते**

नेपालवास्तव्यै 'घिमिरे' इत्युपाधिसमलङ्कृतैर्विद्वद्रत्नैर्विरचित सौन्दर्यमाधुर्यगाम्भीर्यपदावलीपरिप्लुतमिद ग्रन्थरत्न 'श्री कृष्णचरितामृतम्' महाकाव्यं नाम साक्षाद् भगवद्भक्तिद्योतक भगवद्गुणगरिम मुक्तारत्न श्राव श्राव मे मानसहसो भूयो भूयो मुदमावहतितराम् । ग्रन्थेऽस्मिन् वेदवेदान्तोपनिषत्पुराण सारभूत वस्तुतत्त्व स्थापित वर्तते । यदीद ग्रन्थरत्नमचिरमेव प्रकाशित स्यात्तर्हि सामाजिकसास्कृतिकधार्मिकवैदिकपरम्पराया सरक्षणेऽतिशयेन सहायक भविष्यतीति मे परमास्था ।

● ● ●

– ८९ –

**श्री पूज्य प्रभुदत्त ब्रह्मचारी**
सकीर्तन-भवन-झूसी ( प्रयाग )

सुनिके कविता मधुर हियो मेरो अति हुलस्यो ।
काव्य ललित अति सुखद यथा अवसर रस विलस्यो ।।
कृष्णप्रसाद महान कामिनी-कविताके पति ।
रच्यो चरित हरिभक्ति-सुधामय सुन्दरवर अति ।।
पढे सुनै जे प्रेमतै प्रभु-चरननि तिनि होइ मति ।
चिर जीवै, जग यश लहै, भई नयैभू धन्य अति ।।

• • •

– ९० –

**महन्त श्री सीतारामाचार्यः**, व्याकरणसाहित्याचार्य
प्रधानाचार्यः रामदेशिक-सस्कृतमहाविद्यालय, प्रयाग

श्रीमता कृष्णप्रसादघिमिरेशास्त्रिणा विरचित श्रीकृष्णचरितामृत नवोदित काव्य सत्यमेव सर्वलोकोपकारकम् । यतो हि काव्यस्यास्य भाषा सरला शैली च मनोहरा । श्रीमद्-भागवतकाव्यानुजीवितत्वेन भक्तजनाना यमकानुप्रासागुम्फितत्वेन सहृदयाना विदुषाञ्च मोदावह् वर्तत एव । अस्य प्रकाशनेन भारतीयसस्कृते सुरभारतीमाध्यमेन सर्वत्र प्रकाशो जायेतेति भगवन्तं श्रीकृष्ण प्रार्थये । कामये चास्याऽभ्युदयमिति ।

• • •

– ९१ –

**श्री योगी नरहरिनाथः**
मृगस्थलीगोरक्षपीठनिष्ठः ( नेपाल )

## समवेदना

कृष्णप्रसादघिमिरे-कविना विना क·
शक्नोति कृष्णचरित भणितुं नवोक्त्या ?
यस्मिन् वसन्ततिलका तिलकायमाना
नाना रसाः सकलवृत्तसखा समाना ।। १ ।।
राजा भर्तृहरि सदुक्तिविमुखै खिन्न· खलैर्विश्रुतो
वाग्भूतिर्भवभूतिरुद्भटजगन्नाथ कदर्थीकृत· ।
इत्यं सत्कवयो मुरारिसहिता लक्ष्मीप्रसादादयो
याता कृष्ण ! न ते भय कविरय राजामहेन्द्र स्वयम् ।। २ ।।
अन्ये धन्यजना वसन्ति भुवने मर्मस्पृश. सद्गिरा
शार्मण्यादिविभिन्नदेशविदुषा कर्णे सुवर्णावली ।
ध्वन्यात्मा प्रविशत्यशेषविषया नैराश्यमुत्सार्यता
स्वातन्त्र्य भजतेऽत्र .भारतधरा काव्येषु बद्धादरा ।। ३ ।।

**यो समवेदनाको नेपालीभाषामा अनुवाद—**

कवि कृष्णप्रसादशर्मा घिमिरेले भिन्न अर्को कुन व्यक्ति नयाँ भनाई बाट श्रीकृष्ण-चरित्र भन्न ( लेख्न ) सक्छ ? जुन भनाईमा वसन्ततिलका ( छन्द ) नै शिरको श्रेष्ठ टीका जस्ता भएका अनेकौं छन्दहरूका मित्र नाना प्रकारका रस (शृङ्गारादि) बराबर छन् ।। १ ।।

महाराज भर्तृहरि सदुक्तिमा विमुख भएका ( अरुका कुरा न सुन्ने ) वज्र-स्वाँठहरूले साह्रै खिन्न गराइए। त्यस्तै सदुक्तिका उद्गमस्रोत महाकवि भवभूति र प्रकाण्ड-विद्वान् पण्डितराज जगन्नाथ पनि साह्रै नै सताइए। यसरी उहिलेका ठूला ठूला मुरारी आदि कविहरू र अस्तिका लक्ष्मीप्रसाद देवकोटा आदि कविहरू त्यसै ( त्यस्तै भएर ) मरेर गए। तर कृष्ण ! तिमीले त्यसरी डराँउनु पर्दैन, राजा महेन्द्र आफै कवि छन् ।। २ ।।

( अथवा छैनन् भने ) सदुक्तिको सम्मान गर्न जान्ने, मर्म बुझ्ने अरू धन्य-जनहरू भुवन-भरी छँदैछन् ( ती पनि छैनन् भने ) जर्मन आदि गरिएका विभिन्न ( यूरोपीय ) देश-वासी विद्वान्हरूका कान-कानमा यो सम्पूर्ण विषयको सुवर्णमय-वाणी ध्वनिको रूप लिएर पसी छोड्दछे। यदि पसिन भने ( उनीहरू पनि छैनन् भने ) यस्ता काव्य भन्दा हुरुक्कै हुने ( आदर गर्न जान्ने ) भारत-माता ससारभरमा ( अहिले सम्म ) स्वतन्त्र छँदैछन्। निराश न होऊ।

● ● ●

– ९२ –

**आचार्य, डिल्लीराम तिमसिना**
अध्यापक, नेपालीविभाग, काशी हिन्दुविश्वविद्यालय
एम० ए० काव्यतीर्थ, साहित्यरत्न, दर्शनाचार्य, जर्मन डिप्लोमा

गीर्वाणवाणीका माध्यमले वाग्देवीको उपासना गर्ने नेपाली पण्डितहरूको परम्परामा कविरत्न कृष्णप्रसाद घिमिरेज्यूको काव्य-साधनाले सबैलाई उछिनेको छ।

प्रस्तुत महाकाव्यमा प्रतिभाशाली कवि श्रीकृष्णप्रसादजीका सहज कवित्वको आफ्नै महत्त्व र गौरव छ। सहज-प्रतिभा सम्पन्न सारस्वत-कवि, आभ्यासिक-कवि र औपदेशिक-कविका तीन श्रेणीमध्ये कवि-घिमिरेका काव्य-कलाले आफूलाई पहिलो दर्जामा दर्ता गराँउन औल्याएको छ। यस युगमा पनि सरल, सहज र सरस संस्कृतमा सुबोध काव्य रचेर रसा-स्वाद लिन-दिन सकिन्छ भन्ने उज्ज्वल दृष्टान्त 'श्रीकृष्णचरितामृतम्' महाकाव्य हो। पुरातन विषय-वस्तुलाई मौलिक-प्रतिभाद्वारा प्राञ्जल-भाषामा सिंगारिएको छ। कविराज राज-शेखरले भने अनुसार शब्दार्थमा र उक्तिविशेषमा नूतनताको निरीक्षण गर्ने सूक्ष्म र तीक्ष्ण दृष्टिकोण हुने कवि 'महाकवि' हो। प्रस्तुत महाकाव्यमा यस्ता अपेक्षित गुणहरू स्पष्ट दृष्टि-गत हुन्छन्। नेपालमा जन्मिएको 'श्रीकृष्णचरितामृतम्' ले भारतभूमि-बनारसमा हुर्किएर प्रकाश पाँउने अवसर लियो। यो पनि विधिकै विधान वा सजोगकै कुरो हो। यस महाकाव्यको नेपाली-टीका पनि भएको भए सुनमा सुगन्ध हुने थियो कि भन्ने लागेको हो तर खोई ! हुन सक्ला र ? कतिपयौ कारणले कुन्नि ? यस प्रशसनीय-प्रयासको लागि घिमिरेज्यूमा शुभाभि-नन्दन टक्र्याँउन पाउँदा असीम हर्षोल्लासको अनुभव भएको छ।

● ● ●

– ९३ –

**पण्डित लोकनाथ रेग्मी**
कुश्लेचोर काठमाण्डू, नेपाल

## यसमा मेरो प्रसन्नता र खिन्नता

❀

मर्नै पर्दैन, भन्न न हिचकिचाउने छन् भने, उनीहरूले पनि अन्तिम सास फेर्दा भाग्यले दिए मरे नि ! कृष्ण !' भनेर डाँको छोडेर आधारस्थल खोजिने यो तिनै जगन्नियन्ताको सच्चरित्र हो, जसलाई 'कृष्णचरित्रै' भन्दछन् । तिनै प्रभुको त्यही विषय बनाएर नेपाल-माताका सुपुत्र हाम्रा भारत-प्रसिद्ध कवि-भाई कृष्णप्रसाद-घिमिरेज्यूले जो यो महाकाय महाकाव्य रचे, त्यसमा मलाई ठूलो हर्ष र गर्व छ । जसलाई भारतका त्यस्तै त्यस्ता विशिष्ट-विद्वान्हरूले निकै आफन्तको दृष्टिले आँखै गाडेर हेरेछन् । भारत-सरकारले त अगाँल्नै खोजेछ, तर हाम्री कविज्यूकी ओजस्विनी सद्गुण-रूपवती कविता-वनितालाई ग्वाम्ल्वाङ्ग पार्न न सकेता पनि हात-पात गर्न चुकेन छ । यो पनि हामीले उनी हाम्री र राम्री हुन् भन्ने सद्भावनापूर्ण ममता राख्ता-राख्तै पनि विवश भएर त्यस्तो गरेको पनि हेरि रहनु पऱ्यो। यसमा पहिले देखिनै हामीले दृष्टि न पुऱ्याएकोमा मलाई निकै ठूलो दुःख लाग्दछ, साथै त्रास पनि लाग्दछ कि, कही यी कविका अरू यस्तै-यस्ता रचनारूप कविता-वनिता हरू जो श्रव्य-दृश्यमय छन्, पराइका गुनका भारले झुक्नु परेर उनीहरूले 'हाम्रै हुन्' भन्न सक्ने पार्न न पाँउन् । के यो मेरो भनाईमा सुयोग्य-व्यक्तिमात्रको ध्यान जाला ? चाहे जे होस्, भविष्यले नै भन्नेछ । कवि सँधै अमर हुन्छ । कसै कसैले मृत भनिएको तर अमृत-वाणीमा लेखिएका कृतिहरू छन् भने ता भन्ने मृत भएर गए पनि यी ता अझै अमृतै छन्, पछि पनि हुने नै छन् । यो कुराको निरीक्षण-परीक्षण गर्ने हाम्रा पछिल्ला पीढी पनि त छँदैछन् नि ! अस्तु ॥

● ● ●

– ९४ –

**श्री चन्द्रकान्त अधिकारी, बि० ए०**
दुराडाँडा, पश्चिम नेपाल

## यसमा मेरो उद्गार—

लीलापुष्पपराग मिश्रित हुँदा सौन्दर्य बढ्दा स्वत
धाई छन् धरती प्रसन्न जसकी श्रीपादचिह्नाञ्चित ।
छातीमा तिनकै चढी शिशु बनी खेल्ने जगत्का धनी
माटो एक मुठी कुपुक्क मुखमा हाल्छन् विनोदी बनी ॥

सुन्दा बालकबाट नन्द-गृहिणी दौडदै त्यहाँ पुग्दछिन्
च्याती श्रीमुख हेर्दछिन् जब उनी सारा जगत् देख्तछिन् ।
त्यस्ता गोप-कुमारका चरित छन् ब्रह्माण्ड देख्नेतक
नौलो ढङ्ग लिएर अङ्कित यहाँ पढ्ने छ हाम्रो हक ॥

हाम्रै उच्च हिमालबाट यसरी धारा-सुधा काव्यको
ब्रह्मानन्दसहोदरादृत हुँदै भर्दै गुफा वैरियो।
सारा भारत-फाँट भर्छ यसले, पारी पुगी अन्तमा
हाम्रो सस्कृति साछं है। घुमि-घुमी पाश्चात्य-ससारमा ॥

हौ हामी सव एक बिन्दु त्यसका, त्यो सिन्धु हो, ब्रह्म हो
झिल्का हौ सव, अग्नि हो प्रभु त्यही, सत्-चित् र आनन्द हो।
चिन्दैनौ त्यसलाइ, शक्ति त्यसको कस्तो छ, के के छ त्यो
जान्दैनो, कवि जान्दछन् सव कुरो, विश्वास सामू छ यो ॥

हामी गौरव मान्दछौ सुकविमा यो काव्यको सृष्टिमा
राख्छौ सज्जनका समक्ष यसरी विन्ती गरी गढ्नमा।
यो कस्तो छ र, के छ जान्न बहुधा अभ्यर्थना गर्छु म
भन्छन् भारतका सवै बुध यसै 'यो काव्य हो उत्तम' ॥

त्यस्ता सज्जन-सङ्कुले पनि निकै यस्को प्रशसा गरे
बौलाए कित ती सवै जन त्यसै के हो ? कि पोल्टो भरे ?।
भो छोडौ अब यो कुरा, मनपरे हेरौ गढी काव्य यो
हाम्रै हुन् 'कविरत्न-कृष्ण' 'जब यो नेपालको नाक भो ॥'

● ● ●

– ९५ –

**श्री डा० हरिदेव मिश्र, न्यायाचार्य।**
त्रि० वि० वि० सस्कृत—एम० ए० विभागाध्यक्षः ( नेपाल )

विदाङ्कुर्वन्तु तत्र भवन्तो महानुभावा गीर्वाणवाणीप्रणयिन सर्वकारा सस्कृतसस्था-सञ्चालका विबुधा नेपालभारतस्थधर्माधिकारिणो बुधाग्रगण्याश्च। यच्छ्रीकृष्णप्रसादघिमिरे-प्रणीतानि श्रीकृष्णचरितामृत-नाचिकेतस-पूर्णाहुत्यभिधेयानि श्रव्यदृश्यकाव्यरत्नानि विलोक्य विश्रुत्य च कवयितुरेव श्रीमुखान्नितरा परितुष्टमानसोऽस्मि ब्रवीमि चेदृशे विकराले सस्कृतभाषा (ऽ) भृतभाषेति सजल्प्यमाने सुरासुन्दरीप्रियतमजाले स्वार्थसपूर्तिसलग्नविश्वमानसमोहमाले कलिकालेऽपीदृशाना काव्यग्रन्थानामाविर्भाव सत्यमेव स्मारयत्यस्मानपि तत्ससर्गसम्बन्धित-कलुषितमतीश्चापीय भगवद्भक्तिरेवाऽत्र प्रधानमन्यत्सर्वमेवाऽप्रधानमात्मैक एव सत्य वस्तु यत्सर्वं विसृज्येहाऽवसाने विशुद्धश्चेत्प्रगच्छति सच्चिदानन्द स्व धाम। ततस्तत्कृत एव प्रयतितव्य सर्वैर्विहायेदृशान् गगनफलोपमास्तर्षान्। तत्प्राप्तये च सुनिपुण निरूप्य सप्राप्तलौकिक-पारलौकिकसद्गुरुप्रसादेनाऽस्माक प्रियनेपालदेशाभिजनेन श्रीकृष्णप्रसादेन 'कृष्णप्रसादेन घिमिरे' इत्युपाह्वेन विलिखितानीमानिश्रव्यदृश्यकाव्यव्यपदेश्यानि सद्ग्रन्थरत्नान्युभयब्रह्म-स्वरूपनिर्देशकानि ये नाम महापुरुषविशेषा सुसेवन्ते पठन्ति च तानि सम्यक् समाहिता निरूप्याऽत्रत्या सुगमा सदुपाया उदारा महात्मानस्ते 'आत्मा वा अरे द्रष्टव्य श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यादिस्वरूपेण विभावयमाना आत्मान आत्मानमेव समुद्धरन्ति कलिकलुषप्रपूर्णादस्माद्भवार्णवादिति विभावयमानस्तत्सत्य सच्चिदानन्दक वस्त्वेव स्वानुभूति-

पथमानयन्ति तत्सर्वमपि तेषां ससिध्यति च विचारयन् ग्रन्थानिमानदृष्टपूर्वान् दृष्ट्वा निरूप्य चैषा सस्थिती सुभृश विमुग्धहृदयोऽहं गीर्वाणवाणीप्रियान् विविधदेशस्थितिनियम-निर्णायिकान् सर्वकारान् तथा च सस्कृतसस्कृत्यभिवृद्धिसस्थासमितिनिर्वाहकान् विद्वद्वरान् सुरभारत्यभिमानिनश्च महानुभावान् स्वस्वधर्माधिकारिणश्चैव विज्ञापयश्चेमा सहृदयहृदया-ह्लादकरी सुरलोक्या प्रवृत्ति नितरा प्रसन्नोऽस्मि। तत्कामयेऽस्य कविवरस्याऽनुदिनमेधमाना सत्कीर्ति प्रज्ञाञ्च यथा सोऽय कृष्णप्रसाद सप्राप्तश्रीकृष्णप्रसादो भूत्वा सुचिरमस्मास्तद्गत-प्राणानीदृशैरन्यैरपि सद्ग्रन्थैर्विनिर्मितैराह्लादयत्विति चाशास्ते।

● ● ●

– ९६ –

**श्री जीवनाथ झा शर्मा**
व्याकरण-न्यायाचार्य.
प्रधानाध्यापक स० प्र० विद्यालयस्य, जनकपुर, नेपाल

अनुकरणीयगुणचय-सदय-प्रतिभाधर-कविवर श्रीकृष्णप्रसादघिमिरे-शर्मणा क्रियमाण-शाश्वतसारस्वतकर्मणा निर्मित भक्तिधुनीप्रवाहपूरित कोमलकान्तपदावलीविलसित सुश्राव्य कृष्णचरिताऽमृत नाम सुमहत्काव्य परमात्मविषयकतयाऽतिभव्य नव्य स्थालीपुलाकन्यायेन वीक्ष्य परीक्ष्य च तत्रत्य सत्य परमार्थवत्त्व तत्त्व निरवसाद प्रसाद धारयामि पारयामि च ह्रासमये समयेऽप्यस्मिन् समस्मिन् सुरभारत्या प्रवर्तमानमाराधन सस्कृतिनिरोधिना विरोधिनामग्रत समग्रत प्रदर्शयितुम्। भक्तिप्रवाहसञ्जातधारापातप्रणयनतया नूत्न-ग्रन्थरत्नमिदमालङ्कारिकसमालोचनानिकषोपले निर्मले घर्षणीयताममर्षणीयताञ्चाऽभूषण-दूषणपञ्जिकाघातप्रत्याघातजाले काले सुतरामर्हतितराम्।

श्लाघ्यपदलालित्य स्तुत्यसौहित्य भव्य सुमनोभक्तिसौरभ्यञ्चैतदीय नूनमेव प्रभाव-यिष्यति सस्कृतजगदिति मन्वानस्तन्वानश्चाऽस्य सुकवेर्दीर्घजीवनम्।

● ● ●

– ९७ –

**श्री शिवशङ्कर झा, महोपाध्याय.**
साहित्यधर्मशास्त्रायुर्वेदाचार्यः
मटिहानी, नेपाल

पण्डितप्रवर-श्रीकृष्णप्रसादघिमिरे-महोदयेन सन्दृब्ध श्रीकृष्णचरितामृतनामक महा-काव्यं बहुषु स्थलेषु दृष्ट स्वमनोयोगेन दोषज्ञदृष्ट्या च निभालित विश्रुत्याऽपि सुविचारितम्। नाऽत्र प्रतिवाद कश्चिदपि वर्तते। स्वान्त वशीकरोति चेद महाकायमदृष्टपूर्वं महाकाव्य नितान्तमश्रुतपूर्वञ्च। सरल सरस प्रतिश्लोक सुमनोहारि शब्दार्थालङ्कारभरित विलक्षण-लक्षणालक्षित ध्वनिरीत्यादिभिरितस्तत परिपूरित दृष्ट्वैतत्काव्य नितरा प्रसीदन्ति सहृदय-हृदयाह्लादकाना सुमनसा सुमनासि परगुणैकपक्षपातिनाम्। किमन्यद्विज्ञापये? जगति प्रसरदिद मनोमन्दिर प्रकाश्य स्वमहसा पाठकाना ग्रन्थकर्तु कवे कीर्तितति तनोत्विति च श्री १००८ पशुपतिनाथपादपङ्कजेभ्योऽभ्यर्थये।

● ● ●

– ९८ –

श्री पूर्णप्रसादो ब्राह्मणः
ताहाचल काठमाण्डू (नेपाल)

## मम मन्तव्यम्

'स्वकर्मसूत्रग्रथितो हि लोक' । इति सत्य स्वनियतिफलमेवैतत्, यन्ममाऽन्ये सखायो लब्धवर्णा अपि, मुनिसन्ताना अपि केचित्सेवावृत्या जीवनमतिवाहयन्ति, केचन वाणिज्येन, कतिपये च कृषिकर्मणा । स्वयमहमपि स्वयसृष्टे प्रपञ्चजाले निबद्धोऽभवमकिञ्चित्कर एव । न सभाव्यतेऽस्मत्त काऽप्यमरकृतिर्भविष्यत्यपि जनिष्यते वेति च । यतो वीतरागाणां परतत्त्वैकनिष्ठाना कर्मयोगिना पदमनुसरद्भ्यो महाशयेभ्य एव हि तादृश्या कृते. श्रीगणेशो भवति । दुर्हृदयाना स्वान्त सस्कारपरिवर्तनशोधनसाधनासाधिका कृतिरेव हि परिभाष्यतेतमाममरा कृतिरिति । एतदनुसार वय तु सत्यम् 'यो न विद्वान् न धार्मिक' इति यत् वितथजनुषा पङ्क्तौ गणनीया स्मेत्यह मन्ये, चेखिद्ये च । अनयैव दृशा दृष्ट कृष्णप्रसादघिमिरे महोदयो मम सखेति स्मृतावपि गर्वमखर्वमनुभवाम्यहम् । यत. स स्वजीवनस्य प्रत्येकक्षणाना भगवतः श्रीकृष्णस्य गुणानुवादेन सदुपयोगात् धार्मिकोऽस्ति, स्वदेशीयैर्विदेशीयैश्च प्रकाण्डविद्वद्भिरप्यतिमात्र प्रशसितकवित्वपूर्णवैदुष्यत्वाद् विद्वानप्यस्ति । बहुश्रुतेष्वपि व्यक्तिविशेषेषु वैदुष्यधार्मिकत्वयो प्रायो वैयधिकरण्यमेव हि दृक्पथमायाति नैतादृश स्तुत्य सामानाधिकरण्यम् । विचित्र चित्रितमेतच्छ्रीकृष्णचरितामृत श्रीकृष्णप्रसादशर्ममहोदयै ।

किञ्च—यदि वर्तमानयुग, समाज , स्वीयाऽर्थिकास्थितिश्च त न पदे पदे प्राहरिष्यस्तर्हि वय घिमिरेमहोदय नेपालस्य व्यासमेव वक्तु प्राप्स्याम । तथापि हृदैव भगवन्त प्रार्थये—'तस्य जीवन सुदीर्घं, मनोरथाश्च पूर्णा भवन्त्विति ।

प्रकृतकृष्णचरितामृतस्य तस्य महामहाकाव्यस्य विषये तु नाऽह किमपि वक्तुमुत्सहे । यत प्रकाण्डवैदुष्यै काव्यनिर्माणसमालोचनचुञ्चुभि पर शतैस्तैर्द्विद्वद्भिर्विदेशीयैरेकस्वरेण मुक्तकण्ठमतिसीम च तत्प्रशसितचरमस्त्येव । तत्र मम पुन कोऽर्थश्चर्विताचर्वणायितेनाऽल्पप्रतिभेनोपश्लोकनेन । इत्यल बहुना ।

● ● ●

– ९९ –

श्री चूडानाथ भट्टरायः, सर्वदर्शनाचार्यः
राष्ट्रिय-प्रज्ञाप्रतिष्ठान काठमाण्डू, नेपाल

श्रीमहाभागवतस्य महाकवे कृष्णप्रसादशर्मण श्रीकृष्णचरितामृत श्रोत्ररन्ध्रै. श्रावं श्राव, पाय पाय च ब्रह्मानन्दसहोदर तत्काव्यरसास्वाद न सुतृप्तिमावहत्यस्माक चेत. । रचनाशैली चास्य सुकवे सरसा सुमधुरा सरलातिसरला च दरीदृश्यते । सर्वातिशायिनी खल्वेषा सुकृते कृति । चकाशते चात्र सर्वेऽपि सत्काव्यगतगुणा । चमत्करोति च रसमाधुरी । भगवतो महापुरुषस्य श्रीकृष्णस्य सद्गुणरूपलीलासवलिता सुरचना । तद्धन्योऽस्य कवियैन निमायि तच्चरितामृतममृतमिव सभूय सुरासुर समुद्रमन्थनत । तन्नेपालरत्नस्याऽस्य कवेरुत्तरोत्तरा समुन्नति कामये ।

● ● ●

श्री माधवप्रसाद देवकोटा
धर्मशास्त्राचार्य, पाल्पा ( तानसेन ) नेपाल

## हर्षोद्‌गारः



श्रुतमाशिकरूपेण कविकोकिलकण्ठत ।
महाकाय महाकाव्य श्रीकृष्णचरितामृतम् ॥ १ ॥
मोक्षप्रदामिहाऽऽलम्ब्य श्रीमद्भागवती कथाम् ।
वर्णित चरित चारु कृष्णस्य परमात्मन ॥ २ ॥

रचना भूरिमाधुर्यप्रसादगुणशालिनी ।
आश्लिष्टरससपुष्टि सदलङ्कारमालिनी ॥ ३ ॥
द्वैपायनेन सक्षिप्तस्तक्योंऽर्थ कविना सता ।
विस्तारितो युक्तियुतै कल्पितै· सुकथानकै ॥ ४ ॥

श्रीमद्भागवतस्याऽर्थं वैशद्येन बुभुत्सताम् ।
भविता मधुरा व्याख्या श्रीकृष्णचरितामृतम् ॥ ५ ॥
च्युतोऽपि वाग्विसर्ग स्यादच्युतस्य गुणस्तुते ।
पापनाशनमाहात्म्यादुपादेयो भवेत् सताम् ॥ ६ ॥

नेपालराजधानीस्थो घिमिरे-कुलदीपक ।
कवि कृष्णप्रसादोऽय चकास्ते ग्रन्थगौरवात् ॥ ७ ॥
श्रीकण्ठस्योपासकोऽपि श्रीकृष्णचरितामृतम् ।
पाययन्बोधयत्येष भाव हरिहराद्वयम् ॥ ८ ॥

सस्कृते प्राकृते ग्रन्थान्कृत्वाऽनूद्य च सज्जनान् ।
आह्लादयन् कथ न स्याद् व्यक्तिवोत्कर्षहर्षभृत् ? ॥ ९ ॥
दृष्ट्वा हृष्टोऽस्म्यद काव्य धन्यवादपुर सरम् ।
कामये सुकवेरस्य चिरायुष्ट्व श्रिय यश ॥ १० ॥



-१०१-

श्रीशेषराज रेग्मी, महोपाध्याय साहित्यसुधाकरः
धर्मशास्त्राचार्य काव्यतीर्थः, प्राध्यापकः
नेपालस्थत्रिभुवन-विश्वविद्यालयस्य, वाल्मीकिमहाविद्यालयस्य च
( लेखकस्याऽस्य लौकिका गुरुचरणा इमे )

## श्रीकृष्णो विजयताम्



प्रस्तुत श्रीकृष्णरचित श्रीकृष्णचरितामृतमवलोक्य परीक्ष्य निरीक्ष्य च तत्र-तत्रत्यैर्विशिष्ट-विद्वद्भिरित्थममुग्रहीत विश्रुत्य च कविनुखादेवेतस्तत प्रायश सर्वमपि नितरा प्रमुदितोऽभवन्मदीयोऽन्तरात्मा। तदस्मै सत्कवये प्रियवरायान्तेवासिने निम्नस्थिता शुभाशसा शुभाशीर्वादरूपेणैवोपदीकृत्य कविरत्नस्याऽस्य सत्कर्मणोऽवश्यमवश्यमेव सस्कृतसस्कृतिसरक्षणप्रवर्धनपरा गुणगृघ्नवो विद्वास सुतरा परितुष्टा भविष्यन्ति सफला करिष्यन्ति तदोया परिश्रमजन्यासदिच्छा चेति विश्वसिमि, पुनर्विनिवेदयामि च नैकविधप्रपञ्चनिचयव्यग्रत्वेऽपि काव्यरत्नस्याऽस्य द्वितीयसर्गस्थप्रमेयचयमवलोकयितु सुकृता सविशेषामिमा मदीयामभ्यर्थना ध्रुव करिष्यन्ति सफलामिति मत्वैवाऽहमधुना विरमामि विस्तरादिति शमस्तु।

कृष्णप्रसादसमवाप्तमतिप्रकाशो वागीश्वरीजनितकाव्यकलाविकास
आरोग्यशक्तिशमसौख्यगुणानवाप्य कृष्णप्रसादकविरेष चिरायुरस्तु ॥
शक्ते सदा सदुपयोगपर प्रकृष्टो नारायणस्तवपरायणताविशिष्ट
इत्थ प्रदर्शितनवप्रतिभाविभासो भूयान्महाकविरसौ सफलाभिलाषः ॥



## सर्वात्मन् !

मनुष्यता पूरुषताग्र्यवर्णता
मनीषिता सत्कविता शिवैकता।
इयं मम क्षेमपरम्परा विभोः
स्तुतिप्रसङ्गेन गता कृतार्थताम्॥

*सर्वात्मन् ! पहले तो मुझे मनुष्ययोनिमें जन्म मिला, उसमे भी पुरुष-शरीर ही प्राप्त हुआ, उस पर भी ऊँचा-वर्ण ( ब्राह्मणत्व ) उपलब्ध हुआ, उसमे भी उत्कृष्ट-बुद्धि एव उच्च विचार-शक्ति सुलभ हुई, इसके ऊपर भी उत्तम कवित्व-शक्ति मिली और फिर भगवान् शिवके प्रति ऐसी अनन्यता प्राप्त हुई। यह मेरी कल्याण-परम्परा आज आप-प्रभुके स्तुति-प्रसङ्गसे कृतार्थ हो गयी।*

—कृ० प्र० घिमिरे

निरन्तरसत्काव्यप्रणयनानुरक्तचेतसामतिशयविपुलकायमहाकाव्यनिकाय-
निर्मितिसमाह्लादितसचेतसां काव्यानन्दानुभूतिप्रवणमनसां विका-
सितसुमनसां श्रीमतां कृष्णप्रसाद-घिमिरे महाकवीनां श्रीकृष्ण-
चरितामृताख्यमहाकाव्यसमुद्घाटनावसरे 'कविरत्ने'
त्युपाधिदानबहुमानेन समर्प्यमाणम्

# अभिनन्दनदलम्

•

**कविरत्न !**

श्रीकृष्णचारुचरितामृतदुग्धसिन्धु बन्धु विदां सुकविमण्डलगर्वभूमिम् ।
'कृष्णप्रसादघिमिरे' 'कविरत्न'-मीडयं प्रेम्णाऽभिनन्दतितरां कवि-भारतीयम् ॥ १ ॥

येनाऽधुनापि सततं रमणीयकाव्यनिर्माणबन्धुरगिरा सुरवाक्समृद्धिः ।
व्यातन्यते नवनवैः कवितावलासैः सोऽयं चिरं जयतु नूतनसर्गवेधा ॥ २ ॥

एतादृशानि विविधानि सुधीन्द्रवृन्दवन्द्यानि चारुचरितामृतसम्भृतानि ।
काव्यानि नैकरचितानि लभामहे तत् क्षेमेन्द्रमेतमधुनातनमामनाम ॥ ३ ॥

अस्याऽऽस्यरङ्गभुवि सूक्तिसरस्वतीयं नृत्यत्पदन्यसनतोऽधिकृतान्तरङ्गान् ।
मुग्धान् विदग्धमिवहान् परितर्पयन्ती लोकोत्तरं किमपि कौशलमातनोति ॥ ४ ॥

यो जन्मना हिमवतोऽङ्कमुपाश्रितोऽपि श्रेयस्करः सुमनसां मलयानिलोऽस्ति ।
अर्थागमे गतरसोऽपि सदर्थदाता निःस्वः सुवर्णघटनोर्जितवैभवोऽपि ॥ ५ ॥

आविष्कृता यदपि नव्यतमैः पदार्थैश्चञ्चत्प्रभैर्मतिमतामपि दृष्टिकुण्ठा ।
किन्तु प्रतीपसमयेऽपि दृशोर्बुधानां काव्याञ्जनेन सुषमामसमां तनोति ॥ ६ ॥

वृत्ते स्थितापि, सुगुणापि, विभूषितापि, वक्रोक्तिरञ्जितकथापि, रसाञ्चितापि ।
श्लिष्यत्यहो ! प्रसभमेव विदां सुकण्ठमग्रेऽपि चुम्बति मुखं कविता प्रिया ते ॥ ७ ॥

कृष्णप्रियोऽपि धवलीकृतविश्वरूपो नित्यं चिरन्तनपुराणरतोऽपि नव्यः ।
काव्यानुगोऽप्यमरसम्पदि साधिकारो ह्यरो गिरां जयति कोऽपि गुणाभिरामः ॥ ८ ॥

युष्मत्प्रमोदपरिवर्धनहेतुभूतं प्रत्यग्रकाव्यकुसुमाञ्जलिमर्पयित्वा ।
वाराणसेयकविकाव्यविदां समज्या त्वन्मङ्गलाय भृशमर्थयते महेशम् ॥ ९ ॥

स्थानम्—वाराणसी
दिनाङ्कः—१०-२-७२

वयं स्मः
कविभारती-सदस्याः

# प्रस्तुतश्रीकृष्णचरितामृतमहाकाव्यस्य
## तत्तत्सर्गस्थविषयाऽनुक्रमणिका



| | |
|---|---|
| अष्टमसर्गः– ( उपजातिवृत्तम् ) | देवकीगर्भेऽनन्तप्रवेश । मायेशयो संवाद । गर्भसङ्कर्षणञ्च । तथा भगवतो वसुदेववीर्यतो देवकीगर्भे प्रवेशश्च । |
| नवमसर्गः– (वसन्ततिलकावृत्तम्) | भगवत आविर्भाव. । मातृपितृभ्या कृता तत्स्तुति । भगवता तयो· कर्मनिर्देश । ताभ्या तथैवाचरणञ्च । |
| दशमसर्गः– ( उपजातिवृत्तम् ) | कारागृहे कसाऽऽगमनम् । बालिकाया शिलापृष्ठे पोथनम् । कराश्च्युतया तया स्वरूपनिर्दर्शनपूर्वकं कसप्रतिबोधनम् । |
| एकादशसर्गः– ( भुजङ्गप्रयातवृत्तम् ) | सभागृहे कसस्य सुहृद्भि परामर्श । बालाना विप्रादीनाञ्च विहिसननिर्देशनम् । |
| द्वादशसर्गः– ( उपजातिवृत्तम् ) | गोकुले भगवतो जन्मोत्सवादिवर्णनम् । |
| त्रयोदशसर्गः– ( शालिनीच्छन्द· ) | व्रजस्थितिनिर्देशनम् । व्रजराजस्य मथुरागमनम् । तत्रैव वसुदेवनन्दयो सम्मेलन-सम्भाषणे च । |
| चतुर्दशसर्गः– (वसन्ततिलकावृत्तम्) | पूतनाऽऽगमनम् । तद्वधलीलावर्णनम् । बालकादीनामरिष्टादिभ्यो दैशिकरक्षाविधिप्रदर्शनम् । |
| पञ्चदशसर्गः– ( उपजातिवृत्तम् ) | पूतनासस्कार· । भगवत कृपानिदर्शनम् । नास्तिकाना प्रबोधनञ्च । |
| षोडशसर्गः– ( भुजङ्गप्रयातवृत्तम् ) | शकटासुरवधलीलानिर्देशनम् । |
| सप्तदशसर्गः– ( उपजातिवृत्तम् ) | तृणावर्तनिष्पेषलीलावर्णनम् । |
| अष्टादशसर्गः– ( स्रग्विणीच्छन्दः ) | श्रीहरेर्दुग्धपानवर्णनम् । यशोदायै भगवता विश्वरूपनिदर्शनञ्च । |
| ऊनविंशसर्गः– ( प्रहर्षिणीवृत्तम् ) | महर्षेर्गर्गस्याऽऽगमनम् । रामकृष्णयोर्नामकरणादिवर्णनञ्च । |
| विंशसर्गः– ( उपजातिवृत्तम् ) | अदृष्टतत्त्वस्य महत्त्वनिर्देशनम् । भगवतो जानुघृष्ट्या क्रीडनादि । |
| एकविंशसर्गः– ( भुजङ्गप्रयातवृत्तम् ) | भगवतोऽग्निजलशृङ्गिदंष्ट्रिभि· साक विविधक्रीडावर्णनम् । |
| द्वाविंशसर्गः– ( उपजातिवृत्तम् ) | मातृभ्या सुतयो पादचारणशिक्षणम् । तत्र गीतशब्द श्रुत्वा समागताना बालकबालिकादीना ताभ्या सहैव नृत्यवर्णनम् । भगवतो विचारः । दुग्धशाला प्रविश्य तद्ध्रदे निमज्जमानेनाऽनेन स्वमातुरुद्विग्नीकरणम् । |

| | |
|---|---|
| त्रयोविंशसर्गे–<br>(वसन्ततिलकावृत्तम्) | भगवतो वैश्यबालकस्येप्सितगोवत्समोचनादिलीलावर्णनम् । |
| चतुर्विंशसर्गे–<br>( भुजङ्गप्रयातवृत्तम् ) | भगवत शौचस्नानादिवर्णनम् । तस्य स्वप्राङ्गणाऽऽगमनम् । भगवता रामेण तद्भाविकार्यक्रमनिर्देशनञ्च । |
| पञ्चविंशसर्गे–<br>( चम्पकमालावृत्तम् ) | गोपबालकै सम मथुरामार्गे निलीय गोदुग्धादिविक्रयार्थं माथुरागामिनोना गोपगोपीना पयस्यलुञ्छने सज्जीकरणवर्णनम् । |
| षड्विंशसर्गे–<br>( उपजातिवृत्तम् ) | मथुराप्रस्थिताना गोपगोपीना परम्परं तत्रत्यस्वस्वानुभववर्णनम् । |
| सप्तविंशसर्गे–<br>( प्रहर्षिणीवृत्तम् ) | श्रीरामेण साक तेषा संवाद । वृक्षस्कन्धस्थगोपबालकैस्तच्छिरोभ्यो गोरसघटलुञ्छनम् । तेभ्योऽपि वानरै. । तेषा पलायनवर्णनञ्च । |
| अष्टाविंशसर्गे–<br>( स्रग्विणीच्छन्दः ) | गोपराजसभाया गोपबालकैर्यामुनतटस्थिताना साधकानामन्येषाञ्च तत्तदनुभववर्णनपूर्वक तत्रत्यस्थितिश्रावणम् । |
| एकोनत्रिंशसर्गे–<br>( उपजातिवृत्तम् ) | नवनीतचौर्यभक्षणप्रसङ्गे भगवता सभ्याना समक्ष देव्यै वृषभानुनन्दिन्यै हैयङ्गवीनभक्षणप्रदानपूर्वक तत्स्वरूपनिरूपणवर्णनम् । |
| त्रिंशसर्गे–<br>( स्वागतावृत्तम् ) | यमुनातटे शिलामयी व्रजदेवी द्रष्टुमागताया देव्याः कीर्तिदाया व्रजवधूभि साक विविध श्रीकृष्णवैषयिको वार्तालाप । तत्कार्यनिर्देशश्च । |
| एकत्रिंशसर्गे–<br>( उपजातिवृत्तम् ) | सम्प्रदायवादिना महात्मना दृष्टिपथमागते श्रीवसुदेवपोते तेषा तत्स्तवनम् । तद्विलोक्य विस्मिताना कसचराणा तद्वैषयिकी विजिज्ञासा त दृष्ट्वा तेषा ततः पलायनञ्च । |
| द्वात्रिंशसर्गे–<br>( भुजङ्गप्रयातवृत्तम् ) | भगवतो नवनीतादिचौर्यलीला । गोपीभिस्तद्बन्धनञ्च । |
| त्रयस्त्रिंशसर्गे–<br>( अनुष्टुब्वृत्तम् ) | देव्या कीर्तिदाया योगमार्गेण सुषुप्तिस्वप्नजाग्रदादिदशाया तदूर्ध्वं विगताया।मवस्थायाञ्च सप्राप्ततत्तदनुभववर्णनम् । |
| चतुस्त्रिंशसर्गे–<br>(वसन्ततिलकावृत्तम्) | व्रजराजसभाया व्रजराजस्य भृत्यवर्गेषु व्रजकार्यनिर्देशनात्मका प्रश्ना । चौर्यरूपिण शणपोटलिकास्थित भगवन्त विगृह्य तत्रैव व्रजवधूनामागमनम् । व्रजराज्ञीमुद्दिश्य ताभिस्तदुपालम्भनम् । पश्चाच्चौरनिर्दर्शने हास्योपलब्धिश्च । |
| पञ्चत्रिंशसर्गे–<br>( प्रहर्षिणीवृत्तम् ) | भगवता मृद्भक्षणम् । मात्रे विश्वरूपनिदर्शनञ्च । |

षट्त्रिंशसर्गे— यशोदया भगवतश्चरित्रं गाय गाय दधिमन्थनम्। भगवता दधि-
( उपजातिवृत्तम् ) मन्थनदण्डादीनां विध्वंसनम्। यशोदयैतद् दृष्ट्वा तं विगृह्य दाम्ना तदुदरे चोलूखले बन्धनम्।

सप्तत्रिंशसर्गे— देवर्षेरनुग्रहात् स्थावरतां प्राप्तयोर्नलकूबरमणिग्रीवयोस्तदवस्थाद-
( शिखरिणी ) र्शनम्। भगवतस्तदुद्धारणार्थं तत्र गमनञ्च।

अष्टत्रिंशसर्गे— भगवता स्वोदरनिबद्धोलूखलेन तयोरुन्मूलनम्। ताभ्यां कृता
(वसन्ततिलकावृत्तम्) तत्स्तुतिः। तयोः स्वधामगमनञ्च।

एकोनचत्वारिंशसर्गे— नन्दादीनां तत्राऽऽगमनम्। तत्रत्यबालकमुखाद्भगवद्वृत्तान्तश्रवणम्।
( उपजातिवृत्तम् ) तेषां विचिकित्सा। भगवतः स्वधामनयनञ्च।

चत्वारिंशसर्गे— मातृकल्पाभिर्गोपीभिर्भगवतो नर्तन-गायने। तेन तासां मनोविनो-
( भुजङ्गप्रयातवृत्तम् ) दनञ्च।

एकचत्वारिंशसर्गे— फलविक्रयिण्या फलविक्रयणार्थं भगवतो धाम्न्याऽऽगमनम्। तया तदा-
( द्रुतविलम्बितं छन्दः ) कारणम्। ततो भगवता फलग्रहणम्। स्वाञ्जलिच्युतैर्मणिमयैर्धान्यांशैस्तत्फलभाण्डपूरणवर्णनम्।

द्विचत्वारिंशसर्गे— क्रीडनपरस्य भगवतो रोहिणीयशोदाभ्यां स्वगृहागमनार्थमाह्वानम्।
( स्वागतावृत्तम् )

त्रिचत्वारिंशसर्गे— गोपसभायां गोकुलं परित्यज्य वृन्दावनमधिवस्तुं याम इति चोपनन्द-
(वसन्ततिलकावृत्तम्) प्रस्तावः। तत्स्वीकरणपूर्वकं नन्दादीनां शकटैस्तत्र गमनम्।

चतुश्चत्वारिंशसर्गे— वृन्दावने भगवतो गोवत्सादिचारणम्। विविधक्रीडा च।
( चम्पकमालावृत्तम् )

पञ्चचत्वारिंशसर्गे— भगवतो यमुनातटे वत्सासुरवधः।
( भुजङ्गप्रयातवृत्तम् )

षट्चत्वारिंशसर्गे— भगवतो बकासुरवधलीला।
( उपजातिवृत्तम् )

सप्तचत्वारिंशसर्गे— भगवतः कर्मणि गोपवर्याणां विचिकित्सा।
( स्रग्विणीवृत्तम् )

अष्टचत्वारिंशसर्गे— भगवतो वृन्दावनविहारः। तत्र सखिभिः समं नानाविधाभिः
(वसन्ततिलकावृत्तम्) खेलाभिः खेलनम्।

एकोनपञ्चाशसर्गे— श्रीरामेण विना गोवत्सांश्चारयितुं गतस्याऽस्य भगवतो हिंसनार्थं
( भुजङ्गप्रयातंछन्दः ) तत्राऽघासुरस्याऽऽगमनम्। तस्य चाऽजगररूपधारणम्। तन्मुखे गोपानां गोवत्सानां भगवतश्च प्रवेशः।

| | |
|---|---|
| पञ्चाशसर्गे–<br>( प्रहर्षिणीवृत्तम् ) | शयोरात्मान तन्मृतशरीराद्विनिर्गतस्याऽस्य भगवतश्चरणारविन्दे मिलित दृष्ट्वा श्रुत्वा चाऽन्तरिक्षस्थितै सिद्धादिभि सुकृतास्तत्स्तुतीर्भगवतश्चतुर्मुखस्याऽत्राऽऽगमनम् । |
| एकपञ्चाशसर्गे–<br>( स्वागतावृत्तम् ) | भगवतो वयस्यै. सम वार्तालाप । |
| द्विपञ्चाशसर्गे–<br>(चम्पकमालाच्छन्दः) | भगवतो वयस्यै सह वनभोजनम् । |
| त्रिपञ्चाशसर्गे–<br>(वसन्ततिलकावृत्तम्) | भोजनव्यग्रेषु तेषु सुदूर विगतान् गोवत्सान् प्रत्यानयनार्थं ततो भगवतो गमनम् । तदन्तरा विरिञ्चिकृत गोवत्स-वयस्यहरणम् । भगवता च तत्तद्वयस्यवत्सस्वरूपग्रहणपूर्वक स्व-स्वगृहागमनञ्च । |
| चतु.पञ्चाशसर्गे–<br>(भुजङ्गप्रयातच्छन्दः) | श्रीरामेण सार्धं वनगतस्य भगवतस्तद्विचिकित्साया निवारणम् । तत्रत्यस्थितिबोधकरणञ्च । |
| पञ्चपञ्चाशसर्गे–<br>( उपजातिवृत्तम् ) | मनुष्यमानतो वर्षमितसमये ब्रह्मण पुनस्तत्राऽऽगमनम् । सर्वानपि गोवत्सबालकान् भगवत स्वस्वरूपावस्थितानवलोक्य स्वाभिमानभङ्गपूर्वक तस्य तेभ्यो नमनम् । |
| षट्पञ्चाशसर्गे–<br>( मन्दाक्रान्तावृत्तम् ) | ब्रह्मकृता भगवत्स्तुति· । |
| सप्तपञ्चाशसर्गे–<br>(वसन्ततिलकाच्छन्दः) | ब्रह्मण· स्वधामगमनम् । भगवतो वनभोजनम् । गृह प्रत्यागमनञ्च । |
| अष्टपञ्चाशसर्गे–<br>( उपजातिवृत्तम् ) | भगवत्स्वरूपनिर्देशनपूर्वक ग्रन्थनिर्मातुर्ग्रन्थस्याऽस्य प्रथमखण्डमात्र-समाप्तिसूचनम् । निष्किञ्चनोऽस्तीत्यादिना विद्वद्वरेभ्य शुभाशीर्वादयाचनञ्च । |

इति प्रथमखण्ड समाप्ति·



# श्रीकृष्णो विजयतेतराम्

दुष्टसंहारार्थं साधुसरक्षणार्थं धर्मसंस्थापनार्थं परिपालनार्थञ्च स्वभक्तगणानां विधृतपूर्णावतारस्य भगवतः परब्रह्मणो लीलापुरुषोत्तमस्य श्रीकृष्णचन्द्रस्य लीलासहायकभूता इमे परिकराः पृथिव्यां तदाविर्भावात् पूर्वमेव स्वस्वपूर्णांशमवलम्ब्य सञ्जाता इति दरीदृश्यन्ते श्रीकृष्णोपनिषदि। तद्यथा—

| | | | |
|---|---|---|---|
| सच्चिदानन्द ब्रह्म | श्रीकृष्णः | महाव्याधि | अघासुरः |
| तत्पराऽचिन्त्यशक्ति | योगमाया | शम | सुदामा |
| सकलजीवनिकायभूतोऽनन्तः | श्रीबलरामः | दम | उद्धव |
| वेद | वसुदेवः | सत्यम् | अक्रूरः |
| तदस्य वैष्णवीमाया | देवकी | पाञ्चजन्यम् | स्वय जलशायी |
| परमानन्दः | नन्दः | क्षीरसिन्धुः | दुग्धागारम् |
| मुक्तिदेवी | यशोदा | शिवचक्रम् | सुदर्शनम् |
| वैकुण्ठः | वृन्दावनम् | जगद्बीजम् | लीलाकमलम् |
| उपनिषदः | गोपगोप्यः | कालिका | गदा |
| दया | रोहिणी | माया | शार्ङ्गम् |
| पृथ्वी | सत्यभामा | धर्मः | चामरम् |
| ब्रह्मा | यष्टि | वायु | वैजयन्तीमाला |
| रुद्रः | वंशी | आकाशम् | छत्रम् |
| इन्द्र | रुरुशृङ्गम् | काल | बाणः |
| मुनिमहर्षय | वृक्षलतादयः | महेश | खड्गम् |
| ब्रह्मनिर्दर्शिन्यो वेदर्चं | विप्रपत्नी-गोपीप्रभृतय | कश्यपर्षि | नन्दोलूखलम् |
| कामक्रोधलोभादयः | दैत्यवरा शिशुपालादय | अदिति | रज्जू |
| कलिः | स्वय कसः | गरुड | माण्डीरवट. |
| द्वेषः | चाणूरो मल्लः | नारद. | सुदामा |
| मत्सरः | मुष्टिको मल्लः | भक्तिः | वृन्दा |
| दर्पः | कुवलयापीडः | बुद्धिः | क्रियादेवी |
| गर्वः | बकासुरः | वेदर्चः | रुक्मिण्यादयः |

इत्युपनिषत्

●

भूयो भूयो भाविनो भूसुरेन्द्रान्
नत्वा नत्वा याचते कृष्ण एषः ।
सामान्येयं काव्यसेवा बुधानां
काले काले चोपजीव्या कृतज्ञैः ॥



# प्रथमः सर्गः

( विभिन्नदर्शनदर्शननिर्देशनात्मक मङ्गलाचरणम् । सच्चिदानन्दस्य भगवत श्रीकृष्णस्य साम्यप्राप्त्युपायकथनम् । विद्वत्प्रबोधनम् । ग्रन्थनिर्मातुर्लौकिकपारलौकिकसद्गुरुकृपानिदर्शनम् । मान्यानामभिनन्दनञ्च । )

( वंशस्थेन्द्रवशयोरुपजातिवृत्तम् )

असीमितं सद्गुरुशक्तिसीमितं
कृष्णात्मकं विश्वकटाहगं महः ।
गुरोश्चिदानन्दमयाच्छिवात् सतः
पूर्णं स्वशक्त्यात्र विराजतेतराम् ॥ १ ॥

श्रीकृष्णनामक तेज सम्पूर्ण ब्रह्माण्ड-कटाहमे व्याप्त है। यद्यपि वह किसी देशकालकी सीमासे आबद्ध नही है, तथापि सद्गुरुकी कृपा-शक्तिसे सीमित हो जाता है—मन-बुद्धिकी सीमामे आ जाता है। मेरे गुरुदेव सच्चिदानन्दमय शिवरूप हैं, उनसे प्राप्त वह कृष्णतेज अपनी शक्तिसे परिपूर्ण होकर यहाँ सर्वत्र अतिशय उत्कर्षके साथ विराजमान है ॥ १ ॥

जडात्मिका शक्तिरनर्थकानिमान्
गुणांश्च तत्त्वानि सृजत्यभीक्ष्णशः ।
तैरेव सर्वाञ्छिवसत्यरूपकाञ्-
जीवानपि भ्रामयतीह कौतुकम् ॥ २ ॥

जडात्मिका शक्ति ( अव्याकृत प्रकृति ) अनर्थके मूलभूत इन गुणो और तत्त्वोकी निरन्तर सृष्टि करती रहती है। उन्ही गुणो तथा भौतिकतत्त्वो द्वारा जो यह जड होने पर भी सम्पूर्ण सत्य एव शिवस्वरूप जीवोको भी इस भव-चक्रमे घुमाया करती है, यह कितने कौतूहल या आश्चर्यकी बात है! कमाल है! ॥ २ ॥

जगद्भ्रमेऽस्मिञ्जनिमृत्युरूपके
जीवाः समस्ता बहुयोनिसम्भवाः ।
मुधा भ्रमन्त्यत्र शरण्यमीदृशं
गुरुं त्वजानन्त उमेशमीश्वरम् ॥ ३ ॥

जन्म-मरणरूप इस भवभ्रम ( भ्रान्तिपूर्ण ससारचक्र )मे विविधयोनि–सभूत समस्त जीव ऐसे शरणागत-पालक उमावल्लभ ईश्वर ( शिव ) को न जानने के कारण यहाँ व्यर्थ ही भटक रहे है ॥ ३ ॥

ज्ञानं विवेकः परतत्त्ववेदिता
मनुष्ययोनाववभान्ति वै दृढम् ।
तथापि मुह्यन्ति महाजना अपि
परत्वलब्धावहहाऽपरं श्रिताः ॥ ४ ॥

ज्ञान, विवेक, तथा परम-तत्त्वकी उपलब्धि—ये सब मनुष्ययोनिमे ही दृढतापूर्वक अवभासित होते हैं। तथापि बडे-बडे लोग भी यहाँ परतत्त्वकी प्राप्तिके लिए अपर ( सासारिक वस्तु )का आश्रय ले मोहमे पडते है ॥ ४ ॥

अस्मादृशां कैव कथा भवात्मनां
मूढात्मनां यद्विपदं भजामहे ।
पदे पदे मोहततिं वितत्य हा
वृथा वयं क्लेशमुपार्जयामहे ॥ ५ ॥

जब महात्माओकी ऐसी स्थिति है, तब हम-जैसे लोगोकी तो बात ही क्या है ? हम तो ससारमे ही मन लगाये रहनेवाले मूढचेता है, अत एव विपत्तिके भागी हो रहे है। पद-पद पर मोहजालका विस्तार करके हाय ! हम लोग व्यर्थ ही क्लेशोका उपार्जन कर रहे है ॥ ५ ॥

क्व तत्सुखं सत्यचिदात्मरूपकं
नित्यं दृढानन्दमयं मनोमयम् ।
क्वेदृक् सुखं विश्वगतं सुविस्तृतं
द्रोहात्मकं चायतिदुःखपूरितम् ॥ ६ ॥

कहाँ तो वह सच्चिदानन्दस्वरूप, नित्य, अचलानन्दमय, मनोमय, आत्मसुख और कहाँ यह द्रोहपूर्ण, सुविस्तृत सासारिक सुख, जो केवल वर्तमानमे ही नही, भविष्यमे भी दु ख-शोकसे भरा हुआ है ॥ ६ ॥

विचार्य दृष्ट्वाऽप्यनुभूय सर्वतो
भुक्त्वा च सम्यग् विपुलं फलं कटु ।
विवेकिनस्तीक्ष्णधियोऽपि मानवा
मुह्यन्ति चात्रैव परिभ्रमन्त्यहो ॥ ७ ॥

यहाँ प्रचुरमात्रामे जो कटु फल प्राप्त होता है, उसे विचार कर देख कर सब ओर अनुभव करके और भलीभाँति भोग कर भी तीव्र बुद्धिवाले विवेकी मनुष्य भी यही मोहमे डूबते और चारो ओर चक्कर लगाते रहते है। यह कैसा आश्चर्य है ! ॥ ७ ॥

अस्यां स्थितौ मोहमये प्रपञ्चके
स्नेहे च मोहे च विलम्बिते नरि ।
एका गतिर्विश्वकृदव्ययो विभुः
संहारकः पालक ईश एव सः ॥ ८ ॥

ऐसी अवस्थामे इस मोहमय प्रपञ्चके भीतर स्नेह और मोहमे लटक रहे मनुष्यके लिये एकमात्र विश्वकी सृष्टि, पालन तथा सहार करनेवाले अविनाशी, वे सर्वव्यापी जगदीश्वर भगवान् श्रीहरि ही गति है ॥ ८ ॥

परम्परां शास्त्रकुलादिगामिनी
ह्याश्रित्य दीक्षां गुरुवक्त्रशोभिनीम् ।
भजन्ति केचित् परतत्त्वरूपिणं
यं देवदेवं मनसोऽप्यगोचरम् ॥ ९ ॥

कुछ भक्तजन शास्त्र और कुल आदिसे सम्बद्ध परम्पराका अनुसरण करते हुए गुरु-मुखसे प्राप्त होनेके कारण शोभमाना दीक्षाका आश्रय ले परतत्त्व-स्वरूप देवाधिदेव श्रीहरिको, जो मनके भी गोचर नही हैं, भजते है ॥ ९ ॥

यं योगिनो योगसमाधिना रहो
भजन्ति चाप्तुं निजकर्मणि स्थिताः ।
विहाय भोगान् विपुलान् भवात्मकान्
कुर्वन्ति ये तुच्छमपीदृशं वपुः ॥ १० ॥

जिन परमेश्वरको प्राप्त करनेके लिये योगीजन अपने योगसाधनानुकूल कर्ममे सलग्न हो एकान्तमे योग-समाधि लगाकर भजते है तथा विपुल भवभोगोका परित्याग करके अपने इस धर्म-कामार्थ-साधक शरीरको भी तुच्छ मानते है ॥ १० ॥

वेदान्तिनो यत् परतत्त्वचिन्मयं
चोपासते ब्रह्म परां श्रुतिं श्रिताः ।
निरस्य चान्ते भवरूपनामनी
तदेकमेवाऽऽस्त इतीह निश्चिताः ॥ ११ ॥

वेदान्ती विद्वान् जिन परतत्त्वात्मक चिन्मय परब्रह्मकी उत्तम श्रुतिका आश्रय लेकर उपासना करते हैं वे अन्ततोगत्वा ससारके नाम-रूपका बाध कर एकमात्र वह ब्रह्म ही सद्रूपसे विद्यमान है, ऐसा निश्चय करके कृतकृत्य होते है ॥ ११ ॥

मीमांसकाः कर्मपराः क्रियामयं
मत्वा विनिर्मथ्य तदर्थगां श्रुतिम् ।
मखैरनेकैर्विधिवत् समर्च्य ते
यं प्राप्तुमिच्छन्ति मखेशरूपिणम् ॥ १२ ॥

कर्मपरायण मीकासक विद्वान् क्रियार्थगा श्रुतिका मन्थन करके जिन परमेश्वरको कर्म-रूप मानकर विधिपूर्वक विविध यज्ञो द्वारा उनकी अर्चना करते हुए 'यज्ञेश' रूपसे उन्हे प्राप्त करना चाहते है ॥ १२ ॥

भजन्ति साङ्ख्याः पुरुषं पुरातनं
ह्यतीन्द्रियं यं प्रकृतौ स्थितं तथा ।
बुद्ध्वा चतुर्विंशतितत्त्वसंहतिं
विविच्य यत्नेन निरस्य चान्ततः ॥ १३ ॥

साख्यमतको माननेवाले लोग जिन इन्द्रियातीत पुरातन पुरुषको प्रकृतिसे सयुक्त अथवा प्रकृतिस्थ समझते हुए उन्हे चौबीस तत्त्वोका समुदायरूप मानते और अन्तमे यत्नपूर्वक प्रकृति-पुरुष विवेकके द्वारा प्रकृतिका निरास करके उसे असग-पुरुष रूपसे भजते है ॥ १३ ॥

नैयायिकाः स्वानुभवात् स्वरूपतो
निष्कास्य तत्त्वं परमाणुरूपकम् ।
उपासते यं परतत्त्वचिन्मयं
द्वारं निरुध्येन्द्रियगम्यमीदृशम् ॥ १४ ॥

नैयायिक पण्डित अपने अनुभवके अनुसार स्वरूपसे परमाणुतत्त्वको पृथक् करके इन्द्रियद्वारोके अवरोध ( प्राणायाम ) पूर्वक ऐसे सृष्टिकर्ता रूप जिन परमेश्वरको इन्द्रियगम्य मानकर उसकी उपासना करते है ॥ १४ ॥

वैशेषिका यं सविशेषरूपितं
स्मृत्वा पदार्थानुगतञ्च युक्तिभिः ।
उपासतेऽन्योन्यविवादतः परं
विगृह्य तं साग्रहविग्रहग्रहम् ॥ १५ ॥

वैशेषिकमतावलम्बी विद्वान् जिन परमात्माका सविशेष रूपसे चिन्तन करके तर्क-युक्तियो द्वारा उन्हे पदार्थोमे अनुगत मानकर परस्पर वाद-विवाद करते हुए विवादातीत होनेपर भी उन प्रभुको अपने आग्रह-ग्रहके अनुसार कल्पित विग्रहवाला जानते-मानते हुए भजते हैं ॥ १५ ॥

बौद्धाः प्रबुद्धा बुधतां गता अहो
बौद्धं समास्थाय च सौगतं मतम् ।
प्राप्तुं समिच्छन्ति तत परं पदं
यं नाम्नि रूपे च विभेदकृद्विभुम् ॥ १६ ॥

बुधता ( विद्वत्ता )को प्राप्त हुए प्रबुद्ध बौद्धजन सौगत बौद्ध मतका अवलम्बन करके उससे उसी परम पदको पा लेना चाहते है, जो साक्षात् प्रभु श्रीहरिका ही स्वरूप है। केवल नाम और रूपमे भेद प्रदर्शित करनेवाले वे प्रभु वास्तवमे श्रीहरि ही तो है ॥ १६ ॥

भजन्ति जैना जिनशासनं श्रिता
यं नित्यमर्हन्निति मोक्षकाङ्क्षिणः ।
महानुभावश्च महांश्च विश्वकृत्
स एव साक्षादिति निश्चितव्रताः ॥ १७ ॥

जैन शास्त्रका आश्रय लेनेवाले जैन लोग 'अर्हन्' यह नाम देकर जिन श्रीहरिका ही मोक्षकी इच्छासे भजन करते है तथा वे उस 'अर्हन्' नामधारी प्रभुको ही महानुभाव, महान् एव साक्षात् विश्वस्रष्टा मानकर नियत, व्रतके पालनमे सलग्न रहते हैं ॥ १७ ॥

यं वैष्णवा नित्यमनन्यवृत्तयः
सशङ्खचक्रं पुरुषं पुरातनम् ।
भजन्ति चान्तर्हृदि जन्ममृत्युदं
भवं विहातुं श्रितपाञ्चरात्रकाः ॥ १८ ॥

पाञ्चरात्र आगमका आश्रय लेनेवाले वैष्णवजन जन्ममरणका क्लेश प्रदान करनेवाले ससार-बन्धनको त्यागनेकी इच्छासे अपने हृदयके भीतर सदा अनन्यभावसे उनका शङ्खचक्रधारी पुरातन पुरुष श्रीहरिके रूपमे भजन करते हैं ॥ १८ ॥

विनायकं यं वपुषोज्ज्वलं सदा
भजन्ति केचित् परतत्त्वलब्धये ।
सौरेण मार्गेण जिगीषवोऽपरे
उपासते दीप्तकरं दिवाकरम् ॥ १९ ॥

कोई साधक परम तत्त्वकी उपलब्धिके लिये उन सर्वेश्वरका उज्ज्वल विग्रहसे सुशोभित 'श्रीगणेशजी'के रूपमे भजन करते है तथा सूर्य-मण्डलका भेदन करके सौरमार्गसे परमधामको जानेकी इच्छावाले अन्य उपासक उनकी प्रदीप्त किरणवाले दिवाकर ( सूर्य ) के रूपसे उपासना करते है ॥ १९ ॥

दुर्गामुमां तां जगदीश्वरीं परां
भजामहे दुर्गतिनाशिनीं शिवाम् ।
यामस्ततश्चिन्मयतामितीह ते
भजन्त्यहो यं परदेव्युपासकाः ॥ २० ॥

अहो ! हम उन पराशक्ति, जगदीश्वरी दुर्गतिनाशिनी दुर्गा शिवस्वरूपा उमाका भजन करते है, इससे हम यही चिन्मय ब्रह्मभावको प्राप्त कर लेगे, इस उद्देश्यको लेकर यहाँ परादेवीके उपासक जिन परमेश्वरका देवीरूपसे भजन करते है ॥ २० ॥

तन्त्रं समाश्रित्य तथैव तान्त्रिका
यन्त्रं सदाऽभ्यर्च्य पुनश्च यान्त्रिकाः ।
मन्त्रं जपित्वा च सुखेन मान्त्रिकाः
स्वभावतोऽवापुरभीष्टदं तु यम् ॥ २१ ॥

तान्त्रिक लोग तन्त्रका आश्रय लेकर, यान्त्रिक जन सदा यन्त्रकी अर्चना करके तथा मान्त्रिक साधक मन्त्रका जप करके स्वभावत सुखसे उन अभीष्टदाता परमेश्वरको प्राप्त हो गये है ॥ २१ ॥

कापालिका भीमभवेशभैरवं
भजन्ति भव्यं भयभावनञ्च यम् ।
कृत्वा कपालं करवालकं करे
कालं करालं कलयेत् कलाविति ॥ २२ ॥

कापालिक साधक भीम, भवेश, भैरव तथा भयभावन होते हुए भी भव्य मानकर उन श्रीहरिका भजन करते हैं। जो कापालिक हाथमे कपाल और कृपाण लेकर उक्तरूपसे उपासना करता है, वह कलियुगमे कराल-कालको भी अपना ग्रास बना सकता है अर्थात् कालजयी हो सकता है ॥ २२ ॥

शाक्ताः समाश्रित्य मकारपञ्चकं
जिहीर्षवो मृत्युममुं नियामकम् ।
उपासते नित्यमनेकतन्त्रगै—
र्मन्त्रैर्विधानैर्यमवाप्तुमीश्वरम् ॥ २३ ॥

शाक्त उपासक उन परमात्माको प्राप्त करनेके लिये पञ्चमकारका आश्रय ले उस लोकनियामक मृत्युका निवारण करनेकी कामनासे अनेक तन्त्रोके मन्त्रविधानो-द्वारा नित्य उनकी उपासना करते हैं ॥ २३ ॥

वामाः सकामाः श्रितवाममार्गका
यं वामदेवञ्च सकाममित्यहो ।
विभाव्य वामं विभवैर्विभूतिभि—
र्भजन्ति भव्यं भवभूतभावनम् ॥ २४ ॥

अहो ! वामाचारसे उपासना करनेवाले लोग सकामभावसे वाममार्गका आश्रय ले उन्हे सकाम वामदेव मानते है तथा उनका उसी नामसे चिन्तन करते हुए उन भूत-भावन भगवान्‌का भव्य भावसे भजन करते है ॥ २४ ॥

केचिन्महात्मान इमं सुदुर्धरं
प्राप्तुं स्वतः श्रीमययन्त्रशोभिनीम् ।
विद्यां परां तन्त्रगतां सुखाकरां
भजन्ति मन्त्रैः क—स—हादिरूपिणीम् ॥ २५ ॥

कुछ महात्मा लोग इन अत्यन्त दुर्धर प्रभुको प्राप्त करनेके लिये स्वत श्रीयन्त्रसे सुशोभित होनेवाली सुखकी खानरूपा तथा कादि—सादि एव हादिरूपिणी तन्त्रोक्त परा—विद्याको उन्हीके मन्त्रोसे भजते है ॥ २५ ॥

निरूप्य सर्वं भववस्तु नश्वरं
ह्यनश्वरं तत्परमक्षरं श्रिताः ।
नित्यं समर्चन्ति मुमुक्षवोऽपरे
स्वारामदं राममयं च यं पुनः ॥ २६ ॥

अन्य मुमुक्षु जन ससारकी प्रत्येक वस्तुको नश्वर देख परम अविनाशी अक्षर तत्त्वकी शरण ले परम आराम प्रदान करनेवाले श्रीरामके रूपमे जिनकी सदा समाराधना करते है ॥ २६ ॥

शैवा वयं यं गुरुरूपमास्थिता
भजाम कृष्णात्मकतत्त्वलब्धये ।
नास्तीह गन्धर्वपुरोपमे भवे
शैवं पदाब्जं विरहय्य शान्तिदम् ॥ २७ ॥

हम शैव है और गुरुरूपसे उन भगवान् शिवकी शरण ले कृष्णात्मक तत्त्वकी उपलब्धिके लिये उनका भजन करते है । क्योकि गन्धर्वनगरोपम इस मिथ्या ससारमे भगवान् शिवके चरणारविन्दोको छोड़कर दूसरी कोई वस्तु शान्ति देनेवाली नही है ॥ २७ ॥

केचिद्बुधा यं नवनीरदोज्ज्वलं
नित्यं चिदानन्दमयं सुधामयम् ।
चूडासमारोपितबर्हिचन्द्रकं
श्रीकृष्णचन्द्रं हृदि भावयन्ति च ॥ २८ ॥

कुछ विद्वान् उन परमेश्वरका भगवान् श्रीकृष्णचन्द्रके रूपमे अपने हृदयके भीतर चिन्तन करते हैं। उनकी नवनीलनीरद कान्ति श्यामोज्ज्वल है। वे नित्य चिदानन्दमय तथा अमृतमय है और अपने मस्तकपर मयूर-पिच्छका मुकुट धारण करते हैं ॥ २८ ॥

विचार एवात्र सतां प्रपञ्चको
विभेदकृच्चैव यथार्थतोऽनिशम् ।
सद्वस्तु चैकं विभुमव्ययं तु यं
वदन्त्यनेकं बहुधा विपश्चितः ॥ २९ ॥

इस ससारमे सत्पुरुषोका विचार ही प्रपञ्चका विस्तार करनेवाला है। वही भेदोकी सृष्टि करनेवाला है। वास्तवमे तो वह सद्वस्तु सदा एक ही है, तथापि उस अविनाशी प्रभुका विद्वान् लोग अनेक नाम-रूपोमे अनेकधा वर्णन करते है ॥ २९ ॥

प्रमाणमत्र स्वरुचिः स्ववासना
जीवांस्तु या प्रेरयतीह कर्मणि ।
स्यूतास्तयैवं भवघट्टमागता
भ्रमन्ति जीवाः सुखदुःखभोगिनः ॥ ३० ॥

इसमे अपनी-अपनी रुचि एव वासना ही प्रमाण है, जो यहाँ जीवोको कर्मके लिये प्रेरित करती रहती है। उस वासनाजालसे ही अनुस्यूत हो ससाररूपी घटीयन्त्रमे जुडे हुए जीव सुख-दु ख भोगते हुए घूमते रहते हैं ॥ ३० ॥

तत्त्वं समुद्घाटय विशुद्धमञ्जसा
वयं वदामोऽत्र तमोऽभिवर्धते ।
यदा तदैवाव्ययमैश्वरं मह-
स्तत् कार्ष्णमाविर्भवतीह शान्तिकृत् ॥ ३१ ॥

इस विषयमे वास्तविक तत्त्वका उद्घाटन करके हम सीधी और सच्ची बात बताते है—जब इस जगत्मे तमोगुण बढ जाता है, तभी यहाँ अविनाशी श्रीकृष्ण सम्बन्धी ईश्वरीय तेजका आविर्भाव ( अवतार ) होता है, जो जगत्मे शान्तिकी स्थापना करने-वाला है ॥ ३१ ॥

नानावतारान् परिगृह्य यत् स्वयं
विनाश्य दुष्टाञ्छ्रुतिसाधुदूषकान् ।
विराजते चात्र यदा तदैव तत्
समर्च्यते तैः परतत्त्ववेदिभिः ॥ ३२ ॥

स्वय भगवान् श्रीकृष्ण नाना प्रकारके अवतार ग्रहण करके वैदिकमार्ग तथा साधु पुरुषोको दूषित करनेवाले दुष्टोका विनाश करके जब यहाँ विराजते हैं, तब उन परतत्त्व-वेदी महात्मा जनो द्वारा उनके चरणारविन्दोकी अर्चना की जाती है ॥ ३२ ॥

महात्मनामुच्चविचारमीदृशं
सिद्धान्तमालोड्य विविच्य यत्नतः ।
गच्छेम लक्ष्यं पदमाप्तुमैश्वरं
तत्कृष्णरूपं स्थिरबुद्धयो वयम् ॥ ३३ ॥

महात्माओके ऐसे उच्च विचार युक्त सिद्धान्तका आलोडन और यत्नपूर्वक विवेचन करके स्थित बुद्धि हो हम लोग अपने लक्ष्यभूत उस कृष्ण रूपी ईश्वर पदको प्राप्त करनेके लिये चले ॥ ३३ ॥

अस्यां स्थितौ यं शिवरूपिणं गुरुं
समाश्रिताः सोऽपि तथैव दृश्यते ।
अन्तो न चादिर्न च मध्य एव वा
न नामरूपे च भवस्य साक्षिणः ॥ ३४ ॥

ऐसी स्थितिमे हम जिन शिवरूपी गुरुदेवकी शरणमे आये है, वे भी वैसे ही दिखायी देते हैं। इस विश्वके साक्षी है, उनका न अन्त है, न आदि है, न मध्य ही है और न उनके कोई नाम-रूप ही है ॥ ३४ ॥

श्रितास्तथापीह जगत्प्रपञ्चकं
सहारकं पालकमीश्वरं गुरुम् ।
अज्ञानिनो मोहमयं महातमो
जिहीर्षवो ज्ञानिनमुज्ज्वलौजसम् ॥ ३५ ॥

तथापि जगत्प्रपञ्चके स्रष्टा, सहारक और पालक उन गुरु परमेश्वरकी शरण हमने ली हैं, क्योकि हम अज्ञानी है और अपने मोहमय महान् अन्धकारको दूर करना चाहते है। वे गुरु भगवान् ज्ञानी तथा उज्ज्वल तेजसे सम्पन्न है ॥ ३५ ॥

कृपा यदीया विलसत्यनारतं
विशिष्टभक्तेषु सुधामयी भृशम् ।
अस्मादृशैः कामहतैर्विविच्य या
न पार्यते वक्तुमहो ! कदाचन ॥ ३६ ॥

इनकी अमृतमयीकृपा विशिष्ट भक्तजनोपर निरन्तर वरसती हुई शोभा पाती है। विविध कामनाओके मारे हुए हम जैसे लोग उनकी कृपाका विवेचनपूर्वक वर्णन करनेमे कदापि समर्थ नही है। अद्भुत है वह कृपा ! ॥ ३६ ॥

बाणादयो राघवकार्मकच्युता
बाणा इवोग्राः परसैन्यवद् दृढम् ।
विनाश्य सर्वं भववस्तुवैभवं
सदाऽऽश्रयन्ते परमेश्वरं हरम् ॥ ३७ ॥

जैसे भगवान् श्रीरामके धनुषसे छूटे हुए उग्र वाण दृढता पूर्वक शत्रुसेनाको नष्ट करके पुन उनके तूणीरमे प्रवेश कर जाते है, उसी प्रकार वाणासुर आदि उग्र असुर समस्त सासारिक वस्तुओके विस्तारको विनष्ट करके नित्य परमेश्वर—हर की शरण लेते है ॥ ३७ ॥

सहस्रहस्तैः शतपञ्चसंख्यकै–
र्वाद्यैर्धृतैः सामलयोपबृंहितैः ।
आराधयन्ति स्म मृडं यमत्र ते
तत्ताण्डवे यत्र विभुः स्म नृत्यति ॥ ३८ ॥

भगवान् शिवके ताण्डवमे जहाँ वे भगवान् नृत्य करते थे, वे वाणासुर आदि भक्त अपने हजार हाथो द्वारा पाँच सौ वाद्य धारण करके साम–लयके साथ बजाते हुए उन मृड प्रभुकी आराधना करते थे ॥ ३८ ॥

अन्ये दशग्रीवमुखा भवोन्मुखा
भवोन्मुखत्वं समवापुरव्ययम् ।
ययाऽञ्जसा विश्वविभूतिजृम्भितां
समृद्धिमाप्ता जयतीह तत्कृपा ॥ ३९ ॥

अन्य दशमुख रावण आदि राक्षसोने भवोन्मुख ( ससार या शिवके प्रति उन्मुख ) होकर अविनाशी भवोन्मुखता ( सासारिक जीवनमे प्रधानता एव भगवान् शिवके प्रति उत्सुकता पूर्ण अनुरक्ति ) प्राप्त कर ली थी। भगवान् शिवकी जिस कृपासे अनायास ही उन्होने जगत्‌के ऐश्वर्यसे बडी-चढी समृद्धि पाली, उस कृपाकी यहाँ सदा जय हो ! ॥ ३९ ॥

निर्माल्यनिर्लङ्घनलब्धकिल्विषो
यत् पुष्पदन्तो गतिरुद्धतां ययौ ।
विज्ञाय पश्चादपराधिनं विभो-
र्गीत्वा महिम्नस्तवमाप्तवांश्च याम् ॥ ४० ॥

भगवान् शिवके निर्माल्यको लाँघनेके कारण पापका भागी हो पुष्पदन्तने जो गतिरोध प्राप्त किया था और पीछे अपनेको अपराधी जानकर शिव महिम्नस्तोत्रका गान करके उसने पुन भगवान्की जिस कृपाको प्राप्तकर लिया था, उसकी वलिहारी है ॥ ४० ॥

जगद्धरो यत्स्तुतिपुष्पकाञ्जलिं
समर्प्य गीत्वा च जगद्धरे हरे ।
जगद्धरोऽभूत् स्वयमेव दुर्धरो
जगद्धरो विष्णुरिवाऽत्र दुर्धरः ॥ ४१ ॥

महान् शिवभक्त महाकवि जगद्धर भट्टने जो स्तुतिकुसुमाञ्जलि नामका स्तोत्र-काव्यका निर्माण करके जगत्को धारण करनेवाले भगवान् हरको गाकर सुनाया और उन्हीको सर्मपित कर दिया, इसका फल यह हुआ कि वे दुर्धर ( किसी पकडमे कठिनतासे आने वाले ) जगद्धर ( जगत्पालक ) भगवान् विष्णुकी भाँति स्वय हो दुर्धर जगद्धर हो गये ॥ ४१ ॥

सुरासुरेन्द्रा बहवो मनस्विनो
ब्रह्मर्षिराजर्षिसुरर्षयोऽपरे ।
प्रापुर्यमद्धाऽद्यतना वयं ह्यपि
गच्छेम शीघ्रं यदनुग्रहादितः ॥ ४२ ॥

बहुत-से सुरेन्द्र, असुरेन्द्र, मनस्वी ब्रह्मर्षि, राजर्षि तथा देवर्षि भो जिन्हे उनकी कृपासे अनायास ही प्राप्त हो गये हैं। इसी तरह आज-कलके हम-जैसे भक्त भी उन्हीके अनुग्रहसे शीघ्र ही यहाँसे उनके श्री चरणोमे चले जायँगे ( इसमे सदेह नही है ) ॥ ४२ ॥

अस्यां स्थितौ यद्वरदां कृपामहो !
प्राप्तुं यतन्ते मुनयोऽपि नित्यशः ।
भूत्वा निराशा विफला समन्ततो
वदन्ति यं स्थाणुरिति प्रभुं विभुम् ॥ ४३ ॥

ऐसी स्थितिमे जिन भगवान् शिवकी अभीष्ट वरदायिनी कृपाको प्राप्त करनेके लिये मुनि लोग भी नित्य प्रयत्नशील रहते है तथा सब ओरसे निराश एव विफल होनेपर उन्ही सर्वव्यापी प्रभुको स्थाणु ( नित्य शाश्वत अथवा ठूँठा वृक्ष ) कहते है—यह आश्चर्यकी बात है ॥ ४३ ॥

स्तम्भो नृसिंहं प्रकटीकरोति चेत्
स्थाणावपीत्थं दृढशक्तिरस्ति हि ।
विचार्य चेत्थं व्यवसायिनो वयं
प्राप्तुं किमर्हा न जगद्गुरुं गुरुम् ॥ ४४ ॥

( अच्छा, ठूँठ ही सही ) यदि खभा भगवान् नरसिंहको प्रकट कर सकता है, तो उस स्थाणु ( ठूँठ )मे भी ऐसी ही दृढ शक्ति है ही । इस प्रकार विचार करके अविचल निश्चयके साथ उद्योग करनेवाले हम लोग क्या उन जगद्गुरु भोलेनाथ शिवको अपने गुरुके रूपमे पानेके योग्य नही है ? ( अवश्य हैं ) ॥ ४४ ॥

किं वा वयं तज्जगतो वहिर्गता
न प्राप्नुयाम प्रभुशिष्यतामपि ।
अर्हाः सुपात्राणि च चेद्वयं यदि
ददाति शिक्षां किमसौ न नो गुरुः ॥ ४५ ॥

अथवा हम लोग उनके जगत्से बाहर हो गये है क्या ? जो उन आशुतोष प्रभुकी शिष्यताको भी नही प्राप्त कर सकते । यदि योग्य है, सुपात्र है, तो वे हमारे भी गुरु होकर हमे शिक्षा क्यो नही देंगे ? अवश्य देंगे ) ॥ ४५ ॥

विच्छेत्तुमद्धा दृढमायसं यथा
लौहं सुतीक्ष्णं भवतीह साधनम् ।
तथैव तत्कृष्णपदाब्जलब्धये
तत्स्थश्च तद्वच्छिव एव साधनम् ॥ ४६ ॥

जैसे सुदृढ लोहेको काटनेके लिये अत्यन्त तेज धारवाला लोहा ही यहाँ साधन होता है, उसी प्रकार भगवान् श्रीकृष्णके चरणारविन्दोको पानेके लिये उन्हीमे स्थित भगवान् शिव ही अमोघ साधन हैं ॥ ४६ ॥

ततोऽन्यथा तं जगदीश्वरं हरिं
प्राप्तुं ह्युपायः सुगमो न विद्यते ।
सोऽसौ यतो दुर्धरचैत्यगोचरो
बीजे महान् वृक्ष इवाऽव्ययः स्थितः ॥ ४७ ॥

जगदीश्वर श्रीहरिको पानेके लिये इसके अतिरिक्त कोई भी अन्य सुगम उपाय नही है । क्यो कि वे प्रभु इन्द्रियातीत होनेके कारण केवल दुर्धर आत्मानुभूतिमे ही आनेवाले हैं । वे अवनाशी प्रभु बीजमे विशाल वृक्षकी भाँति अव्यक्त रूपसे सबमे विराजमान है ॥ ४७ ॥

तस्माद् भवन्तो दृढबुद्धयोऽनिशं
शिवं भजन्तां गुरुपादलब्धये ।
अस्मादृशान् योऽमृतसव्यचक्षुषा
प्रदर्श्य मार्गं नयतीह तत्पदम् ॥ ४८ ॥

इस लिये आप लोग स्थिरबुद्धि होकर गुरु चरणोकी प्राप्तिके लिये निरन्तर उन्ही भगवान् शिवका भजन करे। वे प्रभु आप-हम जैसे लोगोको अपने अमृतमय ( चन्द्ररूप ) वामनेत्रसे मार्ग दिखाते हुए उन परमात्मा श्रीकृष्णके चरणोकी प्राप्ति करायेगे ( अथवा अपने ही चरणो मे ले जाँयगे ) ॥ ४८ ॥

तथा प्रयासोऽपि न दृश्यते बुधा—
स्तत्प्रीणनार्थं पशुपालको ह्यसौ ।
स्वमृत्युपाशं पशवो वयं यतो
विच्छेत्तुकामाः पशुपं समाश्रिताः ॥ ४९ ॥

बुधजनो ! उन भगवान् शङ्करको प्रसन्न करनेमे कोई बडा भारी प्रयास भी तो नही दिखायी देता है। क्योकि वे पशुपालक—पशुपति हैं और हम सब पशु हैं। हम लोग अपने मृत्युपाशका विच्छेद करनेके लिये पशुपतिकी शरण ले रहे हैं ( अत वे हम पर अवश्य और शीघ्र कृपा करेंगे ) ॥ ४९ ॥

निरुध्य सर्वेन्द्रियवृत्तिगोचरं
मनः समाधाय भवात्मके भवे ।
निरूप्यतां तत्परमं पदं हृदि
तृतीयनेत्रेऽप्यथवा विभोरिव ॥ ५० ॥

अत सम्पूर्ण इन्द्रियवृत्तिके विषयोका निरोध करके इस मनको जगदात्मा भगवान् शिवमे समाहित कीजिये और अपने हृदयमे उस परमपद-स्वरूप प्रभुको ध्यान-नेत्रोसे देखिये अथवा भगवान् शिवकी ही भाँति जो अपना तीसरा नेत्र ( आज्ञाचक्र ) है, उसमे उन्हे देखनेकी चेष्टा कीजिये ( वही वे प्रकट होते हैं ) ॥ ५० ॥

सायं तथा प्रातरिहैव सुस्थिरं
शान्तं स्वरूपं परमस्य सद्गतेः ।
समीक्ष्य सञ्चिन्त्य सदाग्रहोज्ज्वलं
निरूपणीयं प्रथमं शनैः शनैः ॥ ५१ ॥

पहले इस आज्ञाचक्रमे ही, साय काल और प्रात काल सतोके आश्रयभूत उन परमेश्वरके सुस्थिर एव शान्त स्वरूपका निरीक्षण करके यह चिन्तन कीजिये कि वे सदा

ग्रह ( सद्वस्तुओके सग्रह )से परम उज्ज्वल दिखायी देते है। फिर धीरे-धीरे इसी रूपमे उनका साक्षात्कार कीजिये ॥ ५१ ॥

नील महो व्यापकरूपमास्थितं
यदैव भूत्वा प्रियलक्ष्यमात्मनः ।
न तिष्ठति स्वस्य पुरः स्थिरीभवत्
तावद्विधेयं विहितासनं स्थिरम् ॥ ५२ ॥

वह नील ( श्यामसुदर ) तेज पुञ्ज जबतक व्यापकरूप धारण करके अपना प्रिय-लक्ष्य ( ध्येय ) बनकर अपने सामने सुस्थिर रूपसे स्थिर नही हो जाता, तबतक अपने विहित आसनको स्थिर बनाना चाहिये अर्थात् स्थिर आसनसे बैठे रहकर ध्येयके ध्यानमे सलग्न रहना चाहिये ॥ ५२ ॥

उद्भूतमत्रैव तदैव कर्वुरं
ध्येयं महः कृष्णशरीरवद्भवत् ।
संतिष्ठते साधकलक्ष्यतामितं
प्रगृह्य रूपं सुखदं तथेप्सितम् ॥ ५३ ॥

इस प्रकार किये जाने वाले ध्यानमे ही उसी समय प्रकट हुआ ध्येयभूत चितकबरा तेज श्रीकृष्ण-विग्रहके रूपमे परिवर्तित हो सुखद मनोरम रूप ग्रहण करके साधकका लक्ष्य बनकर स्थिरभावसे स्थित हो जाता है ॥ ५३ ॥

प्रादुर्भवन् यत्र स्वयं गुरुः प्रभु—
र्निर्दर्शयिष्यत्यमलं स्वविग्रहम् ।
सानन्दचैतन्यमयोऽत्र साधकः
समेति सिद्धिं गुरुदृष्टिदीक्षिताम् ॥ ५४ ॥

वहाँ स्वय गुरुदेव भगवान् प्रकट हो अपने निर्मल विग्रहको दिखायेगे। यहाँ साधक आनन्द चैतन्यमय होकर गुरुदेवकी दृष्टिमात्रसे दीक्षा पाकर अभीष्ट-सिद्धि प्राप्त कर लेता है ॥ ५४ ॥

यां प्राप्य सिद्धा बहवो भवात्मिकां
निरस्य मायां बहुरूपिणीं किल ।
अज्ञेयरूपाः कृतिनः कृतच्छलाः
प्रारब्धनाशार्थमिह भ्रमन्ति हि ॥ ५५ ॥

उस सिद्धिको पाकर बहुतेरे सिद्ध ससारमयी बहुरूपिणी मायाको निरस्त करके अज्ञेयरूप एव कृतकृत्य हो सत्कर्मके व्याजसे इस जगत्मे प्रारब्ध-क्षयके लिये विचरते रहते हैं ॥ ५५ ॥

किं ब्रूमहेऽन्यं सुगमं ह्युपायकं
यमाश्रिता गच्छत तत्पदं विभोः ।
मन्त्रं परब्रह्मण एव ते नमः
सशक्तिबीजं जपताऽत्र तद्धितम् ॥ ५६ ॥

साधको ! क्या कहे, उसे प्राप्त करनेका दूसरा भी सुगम उपाय है, जिसका आश्रय लेकर तुम उन प्रभुके पदको प्राप्त कर लोगे । परब्रह्मके ही मन्त्रको अन्तमे 'ते नम', लगाकर शक्ति-बीज सहित जपो । यही उस लक्ष्यकी प्राप्तिके लिये हितकर है ॥ ५६ ॥

सङ्ख्या भवेच्चायुतकं समाश्रिता
ततो विधेया हवनादिकाः क्रियाः ।
भोज्याः पुनर्बालकबालिकादयो
विप्रैः समं दक्षिणया प्रहर्ष्य च ॥ ५७ ॥

इस मन्त्रके जपकी सख्या कम-से-कम दस हजार होनी चाहिये । जपके पश्चात् हवनादि कर्म करने चाहिये । फिर ब्राह्मणोके साथ बालक-बालिका आदिको भोजन कराये और उन्हे दक्षिणासे सतुष्ट करे ॥ ५७ ॥

निरूपणीया विजने ततो निजा
छाया रवे रश्मिषु रम्यकान्तिषु ।
अष्टोत्तरं मन्त्रशतं निरन्तरं
जप्यं च कण्ठं ह्यवलोक्य सुस्थिरम् ॥ ५८ ॥

तदनन्तर एकान्तमे जाकर, जब कि सूर्यकी किरणे रमणीय कान्तिवाली हो, अपनी परछाई देखनी चाहिये । उस समय अपने कण्ठको सुस्थिर रखते हुए निरन्तर एक सौ आठ बार मन्त्र जप करना चाहिए । ॥ ५८ ॥

पूर्णे जपे स्वोन्नतशीर्षकन्धरः
पश्येन्नभः कृष्णशरीरवन्नरः ।
यद्दृश्यते तत्र तदेव वस्तु सद्
विभावयध्वं स्वगुरुं शिवं च तम् ॥ ५९ ॥

जप पूर्ण होनेपर अपने कधे और मस्तकको ऊँचा करके मनुष्य आकाशको श्रीकृष्ण-विग्रहके समान देखे, वहाँ जो दिखायी दे वही सद् वस्तु है । वही अपने गुरु उन भगवान् शिवके भी स्थित होनेकी भावना करे ॥ ५९ ॥

शृण्वन्त्विहाऽन्यं सुगमं ह्युपायकं
यः प्राणवायुर्विलसत्यसौ पुरि ।
निरूपयध्वं तमिहाऽव्ययं दृढं
कथं स आयात्यपयाति वर्ष्मणि ॥ ६० ॥

अब यहाँ दूसरा भगवत्प्राप्तिका सुगम उपाय सुनो—इस नव द्वारोसे युक्त शरीर-रूपी नगरमे जो प्राणवायु आती-जाती शोभा पाती है, उसको देखो । वह अव्यय एव दृढ श्वासवायु कैसे शरीरमे आती है और किस प्रकार शरीरसे बाहर निकलती है—इसकी ओर दृष्टि रक्खो ॥ ६० ॥

यदा बहिर्निःसरतीह देहतो
यदा स चाऽन्तः प्रविशत्यनारतम् ।
तदैव सम्यक् स्थिरवृत्तिसाधको
निरूपयेत् तद्गतिमेव केवलाम् ॥ ६१ ॥

जब वह प्राण-समीर देहसे बाहर निकलता है, और जब पुन भीतर प्रवेश करता है, तब तब स्थिरवृत्तिवाला साधक निरन्तर केवल उसकी गतिपर ही सम्यक् रूपसे दृष्टि रक्खो ॥ ६१ ॥

अस्यां स्थितौ विस्फुरतीह तत्स्वयं
यत्साधको ध्यायति वस्तु चिन्मयम् ।
कर्तव्यमेवाऽस्ति शिवत्वकारकं
चैकान्ततो यत्क्रियते परीक्ष्यताम् ॥ ६२ ॥

इस स्थितिमे साधक जिस चिन्मय वस्तुका ध्यान करता है, वह स्वय बार-बार उसे दिखायी देता है । एकान्तमे जो साधन किया जाता है, यह कर्तव्य ही शिवत्वकी प्राप्ति करानेवाला है । परीक्षा करके देख लो ! ॥ ६२ ॥

एवं दृढाऽभ्यासरतो निरन्तरं
तत्कर्म कुर्वन् विगतस्पृहो नरः ।
वैराग्यमाप्नोति भवस्थवस्तुषु
पुत्रेषु दारेषु धनेष्वसत्स्वपि ॥ ६३ ॥

इस प्रकार दृढ अभ्यासमे निरन्तर लगा हुआ मनुष्य निष्काम भावसे उस कर्मको करता हुआ ससारकी सारी वस्तुओमे—स्त्री, पुत्र और धन आदि असत् पदार्थोमे भी वैराग्यको प्राप्त होता है ॥ ६३ ॥

याभ्यां विना तत्पदमाप्यते नहि
राद्धान्त एवैष मनीषिसम्मतः ।
प्रारम्भकाले स्थिरताऽत्र कारणं
मनो भवेच्छान्तमहर्निशं यतः ॥ ६४ ॥

इन ( अभ्यास और वैराग्य ) दोनोके बिना उस परम पदकी प्राप्ति नही की जा सकती है—यह तो मनीषिजन सम्मत सिद्धान्त ही है। इसमे प्रारम्भ कालमे स्थिरता ही मुख्य कारण है, जिससे चञ्चल मन अहर्निश शान्त रहता है ॥ ६४ ॥

स्थित्वा विविक्ते प्रियवस्तु साधको
यद्ध्यायति स्वात्मनि यत्र तत्र वा ।
ध्येयः स्वयं सद्गुरुरूपमाश्रयन्
ह्यात्मानमत्र प्रकटीकरोत्यहो ! ॥ ६५ ॥

अहो ! एकान्तमे बैठकर साधक अपने अन्तरमे या जहाँ कही भी प्रिय-वस्तु ( ध्येय ) का ध्यान करता है तो वह ध्येय स्वय ही सद्गुरुका रूप धारण करके अपने आपको ही प्रकट कर देता है ॥ ६५ ॥

ध्याताऽऽरमेच्चेत् प्रियवस्तुलब्धये
क्रमं समालम्ब्य मनोमयं त्वमुम् ।
सत्यं चिदानन्दसुखं महत्तरं
समश्नुते तद् भवभोगवस्तुतः ॥ ६६ ॥

ध्यान करनेवाला साधक उस समयतक इसी मनोमय क्रमका अवलम्बन करके यदि अपनी प्रिय वस्तु ( ध्येयतत्त्व ) की उपलब्धिके लिए प्रयत्न-रत रहे तो वह सासारिक भोग-पदार्थोसे अत्यन्त महान्, सत्य तथा चिदानन्द-सुखमय उस ध्येयका अपने भीतर अनुभव करने लगता है ॥ ६६ ॥

अलौकिकाऽऽनन्दमयं समीहितं
मार्गेण गम्यं यदनेन जायते ।
तस्मिन् गते स्वानुभवं च तत्पुर–
स्तुच्छं भवत्येव विरक्तितोऽखिलम् ॥ ६७ ॥

वह अलौकिक आनन्दमय अभीष्ट वस्तु इसी मार्गसे अनुभवगम्य हो सकती है । उसका अनुभव हो जानेपर परम वैराग्य उत्पन्न हो जानेके कारण उसके समक्ष ससारकी सारी वस्तुएँ अत्यन्त तुच्छ प्रतीत होती है ॥ ६७ ॥

अस्यां स्थितौ लौहमणिर्निरन्तरं
यथा समाकर्षति लौहमात्मनि ।
तथेह तं सद्गुरुरात्मनः प्रियं
शिष्यं समाकर्षति चात्मसन्निधौ ॥ ६८ ॥

ऐसी स्थिति प्राप्त होनेपर जैसे अयस्कान्तमणि ( चुम्बक ) लोहेको निरन्तर अपनी ओर खीचता है, उसी प्रकार सद्गुरु उस अपने प्रिय-शिष्य ( साधक ) को स्वत अपने पास खीच लेते है ॥ ६८ ॥

ध्येये तदा ध्यानवशात् स्थिरीभवन्
ध्याता विलोक्यैव मनीषितां तनुम् ।
अलौकिकीं शान्तिमथात्मगं सुखं
सम्प्राप्य साध्नोति शुभं स्वकर्म तत् ॥ ६९ ॥

उस समय ध्याता ( साधक ) अपने सुदृढ ध्यानके अभ्याससे ध्येय तत्त्वमे स्थिरता-पूर्वक स्थित होकर अपने मनकी इच्छाके अनुरूप इष्टदेवके श्रीविग्रहका दर्शन अवश्य प्राप्त करता है तथा अलौकिक शान्ति एव आत्मगत सुखको प्राप्त करके अपने उस शुभ-कर्म ( अनुष्ठान ) को सिद्धकर लेता है ॥ ६९ ॥

निरस्य तत्तावदिह स्ववासनां
जगद्गतां तां विषयेष्ववस्थिताम् ।
निरीक्षतां ! तत्पदमेव नित्यश-
स्तैर्ज्ञायते यैः क्रियतेऽनुभूयते ॥ ७० ॥

इस कारण, आप लोग इस ससारसे जुडी हुई और विषयोके प्रति स्थित हुई अपनी बहुमुखी वासनाको हटाकर उस परमात्मपदको ही नित्य देखिये। जो लोग इस प्रकार साधन करते है, वे ही ध्येय-तत्त्वको जानते और अनुभवमे लाते हैं ॥ ७० ॥

किञ्चत् प्रयत्नो भवता प्रदीयते
चेदत्र तस्मै भवतेऽपि सोऽव्ययः ।
तेनैव सत्याश्रयिणा सुखात्मना
ददाति चात्मानमपीह तोषितः ॥ ७१ ॥

यदि आप लोग उसे थोडा सा भी प्रयत्न देते है अर्थात् उसके लिए अभ्यास और समय-दान करते हैं, तो वह अविनाशी परमात्मा इतनेसे ही सतुष्ट हो जाता है और बदलेमे आपको भी सत्यावलम्बी सुखरूपसे अपने आपको ही दे देता है ॥ ७१ ॥

अनेकरूपं तमसः परं महत्
प्रदर्शयन् स्वं पदमञ्जसा पुरः ।
स्थिरीभवत्यत्र महःस्वरूपिणा
ध्येयात्मनैवाऽन्तिमलक्ष्यलब्धये ॥ ७२ ॥

आपके साधनाभ्यास-कालमे वह परमात्मा अपने विविध रूपवाले, अन्धकारातीत, परम महत् स्वरूपका आपके समक्ष अनायास ही दर्शन कराता हुआ तेज पुञ्जमय ध्येय-स्वरूपसे ही स्थिर हो जाता है और आपके चरम लक्ष्यकी उपलब्धिमे सहयोग देता है ॥ ७२ ॥

राजा यथा निःसरतीह मन्त्रिभि–
र्भृत्यैः प्रियैश्चानुगतः प्रतिक्षणम् ।
तत्रैव तेनाऽपि च भूयते तथा
स्वपार्षदैरग्रगतैर्महापदैः ॥ ७३ ॥

इस लोकमे जैसे राजा हरसमय मन्त्रियो तथा प्रिय-सेवकोको अपने साथ लेकर निकलता है, इसी प्रकारकी स्थितिमे हमारा ध्येय प्रभु भी होता है, वह भी सदा महान् पदवाले अग्रगामी पार्षदोसे युक्त रहकर साधकको दर्शन देने आता है ॥

महाविभूतिं परितः श्रिता इमे
प्राग् द्रागहो तत्समतामुपागताः ।
तं दर्शयन्त्यत्र मनोमयं वपुः
प्रलोभनार्थं यत आपतेदिति ॥ ७४ ॥

महान् वैभवसे सम्पन्न वे पार्षद पहले स्वय आकर तत्काल ही स्वामीकी समताको प्राप्त हो ( अर्थात् ध्येयके स्वरूपका ही अनुकरण करके ) वहाँ साधकको लुभानेके लिए उसे मनोमय रूपमे दर्शन देते हैं । उनका उद्देश्य रहता है कि यह हमसे लौकिक अर्थसिद्धिका वरदान लेकर अपने साधनकी मर्यादासे गिर जाय ॥ ७४ ॥

स्थैर्यं समालम्ब्य धृतिं प्रगृह्य भो !
परीक्षणीयं बहुभिः सुलक्षणैः ।
स्मर्तव्यमत्रैव तु नेति नेति य–
च्चोद्‌घुष्यते वेदगिरा निरस्य तत् ॥ ७५ ॥

अत साधको ! स्थिरता रखकर धैर्य धारण करके बहुत-से उत्तम लक्षणोद्वारा अपने ध्येयरूपकी परीक्षा कीजिए । ऐसा न हो कि कोई पार्षद मायासे वैसा रूप धारण करके

आपको साधनासे गिराना चाहता हो। इस बातका ध्यान रखना चाहिए कि वेदवाणी 'नेति नेति' उद्घोष करके नाम-रूपका निषेध करते हुए जिस तत्त्वका प्रतिपादन करती है, वह अपना यही ध्येय स्वरूप है। अत उसकी सावधानीसे परीक्षा करके ही उसे सत्य मानना चाहिए।।७५।।

विमृश्य दीर्घं सकलान् निरस्य वा—
श्रान्ते स्फुरत्तैजसमव्ययं स्वतः।
विमार्गितव्यं हृदि सर्वगं महो
निरूप्य पश्चाद्बहुधाऽऽत्मसाक्षिकम् ॥ ७६ ॥

इस प्रकार दीर्घ कालतक विचार करके उन समस्त मिथ्या रूपोका निराकरण करके फिर अनेक प्रकारसे निरीक्षण-परीक्षण करे और अन्तमे जो क्षय-वृद्धि आदि विकारोसे रहित, सर्वव्यापी तेजोमय ध्येय-तत्त्व हृदयमे स्फुरित होने लगे तब उस स्वात्मसाक्षिक तेज ( ब्रह्म अथवा इष्टदेव ) का स्वत अनुसन्धान करना चाहिए ॥ ७६ ॥

तस्मिन् दृढाऽभ्यासवशेन साधकः
स्थिरीभवन् पश्यति वस्तु निर्मलम्।
तेजोमयं प्राक् बहुरूपधारकं
पश्चात् स्थितं स्वात्मनि लक्ष्यविग्रहम् ॥ ७७ ॥

साधक सुदृढ अभ्यासवश उसी ध्येयमे सुस्थिर भावसे स्थित हो उस निर्मल, तेजोमय स्वरूपका, जो पहले (साधनावस्थामे) अनेक रूप धारण कर लेता था और अब (सिद्धावस्थामे) अपनी अन्तरात्मामे ही इष्टदेवका विग्रह धारण करके लक्षित हो रहा है ॥ ७७ ॥

सिद्धामवस्थां स समेति तत्क्षणे
जलं गतो बुद्बुदवद्भवत्यसौ।
ब्रह्माऽहमेवाऽस्मि विभावयंस्ततः
पूर्णो भवत्येव, परीक्ष्यतामतः ॥ ७८ ॥

उपर्युक्त स्थितिमे आकर साधक तत्क्षण सिद्धावस्थाको प्राप्त हो जाता है। ठीक उसी तरह, जैसे बुद्बुद ( बुलबुला ) जलमे मिल जाता है। तदनन्तर 'मै ब्रह्म हूँ' ऐसा अनुभव करते हुए परिपूर्ण परमात्मपदमे प्रतिष्ठित हो जाता है। अत आपलोग भी परीक्षण करे ( इस स्थितिको पानेका यत्न करे ) ॥ ७८ ॥

तत्प्राप्तयेऽन्यः सफलो महत्तरः
सौकर्यरूपोऽयमुपायकोऽस्ति भोः।
सत्काव्यमेतत् क्षरतोऽक्षरं श्रितं
ब्रह्मात्मकं ब्रह्म विदन्तु सज्जनाः! ॥ ७९ ॥

सज्जनो ! उस वस्तु ( परमात्मपद ) की प्राप्तिके लिए एक दूसरा सुकर, सफल एव बडे-से-बडा उपाय यह है—क्षर ( नाशवान् वस्तु ) से ऊपर उठकर अक्षर-तत्त्व ( कूटस्थ परमात्मा श्रीकृष्ण तत्त्व ) का आश्रय लेनेवाले इस उत्तम काव्यको ब्रह्मात्मक ( वेदस्वरूप ) एव वर्णात्मिक शब्दब्रह्म समझे ।। ७९ ।।

**दिव्यं महाकायममोघदर्शनं**
**चैतन्महाकाव्यममेयशक्तिमत् ।**
**श्रद्धाय भक्त्या प्रतिसर्गसंस्थितो**
**ध्येयो विधेयो विषयः पुराऽस्य भोः ! ।। ८० ।।**

यह विशालकाय महाकाव्य दिव्य है। इसका दर्शन अमोघ फल देनेवाला है। इसमे अमेय शक्ति भरी है, श्रद्धा-भक्ति पूर्वक इसके प्रत्येक सर्गमे वर्णित जो विषय है, पहले उसीका चिन्तन करना चाहिए ।। ८० ।।

**कृष्णाऽभिधेयस्य तदस्य नामतः**
**स्वरूपतो हीनतरस्य वेधसः ।**
**लीला विचार्या प्रतिसर्गवर्णिता**
**साऽभूत् कथश्चेति निरूप्य, तत्परम् ।। ८१ ।।**
**तत्रैव चात्मानममुष्य तत्त्वगं**
**सम्पाद्य संकल्पपथाऽधिरोहिणम् ।**
**सशक्तिकं सर्वगतं मनोमयं**
**विभावनीयं स्वगतार्थसिद्धिदम् ।। ८२ ।।**

अत लौकिक नाम और रूपसे सर्वथा रहित जो जगत्स्रष्टा जगदीश्वर श्रीकृष्ण नामसे प्रसिद्ध श्री भगवान् हैं, उन्हीकी लीलाका इस काव्यके प्रत्येक सर्गमे वर्णन हुआ है, उस लीलाका मनमे विचार एव चिन्तन करना चाहिए तथा वह क्यो और कैसे हुई ? इसका भी निरूपण ( विचार ) करते रहना चाहिए। तदनन्तर उसी लीलामे सकल्पके पथसे आगे बढते हुए अपने आपको भी उन्ही प्रभुके उस तत्त्वसे सम्मिलित कर लेना चाहिए तथा अपने मनोगत अभीष्टकी सिद्धि प्रदान करनेवाले उस हृदयरूपको सर्वशक्तिमान् एव सर्व-व्यापक समझना चाहिए ।। ८१-८२ ।।

**तदैव शुद्धाऽप्रतिमेयकर्मण-**
**स्तद्ब्रह्मणः सद्गुणगानसाधितः ।**
**मिष्ठो विपक्को रस ऐश्वरः पर**
**आस्वाद्यते ब्रह्मसुखप्रदो बुधैः ।। ८३ ।।**

तभी शुद्ध एव अप्रतिमेय कर्मवाले उन परब्रह्म प्रभुके सद्गुणगान द्वारा सिद्ध किये हुए मधुर एव परिपक्व ईश्वरीय रसका, जो ब्रह्मानन्द प्रदान करनेवाला, परम एव चरम रस है, विद्वज्जन आस्वादन कर पाते है ॥ ८३ ॥

पठन्तु तस्माद्गुरुरूपिणं शिवं
स्मृत्वा तथाऽभ्यर्च्य सभक्ति संयताः ।
यूयं ततः कृष्णपदाब्जसंस्थितां
सिद्धिं लभध्वे यदि चेत् करिष्यथ ॥ ८४ ॥

इसलिए आपलोग मन-इन्द्रियोके सयमपूर्वक भाव-भक्तिके साथ गुरुरूपी शिवका स्मरण एव अर्चन करके इस काव्यका पाठ कीजिये। यदि आप विश्वासके साथ ऐसा करेंगे तो अवश्य ही श्रीकृष्णचरणारविन्दोके आश्रयमे रहनेवाली महासिद्धिको प्राप्त कर लेगे ( इसमे सशय नही है ) ॥ ८४ ॥

स्वान्तःसुखं तत्परतत्त्वदर्शनं
महात्मनामुच्चविचारशीलनम् ।
लक्ष्यं गृहीत्वा गुरुमुज्ज्वलं श्रितो
लिखाम्यहं कृष्णचरित्रमार्तिहृत् ॥ ८५ ॥

मै तो उन्ही परमोज्ज्वल स्वरूप जगद्गुरु भगवान् शकरकी शरण लेकर तथा स्वान्त सुख, परतत्त्वदर्शन और महात्माओके उच्च विचारोके परिशीलनको लक्ष्य बनाकर समस्त क्लेशोको हर लेनेवाले इस श्रीकृष्ण-चरित्र नामक महाकाव्यकी रचना करता हूँ ॥८५॥

द्वौ मे गुरू लौकिक-पारलौकिकौ
श्रीशेषराजो गुरुरेक उच्चधीः ।
यो देवचन्द्रस्य बुधस्य मध्यमः
पुत्रोऽस्त्यसौ शान्तमना गुणाग्रही ॥ ८६ ॥

मेरे दो गुरुदेव हैं—एक लौकिक और दूसरे पारलौकिक। एक जो लौकिक गुरु है, उनका नाम श्री शेषराजजी है, वे बडे उच्च विचारके है। आप पण्डितप्रवर श्री देवचन्द्रजीके मझले पुत्र है। वे शान्तचित्त तथा गुणसग्रहके प्रति आग्रह रखनेवाले है ॥ ८६ ॥

शैवीं पुरीमाश्रयताऽमुना सता
गङ्गाऽपि सा ! स्वात्मगुणैः प्रलोभिता ।
स्नानार्थमायान्तममुं न्यधादहो !
प्रत्यूष एवाऽङ्क इयं तरङ्गिणी ॥ ८७ ॥

शिवपुरी काशीमे रहते समय आप-जैसे सज्जनने अपने गुणोसे गङ्गाजीको भी लुभा लिया था। प्रतिदिन प्रात काल ही जब आप स्नानके लिए आते थे तब तरङ्गिणी वह देवी आपको अपने अङ्कमे ले लिया करती थी ॥ ८७ ॥

तन्मालवीये श्रितविश्वपूर्वके
विद्यालयेऽन्यत्र तथा गृहेऽपि च।
शास्त्राण्यथाऽनेन सुपाठिता भृशं
विद्यार्थिनो भारतवासिनोऽपि च ॥ ८८ ॥

आपने मालवीयजीके हिन्दू विश्वविद्यालयमे तथा अन्यत्र एव अपने घरपर भी बहुत-से भारतवासी और नेपाली छात्रोको अनेकानेक शास्त्रोका अध्ययन कराया है ॥ ८८ ॥

तथा स्वदेशे नयपालमण्डले
वाल्मीकिविद्यालयमध्यमागताः ।
गृहागताः शिष्यवरास्तथाऽवराः
पाठ्यन्त एतर्ह्यमुनाऽप्यहोऽनिशम् ॥ ८९ ॥

तथा अपने देश नयपाल-मण्डलमे वाल्मीकि विद्यालयमे आकर आपने बहुत छात्र पढाये हैं। आपके घरपर छोटे बडे जो भी विद्यार्थी आ जाते हैं, उन सबको भी आप निरन्तर आजकल भी पढाया करते है। यह अद्भुत बात है ॥ ८९ ॥

आसीत् सुशीला रमणी गलद्वयाः
सत्कीर्तिरूपाऽस्य मनोहरा प्रिया।
प्रलोभिता भारतवासिभिर्बुधै-
र्गताऽधुना तिष्ठति तद्वचस्यहो ! ॥ ९० ॥

इनकी सुशीला एव सुवृद्धा कीर्तिरूपा रमणी जो अत्यन्त मनोहारिणी प्रिया थी, भारतवासी विद्वानो द्वारा आकर्षित होकर अब उनके श्रीमुखोको सुशोभित कर रही है ॥ ९० ॥

इत्थं महात्मा स उदारदृक् स्वतः
प्रबुद्धविज्ञानघनो बुधाग्रणीः।
सदा सदाचाररतो विशुद्धवाग्
जयत्यहो ! मद्गुरुरेष लौकिकः ॥ ९१ ॥

इस प्रकार वे उदार दृष्टिवाले महात्मा स्वत प्रबुद्ध विज्ञानघन स्वरूप है। और विद्वानोमे अग्रगण्य हैं। सदा सदाचारमे तत्पर विशुद्ध वाणीवाले ये मेरे लौकिक-गुरु सदा ही जयशील है। और सबसे उत्कृष्ट स्थितिको पहुँचे हुए है ॥ ९१ ॥

अन्यो गुरुर्मे जगतां गुरुर्हरो
विराजते स्वात्मनि पारलौकिकः।
मया यमुद्दिश्य कृतो महत्तरः
सर्गो द्वितीयोऽस्ति, सभक्ति पठ्यताम्! ॥ ९२ ॥

मेरे दूसरे पारलौकिक गुरु है जगद्गुरु भगवान् शकर, जो मेरे अन्त करणमे सदा विराजमान है। मैने इन्हीके उद्देश्यसे अत्यन्त विशाल द्वितीय सर्गकी रचना की है। इसको आप लोग भक्तिपूर्वक पढे ॥ ९२ ॥

तयोः कृपैवाऽत्र मदीयसाधनं
यत् सा धनं दुर्गतिहारिणी किल।
गीर्वाणवाण्याऽऽत्मककाव्यचातुरी
वितन्यते दुर्गतिकेन यन्मया ॥ ९३ ॥

इन दोनो पूज्य चरणोकी कृपा ही यहाँ मेरे लिए सबसे बडा साधन है। वह कृपारूपी महान् धन ही मेरी दुर्गतिका हरण करनेवाला है। उस कृपाका ही यह परिणाम है कि मुझ-जैसा दुर्गतिग्रस्त मनुष्य भी देवभाषात्मक-काव्य-निर्माणमे अपने चातुर्यका प्रसार कर रहा है ॥ ९३ ॥

नाऽहं बुधो ज्ञानघनो न कार्मिकः
खलः शठश्चास्मि न चास्मि धार्मिकः।
तथापि पश्यन्तु महत्तमा बुधा!
इमां कृपां सद्गुरुशक्तिजृम्भिताम् ॥ ९४ ॥

मै न तो विद्वान हूँ, न घनीभूत ज्ञानसे सम्पन्न हूँ, न धार्मिक हूँ और न कर्मवीर ही हूँ। यदि कुछ हूँ तो केवल शठ हूँ, खल हूँ। माननीय महत्तम विद्वानो! तथापि मुझपर सद्गुरुको शक्तिसे बढी-चढी जो यह कृपा उतरी है, उसपर दृष्टिपात कीजिये, ( मै क्या था और क्या हो गया? ) ॥ ९४ ॥

नैपालिकोऽहं परतथ्यवेदिषु
विज्ञापये साञ्जलिकं वचस्त्विदम् ।
तत् प्राक् कुरुध्वं सुधियो विपश्चितो
यद् द्राग् भवेच्चेद्धृदि भासते ह्यसौ ॥ ९५ ॥

मै नेपाल-निवासी कवि हूँ तथा परम सत्य ( या परतत्त्व ) का साक्षात्कार करनेवाले आपलोगोके प्रति हाथ जोडकर यह बात विज्ञापनके तौर पर कहता हूँ। उत्तम बुद्धिवाले विद्वानो ! आप लोग यदि उस बात ( गुरु कृपाकी उपलब्धि ) को पहले ही कर ले, तो आपके हृदयमे शीघ्र ही वे शिव-स्वरूप श्रीकृष्ण उदित एव प्रकाशित हो जायँ ॥ ९५ ॥

ये ते मयोक्ताः सुगमा उपायका—
स्तान् प्रत्यभीक्ष्णं स्वमनो निवेश्यताम् ।
विहाय जीवत्वमिहैव चैश्वरं
तत् कृष्णरूपं सुखतोऽधिगम्यताम् ॥ ९६ ॥

मैने जो ( भगवान् शिवको गुरु-रूपमै पानेके लिए ) सुगम उपाय बताये है, उनमे आप लोग अपने-अपने मनको निरन्तर लगाइये तथा इसके फल-स्वरूप जीवभावका परित्याग करके ईश्वरीय श्रीकृष्णरूपको अनायास ही प्राप्त कर लीजिये ॥ ९६ ॥

बालेन मूर्खेण शठेन यन्मया
सद्वाक्यमित्थं विनिवेद्यते मृदु ।
तदाद्रियध्वं सुधियो यदा कदा
स्वेष्टा भवत्येव शिशोश्च धृष्टता ॥ ९७ ॥

सुधीगण ! मै मूर्ख, बालक और शठ होकर भी जो मीठे शब्दोमे इस प्रकार सद्वचन कह रहा हूँ, उसका आप लोग अवश्य आदर करे। क्योकि कभी-कभी बालककी धृष्टता भी अपनेको प्रिय लगती है ॥ ९७ ॥

प्रलापमेवं शृणुयात् कथं सुधी-
श्चेदस्तु, साहित्य—सुधां पिबन्तु भोः ! ।
कृष्णेन कृष्णस्य कथाऽत्र कीदृशी
निर्दिश्यते हन्त ! विचारयन्तु तत् ॥ ९८ ॥

यदि कहे, कोई उत्तम बुद्धिवाला पण्डित ऐसा प्रलाप कैसे सुन सकता है ? तो आपका यह कथन ठीक है। परन्तु विद्वानो ! इस वाक्य रचनामे साहित्यकी सुधा भरी हुई है। अत

उसका तो आपलोग पान करे ही। कृपया देखे तो सही, कि इस काव्यमे कवि कृष्ण भगवान् श्रीकृष्णकी कैसी कथा प्रस्तुत कर रहा है ॥ ९८ ॥

यद्वा भवस्योत्कटवासनामयीं
पीत्वा सुधाभां मदिरां मुहुर्मुहुः ।
तृप्ताः स्थ चेच्चित्तविशोधनाय तु
चैतद्भवेच्छ्रीमुखमार्जनोदकम् ॥ ९९ ॥

अथवा यदि ससारकी उत्कट वासनामे और सुधा-सी प्रतीत होनेवाली मदिराको बार-बार पीकर यदि आपलोग तृप्त हो गये हो—छक गये हो, तो आपके चित्तकी शुद्धिके लिए यह काव्यामृत मुखमार्जनके लिए ग्रहण किये जानेवाले जलका काम देगा ॥ ९९ ॥

शेषाश्रयं शङ्करमुज्ज्वलं हरं
गङ्गाधरं लोकगुरुं कृपाकरम् ।
गुरुं पुरस्कृत्य शशाङ्कशेखरं
कृतं सुकाव्यं जयतीह शङ्करम् ॥ १०० ॥

जो शेष ( अनन्त नाग अथवा मेरे गुरु शेषराजजी ) के आश्रय सबका कल्याण करने वाले तेजस्वी, गौरवर्ण सकटहारी गगाधर लोकगुरु और कृपानिधान है, उन गुरुस्वरूप भगवान् चन्द्रशेखर शिवको सामने रखकर रचा गया यह लोक कल्याणकारी उत्तम काव्य सदा विजयी हो ॥ १०० ॥

नैत्रैः शिरोभिश्च करैः सहस्रकै—
रिन्द्रो ह्यहीन्द्रो भगवान् रविश्च यम् ।
उपासते नित्यमनन्यवृत्तयः
स्वकर्मणा प्राप्तुमहो ! स बर्धताम् ॥ १०१ ॥

इन्द्र अपनी सहस्र नेत्रोसे, नागराज शेष अपने सहस्र मस्तकोसे, तथा भगवान् सूर्य अपनी सहस्र किरणोसे अनन्य भाव रखते हुए अपने-अपने कर्म द्वारा जिन प्रभुको प्राप्त करनेके लिए उनकी नित्य उपासना करते है, उन भगवान् शिवकी निरन्तर वृद्धि हो—सदा ही जय हो ॥ १०१ ॥

केदारनाथो जनको गुरुर्मे
यः काश्यपोऽभूद् दृढकर्मयोगी ।
जृम्भेत वीर्यं घिमिरे-कुलस्य
दीपस्य तस्यैव सुतस्य कृत्ये ॥ १०२ ॥

मेरे काश्यप गोत्रीय पिता एवं गुरु श्रीकेदारनाथजी सुदृढ कर्मयोगी हो गये हैं, वे घिमिरे कुलके प्रदीप थे। उनके पुत्रकी कृतिमे उन्हीकी दी हुई शक्ति बढती रहे ॥ १०२॥

( अनुष्टुब्वृत्तम् )

सतीसीमन्तरत्नाभा पतिलोकमितो गता ।
मनोरथकुमारीति मन्माता दीव्यताच्चिरम् ॥ १०३ ॥

मेरी माता मनोरथकुमारी सतियोकी सीमन्तमणि थी। जो इस लोकको त्यागकर पतिलोकमे चली गयी है, वे वहाँ चिर कालतक देदीप्यमान रहे ॥ १०३ ॥

कुर्वन् भागवतीं वृत्तिं भ्रमंश्चेतस्ततोऽनिशम् ।
स रेवतीप्रसादो मेऽग्रजो बर्धेत कर्मभिः ॥ १०४ ॥

श्रीमद्भागवतकी कथा बाँचनेकी वृत्ति स्वीकार करके जो निरन्तर इधर-उधर भ्रमण किया करते है, वे मेरे बडे भाई रेवतीप्रसादजी अपने सत्कर्मोसे सदा अभ्युदयको प्राप्त हो ॥ १०४ ॥

ययाऽत्रधार्यतेऽनीर्ष्यं स्वपतिः कवितारतः ।
पत्नी कृष्णकुमारी मे दीव्यतादिह कर्मतः ॥ १०५ ॥

जो यहाँ केवल कवितामे रत रहनेवाले अपने पतिकी ईर्ष्या छोडकर सँभाल करती रहती है, वह मेरी पत्नी कृष्णकुमारी इस भूतलपर अपने शुभ कर्मोसे सदा प्रकाशमान रहे ॥ १०५ ॥

मह्यं कवितया दत्ता मत्सुताऽथ कनीयसी ।
कुमारी कवितानाम्नी सतीपदमियाच्छनैः ॥ १०६ ॥

मुझे कविता ( की अधिष्ठात्री देवी सरस्वती ) ने जिसको दिया है, वह मेरी छोटी पुत्री कुमारी कविता धीरे-धीरे सतियोके चरण-चिन्होपर चलती रहे ॥ १०६ ॥

पत्या मन्दिर-लम्सालनामकेनोपलक्षिता ।
जयन्ती ज्येष्ठपुत्री मे बालकैश्चिरमेधताम् ॥ १०७ ॥

मन्दिर प्रसाद लम्साल नामक पतिके द्वारा जिसकी सदा देख-भाल की जाती है, वह मेरी ज्येष्ठ पुत्री जयन्ती अपने बालकोके साथ सुदीर्घ कालतक वृद्धिमती हो ॥ १०७॥

सुता मे श्याम-गोपाल-मोहना घिमिरे द्विजाः ।
योगेशेन समं भ्रात्रा रक्षन्त्विह सतां स्थितिम् ॥ १०८ ॥

श्यामप्रसाद, गोपालप्रसाद एव मोहनप्रसाद नामक घिमिरे उपनामवाले द्विज ये मेरे पुत्र अपने छोटे भाई योगेशप्रसादके साथ ही साथ इस ससारमे सज्जनोकी मर्यादाको कायम रक्खे ॥ १०८ ॥

भाद्रेऽत्र वैक्रमे वर्षे वेदनेत्रखयुग्मगे ।
कवेरेकोनपञ्चाशद्वर्षेऽस्य प्रक्रमोऽजनि ॥ १०९ ॥

यहाँ ( नेपालमे ) विक्रम सवत् २०२४ के भाद्रपद मासमे, जबकि इस कविका उनचासवाँ वर्ष आरम्भ हुआ है, इसके द्वारा इस महाकाव्यका प्रारम्भ किया गया है ॥ १०९ ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
व्यगमत् प्रथमः सर्गो महाकाव्ये स्तवात्मके ॥ ११० ॥

कृष्णप्रसाद शर्मा घिमिरे की कृति 'श्रीकृष्ण-चरितामृत' नामक इस स्तवनात्मक महाकाव्यमे यह प्रथम सर्ग पूरा हुआ ॥ ११० ॥



# द्वितीयः सर्गः

( काव्यनिर्माणशक्तिप्राप्त्यर्थं कविकृता जगद्गुरोर्लोकशङ्करस्याऽऽशुतोषस्य
करुणक्रन्दनगर्भा बहुविधोपालम्भसवलिता स्तुति )

( वसन्ततिलकावृत्तम् )

शम्भो ! दयस्व जय तां गुरुतां गृहीत्वा
यच्छिष्यतामहमितो लघुतां गतो हा ! ।
एतां किमर्थमसतां लघुतां श्रितो वा
यच्छिष्यतां सुगुरुतां समताञ्च लब्ध्वा ॥ १ ॥

भगवन् ! शम्भो ! आपकी जय हो । नाथ ! आप मेरे गुरु है । अत उस गुरुत्वको स्वीकार करके मुझपर दया कीजिये । मै आपकी शिष्यताको प्राप्त होकर भी लघुताको पहुँचा हुआ हूँ । यह बडे खेदकी बात है ( क्योकि आप महेश्वर हैं, अत आपके शिष्यको भी महान् हो जाना चाहिये । किन्तु मै लघुका लघु ही बना रह गया, यह मेरे लिये दु खकी बात है । ) अथवा मैने जो इस असत्पुरुषोचित लघुताका आश्रय लिया है, इसकी क्या आवश्यकता ? जब मुझे आपकी शिष्यता, आप-जैसे गुरुकी सद्गुरुता, तथा सर्वत्र समता मिल गयी, तब मैने इस ओछी लघुताको अपनाया ही क्यो ? ( इसमे मेरा ही अपराध है । ) ॥ १ ॥

किं वक्ष्यमाण इह चासमहं परात्मन्
किं निर्गतं मुखविलादहहा ! क्षमस्व ।
भ्रान्तं मनो मतिरभूत् कुमतिर्मदीया
जातोऽस्मि चोन्मद इवाऽत्र कृपां कुरुष्व ॥ २ ॥

परात्मन् ! प्रभो ! मै यहाँ क्या कहना चाहता था और मेरे मुखरन्ध्रसे यह क्या निकल गया । हाय ! हाय ! महान् दु खकी बात है । क्षमा कीजिये नाथ ! मेरा मन भ्रान्त हो गया । मेरी बुद्धि कुबुद्धि हो गयी । और मै यहाँ पागल-सा हो गया हूँ । अब आप कृपा कीजिये ॥ २ ॥

का वा कृपेह भगवन् ! गुरुरेव यस्त्वं
भ्रान्तोऽसि चोन्मद इवाऽसि यतस्ततोऽहम् ।
सञ्जात ईदृगहहो ! गुरवस्खलन्ति
शिष्या अपीह सममेव विभो ! पतन्ति ॥ ३ ॥

अथवा भगवन् ? यहाँ कृपा कैसी ? जब आप साक्षात् गुरु ही भ्रान्त और उन्मत्तकी भाँति हो रहे हैं[1] तो मैं कैसे इस रोगसे अछूता रह जाता। तभी तो मैं भी ऐसा ही हो गया हूँ। अहो! जहाँ गुरु ही लडखडा रहे है, वहाँ शिष्योकी क्या बिसात है। विभो! वे भी गुरुके साथ ही गिर पडते है ॥ ३ ॥

**रे भ्रान्त! किं कथयसे जगदीश्वरं मां**
**लीलाविनोदिनमहो! बत भाषसे चेत्।**
**स्वामिन्! क्षमस्व विदितं तव तच्चरित्रं**
**येन त्वया चितिधृतं चरणं पवित्रम् ॥ ४ ॥**

इसपर यदि आप यह कहे कि 'ओ विभ्रान्त मानव! तू मुझ लीलाविनोदीश्वरके प्रति यह कैसी बात कह रहा है, आश्चर्य है।' तो स्वामिन्! क्षमा कीजिये। जबसे आपने अपने पवित्र चरणको चितापर रखा, तभीसे आपके उस चरित्रका—उस समस्त चर्याका ज्ञान हमे है ॥ ४ ॥

**किं तत् कृतं यदनले शवमस्तकस्य**
**विस्फोटनाच्छुरित-कुत्सित-विक्रियेण।**
**मज्जावसारुधिरमांसविमिश्रितेन**
**पिण्डेन ताडिततनुर्यदभूश्चितासु ॥ ५ ॥**

प्रभो! आपने यह क्या किया ? चिताकी आगमे मुर्दोकी खोपडी फटनेसे जिसका विकार भस्मलिप्त एव कुत्सित दिखायी देता है, मज्जा, मेदा, रक्त और माससे जो मिश्रित होता है, ऐसे शव-खण्डसे चिताओके पास आपका श्रीविग्रह बारम्बार प्रताडित होता है। (ऐसी स्थितिमे आप अपनेको क्यो रखते हैं) ॥ ५ ॥

**बीभत्सितं तव वपुर्यदनेन नाथ!**
**किं नीरसोऽसि शिव! वैकरसप्रियोऽसि।**
**शृङ्गारवीरभयदाऽद्भुतहास्यशान्त-**
**रौद्रादयो नवरसाः सरसा न ते वा? ॥ ६ ॥**

नाथ! इस शवखण्डके स्पर्शसे जो आपका श्रीविग्रह बीभत्स-स्थितिको प्राप्त हुआ है, वह क्या है ? शिव! क्या आप नीरस है अथवा आपको एकमात्र आनन्दरस ही प्रिय है ? या शृङ्गार, वीर, करुण, अद्भुत, हास्य, भयानक, शान्त तथा रौद्र आदि रस आपको सरस (आस्वाद्य) नही प्रतीत होते है ॥ ६ ॥

---

१ शङ्करजीका भ्रान्त एव उन्मत्तकी भाँति विचरना लीलामात्र है। यह उनकी अलौकिक स्थितिका सूचक है।

माला विभाति शवखर्परबद्धजाला
हालाहलान्तरितकण्ठगता कराला ।
कृत्तिर्विभाति मृगराजहतार्द्ररक्ता
वृत्तिर्विभाति चितिभस्मभृतानुरागा ॥ ७ ॥

आपके कण्ठके भीतर हालाहल विषकी नीलिमा झलक रही है, गलेके बाह्य भागमे मुर्दोकी खोपडीके समूहसे आबद्ध विकराल माला शोभा पाती है। श्रीविग्रह पर मृगराज सिहके द्वारा तत्काल मारे गये गजराजका आर्द्र-रक्त रञ्जित चर्म सुशोभित होता है तथा आपकी वृत्ति है चिताभस्मके प्रति अनुरक्ति ॥ ७ ॥

गङ्गा विभाति मृड ! मस्तकगा सभङ्गा-
स्वङ्गा प्रियेव मदविह्वलितान्तरङ्गा ।
लेखा विभाति ललिता शशिनः सुलेखा
स्वद्भक्तभाललिखितेव सुभाग्यलेखा ॥ ८ ॥

सबको सुख देनेवाले शिव ! आपके मस्तकपर विद्यमान तरङ्ग पूरित गङ्गा मदसे विह्वल अन्तरङ्ग ( मन-प्राण ) वाली सुन्दराङ्गी प्रियतमाके समान शोभा पाती है। तथा भालदेशमे लसित कलाधरकी ललित लेखा आपके भक्तोके ललाटमे सुन्दर अक्षरोसे लिखी गयी सुभाग्य लेखाकी भाँति सुशोभित होती है ॥ ८ ॥

वासो वनं पितृवनं विकटोऽट्टहासः
मासो निदाघ इह तद्गजचर्म वासः ।
तामुष्णतां वहसि हा ! चितिगां कथं त्वं
किं लप्स्यसे फलमहो ! वदतीह दासः ॥ ९ ॥

हाय ! आपका निवास वन एव श्मशान भूमि है, अट्टहास विकट है, मास निदाघ ( जेठ ) है, तथा वस्त्र गजचर्म है। इसके अतिरिक्त भी आप चिताग्निकी उष्णताका भार कैसे वहन करते है—कैसे सहन कर पाते हैं ?। अहो ! इस उग्र तपसे आपको कौन-सा फल प्राप्त करना हैं ? बताइये, आपका यह दास पूछ रहा है ॥ ९ ॥

ज्ञातं प्रभो ! शशिकलाऽमृतवर्षिणी सा
त्वां सेवते प्रियमिति प्रथिताऽनुरागा ।
सैषा विनाशयति तामत एव नाथ !
त्वं हीदृशोऽसि चितिगोऽपि च शीतलोऽसि ॥ १० ॥

प्रभो ! अब समझमे आ गया। यह शशिकला अमृतकी वर्षा करनेवाली है, आपके प्रति इसका अनुराग प्रख्यात है। यह आपको अपना प्रिय मानकर निरन्तर आपकी सेवा करती है। यही आपकी पूर्वोक्त उष्णताको नष्ट कर देती है। इसीलिये आप ऐसे हैं। चिताग्निमे जाकर भी शीतल बने रहते हैं ॥ १० ॥

आश्चर्यमेतदखिलं चितिवह्निरेको
भालाग्निरन्य इह नाथ ! सदैव चोभौ ।
ज्वालां स्वभक्तविरहार्तियुतां मनःस्था-
मादाय पीडयत ईश ! कुतो ह्यनास्था ? ॥ ११ ॥

यह सब बडे आश्चर्यकी बात है। नाथ ! एक ओर तो चिताकी अग्नि और दूसरी ओर भाल देशमे स्थित अग्नि—ये दोनो ही अग्नियाँ आपके हृदयमे प्रज्वलित निज भक्त-विरहजनित पीडामयी ज्वालाको भी अपने साथ लेकर आपको ताप दे रही है। मेरे ईश्वर ! इनकी ओरसे इतनी लापरवाही क्यो ? ॥ ११ ॥

एतत्त्रिकं भवति नाशयितुं समर्था
सैका कथं वद विभो ? ह्यमितप्रभं तत् ।
ज्ञातं शरीरगतमुष्णमहीन्द्रभोगै—
स्तद्धन्यते गिरिजयाऽपि मनःस्थिताऽन्या ॥१२॥

प्रभो ! इस प्रकार तीन ज्वालाएँ हो जाती है। इनमेसे एक भी किसीके भी विनाशमे समर्थ है, फिर ये तीनो मिल कर तो अप्रमेय तेजसे सम्पन्न होती है, अत ये क्या नही कर सकती हैं। फिर भी आप निश्चित क्यो है ? यह बात अब समझमे आयी है। आपके शरीरमे जो उष्णता है, वह तो भुजगराजके शीतल भोगो ( शरीरो ) के सस्पर्शसे शान्त हो ही जाती है और आपके मनमे जो दूसरी ज्वाला है, उसे गिरिराजनन्दिनी उमा दूरकर देती हैं, यही कारण है कि आप सदा शान्त रहते है ॥ १२ ॥

यद्विद्यतेऽमिततनुर्भगवान् कृशानु-
स्त्वद्दिव्यभालफलके स तु दीप्ततेजाः ।
कस्याऽस्ति शक्तिरतुला विगतार्चिषं तं
कुर्याद् य ईश्वर ! विहाय भवन्तमद्धा ॥ १३ ॥

ईश्वर ! आपके दिव्य भाल पट्टमे जो अप्रमेय विग्रहवाले भगवान् अग्निदेव निवास करते हैं, उनका तेज तो अतिशय ही उद्दीप्त है। आपको छोडकर दूसरे किस देवतामे यह अतुल शक्ति है कि जो उस दिव्य अनलकी ज्वालाको शान्त कर सके ॥ १३ ॥

यद्वा हिमं ग्लपयितुं न हिमं समर्थं
तद्वज्जलं द्रवयितुं न जलं समर्थम् ।
तेजोऽपि तापयितुमीश ! न तैजसन्त-
च्छक्नोति तादृश इहाऽसि महेश ! किंस्वित् ? ॥ १४॥

अथवा महेश ! जैसे बर्फ, बर्फ को नही गला सकता, जल, जलको द्रवित नही कर सकता तथा तेज भी तेजपुञ्जको नही ताप दे सकता, उसी प्रकार आप भी है क्या ? तेजोराशि स्वरूप होनेके कारण ही तो आपको अन्य तेज तप्त नही कर सकता ॥ १४ ॥

गौरी पितुर्गुणयुतैव सुशीतलाऽतो
भोगोऽप्यहेरहह ! शैत्यमयस्तथैव ।
भागीरथी शशिकला च सुशीतले ते
तस्मात् तनौ वहसि तान् भगवन् ! सदैव ॥ १५ ॥

भगवन् ! आपको ताप कैसे हो ? आप तो शीतल वस्तुओ का सग्रह करके बैठे है ! गौरी देवी अपने पिता हिमालयके गुणोसे युक्त होनेके कारण सुशीतला है, सर्पका शरीर भी अत्यन्त शीतलतामय है । भागीरथी गङ्गा और चन्द्रकला—ये दोनो भी शीतल ही हैं, इसीलिये आप इन सबको सदैव अपने शरीरपर ढोते रहते है ॥ १५ ॥

आस्तां, महेश ! हृदयेऽप्यतिजीर्णरूपा
वृद्धा चकास्ति तव या वद का प्रभो ! सा ? ।
किं हे विभो ! प्रियकृपा भवभीतिभाजां
ह्युद्धारिका मम सुखाप्तिविधायिनीति ? ॥ १६ ॥

ये सब रहे । किन्तु प्रभो ! महेश ! यह तो बताइये आपके हृदयमे अत्यन्त जीर्ण रूपवाली जो वृद्धा ( बढी हुई या बूढी ) शोभा पाती है, वह कौन है ? भगवन् ! क्या कहा आपने ? यही न, कि 'यह वृद्धा मेरी प्रिय-कृपा है, जो भवसागरसे सत्रस्त प्राणियोका उद्धार करनेवाली है तथा भक्तजनोको सुखकी प्राप्ति करनेवाली है ॥ १६ ॥

धन्योऽस्म्यहं कथयसे भगवन् ! यदीत्थं
दासोऽस्मि तादृश इहेदृशभीतिभग्नः ।
तस्मात् समुद्धर विभो ! यदहं कुमार्गे
भ्रष्टोऽस्मि मोहमददुस्तरगर्तमग्नः ॥१७ ॥

भगवन् ! यदि आप ऐसा कहते है, तब तो मै धन्य हो गया । क्योकि मै भी आपका वैसा ही दास हूँ । इस जगत्मे इसी तरह भव-भीतिसे भग्न हो रहा हूँ । अत प्रभो ! मेरा

उद्धार कीजिये, क्योकि मै कुमार्गमे गिरा हूँ, मोह और मद के दुस्तर-गर्तमे डूबा हुआ भी हूँ ॥ १७ ॥

माया विकर्षति सदा परिवारकाया
छायायथाऽनुसरतीह ममत्वगा या ।
तां नाशयेह पतितामसतीं सतां हा !
सद्बुद्धिमेव हरति स्थिरशुद्धिमद्धा ॥ १८ ॥

माया परिवारका रूप धारण करके मुझे सदा अपनी ओर खीचती है और ममतागत होकर यहाँ छायाकी तरह मेरे पीछे लगी रहती है । यह असली है, पतित है, इसे नष्ट कर दीजिये, क्योकि यह सत्पुरुषोकी सुस्थिर शुद्धिसे युक्त सद्बुद्धिको भी बलात् हर लेती है ॥१८॥

संसारिणो विरहिणोंऽङ्घ्रियुगाब्जसक्ता
कष्टं भ्रमन्ति परितो जनिमृत्युभीत्या ।
तान् दर्शय स्वविबुधाऽऽश्रितमार्गमात्रं
किं भ्रम्यते चितिषु नाथ ! विकीर्णगात्रम् ! ॥ १९ ॥

प्रभो ! विरही ससारी जन जन्म और मृत्युके भयसे आपके श्रीचरणोमे प्रेम करते हुए भी बडे कष्टके साथ चारो ओर भटक रहे है । आप उन सबको अपना वह मार्गमात्र दिखा दीजिये, जिसपर देवता लोग भी चलते है । नाथ ! क्यो अपने अङ्गोको फेकते हुए आप चिताओपर घूमते रहते है ? ॥ १९ ॥

वृद्धा कृपा लसति ते हृदि ताञ्जनान् या
चोद्धर्तुमिच्छति भवद्गतचित्तकान् सा ।
तत्राऽपि चार्गलमभूर्यदनर्गलस्त्वं
देवोऽप्यदेवचरितोऽसि किमत्र वाच्यम् ॥ २० ॥

आपके हृदयमे जो वृद्धा ( बढी हुई ) कृपा सुशोभित होती है, वह आपमे चित्त लगाये रखनेवाले उन भक्तजनोका उद्धार करना चाहती है । यदि स्वय अर्गला रहित होकर भी आप उस कृपाके लिये अर्गला बन गये हैं—उसे आगे बढकर उद्धार कार्य करने नही दे रहे हैं, तब तो यही कहना पडेगा कि आप देव होकर भी देवोचित चरित्र नही कर रहे हैं । ऐसी दशामे क्या कहा जाय ? ॥ २० ॥

आ ! किं न पश्यति भवान् स्ववियोगजन्मा
तापाग्निरेव दहतीह निकृत्तमर्मा ।
यान् स्वान् प्रियांश्चरणगानपि भक्तिपूतान्
नोद्धर्तुमिच्छसि ततो भगवन् ! हताः स्मः ॥ २१ ॥

आह ! आप देखते नही हैं ? क्योकि आपके वियोगसे उत्पन्न तापाग्नि ही मर्मच्छेदन करती हुई आपके उन प्रिय भक्तोको भी यहाँ दग्ध किये देती है, जो आपके चरणोके अनुरागी हैं और भक्तिभावसे परम पवित्र हो गये हैं। यदि उनका भी उद्धार करना आप नही चाहते है तब तो भगवन् ! हम सब लोग मारे गये। ( हमारी क्या दुर्दशा होने वाली है ) ॥ २१ ॥

किं नाटकीयघटनेयमहो ? कथं त्वं
सञ्जात ईश्वर ! भयानकरूपधारी ।
खड्गं कपालमसमं च विगृह्य यच्चं
त्यक्त्वाऽत्र कृत्तिमभवोऽम्बरवस्त्रधारी ॥ २२ ॥

अहो ! ईश्वर ! यह क्या नाटकीय घटना घटित हुई है ? आप इतने भयानक रूप-धारी कैसे हो गये ? खड्ग और अनुचित कपाल ( खोपडी ) धारण करके हाथीके चर्मको त्यागकर आप केवल आकाशरूप वस्त्र धारण करनेवाले ( दिगम्बर या नग-धडग ) क्यो हो गये ? ॥ २२ ॥

विद्युद्बलाहकगतेव सुवर्णवर्णा
यत्ते जटाततिरभूदहहा ! विकीर्णा ।
सर्पोऽसरत् त्रिपथगाऽपथगा बभूव
चान्द्री कलाऽप्यविकला विकला बभूव ॥ २३ ॥

जैसे मेघमे विद्युत्की चमक दिखायी देती है, उसी प्रकार आपके मस्तकपर सुनहरे रगकी यह जटाश्रेणी क्यो बिखरी दिखायी देती है अहह ! यह क्या हो गया ? सर्प सरककर गिरने लगा, त्रिपथगा गङ्गा अपथगा हो गयी और सम्पूर्ण चन्द्रकला भी विकल-सी ( खण्ड ) प्रतीत होती है ॥ २३ ॥

किं कर्तुमिच्छसि विभो ! चितिगाः शवा ये
दन्दह्यमानवपुषो विलसन्ति वह्नौ ।
स्वामिन् ! परिष्वजसि तान् सहसा चिताग्ने-
र्निष्कास्य कुत्र नयसीश ! सुखं न मन्ये ॥ २४ ॥

विभो ! स्वामिन् ! आप क्या करना चाहते है ? चितापर चढे हुए जो शव अग्निमे जल रहे है और अधजले शरीरसे शोभा पाते हैं, उन्हे सहसा चिताग्निसे निकालकर आप अपने अङ्कमे क्यो लगा रहे हैं ? ईश ! आप उनको कहाँ ले जाते हैं ? मुझे आपकी यह अडभगी चाल देखकर चैन नही मिलता ॥ २४ ॥

जीवन्ति ते किमु विभो ! करुणावतारः
साक्षात् स्वयं यदसि भक्तमनःस्थहारः ।
किं देव ! जीवयितुमिच्छसि तान् समस्तान्
व्यस्तान् पुरा भवगतावधुनाऽत्र नष्टान् ॥ २५ ॥

भगवन् ! क्या वे शव जीवित है ? या देव ! आप उन सबको जीवित कर देना चाहते हैं ? क्यो न हो, आप ठहरे करुणाके अवतार, भक्तजनोके हृदयके हार ! वे बेचारे पहले सासारिक गतिमे व्यस्त थे और अब चिताग्निमे जो नष्ट हो रहे हैं, अत आप उन सबको नया जीवन प्रदान करना चाहते है क्या ? ॥ २५ ॥

रुद्धा गतिः कथमहो ! भगवंस्तवाऽत्र
किं ते श्रुतं विलपितं परमार्तिजातम् ।
किं वा मनो द्रवितमीश्वर ! बान्धवानां
स्नेहाभिषिक्तसुमनोवपुषां शवानाम् ॥ २६ ॥

अहो भगवन् ! आपकी गति अवरुद्ध क्यो हो गयी ? ईश्वर ! क्या जिनका तन-मन स्नेहधारासे अभिसिक्त है, उन शवोके बान्धवोका अत्यन्त आर्ति-जनित विलाप आपने सुन लिया है, ? अथवा यो ही आपका हृदय द्रवित हो गया है ? ॥ २६ ॥

शान्ताः समस्तभयदाः स्थितयः प्रभो ! ता
आकर्षितं तव मनः करुणार्द्रदृष्ट्या ।
ज्ञातं ! भवोऽसि भवगोऽसि कृपैव सार्था
जाता भवन्तमिह नर्तयितुं समर्था ॥ २७ ॥

प्रभो ! वे समस्त भयदायिनी स्थितियाँ सहसा शान्त कैसे हो गयी ? सभवत करुणासे भीगी हुई दृष्टिने आपके मनको आकर्षित कर लिया है। अथवा अब समझमे आया ! आप स्वय भव हैं और भव ( ससार ) मे व्याप्त है। अत इस भवके लोगोपर आपकी सहज कृपा होगी ही। वही कृपा आपको यहाँ नचानेमे समर्थ हुई है, अत वह कृपा ही सार्थक है ॥२७॥

किं भो ! विभो ! विलपितं शवबान्धवानां
त्वच्चित्तधाम्न्युपगतं विपदर्दितानाम् ।
त्वं द्राग् यतो द्रवितवान् कठिनोऽपि कस्मात्
स्थाणो ! गतिं विमृश किं रुदितोऽस्यकस्मात् ? ॥ २८ ॥

प्रभो ! क्या मृत प्राणियोके विपत्तिपीडित बन्धु-बान्धवोका विलाप आपके हृदय धाममे सहसा पहुँच गया, जिससे आप कठोर होकर भी इतना शीघ्र द्रवित हो गये। ऐसा कैसे

सभव हुआ ? स्थाणुदेव ! आप अकस्मात् रो उठे है। यह जिसके प्रभावसे हुआ, उस गति ( शक्ति ) का आप विचार कीजिये ॥ २८ ॥

उन्मील्य नेत्रयुगलं भवता समस्तं
दृष्टं ध्रुवं जगदिदं मृड ! कालनष्टम् ।
तस्माद्भवान् विरत ऐश्वरमात्मधाम
यातो हिमालयमुमेश ! शमाप्तुकामः ॥ २९ ॥

सबको सुख देनेवाले शिव ! निश्चय ही दोनो नेत्र खोलकर आपने समस्त जगत्को कालसे नष्टप्राय देखा है, अत शवोको जीवन देनेके उद्योगसे विरत हो गये हैं और उमेश ! शान्ति पानेके लिये अपने ईश्वरीय धाम हिमालय ( कैलास ) की ओर चल दिये हैं ॥ २९ ॥

तत्र स्थितान् प्रियगणान् प्रमथादिकान् स्वान्
त्वत्पादपद्मगतबुद्धिमनोविवेकान् ।
न प्रेक्षते किमु भवान् प्रियलक्ष्यदृष्टौ
हृष्टान् भवंस्त इव लक्ष्यमितः स्वदृष्टौ ॥ ३० ॥

वहाँ पहुँचकर भी आप उन प्रिय पार्षद प्रमथगणोकी ओर क्यो नही देखते हैं, जिनके मन, बुद्धि और विवेक सभी आपके चरणारविन्दोमे अर्पित हो चुके हैं। वे प्रमथगण अपने प्रिय लक्ष्यभूत आपका दर्शन पाकर फूले नही समाते है। इधर आप भी उन्ही पार्षदोकी ही भाँति अपनी दृष्टिमे लक्ष्यको प्राप्त हो गये हैं अर्थात् स्वरूपचिन्तनके लिये ध्यानस्थ हो बैठे हैं ॥ ३० ॥

सिद्धाऽऽसनं धृतमहो ! भगवंस्त्वया किं
रुद्धानि चेन्द्रियमुखानि समाहितः किम् ? ।
अन्तर्हितानि विहितानि बहिर्मुखानि
किं चिन्तयन्ति परतत्त्वमपीह तानि ? ॥ ३१ ॥

भगवन् ! आश्चर्य है ! आपने क्यो तो सिद्धासन लगा लिया ? क्यो इन्द्रियद्वारोको अवरुद्ध कर दिया ? क्यो आप समाहित हो गये ? और बहिर्मुख इन्द्रियोको क्यो आपने अन्तर्मुख कर लिया ! क्या वे इन्द्रियाँ भी यहाँ परमतत्त्वका चिन्तन कर रही है ? ॥ ३१ ॥

शान्तोऽभवस्त्वमसि तद्भव ! यः पुराऽभू-
द्विभ्रान्त इत्थमभवोऽपि भवार्थकारी ।
यद् दृश्यसेऽद्य भगवन् ! स्थिरधीर्गुणाढ्यो
यो निर्गुणोऽप्यहह ! शान्तरसावतारी ॥ ३२ ॥

हे भव ! आप परम शान्त हो गये। आप वही हैं जो अभव (अजन्मा एव विश्वातीत) होते हुए भी पहले भव—ससारका कल्याण करनेके लिए इस तरह विभ्रान्त से हो गये थे। भगवन् ! निर्गुण होते हुए भी जो आप आज स्थिर बुद्धिसे युक्त, दया-दाक्षिण्यादि गुणोसे सम्पन्न तथा शान्तरसके अवतारधारी दिखायी देते है। यही महान् आश्चर्यकी बात है ।।३२।।

**बुद्धिः स्थिरा क्व नु गतं मन ईश ! तत्ते**
**लुप्तं समस्तकरणं शरणं श्रितः किम् ? ।**
**ध्येयाऽऽत्मभूतपरतत्त्वमयस्य विष्णोः**
**कृष्णस्य साधुशमदस्य जगत्क्षयिष्णो ! ॥ ३३ ॥**

ईश ! आपकी बुद्धि स्थिर है, मन न जाने कहाँ गया ! समस्त इन्द्रियाँ लुप्त-सी हो गयी। ससारके सहारक ! क्या आप ध्येयात्मभूत परतत्त्वमय विष्णुकी, जो साधकजनोको शान्ति प्रदान करनेवाले श्रीकृष्ण ही है, शरणमे चले गये है ? ।। ३३ ।।

**तत्ते सुकोमलमनोहरमङ्गमेभि-**
**र्यल्लिह्यते पशुगणैः प्रियमुग्धदृग्भिः ।**
**त्यक्त्वा स्वभावमपि यैर्विभुमात्मरूपं**
**निर्वर्ण्य तादृशमधारि च शान्तरूपम् ॥ ३४ ॥**

ये जगली पशुगण, जिनकी दृष्टि प्रेमसे पूर्ण और मुग्ध है, आपके सुकोमल और मनोहर अङ्गको चाट रहे हैं, इन्होने आप विभुको आत्मस्वरूपमे देखकर अपने स्वाभाविक चपलतादि दोषोको त्याग दिया है तथा तदनुरूप शान्तस्वरूप धारण कर लिया है ।। ३४ ।।

**प्राणान् निरुध्य हृदि पूरकरेचकाभ्यां**
**दूरं गतस्त्वमसि कुम्भकसंस्थितः किम् ? ।**
**यद्योगिनां गुरुरसि प्रभुरुच्चशक्तिः**
**स्वामिन्नवन्ध्यमहिमाऽसि बुधाऽऽत्तभक्ति ॥ ३५ ॥**

स्वामिन् ! आप प्राणायामकी पूरक तथा रेचक क्रियाओ द्वारा प्राणोको हृदयमे रोक कर सुदूर जाकर कुम्भकमे स्थित हो गये है क्या ? क्यो न हो, आप योगियोके गुरु, उच्च शक्तिसे सम्पन्न, अमोघ महिमावाले तथा बुधजनोकी शक्ति के भाजन जो है ।। ३५ ।।

**चित्रं न किञ्चिदपि चाऽत्र विमर्शयाम-**
**स्त्वं स्थाणुरेव यदभूर्गतवान् स्वधाम ।**
**त्यक्तः समस्तकरणैर्विषयैश्च शम्भो !**
**तत्स्थाणुनाम कृतवानतिसार्थकं भोः ! ॥ ३६ ॥**

शम्भो ! हम इसमे कुछ भी आश्चर्य नही मानते है, आप अपने धाममे पहुँचकर वास्तवमे स्थाणु ( स्थिर या ठूँठ ) ही हो गये है। ध्यानस्थ होनेके कारण सपूर्ण इन्द्रियो और विषयोसे भी परिव्यक्त हो गये है और स्थिरताके कारण अपने 'स्थाणु' इस नामको भी अत्यन्त सार्थक कर दिया है ॥ ३६ ॥

**गङ्गा गता जलनिधिं नमितोत्तमाङ्गा**
**त्यक्त्वा भवन्तमगुणं खलु सा त्रिभङ्गा ।**
**सोमाऽगमत् स्थितिमनाश्च हिमालयाङ्के**
**या शोभते स्म भगवन् ! भवतः पुराङ्के ॥ ३७ ॥**

भगवन् ! आप अगुण ( गुणहीन या निर्गुण ) है, इसलिए गङ्गा आपको छोडकर अपने निवासस्थानभूत आपके उत्तमाङ्ग ( मस्तक ) को प्रणाम करके समुद्रको चली गयी हैं। गुणहीनके पास कौन रहेगी ? वह भी जो त्रिभङ्ग है, जिसकी तरगोका लीलाविलास तीन स्थानो—स्वर्ग, भूमि और पातालमे हो रहा हो। जो उमा सदा आपके अग्रभागमे—अङ्कमे सुशोभित होती थी, वे भी आपको छोडकर हिमालयकी गोदमे निवास करनेके लिए चली गयी हैं ॥ ३७ ॥

**भूता गताः प्रमथकादय आत्मनीनं**
**तद्धाम कालवनमीश ! कृपाविहीनम् ।**
**शेषोऽप्यशेष इह तं गतवानशेषं**
**स्थाणो ! भवे किमभवत्तव वस्तु शेषम् ॥ ३८ ॥**

आपके पार्षद प्रमथ आदि भूतगुण भी इस स्थितिमे आपको छोडकर अपने लिए हितावह, कृपाविहीन कालवन ( श्मशान ) मे चले गये है। शेषनाग भी शेष नही रहे, वे अशेष ( पूर्ण स्वरूप नारायण ) के पास गये। स्थाणुदेव ! बताइये तो सही, अब इस ससारमे आपकी अपनी कही जानेवाली कौन-सी वस्तु शेष रह गयी है ? ॥ ३८ ॥

**कालो गतो भव ! भवेऽत्र भवन्ननन्तं**
**स्पृष्ट्वाऽपि नान्तमधिगम्य विना भवन्तम् ।**
**तस्मात् कराल ! कलुषीकृतकालजाल !**
**चोत्तिष्ठ नाथ ! सुभगीकृतभक्तभाल ! ॥ ३९ ॥**

हे भव ! इस ससारमे अनन्त होता हुआ भी काल आपका स्पर्श करके अन्त न पा सका और आपके विना ही चला गया। अत काल-जालको भी कलुषित कर देनेवाले मेरे विकराल नाथ ! भक्तोके भालको सौभाग्यशाली बनाते हुए अब समाधिसे शीघ्र उठ जाइये ॥ ३९ ॥

आवेदनं चरणपङ्कजसंश्रिताना-
मस्मादृशामपि विभो ! भवता श्रुतं किम् ?
उन्मीलितं शशिसुधाऽऽश्रितसव्यनेत्रं
यद्दृश्यते परमशान्तिमयं पवित्रम् ॥ ४० ॥

विभो ! आपके चरणारविन्दोकी शरणमे आये हुए हम जैसे भक्तोका यह आवेदन आपने सुन लिया क्या ? तभी तो चन्द्रमाकी सुधासे परिपूर्ण अपना बायाँ नेत्र खोल दिया है, जो कि परम शान्तिमय और पवित्र दिखायी देता है ॥ ४० ॥

बालातिबालमधुरप्रियरश्मियुक्तं
तद्दक्षिणं नयनमीश्वर ! किं प्रयुक्तम् ।
कर्तुं किमिच्छसि मनो मम सप्रकाशं
यत् कृष्णतत्त्वमनवाप्य सकृष्णमस्ति ॥ ४१ ॥

किन्तु ईश्वर ! नवोदित, अत्यन्त बाल, मधुर तथा प्रिय रश्मियोसे युक्त आपका जो दक्षिण-नेत्र ( सूर्यरूप ) है, उसका प्रयोग आपने क्यो किया है ? क्या आप मेरे मनको, जो कृष्णतत्त्वको न पाकर सकृष्ण ( काला या कृष्णचिन्तन-रत ) बना हुआ है, प्रकाशसे परिपूर्ण करना चाहते हैं ? ॥ ४१ ॥

किं वर्ण्यते तव कृपा स्थिरचित्तवृत्ति-
र्वृद्धाऽपि हा ! त्यजति न स्वजनाऽनुरक्ता ।
धन्या हि नोदयति या भवदुःखतोऽपि
त्रस्तान् न ईश ! दयितुञ्च भवन्तमद्धा ॥ ४२ ॥

स्थिर चित्त-वृत्तिवाली जो आपकी कृपा है, उसका क्या वर्णन किया जाय ? वह स्वजनमे इतनी अनुरक्त है कि वृद्धा होकर भी आपको छोडती नही है । धन्यवाद है इस कृपाको, जो ससारके क्लेशसे सत्रस्त हुए हम लोगोको शान्त रहनेकी प्रेरणा देती है और आपको भी हमारे ऊपर दया करनेके लिए प्रेरित करती रहती है ॥ ४२ ॥

आवर्तितानि भवता पुनरिन्द्रियाणि
किं भो ! भवान् भवमयोऽप्यभवो ह्यभूद्धा ! ।
भक्तान् भजस्व भगवन् ! भवभावरक्तान्
संसारसिन्धुसरणीमनुसृत्य सक्तान् ॥ ४३ ॥

भगवन् ! क्या आपने इन्द्रियोको पुनः लौटा दिया—अन्तर्मुखसे बहिर्मुख कर दिया ? अहा हा ! क्या आप अभव ( भवरहित ) होकर भी भवभय ( जगन्मय ) हो गये ? तब

समाधिसे उठकर हम भक्तजनो पर दृष्टि डालिए। ससार-सागरकी सरणीका अनुसरण करके जो हम भक्तजन इसीमे आसक्त हो ससार-भावमे अनुरक्त हो गये है, उन्हे आप अपनाइये। ससारसे हटाकर अपनी ओर लगाइये ॥ ४३ ॥

व्याधिं तथाऽऽधिमनुभूय धृतः समाधिः
किं चोत्थितोऽसि मृड ! दासमिह प्रशाधि।
कृत्यं किमत्र मम नाथ ! चलेच्च वृत्ति-
र्यस्मिन् कृते तदपि चास्तु परार्थवृत्तिः ॥ ४४ ॥

आपने जगत्के जीवोमे आधि ( मानसिक रोग ) और व्याधि ( शारीरिक रोग ) का अनुभव करके वैराग्यवश समाधि धारण कर ली थी। अब हमारे सौभाग्यसे आप समाधि छोडकर उठ बैठे है। मृड ! अब यहाँ खडे हुए अपने इस दासको आज्ञा दीजिये नाथ ! मेरा क्या कर्तव्य है, जिसके करनेपर जीवनवृत्ति भी चलती रहे और परोपकारका कार्य भी होता रहे ॥ ४४ ॥

किं पृच्छ्यते ? परिकराः क्व गता मदीयाः
सर्वे गता प्रियगतावधुनैव ते हा ! ।
एकोऽहमस्मि भगवच्चरणाऽनुरागी
स्वार्थ्यस्मि किन्तु, न तु संसृतिदुःखभागी ॥ ४५ ॥

प्रभो ! आप क्या पूछते है ?—मेरे परिकर कहाँ चले गये है ? खेदकी बात है कि वे सब अपने मनको प्रिय लगनेवाली वस्तुओकी प्राप्तिके लिए इस समय अन्यत्र चले गये है। एक मात्र मै ही आपके चरणारवृन्दोमे अनुराग रखकर यहाँ उपस्थित हूँ। यद्यपि मै भी स्वार्थी ही हूँ, तथापि ससार-चक्रके दु खका भागी नही हूँ—सासारिक विषयोकी आसक्तिमे नही फँसा हूँ ॥ ४५ ॥

क्रुद्धो भवानहह ! रौद्ररसाश्रितः किं
संसार ईक्षणयुगेन विलोकितः किम् ? ।
अत्युग्रविग्रहधरो भ्रुकुटीकरालो
व्यालोकितोऽद्य भगवान् ज्वलितोग्रभालः ॥ ४६ ॥

अहा हा ! क्या आप कुपित हो गये ? रौद्ररसका अवलम्बन कर लिया ? क्या आपने रोष भरे युगल नेत्रोसे ससारको देख लिया ? हमे ऐसी शका इस लिये हुई कि हमने इस समय आप भगवान् भवको अत्यन्त उग्र विग्रहधारी रूपम देखा है। आप कुटिल भौहोके कारण विकराल तथा प्रज्वलित भीषण भालसे युक्त दिखायी देते है ॥ ४६ ॥

शान्तं प्रभोऽस्तु सकलं भवभीतिभाज-
स्तेऽप्याऽऽगताः परिकरा विगताः पुराऽज ! ।
लीलां विधस्व भगवन् ! स्वमनोऽनुकूलां
या नाशयेद्भवनदीमवितर्क्यकूलाम् ॥ ४७ ॥

प्रभो ! आपका यह सारा रौद्रभाव शान्त हो जाय। अज ! जो पहले चले गये थे, आपके वे सारे परिकर भी भवभय-भीत होकर फिर लौट आये है। भगवन् ! अब आप अपने मनके अनुकूल लीला कीजिए जो इस भव-नदीका, जिसके दोनो तट तर्क-वितकसे परे है, नाश कर सके ॥ ४७ ॥

मन्दस्मितेन रुचिरेण मनोहरेण
चाप्लाविताः परिकरा अवलोकितेन ।
भावो विचित्रित इतः सकलाश्च गाव
आवर्तिता भगवता सुखदस्वभावः ! ॥ ४८ ॥

भगवन् ! आपने अपने सुन्दर मनोहर मन्द मुस्कान युक्त अवलोकनकी अमृतधारासे समस्त परिकरोको आप्लावित कर दिया। अब तो पहलेका सारा भाव ही बदल गया। विचित्र अद्भुत रसमय हो गया। स्वभावसे ही सबको सुख देनेवाले परमेश्वर ? आपने अपनी सम्पूर्ण इन्द्रियोको भी समाधिसे लौटा लिया ॥ ४८ ॥

देवी शिवाऽङ्कमधिरोहति पूर्णरूपा
पूर्णाऽप्यपूर्णहृदया रमणोत्सुका सा ।
गङ्गा कपर्दमधिगम्य कृताङ्गभङ्गा
स्वस्थानमाश्रितवती सुखकृत्तरङ्गा ॥ ४९ ॥

अब पूर्णरूपसे सुशोभित देवी शिवा भी आपके अङ्कमे आ रही है। यद्यपि ये आप्तकामा होनेसे सर्वथा परिपूर्ण है, तथापि अपूर्ण हृदया-सी होकर आपके साथ मिलनके लिये उत्सुक है। जिनके अङ्गका भग कर दिया गया है—जो भागीरथी आदिके रूपमे विभक्त हो जानेसे भग्नाङ्ग-सी हो गयी है, वे गङ्गा भी सुखदायिनी तरङ्गोसे सुशोभित हो, आपके जटाजूटमे आकर अपने पूर्वस्थानपर आसीन हो गयी है ॥ ४९ ॥

सर्पोऽप्यशिश्रियदहो ! परितः पदाब्जं
स्पृष्ट्वा प्रदक्षिणमिषेण गलं विषाक्तम् ।
भूताः प्रियाः प्रमथका अपि सूक्ष्मदेहा
विश्वेश ! देहमभितो विलसन्ति गेयाः ॥ ५० ॥

विश्वेश्वर ! सर्प भी परिक्रमाके व्याजसे चारो ओरसे आपके चरणारविन्दोका स्पर्श करके आपके विष चिह्नित कण्ठका आश्रय ले चुका है। आपके प्रिय भूत और प्रमथगण भी सूक्ष्मशरीरसे युक्त हो, प्रभुके श्रीविग्रहके सब ओर सुशोभित हो रहे है। वे सबके सब गेय ही गेय है—आपके सहवाससे उनका भी यशोगान हो रहा है ॥ ५० ॥

काले गतेऽपरिमिते भगवन्तमित्थं
दृष्ट्वा समाधिविरतं श्रितपूर्वरूपम् ।
सर्वे मुदा मुमुदिरे परतत्त्वलब्धौ
हृष्यन्ति के न भगवन् ! सुकृते कृतेऽपि ॥ ५१ ॥

भगवन् ! अपरिमित काल व्यतीत हो जानेपर आप भगवान्को इस प्रकार समाधिसे विरत और अपने पूर्वमे स्थित देखकर समस्त परिकर आनन्दमग्न हो रहे है। क्यो न हो, परमतत्त्वकी उपलब्धि होनेपर तथा पुण्य-कर्मका सम्पादन कर लेनेपर किनको हर्ष नही होता है ॥ ५१ ॥

वामाङ्कगा गिरिसुताऽऽश्रितवामकामा
रामाऽभिरामरमणाश्रयमाप्तुकामा ।
त्वां वीक्षते सततलुब्धकटाक्षपातै-
रङ्गैः स्पृशन्त्यविकलं स्मरसंनिखातैः ॥ ५२ ॥

गिरिराजनन्दिनी उमा आपके वामाङ्कमे विराजनेवाली रमणीय रमणीशिरोमणि है और आप जैसे मनोऽभिराम रमणका आश्रय पाना चाहती हैं। इन्होने वाम ( वक्र ) गति-वाले कामभावका अवलम्बन किया है और निरन्तर लुब्धकटाक्ष पातके साथ ये आपकी ओर देखती रहती हैं। इतना ही नही, जिनमे कामदेवके बाण गडे हुए है, ऐसे अपने कोमल अङ्गोद्वारा अविकल भावसे—अथवा कभी विकल न होनेवाले- आपका स्पर्श करती रहती है ॥ ५२ ॥

सव्येतरं भुजगभूषणमुच्चबाहुं
ह्युत्थाप्य मुग्धमनसा भवता कृतं किम् ? ।
क्षिप्तः स चाऽद्रितनयासुकुमारकण्ठ
आ ! नीलकण्ठ ! गतलज्ज इवाऽभवस्त्वम् ॥ ५३ ॥

नीलकण्ठ ! मुग्धाचित्त होकर आपने अपनी भुजङ्गभूषित दाहिनी भुजा उठाकर यह क्या किया ? गिरिराजनन्दिनीके सुकुमार कण्ठमे अपनी बाँह डाल दी—भरी सभामे उन्हे गलेसे लगा बैठे ! आह ! आप तो इस समय लज्जाहीनसे हो गये ॥ ५३ ॥

यद्वा भवान् विगतकाममदाऽभिमानः
कुर्यादहो तदपि चाश्रितमीक्षमाणः ।
भक्तान् भजन्ननुसरन्ननुगान् महेश !
कां हानिमेति भवतः खलु तन्महत्त्वम् ॥ ५४ ॥

अथवा आप तो काम, मद और अभिमानसे रहित है ! अहो ! आप जो कुछ भी करते हैं या करेंगे, वह अपने आश्रयमे रहनेवाले भक्त या सेवक ( की रुचि ) को देखकर ही। महेश ! आप जो भक्तोको भजते और अनुगामियोका अनुसरण करते है, इससे क्या हानि उठाते ? विचार किया जाय तो निश्चय यही आपकी महत्ता है ॥ ५४ ॥

भूपेन्द्रजन्हुतनयापरिलक्षितस्त्वं
राजेन्द्रचन्द्रकलया विकलीकृतस्त्वम् ।
शैलेन्द्रजानयनवेधितहृद्विभुस्त्वं
यद् यत् समिच्छसि कुरुष्व परार्थगस्त्वम् ॥ ५५ ॥

राजेन्द्रजह्नुकी पुत्री गङ्गादेवीने आपको अपने कटाक्षपातका लक्ष्य बनाया है, द्विज-राजेन्द्र-चन्द्रमाकी मोहिनी कलाने आपको विकल कर दिया है तथा गिरिराजनन्दिनी उमाके नयनवाणसे भी आपका हृदय बिधा हुआ है। इसके सिवा आप परमार्थतत्त्व ( श्रीकृष्ण ) मे भी रम रहे है। इतनेपर भी आप व्यापकरूपसे सबके हृदयाकाशमे वास करते हैं। आप सर्वसमर्थ है, अत जो-जो चाहिये, वह सब कीजिये ॥ ५५ ॥

उन्नामितं मुखसरोजमहो ! प्रियायाः
सूर्याऽऽश्रितेन नयनेन भुजेन चैव ।
गन्धं क्षिताविव भवान् निदधे मुखेऽस्याः
किं भो ! रसं रसनया विरसोऽपि देव ! ॥ ५६ ॥

सबके प्रारब्धस्वरूप देवता ! ( आप यह क्या करने लगे ? ) अहो आपने सूर्यके निवासभूत अपने दक्षिण नेत्र तथा दाहिने हाथसे प्रिया गौरीके मुखारविन्दको ऊपर उठा दिया और विरस ( रसनासे विरक्त ) हुए भी आपने अपनी रसना प्रियाके मुखारविन्दमे, पृथ्वीमे गन्धकी भाँति, अमृतरस उडेल दिया ॥ ५६ ॥

एतावतैव भगवन् ! भवता प्रियाया-
श्चित्तं स्थिरीकृतमहो ! दृढकामवृत्ति ।
संकल्पसिद्धगतयः प्रभवो भवन्ति
कुर्वन्ति ये स्वजनकामुकतानिवृत्तिम् ॥ ५७ ॥

भगवन् ! इतने ही मात्रसे आपने प्रियाके सुदृढ कामवृत्ति वाले चित्तको सुस्थिर कर दिया। यह अद्भुत बात है। सच है प्रभु ( ईश्वर ) सकल्प सिद्ध गतिवाले होते है, वे अपने स्वजनोके कामुक भावको सकल्प मात्रसे निवृत्त कर देते है ॥ ५७ ॥

सिद्धाः सुरेश्वरमुखा मुनिपुङ्गवाश्च
देवर्षयश्च धनपश्च सखा गणाश्च ।
द्रष्टुं पदाब्जयुगलं श्रितशान्तरूपं
तेऽभ्यागता विदिततत्त्व ! निभालय त्वम् ॥ ५८ ॥

तत्त्वज्ञ ! आपने ( समाधिसे विरत हो ) पुन अपने शान्त स्वरूपका आश्रय लिया है, यह जान कर सिद्ध गण, देवेश्वर आदि देवगण, मुनिवर गण, देवर्षि समुदाय, सखा धनपति-कुवेर तथा सभी गण देवता आपके युगल चरणारविन्दोका दर्शन करनेके लिये यहाँ पधारे हैं, आप इन सबकी ओर दृष्टिपात कीजिये ॥ ५८ ॥

देवी शिवा धृतकराम्बुजपद्मपत्रा
त्वां प्रेष्ठदं कृतवती परिबीजयन्ती ।
दर्भासनानि च जयाविजये वयस्ये
चास्तीर्य रेजतुरहो ! त्वयि बद्धलक्ष्ये ॥ ५९ ॥

देवी शिवा अपने कर-कमलोमे पुरइन के पत्ते लेकर आपको पखा झल रही हैं, इस सेवाके द्वारा इन्होने आपको परम प्रिय पदार्थ भी देनेके लिये उद्यत बना दिया है। उधर इनकी दोनो सखियाँ जया और विजया बहुतसे कुशासन सब ओर बिछाकर आपकी ओर दृष्टि लगाये खडी शोभा पाती है॥ ५९ ॥

स्निग्धाञ्जनाभविलसद्दलशोभितेषु
निर्नीडशून्यविहगेषु शमाश्रयेषु ।
विश्रम्यते भगवता मणिकुट्टिमेषु
न्यग्रोधपादपतलेषु सुखासनेषु ॥ ६० ॥

भगवन् ! चिकने काजलके समान काली आभासे विलसित पत्तोसे-जिनकी बडी शोभा हो रही है, जहाँ न कोई घोसला है, न पक्षी, जहाँ शान्तिका साम्राज्य छा रहा है, जिनकी भूमि ( फर्श ) मणि-रत्नोसे बधी है तथा जहाँ सुखद आसन बिछे है, बरगदके नीचेके उन सुन्दर स्थानोमे आप विश्राम कर रहे है ॥ ६० ॥

स्पृष्ट्वा क्षितिं मुकुटकोटिभिरङ्घ्रियुग्मं
ध्यायन्त आत्मगतमव्ययमेकतत्त्वम् ।
सर्वेऽप्यमी मुनिगणाः प्रणमन्ति हन्त !
सेन्द्राः सुरा विशदबोधपवित्रितान्तः ! ॥ ६१ ॥

विशद्बोधसे पवित्र अन्त करणवाले शिव ! यह हर्षकी बात है कि ये सभी मुनिगण तथा इन्द्र आदि देवता अपने हृदयगत अविनाशी एक तत्त्वरूप आपका ध्यान करते हुए, मुकुटके युगल चरणारविन्दोको प्रणाम कर रहे हैं ॥ ६१ ॥

शान्तेन भावमधुरेण निरीक्षितेन
मन्दस्मितेन रुचिरेण सुभाषितेन ।
संवृद्धया च कृपया भवता परात्मन् !
आप्लाविता अहह ! ते सुखिनो विभान्ति॥ ६२ ॥

अहा ! परात्मन् ! आपने अपने शान्तिमय, भाव-मधुर अवलोकनसे, मद-मद मुस्कानसे, परम मनोहर वार्तालापसे तथा उस बढी हुई कृपाकी धारासे उन सब देवता मुनि आदिको आप्लावित ( आनन्दमग्न ) कर दिया है। अब वे सुखी दिखायी देते है ॥ ६२ ॥

देवर्षिनारदमुखा भगवन्तमित्थं
चोपासते हृदयगह्वरगं समक्षम् ।
दैवादुपेतमधुना चरणद्वयं ते
ध्यायन्त्यहो ! रुचिरचित्रगता इवैते ॥ ६३ ॥

देवर्षि नारद आदि मुनीश्वरगण हृदय-गुफामे विराजमान आप भगवान्का इस प्रकार प्रत्यक्ष देखकर उपासना करते हैं। अहो ! दैववश प्राप्त हुए आपके युगल चरणारविन्दोका ये सुन्दर चित्रमे अङ्कित मनुष्योकी भाँति निष्कम्प रह कर ध्यान करते हैं ६३ ॥

श्वेताऽभ्रकान्तिनिवहेन मनोहरेण
स्वाङ्गेन कोमलतरेण शुचिस्मितेन ।
चित्तं हरन् हर ! हरिष्यसि किल्विषञ्च
तत्ते महत्वमघहन् ! दययाभिषिञ्च ॥ ६४ ॥

हे पाप-तापहारी हर ! श्वेत बादलोके समान अपने शुभ्रकान्तिपुञ्जसे, मनोहर-सुन्दर एव कोमलतर अङ्गसे तथा पवित्र मन्दहाससे मेरे चित्तको हरण करते हुए मेरे सारे पापोको भी हर लीजियेगा। अघहारी हर ! यही आपका महत्त्व है। अब मुझे अपनी दयाकी सुधाधारासे सींचिये ॥ ६४ ॥

मालां निधाय हरिनाममयीं प्रकोष्ठे
मुद्रां विधाय दृढबोधवतीं सदोष्ठे ।
मन्दस्मितं विपुलयन् करुणार्द्रदृष्ट्या
आः ! त्वं करोषि किमुमेश ! सुधाभिवृष्ट्या ॥ ६५ ॥

आ ! उमाकान्त ! आप अपनी कलाईमे श्रीकृष्णनाममयी माला डाल कर और सुन्दर ओष्ठपुटमे सुदृढ बोधवती मुद्राकी रचना करके सुधाकी वृष्टि करनेवाली करुणार्द्र दृष्टिसे मन्दहासको विपुल बनाते हुए क्या कर रहे है ? ॥ ६५ ॥

सव्येतरोरुनिलये पदमब्जतुल्यं
सव्यं निधाय विधिवद्धृतमासनं किम् ? ।
ज्ञातं प्रभो ! वितरसीह सुरर्षये त्वं
ज्ञानं समाधिमधिरुह्य समर्जितं स्वम् ॥ ६६ ॥

प्रभो ! आपने अपनी दाहिनी जाँघपर बाये पादारविन्दको स्थापित करके क्यो विधिवत् आसन लगा लिया ? हाँ ! अब समझमे आया। आपने समाधिमे अधिरूढ होकर जिस आत्मज्ञानको सम्यग् रूपसे अर्जन किया है, उसका देवर्षि नादरको वितरण करना चाहते हैं ॥ ६६ ॥

सर्वे वयं परिकराः परितो भवन्त
सन्तं श्रिता गिरिश ! तच्छ्रवणोत्सुकाः स्मः ।
मुख्योऽस्तु नारदमुनिस्तु गुरुश्च वक्ता
यद्व्याहरिष्यति भवाञ्छृणुमो वयं तत् ॥ ६७ ॥

भगवन् ! हम आपके समस्त परिवार भी आप सन्त-शिरोमणिको चारो ओरसे घेरकर उस ज्ञानोपदेशको सुननेके लिये उत्सुक होकर बैठे हैं। मुख्य श्रोता नारदमुनि ही रहे। आप-जैसे अनुपम गुरुदेव वक्ता हो। आप अपने श्रीमुखसे जो-जो उपदेश देंगे वह हम सब लोग सादर सुनेंगे ॥ ६७ ॥

स्थाने प्रहृष्यति जगद्भवतो मुखाब्जा-
च्छ्रुत्वा परात्मगततत्त्वमुमेश ! यस्मात् ।
सिन्धुं तरिष्यति विपद्ग्रथिताऽन्तरङ्गं
दुर्वारकामकवलीकृतचित्तरङ्गम् ॥ ६८ ॥

उमावल्लभ ! आपके मुखारविन्दसे परमात्मतत्त्वका उपदेश सुनकर सारा जगत् आनन्दित होगा, यह उचित ही है। क्योकि उस उपदेशको सुनकर हमारा विपत्तिग्रस्त अन्त.-

करण, जिसके चित्तकी रङ्गभूमिको दुर्जय कामने अपना ग्रास बना लिया है; भवसागरको अनायास तर जायगा ॥ ६८ ॥

हा हा ! हताः स्म भगवन् ! त्रिगुणात्मिका या
माया विनर्तयति नित्यमदृश्यकाया ।
तां नाशय त्वरितमद्य विभोः समक्षं
सा का प्रभो ! प्रभवतीह विकर्षितुं नः ? ॥ ६९ ॥

हाय ! हाय ! भगवन् ! हम तो बे-मौत मारे गये। जिसका रूप कभी दिखायी नहीं देता तथा जो त्रिगुणमयी है; वह माया हमको नित्य नचा रही है। उसको तुरन्त नष्ट कर दीजिये। वह प्रभुके समक्ष यह धृष्टता कर रही है। प्रभो ! वह कौन होती है जो हमें आपके सामने से खींच ले जा सके ॥ ६९ ॥

सान्निध्यमाप्य सकलाः स्थितयो वयश्च
जाताः स्थिरा अविकला विकला धृतिश्च ।
बुद्धिश्च नाथ ! भवगाभवगाद्य जाता
शान्तं समस्तकरणं करणं च जातम् ॥ ७० ॥

नाथ ! आपका सामीप्य पाकर सारी विशृङ्खल अवस्थाएँ सुधर गयीं—स्थिर हो गयीं। हम भी सुस्थिर हो गये। हमारी विकल धृति भी अविकल (शान्त) हो गयी। बुद्धि भी पहले भवगा थी—संसारमें लगी थी, अब भव अर्थात् आप भगवान् शिवमें लग गयी अथवा अब अभवगा—मोक्षगामिनी हो गयी। समस्त इन्द्रियाँ शान्त एवं साधन समर्थ हो गयीं ॥७०॥

जिज्ञासवस्तव पदाब्जगतं रहस्यं
त्वामाश्रिता वयमिह प्रियभक्तवश्यम् ।
शान्ता दृढं ह्यवहिताश्च पदाब्जरक्ता-
श्चोद्घाट्य तत्त्वमनुशिक्षय नः स्वभक्तान् ॥ ७१ ॥

प्रभो ! हम आपके चरणारविन्दगत रहस्यको जानना चाहते हैं, आप अपने प्रिय भक्तोंके अधीन रहते हैं; अतः हम यहाँ आपकी ही शरणमें आये हैं। अच्छी तरह शान्त और सावधान हैं और आपके चरणानुरागी भक्त हैं; आप हमें परमार्थतत्त्वका रहस्य खोल कर बतावें और तदनुरूप शिक्षा-दीक्षा दें ॥ ७१ ॥

साध्यप्रियाः ! शृणुत तत्परमात्मतत्त्वं
चास्त्यत्र सर्वगतमव्ययमेकरूपम् ।
दृश्यं च तद्भवति शान्तपदार्थवृत्ति
चित्तं यदा भवति हीनजगत्प्रवृत्ति ॥ ७२ ॥

[ भक्त कविकी यह प्रार्थना स्वीकार करके भगवान् शङ्कर उपदेश देते हैं—] सबके साध्य श्रीकृष्णतत्त्वसे प्रेम रखनेवाले श्रोताओ सुनो ! वह परमात्मतत्त्व यहाँ सर्वत्र व्यापक, अविनाशी और एकरूप है। वह दृश्य तभी होता है, जब चित्त जागतिक पदार्थोंकी प्रवृत्तियोसे दूर रह कर शान्त पदार्थ-स्वरूपपर मात्मामे लग जाता है ॥ ७२ ॥

तद्ब्रह्म सन्ततमनन्तममूर्तमेकं
पश्यन्ति शान्तहृदयेन बुधा अनेकम् ।
बह्वाऽऽश्रयं विविधसाधनगम्यभूतं
जानीत विश्वमयमत्र सुरा ! अभूतम् ॥ ७३ ॥

वह ब्रह्म सर्वत्र व्याप्त, अनन्त, अमूर्त और एक ( अद्वितीय ) है। विद्वान् पुरुष शान्त चित्तसे उस ब्रह्मका अनेक रूपोमे साक्षात्कार करते है। वह बहुसख्यक दृश्य पदार्थोंका आश्रय है। विविध साधनोसे उसका अनुगम होता है। देवताओ ! उस विश्वरूप ब्रह्मको अभूत ( पचभूतोसे अतीत ) जानो ॥ ७३ ॥

लीलार्थमेव तदमूर्तमपीह मूर्तं
भूत्वा जगद्विसृजते निगमांश्च शक्त्या ।
रूपं च नाम विविधं परिगृह्य चास्मिन्
नाना विभाति परिपाति गृणीत भक्त्या ॥ ७४ ॥

वह अमूर्त होकर भी वहाँ लीला-रसका विस्तार करनेके लिये ही मूर्त बन जाता है और अपनी शक्ति ( योगमाया ) द्वारा जगतकी सृष्टि करता है। वही जगत्कर्ता ब्रह्माको वेदोका उपदेश देता है। वही इस ससारमे विविध नामरूप धारण करके अनेक-सा प्रतीत होता है और वही विश्वका पालन करता है। तुम लोग भक्तिभावसे उसका गुणगान करते रहो ॥ ७४ ॥

तन्निर्गुणं ह्यपि गुणी भवतीह वेत्ता
दुष्टान् हरञ्छ्रुतिसतां भवभीतिभेत्ता
तस्याऽवतार इति कथ्यत एव यत्र
तत् कृष्ण एव समभूत्, स च यत्र तत्र ॥ ७५ ॥

वह निर्गुण होकर भी यहाँ सगुण-सा हो जाता है। उसे सर्वज्ञ कहा गया है। सगुण रूपमे आने पर वह दुष्टोका सहार, वेदो और सन्तोका उद्धार, तथा भक्तजनोके भव-भयका निवारण करनेवाला होता है। उसीको उसका अवतार कहा जाता है। जहाँ कही भी अवतार होता है, वहाँ श्रीकृष्ण-सज्ञक परमात्मा ही प्रकट हुआ है। वह श्रीकृष्ण भी यत्र तत्र सर्वत्र व्यापक है ॥ ७५ ॥

जानीत भो ! हृदयगं सततं ततं तं
व्यस्तं समस्तमपि चात्तजगत्समस्तम् ।
नानात्वभेदजननीमनणीयसीं तां
मायां विनोदयति सैष विभुर्दुरन्ताम् ॥ ७६ ॥

श्रोताओ ! उस श्रीकृष्ण नामक परब्रह्मको सबके हृदयमे रहनेवाला अन्तर्यामी आत्मा जानो। वह सदा और सर्वत्र फैला हुआ है। व्यष्टि और समष्टिरूप जगत् भी उससे भिन्न नही है। वही कालरूपसे समस्त जगत्को अपना ग्रास बना लेता है। वही ये भगवान् श्रीकृष्ण है, जो नानात्वभेदकी सृष्टि करनेवाली अपनी दुरन्त महीयसी मायाका मनोरजन करते है ॥ ७६ ॥

साक्षी समस्तजगतां जगतश्च भेत्ता
कूटस्थ आद्यपुरुषोऽखिलतत्त्ववेत्ता ।
साक्षात् स एव नटवद्बहुधा विभाति
विश्वं विवर्तयति नृत्यति माति भाति ॥ ७७ ॥

वे श्रीकृष्ण समस्त जगत्के साक्षी है। ससारके सहारक भी वे ही हैं। वे कूटस्थ-आदि पुरुष तथा सम्पूर्ण तत्त्वोके ज्ञाता है। साक्षात् वे श्रीकृष्ण ही नटकी भाँति अनेक नाम-रूप धारण करके सुशोभित होते है। वे अपने आपमे ही इस विश्वको विवर्तित करते, नाचते नाचते इसके अन्तर्गत रहते तथा इससे परे भी प्रकाशित होते है ॥ ७७ ॥

तेनेश्वरेण सततं नियमैरभेद्यै-
र्नस्योतगाव इव बद्धहृदोऽस्मदाद्याः ।
लोके भ्रमाम इतरेतरबद्धमूला
मोहात्मकाः स्वकृतकर्मनिखातशूलाः ॥ ७८ ॥

जैसे बैलोकी नाक नथी होती है, उसी प्रकार हम लोगोका हृदय सदा उन परमेश्वर के बनाये अभेद्य नियमोसे बँधा रहता है। हम परस्पर द्रोह, मोह आदिसे बद्धमूल हुए मोह-मग्न हो, अपने द्वारा किये गये कर्मरूपी शूलको अपने आपमे चुभोते है और ससारमे भटकते रहते है ॥ ७८ ॥

यत्तेजसा तपति नित्यमहस्करोऽसौ
विश्वं प्रकाशयत इन्धनभुक्शशी च ।
काले जगत् कवलयत्यसमः स कालः
कुर्मो वयं विहितकर्म स कालकालः ॥ ७९ ॥

जिनके तेजसे तेजस्वी हो, वे सूर्यदेव नित्य तपते हैं और अग्नि तथा चन्द्रदेव जिनके तेजसे ही विश्वको प्रकाशित करते है, वे ही परमात्मा अनुपम कालरूप हो, सहार के समय सम्पूर्ण जगतको अपना ग्रास बना लेते हैं। हम लोग उन्ही की दी हुई शक्ति से शास्त्र-विहित कर्मोंका सम्पादान करते है। वे भगवान् कालके भी काल हैं ॥ ७९ ॥

तस्मात्तमेव भजताव्ययमात्मनीनं
ह्याब्रह्मकीटभवविश्वविधौ विलीनम् ।
शान्तिप्रद् निखिलजीवनिकायभूतं
सूक्ष्मातिसूक्ष्ममपि लक्ष्यगतं महान्तम् ॥ ८० ॥

इस लिये तुम लोग उन्ही परमेश्वरको भजो। वे निर्विकार रहते हुए हमारे अपने हितैषी हैं। ब्रह्मासे लेकर कीट पर्यन्त समस्त विश्वकी सृष्टिमे मिले हुये है। सबको शान्ति देनेवाले है। समस्त जीव समुदाय उन्हीका स्वरूप-अशविशेष है। वे सूक्ष्मसे भी अत्यन्त सूक्ष्म तथा महान् है। तथापि भक्तजनोको प्रत्यक्ष दर्शन देते हैं ॥ ८० ॥

तत् कृष्णमेनमधिगन्तुमतोऽत्र वत्सा !
यत्नं दृढं कुरुत सर्वगतो हि योऽसौ ।
मार्गाश्च सन्ति विविधाः सुगमास्तमेव
ये प्रापयन्ति पथिकान् दृढबद्धलक्ष्यान् ॥ ८१ ॥

अत बच्चो ! इन परमात्मा श्रीकृष्णको प्राप्त करनेके लिए यहाँ सुदृढ प्रयत्न करो। क्योकि वे सबमे है, सर्वत्र है। उनके पानेके लिए नाना प्रकारके बहुतसे सुगम मार्ग है, जो दृढ लक्ष्य रखनेवाले पथिकोको उनके पास पहुँचा देते है॥ ८१ ॥

तत्प्रापकाणि कृतकर्मनिकृन्तनानि
शास्त्राणि चेह विलसन्ति मनोहराणि ।
दिव्याः कलाश्च सकला गुणतन्त्रमन्त्रा-
स्तत्प्रापकाः परिलसन्ति भजन्ति धन्यान् ॥ ८२ ॥

उनकी प्राप्ति करानेवाले यहाँ बहुत-से मनोहर शास्त्र शोभा पाते हैं, जो किये गये कर्मोंका ज्ञान द्वारा उच्छेद कर देनेवाले हैं। इसके अतिरिक्त भगवत्प्राप्ति करानेवाली बहुत सी दिव्य कलाये है। समस्त गुण, तन्त्र और मन्त्र है। जो सब ओर सुशोभित होते हैं। वे सब साधन पुण्यात्मा पुरुषोको ही प्राप्त होते हैं ॥ ८२ ॥

ज्ञानं क्रियाव्रतमनेकविधं स्वकर्म
योगश्च जीवपरमात्ममयो विवेकः ।
तं कृष्णमेव बहुधा परिभूषयन्ति
भक्तान् स्वकर्मकुशलांल्लघु निर्दिशन्ति ॥ ८३ ॥

ज्ञानकाण्डगत ज्ञान और कर्मकाण्डगत नाना प्रकारका अपना वर्णाश्रमोचित कर्म, योग तथा जीवात्मा और परम त्माका विवेक—ये बहुत-से साधन श्रीकृष्णको ही विभूषित करते ( प्राप्त होते ) है। अपने-अपने कर्ममे कुशल भक्त साधकोको वे सब साधन शीघ्र ही उस तत्त्वका निर्देश कर देते ( बोध करा देते ) है ॥ ८३ ॥

अत्राऽपि भो ! शृणुत कृष्णचरित्रमेव
त्रैविध्यतापमपहर्तुमलं महिम्ना ।
तं ध्यायताद्य विभुमेव परात्मरूपं
ब्रह्मैव जातमिह शान्तिदकृष्णनाम्ना ॥ ८४ ॥

हे भक्त जनो ! सुनो—इन साधनोके होते हुए भी श्रीकृष्ण चरित्रका अनुशीलन ही एक ऐसा साधन है, जो अपनी महिमासे आध्यात्मिक, आधिदैविक तथा आधिभौतिक तीनो तापोको हर लेनेमे समर्थ हैं। उन परमात्मस्वरूप सर्वव्यापी भगवान्का ही अब तुम लोग भजन-ध्यान करो। परब्रह्म परमात्मा ही यहाँ शान्तिप्रद श्रीकृष्ण नामसे प्रकट हुआ है ॥ ८४ ॥

आत्मा स एव भवतां हृदि भासते यो
द्रष्टव्य आत्मनि धृतैश्चरितैः श्रुतैस्तैः ।
मन्तव्य इत्थमसकृत् स पुनश्च चिन्त्यः
श्वासं नियम्य हृदि भो ! सुकरोऽस्त्युपायः ॥ ८५ ॥

वही तुम्हारा आत्मदेव है, जो सबकी हृदय-गुफामे नित्य प्रकाशमान है। उसीका तुम्हे अपने हृदयमे साक्षात्कार करना चाहिये। किस प्रकार सो सुनो ! उसके लीला-चरित्रो-को हृदयमे धारण करो, श्रवण करो इस प्रकार निरन्तर मनन करो। फिर श्वासका नियमन ( प्राणायाम ) करते हुए अपने चित्तमे निरन्तर उसका चिन्तन करो। भाई ! उसको पानेका यही सुकट उपाय है ॥ ८५ ॥

यद्वा तमाप्तुमनसो यदि यूयमद्धा,
शीघ्रं व्रजं व्रजत बालविहारभूमिम् ।
यत्रेश्वरेण परिपालयता त्रिलोकीं
लीलाकृताऽमृतमयी सह भक्तबालैः ॥ ८६ ॥

अथवा ( यह भी सभव न होने पर ) यदि तुम्हारे मनमे भगवान्को पानेका पक्का निश्चय हो तो शीघ्र ही उनकी बाललीलाकी विहार-भूमि उस व्रज ( गोकुल आदि ) मे चले जाओ, जहाँ त्रिलोकीका पालन करनेवाले उन परमात्माने अपने भक्त बालको ( ग्वाल-बालो ) के साथ अमृतमयी लीला की है ॥ ८६ ॥

तत्रत्यवस्तु सकलं परितो विभाति
सानन्दसत्यममलं कृतदिव्यलीलम् ।
गत्वा तदत्र परिपश्यत तत्त्वमेकं
दृश्येत यद्यपि तु नैकविधं सदेकम् ॥ ८७ ॥

'वहाँ की सारी वस्तुएँ सब ओरसे निर्मल, सत्य, आनन्दमय और दिव्यलीला-तत्पर प्रतीत होती हैं। अत वहाँ पहुँचकर तुम उस एकमात्र—अद्वितीय तत्त्वका साक्षात्कार करो। यद्यपि वह एक ही है तथापि अनेक-जैसा दिखायी देता है' ॥ ८७ ॥

पश्चात्तदेकमनसो मथुरां प्रविश्य
लीलां विलोकयत तेन कृतां विविच्य ।
भक्तान् कथं स परिपालयति स्म रक्तः
क्रूरान् विनाश्य सुरसाधुसुधीषु सक्तः ॥ ८८ ॥

'तत्पश्चात् एकमात्र उसीमे मन लगाकर मथुरापुरीमे प्रवेश करो और वहाँ उस ब्रह्म द्वारा की गयी लीलाका अवलोकन करो। साथ ही मनमे यह विचार करते रहो कि यह लीला साक्षात् भगवान्‌की की हुई है। वहा तुम देखोगे कि वह भगवान् किस प्रकार देवता, साधु और सुधीजनोके प्रति आसक्त रहकर दुष्ट, क्रूर, असुरोका नाश करके भक्तजनोका पालन करता है'॥८८॥

त्यक्त्वा ततो मधुपुरीं गतवान् यदा स
तां द्वारकां विशदसद्मवतीं मनोज्ञाम् ।
तिष्ठंश्च तत्र पृथिवीं बहुभारभीतां
योऽत्राऽकरोद्विगतभारवतीं समृद्धाम् ॥ ८९ ॥

'सज्जनो! तदनन्तर मथुरापुरीको छोडकर जब वे भगवन् उज्ज्वल भवनोसे भरी मनोहर द्वारकापुरीको गये तब वहाँ रहते हुए उन्होने विपुल भारसे भयभीत हुई पृथ्वीको भारविहीन एव समृद्धिशालिनी बना दिया' ॥ ८९ ॥

द्वावेव तस्य भुवनाधिपतेः प्रियार्हौ
पार्थोद्धवौ विगतमोहमदौ सुशिष्यौ ।
एकः प्रवृत्तिपथगो भवभारहारी
चान्यो निवृत्तिपरको नियमाऽनुसारी ॥ ९० ॥

'प्रिय जनो! समस्त भुवनोके स्वामी उन भगवान्‌के दो ही प्रीतिपात्र उत्तम शिष्य हुए है। उन दोनोके ही मोह और मद दूर हो गये थे। वे दोनो हैं—कुन्ती-पुत्र अर्जुन और

उद्धव। इनमे से एक ( अर्जुन ) तो प्रवृत्तिमार्गका पथिक ( कर्मयोगी ) होकर भवभारहरणके कार्यमे सलग्न हुआ और दूसरा निवृत्तमार्गमे रहकर नियमोके अनुसरणमे लगा रहा' ॥९०॥

तज्जीवनं कथमभूत् सफलौ कथं तौ
स्यातां तदेव सकलं तु विभावयेत ।
आश्रित्य तत्सुसृतिमेकतमां समर्हां
यूयं गमिष्यथ ततः स्थितिमेकताहाम् ॥ ९१ ॥

'उन दोनोका जीवन कैसा था, वे दोनो कैसे सफल हो सके—इन सब बातोपर विचार करो। उन दोनोमे से एकके भी समुचित मार्गका आश्रय लेकर तुम सब लोग श्रीकृष्णके साथ एकत्व ( तादात्म्य ) की स्थिति प्राप्त कर लोगे' ॥ ९१ ॥

तद्गच्छताऽव्ययममोघमलौकिकं तत्
स्थानं स्वभक्तपरिपोषणहेतुभूतम् ।
लीलां विलोक्य रुचिरां स्वमनोऽनुकूलां
तं स्थापयेत हृदि लप्स्यथ तत्र तत्ताम् ॥ ९२ ॥

'अत तुम सबलोग उस अविनाशी, अलौकिक एव अमोघ पुण्यस्थानको अपने भक्तोके पोषणका हेतुभूत है, अवश्य जाओ। वहाँ अपने मनके अनुकूल भगवान्की रुचिर लीलाओ को देखकर उन भगवान्को अपने हृदयमे स्थापित कर लो। ऐसा करके तुमलोग उन भगवान् श्रीकृष्णमे तादात्म्यभावको प्राप्त कर लोगे' ॥ ९२ ॥

भक्त्या परात्मगतभावमयेन धाम्ना
वृद्धाऽऽदरेण गुरुणा च महामहिम्ना ।
त्वत्पादपद्मयुगलं प्रणमन्ति पश्य !
देवर्षयः क्षितिगताः प्रियभक्तवश्य ! ॥ ९३ ॥

'प्रिय भक्तजनोके वशमे रहनेवाले महेश्वर! देखिये, ये देवर्षिगण धरतीपर माथा टेककर आपको प्रणाम करते है। आपके प्रति बढे हुए आदर भावसे, भक्तिसे, परमात्मगत-भावसे तथा तेजसे ये सब लोग आपके युगल चरणारविन्दोमे शीश झुकाते हैं ॥ ९३ ॥

सर्वेऽप्यमी मुनिगणाः सुरसिद्धसङ्घा
उत्थाय शान्तममलं च शनैः शनैस्त्वाम् ।
स्वामिन् ! प्रदक्षिणमिषेण परिभ्रमन्तः
कुर्वन्ति हृद्गतमहो ! नयनैः पिबन्तः ॥ ९४ ॥

'स्वामिन्! ये सभी मुनिगण, देवता तथा सिद्धोके समुदाय उठकर परिक्रमाके बहाने धीरे-धीरे शान्त एव निर्मल स्वरूप आपके चारो ओर घूमते हैं और आपको अपने हृदय-मन्दिरमे विराजमान करते है। अहो! ये ऐसे प्रेमसे निहारते हैं, मानो दोनो आँखो आपको पी लेगे ॥ ९४ ॥

बद्धाञ्जलिं विगतमोहमदाभिमाना—
स्त्वत्पादपद्मगतयो हृदि चैकताना ।
लीलां विलोकयितुमीश्वर! कृष्णकामाः
सर्वे गता व्रजमितः परिपूर्णकामाः ॥ ९५ ॥

'ईश्वर! ये हाथ जोडकर चल दिये। इनके मनमे मोह, मद और अभिमानका लेश भी नही है, आपके चरणारविन्द ही इनके अवलम्ब हैं। ये चित्तको एकतान करके श्रीकृष्ण-प्राप्तिकी कामना लेकर उनकी लीलाका दर्शन करनेके लिए यहाँसे व्रजकी ओर चले गये। इनकी सारी कामनाएँ परिपूर्ण हो गयी है' ॥ ९५ ॥

एकोऽहमस्मि भगवंश्चरणेऽवशिष्टः
शिष्टोऽप्यशिष्ट इव विश्वविपत्तिपिष्टः ।
लुप्ता सुबुद्धिरपि शुद्धिरहो! न मेऽस्ति
प्रेक्षस्व नाथ! कृपयाऽगतिकोऽस्मि योऽस्मि ॥ ९६ ॥

'भगवन्! एक मात्र मै ही आपके चरणोमे अवशिष्ट रह गया हूँ। शिष्ट होकर भी मै अशिष्ट मनुष्यकी भाँति सारी विपत्तियोसे पीस डाला गया हूँ। मेरी उत्तम बुद्धि भी लुप्त हो गयी है। अहो! मुझमे शुद्धिका भी सर्वथा अभाव है। नाथ! मै जो कुछ भी हूँ, बेसहारा हूँ। आप कृपापूर्वक मेरी ओर देखिये' ॥ ९६ ॥

भक्तिप्रियो व्रजपतिर्भगवान् मुकुन्दः
सर्वैः सुरासुरगणैर्मुनिभिश्च वन्द्यः ।
लीलाऽपि तस्य भगवन्! प्रियभक्तवश्या
दृश्या कथं भवति नः खलु साऽप्यदृश्या ॥ ९७ ॥

'भगवन्! व्रजपति भगवान् मुकुन्दको तो केवल भक्ति ही प्रिय है। समस्त देवता असुर और मुनिगणोके भी वे वन्दनीय हैं। उनकी लीला भी उन प्रिय भक्तोके ही वशमे है। (हम तो उनके भक्त नही है) फिर हमे उसका दर्शन कैसे होगा? हमारे लिये तो वह सर्वथा अदृश्य है' ॥९७॥

तस्माद्धता वयमिहैव गता अवश्यं
कीनाशपाशवशमत्र च भक्तवश्यम् ।
प्राप्याऽपि देव! भवतोऽङ्घ्रियुगं यदेतद्
दुर्भाग्यमेव परिदीव्यति नो विना तत् ॥ ९८ ॥

फिर तो हमलोग यहाँ यो ही मारे गए। निश्चय ही काल-पाशके वशमे पड गये देव ! यहाँ भक्तोके अधीन रहनेवाले आपके इन युगलचरणारविन्दोको पाकर भी हम भग वान् श्रीकृष्णकी लीलाके दर्शनसे वञ्चित रह गये। ऐसी दशामे हमारा दुर्भाग्य ही हमं चारो ओरसे घेरकर प्रकाशित हो उठा है ॥ ९८ ॥

किं दुष्कृतं कृतमहो ! भगवन् ! मयाऽपि
जन्मान्तरेऽप्यहह ! दृष्टिपथं गतोऽपि ।
त्वं स्थाणुरित्थमभवो निजकर्मदोषैः
सोऽहं हतोऽस्मि भवताऽत्र धृतः समाधिः ॥ ९९ ॥

अहो भगवन् ! मैने जन्मान्तरमे भी कौन-सा ऐसा दुष्कर्म किया है, जिससे आपक दर्शन हो जानेपर भी हम दुर्भाग्यसे मुक्त न हो सके। हाय ! हाय ! यह कितने खेदकी बात है। तुम तो हमारे लिए इस तरह ठूठे काठ ही हो गये। मै इधर अपने कर्म-दोषसे मारा गया। आपने तो फिर समाधि लगा ली ॥ ९९ ॥

कस्तादृशोऽस्ति भगवन्तमनाथनाथं
त्यक्त्वा ग्रहिष्यति करेऽद्य च मामनाथम् ।
क्षुद्रेश्वरा इति विभाव्य मयाऽपि सर्वे
त्यक्ताः स्थितोऽस्मि चरणेऽभयदेऽप्यपूर्वे ॥ १०० ॥

आप भगवान् है—छहो ऐश्वर्योसे भरे-पूरे हैं, अनाथोके नाथ है, आपको छोडकर दूसरा कौन ऐसा प्रभु है जो मुझ अनाथका हाथ पकडेगा ? अन्य देवताओको क्षुद्रशक्तिशाली मानकर मैने सबको पहलेसे ही त्याग दिया है और आपके अपूर्व, अभयदायी इन चरणोके पास खडा हूँ ॥ १०० ॥

अस्यां स्थितौ प्रभुवरेण धृतः समाधिः
त्यक्त्वा व्यथाशतगतं गलितेन्द्रियं माम् ।
आश्वासनं किमपि न ह्यददाद् भवान् यद्—
धा ! वज्रपातसदृशं किल जातमेतत् ॥ १०१ ॥

ऐसी दशामे आप ईश्वरोके भी ईश्वरने समाधि लगा ली और सैकडो व्यथाओमे डूबे हुए मुझ गलितेन्द्रिय दीन-हीनको यो छोड दिया। आपने कोई आश्वासन तक नही दिया ! हाय ! हाय ! आपके द्वारा की गयी यह उपेक्षा मेरे लिये तो वज्रपातके समान दुख-दायिनी है ॥ १०१ ॥

तस्मात् प्रभोऽहमपि चास्मि पदानुरक्तो
रक्तो भवत्प्रियगुणै रजसा च रक्तः।
सक्तो विषेषु विषयेषु बुधेष्वसक्तः
स्वामिन्नसक्तमिह मोद्धर योऽसि शक्तः ॥ १०२ ॥

प्रभो! इस कारण मै भी आपके चरणोसे अनुरक्त हूँ, आपके प्रिय गुणोसे तो रक्त ( आपमे रागयुक्त ) हूँ ही, अपने रजोगुणसे भी रगकर रक्त हो गया हूँ। विषयरूपी विषके सेवनमे आसक्त हूँ, किन्तु विद्वानोके प्रति मेरी कोई आसक्ति नही है। स्वामिन्! मै सर्वथा असमर्थ हूँ, आप मेरा उद्धार कीजिये, क्योकि आप सर्वसमर्थ हैं ॥ १०२ ॥

याम्यत्र कुत्र तव पादयुगं विहाय
यश्चोद्धरेदहह! मां तु सुधाऽभिवृष्टया।
को वा समर्थ इह तद्भ्रुकुटीकराल—
कीनाशपाशमवधीरयितुं स्वदृष्ट्या ? ॥ १०३ ॥

मै आपके युगल चरणोको छोडकर कहाँ जाऊँ ? अहह! कौन ऐसा स्वामी है जो मुझपर अपनी दृष्टिसे अमृतकी वृष्टि करके मेरा उद्धार कर सकेगा ? अथवा कौन ऐसा सामर्थ्यशाली है जो यहाँ अपनी दृष्टिसे देख लेने मात्रसे कुटिल भौहोसे युक्त विकराल कालके पाशको अवहेलना कर सके ॥ १०३ ॥

सर्वेऽत्र सन्ति बहुधा विवशा जना ये
कष्टं भ्रमन्ति भवचक्रगताः स्वयं ते।
मां रक्षितुं कथमहो! प्रभवन्ति केऽन्धा
अन्धान् नयन्ति सुपथा परतत्त्वमद्धा ? ॥ १०४ ॥

भगवन्! यहाँ जितने लोग है, वे सबके सब अनेक प्रकारसे विवश है। वे स्वय ही ससारचक्रमे पडकर क्लेशपूर्वक चक्कर काट रहे हैं। अहो! वे मेरी रक्षा करनेमे कैसे समर्थ हो सकते है ? कौन ऐसे अन्धे है, जो दूसरे अन्धोको अच्छे मार्गसे परमतत्व ( चरम-लक्ष्य ) तक अनायास ले जा सकते हो ॥ १०४ ॥

क्रुद्धेन तुच्छजनुषाऽपि शरीरिणा च
निर्भर्त्सिता अदयमस्य निवारणञ्च।
ये शक्नुवन्ति न कदाचिदपीह कर्तुं
के तेऽत्र मां तु परिपातुमटन्तु मर्तुम् ॥ १०५ ॥

रोषसे भरे हुए तुच्छ देहधारीके द्वारा भी निर्दयतापूर्वक डाँट-फटकार पा लेनेपर जो यहाँ कदापि उसका प्रतीकार नही कर सकते, वे असमर्थ लोग मेरी रक्षा करनेकी क्या शक्ति रखते है ? वे मरनेके लिये भले ही घूमे, मेरी रक्षा नही कर सकते ॥ १०५ ॥

रूपं च नाम च धरन्ति च ये महान्त—
स्तेषामपीह मृड ! दृश्यत एव चान्तः ।
ते विश्वसृष्टिगतिसंहृतिहेतुभूता
युष्मादृशाः सुगतयस्त्वितरेऽसमर्थाः ॥ १०६ ॥

सुखदायी शिव ! जो बडे-बडे महापुरुष यहाँ नाम और रूप लिए बैठे है, उनका भी तो नाश होता देखा जाता है । अत ससारकी सृष्टि, पालन और सहारके कारणभूत आप जैसे ईश्वर ( ब्रह्मा, विष्णु और आप ) ही दूसरोको सहारा देनेवाले हो सकते है । अन्य सब लोग असमर्थ हैं ॥ १०६ ॥

उन्मील्य दृष्टियुगलं श्रितचन्द्रसूर्यं
तस्माद्विलोकय विभो ! विहिताऽहितं माम् ।
येन त्वदीयपदपद्मगतांऽशुगौरै-
र्ज्ञानामृतैः श्रितमुकुन्दपदाम्बुजः स्याम् ॥ १०७ ॥

अत प्रभो ! जिनमे चन्द्रमा और सूर्यका वास है, तैसे अपने दोनो नेत्रोको खोल कर आप मेरी ओर देखिये । क्योकि मैने सदा अपना अहित ही किया है । आपकी कृपादृष्टि पडनेसे आपके चरणारविन्दोकी किरणोके समान उज्ज्वल ज्ञानामृतमय मकरन्द पाकर मै मुकुन्दके चरणकमलोका आश्रय लेनेवाला बन जाऊँ ॥ १०७ ॥

नो चेद्धतोऽहमिह मोहमयैरनेकैः
क्रोधादिभिर्हृदयगैः श्रितपञ्चबाणः ।
अन्यैर्मनुष्यहतकैश्च विपत्स्वरूपैः
संधाय वाक्यधनुषा हृदि बिद्धबाणः ॥ १०८ ॥

नही तो मेरे हृदयमे विद्यमान जो मोहमय क्रोध आदि अनेक शत्रु हैं, उनके द्वारा मै मारा गया । क्योकि मैने श्यामकी जगह कामका आश्रय लिया है । अन्यान्य तुच्छ मनुष्य तो विपत्तिके मूर्तिमान् रूप ही तो हैं । उनसे सन्धि करके या मिलकर मैने क्या पाया है ? उनके कठोर वचनरूपी धनुषसे मेरे हृदयमे बाण मारा गया ॥ १०८ ॥

आपच्च नाथ ! विहिताऽहितदा सदैव
मामत्र भीतमुपसर्पति हा ! हितेव ।
काचित् कुलीनयुवतीव कटाक्षरामा
वश्यं विधाय रमणं किल रन्तुकामा ॥ १०९ ॥

नाथ ! जैसे अपने कटाक्षपातसे रमणीय लगनेवाली कोई कुलीन युवती अपने प्रियतमको वशमे करके उसके साथ रमण करना चाहती हो, उसी प्रकार सदा अहित प्रदान करनेवाली होकर भी सदा हितकी तरह बनी हुई विपत्ति यहाँ मुझ भयभीतके पास चली आ रही है । हाय ! यह कितने दु खकी बात है ! ॥ १०९ ॥

संभावितोऽपि विषयो बहुधाऽस्तमेति
तत्राऽन्य आपतति तत्र तदन्य एति ।
इत्थं प्रभो ! विहितकर्ममयैरनेकै-
र्विघ्नैर्विखण्डितमना विकलीकृतस्तैः ॥ ११० ॥

जिस विषयके सिद्ध होनेकी पूरी-पूरी सम्भावना रहती है, वह भी बहुधा विलुप्त हो जाता है, उसकी जगह दूसरी ही बात हो जाती है—बननेके स्थानमे वह कार्य बिगड़ जाता है । उसमे अन्यान्य विघ्न आते ही रहते हैं। प्रभो ! इस प्रकार अपने ही द्वारा किये गये अनेकानेक कर्ममय विघ्नोसे मेरा मन खण्डित ( हतोत्साह ) कर दिया गया है । मुझे विकल कर दिया गया है ॥ ११० ॥

यावद्भवामि भवदीयपदारविन्दं
ध्यात्वा स्थिरो गुणगृहीतमतिः प्रभोऽहम् ।
तावद्ध्यनेकविषयैर्हृदयान्तगैः स्वं
विद्धं चलं मृतमिवाऽनुभवेयमेवम् ॥ १११ ॥

प्रभो ! आपके चरणारविन्दोका ध्यान करके ज्यो ही स्थिर होता हूँ, ज्यो ही मेरी बुद्धिमे उत्तम गुणोका समावेश होता है, त्यो ही हृदयमे घुसे हुए अनेक विषयो द्वारा अपनेको विद्ध, चञ्चल तथा मरा हुआ-सा अनुभव करने लगता हूँ ॥ १११ ॥

नास्तीह शान्तिरघहन् ! विलसत्यशान्ति-
र्भ्रान्तिश्च भीषयति मां गलतीह कान्तिः ।
आपन्नबन्धुजनरक्षणतत्परोऽहं
ध्यायामि सूक्तिभिरहो ! न तु ताश्च मान्ति ॥ ११२ ॥

पापहारी प्रभो ! इस जगत्मे शान्ति नही है, यह सब ओर अशान्तिका ही विलास है। मेरी भ्रान्ति मुझे डरा रही है और कान्ति गलती जा रही है। मैं अपने आपत्तिग्रस्त बन्धु-

जनोके रक्षणमे तत्पर होता हुआ शास्त्रो एव सज्जनोकी सूक्तियो द्वारा आपका ध्यान करनेकी चेष्टा करता हूँ, किन्तु वे सूक्तियाँ मेरे हृदयमे समाती ही नही हैं ॥ ११२ ॥

गार्हस्थ्यजीवनमुमेश ! कथं सुखी स्या-
दित्थं विचिन्तनपरोऽस्मि दिवानिशं हा ! ।
शोचामि हन्त ! सततं न लभे च शर्म
चिन्ता भिनत्ति भगवन् ! मम मर्म मर्म ॥ ११३ ॥

भगवन् ! उमानाथ ! मेरा गार्हस्थ्य जीवन कैसे सुखी हो, इसी चिन्तामे मै रात-दिन डूबा रहता हूँ । हा ! हन्त सदा शोचमे पडा रहता हूँ, मुझे चैन नही मिलता । चिन्ता मेरे मर्म-मर्मको विदीर्ण किये देती है ॥ ११३ ॥

एवंविधे विषमये विषमे भवाब्धौ
मज्जामि नाथ ! नितरां परिपीड्यमानः ।
सर्वेऽत्र सन्ति भवगा भव ! मद्विधा हा !
कं यामि देव ! शरणं भवगोऽपि भूत्वा ॥ ११४ ॥

नाथ ! इस प्रकार विषमय विषम भवसागरमे मै डूब रहा हूँ, निरन्तर पोडा भोग रहा हूँ । हे भव ! इस ससारमे सब लोग मेरे ही जैसे दुखी है, अत देव ! मै किसकी शरणमे जाऊँ ? विशेषत भगवान् भवका शरणागत होकर मै दूसरेका आश्रय कैसे ले सकता हूँ ? ॥ ११४ ॥

अर्हन्ति पातुमपि केऽत्र च मां स्वतो वै
दन्दह्यमानवपुषः कुविचारवह्नौ ।
नित्यं विशुष्कतनुमानसवृत्तयो ये
दृश्यन्त एव मृतवन्त इव स्वयं ते ॥ ११५ ॥

यहाँ कौन लोग मेरी रक्षा करनेके भी योग्य है ? उनके तन-मन तो स्वत ही कुविचार-की आगमे बारंबार जलते रहते है । उनके शरीर और मनकी वृत्तिया सदा शुष्क रहती हैं । वे तो स्वय ही मरे हुए से दिखायी देते है ॥ ११५ ॥

स्वार्थ्यस्मि चार्थपरिपूरणलोलुपोऽस्मि
क्रन्दाम्यतः शरणदं भगवन्तमेत्य ।
जाने गतिर्मम विभो ! न च काचिदस्ति
गच्छेयमद्य मृड ! कुत्र च शान्तिरस्ति ॥ ११६ ॥

प्रभो ! मृड ! मै स्वार्थी हूँ, अर्थकी प्राप्तिके लिये लोलुप बना रहता हूँ, अत शरणदाता आप भगवान् शकरके पास आकर रोता हूँ। जानता हूँ, मेरा कोई सहारा नही है। मै कहाँ जाऊँ ? और कहाँ शान्ति है ? ॥ ११६ ॥

आः ! किं करोषि भगवन् ! पुरतोऽस्मि दासः
प्रेक्षस्व नेत्रयुगलेन निमीलितं किम् ? ।
आपन्नभक्तजनरक्षणतत्परस्त्वं
दासोऽस्मि तादृश इहाऽव्यय ! विस्मृतः किम् ? ॥ ११७ ॥

आ ! भगवन् ! आप क्या करते है ? मै आपका दास सामने खडा हूँ। दोनो आँखे खोल कर देखिये तो सही, क्यो नेत्र बन्द कर लिए हैं ? आप सदा शरणागत भक्तजनोके रक्षणमे तत्पर रहते हैं और मै यहाँ आपका वैसा ही दास हूँ। अविनाशी ईश्वर ! क्या आपने यह बात भुला दी है ? ॥ ११७ ॥

तापैस्तदेभिरतुलैर्विकलीकृतोऽस्मि
पापैश्च नाथ ! विहितैर्विफलीकृतोऽहम् ।
गच्छेयमीश ! शरणं चरणं विहाय
कुत्राऽत्र दास्यति च को ! विलपामि सोऽहम् ॥ ११८ ॥

नाथ ! इन अनुपम सतापोने मुझे विकल कर दिया है। अपने ही किये पापोने मुझे विफल-मनोरथ बना दिया है। ईश ! मै आपके चरण छोडकर कहाँ किसकी शरणमे जाऊ ? कौन मुझे शरण देगा ? इसीलिये आश्रयहीन-सा होकर विलाप करता हूँ ॥ ११८ ॥

आः ! किं न पश्यति भवान् विविधैः स्वदूतै-
राक्रम्य मृत्युरपि मां तु समेति नेतुम् ।
सर्वे सुराऽसुरजितोऽपि वशं गता हा !
तस्येश्वरस्य मृड ! कोऽस्मि तमत्र जेतुम् ॥ ११९ ॥

आह ! प्रभो ! क्या आप नही देखते हैं, कि मृत्यु भी मुझे ले जानेके लिये अपने बहुविध दूतो द्वारा आक्रमण कराकर निकट आ रही है। देवता और असुरोको भी जीत लेनेवाले बडे-बडे बलशाली भी उस सर्व-समर्थ मृत्युके वशमे जा चुके हैं। हाय ! मृड ! फिर मै उसे जीतनेवाला कौन हूँ—मै उसे कैसे जीत सकता हूँ ? ॥ ११९ ॥

तस्मादनेकभयहेतुभिरापतद्भि—
र्विक्लिद्यमानहृदयोऽपि भवन्तमेकम् ।
यत्संश्रयामि तत एव तमुग्ररूपं
मृत्युं तरेयमिति निश्चितमानसोऽहम् ॥ १२० ॥

इसलिए अनेक भयजनक हेतुओके आक्रमणसे मेरा हृदय व्याकुल हो गया है और मै एक मात्र आपकी शरण ले रहा हूँ। इसीसे मैं उग्र रूपवाली मृत्युके पार जा सकता हूँ। ऐसा मेरे मनमे अटल विश्वास है ॥ १२० ॥

प्रेक्षस्व नाथ ! गतिररित न मेऽत्र काचिद्
उन्मील्य दृष्टिमसमां मयि धेहि सा चित् ।
नो चेद्धतो वशगतो विवशस्तमेतं
ह्याराधयामि स भवानिति निश्चितोऽहम् ॥ १२१ ॥

नाथ! देखिए, यहाँ मेरे लिए दूसरी कोई गति नही है, आप अपनी अनुपम दृष्टि खोलकर उसे मुझपर डालिए। आपकी वह दृष्टि चिन्मयी है। यदि आपने मुझपर कृपा दृष्टि नही की तब तो मै मारा गया। अब मुझे विवश होकर उस कालके वशमे ही जाना पडेगा। फिर तो मै उसकी ही आराधना करने लग जाऊँगा, किन्तु उस समय भी मेरी दृष्टि यही रहेगी कि कालके रूपमे भी आप ही विराजमान है। यह मेरा निश्चित मत है॥ १२१ ॥

वाक्यं प्रभो ! शृणु ममैकमनर्हमेतच्
चोद्घाटयेऽहमुत किं तव कृत्यमद्य ! ।
भक्तान् रतान् पदगतान् किमुपेक्षसे त्वं
वाञ्छन्ति ये हृदयगां करुणां जडस्त्वम् ॥ १२२ ॥

प्रभो! मेरी एक बात सुनिये, किन्तु यह आपके योग्य नही है। आज मै आपकी करनीका क्या भडा फोड करूँ ? आप नामसे ही नही, कामसे भी स्थाणु ( ठूँठ या जड ) जान पडते हैं, अन्यथा अपने चरणोमे पडे हुए अनुरक्त भक्तोकी आप इतनी उपेक्षा कैसे करते ? वे बेचारे भक्त आपकी आन्तरिक करुणा ही तो पाना चाहते है ॥ १२२ ॥

सापत्रपाऽपि भगवन् ! नहि तेऽस्ति किञ्चित्
सत्यं दिगम्बर इहाऽसि महेश ! किंस्वित् ? ।
किं ब्रूमहे ( ऽ ) दृढगतौ पुरुषे ( ऽ ) जडे हा !
कं श्रावये मृदुगिरश्च शृणोति को वा ? ॥ १२३ ॥

इतना ही नही, भगवन्! आपको तनिक लाज या सकोच भी नही है। महेश! क्या आप यहाँ सचमुच दिगम्बर ( नगे ) ही बन गये है ? स्थिर या अस्थिर हाय! गतिवाले पुरुष अथवा अजड ( जड ) के पास हम क्या कहे ? अपनी कोमल या करुण वाणी किसको सुनावे ? या हमारी बात कौन सुनेगा ? ॥ १२३ ॥

गच्छानि घोरनरके तमसि प्रविष्टो
मूर्च्छानि तावदहमत्र न मेऽस्ति चिन्ता।
स्वान् पीडितानिह तु मूढधियोऽपि वीक्ष्य
न प्रेक्षते मृड! भवानिति मेऽस्ति चिन्ता ॥ १२४ ॥

मै घोर नरकमे जाऊँ या अन्धतमसमे पडकर मूर्च्छित हो जाऊँ, इसके लिए मुझे कोई चिन्ता नही है। मृड! मुझे चिन्ता और खेद तो केवल इस बातके लिए है कि आप मूढबुद्धि-वाले अपने भक्तोको पीडित देखकर भी नही देखते हैं ॥ १२४ ॥

एतन्मदीयवनरोदनमप्यवश्यं
सोऽसौ शृणोति विभुरस्ति यदीश! कोऽपि।
योऽन्तर्बहिर्निखिलतत्त्वपदार्थकेऽस्मिन्
स्याद् व्याप्त ईश्वरगतिः सघृणश्च सोऽपि ॥ १२५ ॥

ईश! यहाँ मेरा यह सारा कथन यद्यपि अरण्यरोदनमात्र हो गया है, तथापि यदि आपके अतिरिक्त भी कोई व्यापक ईश्वर है, तो वह इसे सुन ही लेगा। वह भी आप ही की भाँति सारे तत्त्व-पदार्थोके भीतर व्याप्त होगा। इस ईश्वरगति पुरुषके हृदयमे आपकी ही भाँति दया भी होगी ॥ १२५ ॥

स्थाणो! शृणुष्व जलताडनतुल्यकर्म
चैतन्न मे वितरतीह तदेव शर्म।
सान्निध्यमत्र भवतोऽपि न कामयेऽहं
प्राप्तोऽस्मि यत्पदरतिं सुदृढस्ततोऽहम् ॥ १२६ ॥

हे स्थाणो! (हे ठूँठ देवता!) सुनिये, मेरा यह कर्म पानी पर लाठी पीटनेके समान निरर्थक नही है, यही मुझे यहाँ कल्याण प्रदान कर रहा है। मै यहाँ आपके सान्निध्यकी भी कामना नही करता क्योकि मुझे आपके चरणोका अनुराग प्राप्त है और इसीसे मै पूर्णत सुस्थिर हूँ ॥ १२६ ॥

भुक्तिं स्वमुक्तिमपि भो! न विभावयेऽहं
ते श्रीस्त्रियौ च परमेश! न चार्थयेऽहम्।
लोकातिगाः सुमनसां बहुभूतयोऽपि
स्युर्भूतयो मम तु पादरतिर्दृढा हि ॥ १२७ ॥

परमेश्वर! मै अपने लिए भोग और मोक्ष भी नही चाहता। मै आपसे स्त्री और लक्ष्मीको भी याचना नही करता। देवताओके पास जो बहुत-सी अलौकिक विभूतियाँ है,

वे भस्मके समान हो जायँ। मेरे लिए तो आपके चरणोमे दृढ अनुराग है, वही पर्याप्त है ॥ १२७ ॥

**त्वं भो ! जगद्गुरुरिति प्रथितोऽसि तस्मात्**
**साक्षान्मयाऽपि गुरुरेव वृहतोऽस्यकस्मात् ।**
**किं त्यक्ष्यसे शिव ! शठोऽस्मि परं ततः किं**
**ज्ञेभ्यो ददासि किमहो ! गृणते बुधाः किम् ? ॥ १२८ ॥**

प्रभो ! यह बात प्रसिद्ध है कि आप सपूर्ण जगत्के गुरु है, इसीलिए मैने भी साक्षात् गुरुरूपमे ही आपका सहसा वरण किया है। शिव ! क्या आप मुझे त्याग देगे ? माना कि मै महान् शठ हूँ—मूर्ख हूँ, किन्तु इससे क्या हुआ ? जो ज्ञानी हैं, उन्हे आप क्या देगे और विद्वान् पुरुष आपसे माँगेगे भी क्या ? ॥ १२८ ॥

**हा ! हा ! मया कृतमनर्थमिदं यदर्थं**
**स स्थाणुरेवमभवत् स दृषत् सदर्थम् ।**
**आशा विनर्तयति मां द्रवते शिलेति**
**स्थाणुस्तु नोऽङ्कुरयतीह भृशं भृतोऽपि ॥ १२९ ॥**

हाय ! हाय ! मैने यहाँ जिनके लिए यह अनर्थ कर डाला, वे मेरे लिए स्थाणु ( ठूँठ ) ही हो गये। सच कहा जाय तो वे पत्थर ही है। फिर भी यह आशा मुझे नचा रही है कि किसी दिन वह पत्थर भी अवश्य पिघलेगा। परन्तु यह स्थाणु ( ठूठ ) तो अत्यन्त सीचने पर भी यहाँ अङ्कुरित नही हो रहा है ॥ १२९ ॥

**एवंविधेऽप्यहह ! तच्चरणारविन्दे**
**संलीनबुद्धिरभवं सरतिर्मुकुन्दे ।**
**कं संश्रयामि विलयामि किमालपामि**
**को वा ददाति शरणं न विभावयामि ॥ १३० ॥**

वे ऐसे है तो भी इनमे, इनके चरणारविन्दमे मेरी बुद्धि लीन है, क्योकि मुकुन्दमे अनुरक्त हो गया हूँ। ( उनकी कृपाके बिना मुकुन्द मिलेगे नही और ये कृपा करते नही है, ऐसी दशामे ) मै किसका आश्रय लूँ ? कितना विलाप करूँ ? किससे क्या कहूँ ? कौन मुझे शरण देगा ? यह सोच नही पाता हूँ ॥ १३० ॥

**शैवा बुधाः ! शृणुत विश्वमहामहिम्नो**
**भूम्नो मृडस्य परचिन्मयरूपधृष्णोः ।**
**दासोऽपि पीड्यत इहाऽशिवरूपमेनं**
**प्रेक्षध्वमद्य विनिवेदयितुं दयध्वम् ॥ १३१ ॥**

शिवोपासक विद्वानो ! सुनिये—विश्वमे जिनकी सबसे बडी महिमा है, उन भूमा-परम चिन्मय रूपधारी सुखदायी शिवका दास भी यहाँ पीडा भोग रहा है। देखिये इस शिव भक्तको—यह कैसा अशिव रूप हो गया है। आज मेरी दयनीय परिस्थिति भगवान् शिवसे निवेदित करनेके लिए आप लोग दया करे॥ १३१ ॥

**मत्क्रन्दनं यदि भवद्भिरयत्नतोऽपि**
**स्याच्चेच्छ्रुतं यदि भणिष्यथ योग्यमत्र ।**
**प्राप्स्यामि तत्पदमतः सुदृढं मनो मे**
**जातं गताधि च जयन्तु भवन्त इत्थम् ॥ १३२ ॥**

यदि मेरा यह करुण-क्रन्दन—आर्त-पुकार आप लोग बिना यत्नके ऊपरी मनसे सुन ले और इस विषयमे उचित बात भगवान् शङ्करसे कहे तो मै अवश्य उन आराध्यदेवका पद पा लूँगा। इस विचारमात्रसे मेरा मन सुस्थिर और निश्चिन्त हो गया है। इस कृपाके लिए आप लोगोकी जय हो ॥ १३२ ॥

**मातः शिवे ! शिवपरे ! मयि दुष्टचित्ते**
**प्रेक्षां क्षिपस्व विदुषां कुशलप्रवृत्ते ! ।**
**आर्तोऽस्मि हन्त ! विलपामि पदारविन्दे**
**न प्रेक्षते विभुरसौ नय मां तदन्ते ॥ १३३ ॥**

माँ शिवे ! तुम शिवपरायणा हो, विद्वानोके कुशलक्षेम-साधनमे सदा प्रवृत्त रहनेवाली हो। मुझ शिवपरायण दुष्टचित्त सेवक पर भी कृपादृष्टि डालो। हाय ! मै आर्त हूँ, भगवान् शिवके चरणारविन्दमे गिरकर विलाप करता हूँ, तो भी वे भगवान् मेरी ओर नही देखते है, तुम्ही मुझे उनके पास ले चलो ॥ १३३ ॥

**देवी शिवा भगवती भवती सती सा**
**व्याप्ता यदत्र सुखदा सुमता च सद्भिः ।**
**विश्वस्य दुःखहरणी भरणी श्रियश्च**
**नित्यं स्थिरा गतमदा शमदा दयाब्धिः ॥ १३४ ॥**

आप वही भगवती सती है, इस समय शिवा देवीके रूपमे विराजती हैं। आप इस भुवनमे सर्वत्र व्याप्त हैं, सबको सुख देनेवाली है, सत्पुरुषोसे सदा सम्मानित है। जगत्के दु खका हरण करनेवाली है, भक्तके घरमे विविध सम्पदाओको भर देनेवाली है। नित्य स्थिर हैं, मद—अभिमानसे शून्य है, सबको शान्ति देनेवाली तथा दयाके सागर है ॥ १३४ ॥

मातस्त्वया कृतदया बहवो भवस्था
देवाऽसुराश्च विलसन्ति सुखं भवस्थाः ।
विभ्राजसे सुहृदि भक्तिमतां गुणज्ञै—
राराधिता भवरताऽपि वशीकृता तैः ॥ १३५ ॥

माँ ! आपने जिनपर कृपा की है, वे बहुत-से भवस्थ ( ससारी ) मनुष्य, देवता और असुर भी सुखपूर्वक भव ( ससार या शिव ) मे स्थित रहते हुए सुशोभित होते है । आप भवरता ( शिवमे अनुरक्त अथवा ससारमे स्नेह रखनेवाली ) होकर भी भक्तिमान् पुरुषोके शुद्ध हृदयमे विराजमान होती हैं और गुणज्ञ जन आपकी आराधना करके आपको वशमे कर लेते है—आपके वात्सल्य-भाजन हो जाते हैं ॥ १३५ ॥

किं वर्णयामि महिमानमचिन्त्यशक्त्या
देव्या वशीकृतजगज्जनचित्तवृत्याः ।
तुच्छः शिवेऽस्फुटितवाक्यपदार्थशक्ति-
रेवं विरौमि पुरतस्त्वयि जातभक्तिः ॥ १३६ ॥

शिवे ! आपकी शक्ति अचिन्त्य है, मै आपकी महिमाका क्या वर्णन कर सकता हूँ । आपने समस्त जगत्के लोगोकी चित्तवृत्तिको अपने वशमे कर रक्खा है । मै तुच्छ हूँ, मेरी वाक्यशक्ति और पदार्थशक्ति स्फुटित नही है, तो भी आपमे भक्ति रखकर आपके सामने खडा हो इस प्रकार विलाप करता हूँ ॥ १३६ ॥

स्वोत्पीडकानहह ! दुष्टमतीन् यदा त्वं
धर्मच्युतान् मलिनमार्गमतान् विपश्येः ।
मातस्तदैव सकलान् धृतचण्डरूपा
संहृत्य भक्तहृदि राजसि भो भविष्ये ॥ १३७ ॥

मात ! आपने भक्तोका उत्पीडन करनेवाले दुष्टबुद्धि, धर्मभ्रष्ट तथा मलिन मार्गमे प्रवृत्त पापियोको जब आप देखती हैं, उसी समय प्रचण्ड रूप धारण करके उन सबका सहार कर देती हैं और भविष्यमे भक्तोके हृदय-मन्दिरमे भक्तवत्सला माताके रूपमे विराजमान होती है ॥ १३७ ॥

तस्यैव पत्न्यसि शिवे ! शिवतत्त्वगे त्वां
विज्ञापये किमिह भो ! कमलायताक्षि !
कृष्णस्य गोप्य इव लब्धपदाब्जसङ्गा
जाताऽसि मग्नहृदया सरसीव हंसी ॥ १३८ ॥

कमललोचने शिवे ! आप शिवकी ही धर्मपत्नी है, शिवतत्त्वमे आपका पूर्णत प्रवेश है। मै आपको क्या सूचित करूँ, ( आप मेरी सारी स्थिति स्वय जानती है )। जैसे गोपियोको भगवान् श्रीकृष्णके चरणारविन्दका सग प्राप्त था, उसी प्रकार आपको शिव चरणारविन्दोका सग प्राप्त है। जैसे हसी मानसरोवरमे मग्न रहती है, उसी प्रकार आपका हृदय भगवान् शङ्करके ही प्रेमसागरमे डूबा हुआ है ॥ १३८ ॥

**विज्ञापनं मम शिवे ! तव पादपद्मे**
**व्यर्थं ह्यभूद् यदि न पश्यसि यामि कुत्र ? ।**
**किं नीतिरस्ति शरणाऽऽगतरक्तभक्तान्**
**के वा त्यजन्ति भण देवि ! बुधा भवेऽत्र ? ॥ १३९ ॥**

शिवे ! आपके श्रीचरण-कमलमे मेरी जो विज्ञप्ति है—निवेदन है, वह यदि व्यर्थ हो गया, यदि आप मुझपर दृष्टिपात नही करती है, तो बताइए मै कहाँ जाऊँ। क्या यही नीति है ? देवि ! आप ही कहे, इस जगत्मे कौन-से विद्वान्-महापुरुष ऐसे हैं, जो शरणमे आये हुए अनुरक्त भक्तोको त्याग देते है ? ॥ १३९ ॥

**गङ्गे शिवे ! त्वमसि पापहरा त्रिभङ्गे**
**यच्छोभसे श्रितजनेऽत्र तदुत्तमाङ्गे ।**
**धन्याऽसि देवि ! कृतकिल्विषदुष्टचित्तं**
**मां प्रापयाऽत्र चरणे ( ऽ ) स्थिरबुद्धिवित्तम् ॥ १४० ॥**

कल्याणमयी मात गङ्गे ! तुम्हारी तरङ्गे आकाश, पृथ्वी तथा पाताल तीनो लोकोमे लहराती हैं। तुम पापहारिणी हो, इसी लिए लोग तुम्हारी शरण लेते है। देवि ! तुम इन भगवान् शिवके मस्तकपर विराजती हो, अत धन्य हो ! अपने ही किये पापोके कारण मेरा चित्त दूषित है, मेरा बुद्धिवैभव भी सुस्थिर नही है, अत तुम्ही कृपा करके मुझे भगवान् शिवके चरणोमे पहुँचा दो ॥ १४० ॥

**त्वं जाह्नवी किल भगीरथनामराज्ञा–**
**ऽऽनीता भुवं कुपथगैव तथापि भासि ।**
**जह्नोर्मखं कृतवती निजगर्भगं या**
**जाता तदैव नृपतेस्तनया गताधिः ॥ १४१ ॥**

देवि ! तुम जाह्नवी—जह्नुकी पुत्री हो। कहते है, राजा भगीरथ (तपस्यासे प्रसन्न करके ) तुम्हे पृथ्वीपर लाये। तथापि तुम कुपथगा ( भूमार्गगामिनी )के रूपमे ही सुशोभित होती हो। तुमने राजा जह्नुके यज्ञमण्डपको अपने गर्भमे आत्मसात् कर लिया था

उसी समय उन नरेशने तुम्हे अपनी पुत्री स्वीकार किया था, इस प्रकार जाह्नवी बननेके पश्चात् तुम राजाके रोष-जनित चिन्तासे मुक्त हुई ।। १४१ ।।

सौभाग्यशालिनि शिवे ! भवतीन्दुमौलौ
विभ्राजते कृतमदा शमदा महद्भ्यः ।
सोऽसौ भगीरथमहातपसा प्रसन्न-
स्त्वाऽधारयच्छिरसि तस्य महत्वमेतत् ।। १४२ ।।

सौभाग्यशालिनी शिवे ! गङ्गे ! तुम चन्द्रशेखर शिवके मस्तकपर प्रकाशित होती हो और बडे-बडे महात्माओको भी शान्ति प्रदान करती हो। सभवत इसीलिए तुम्हे कुछ अभिमान हो गया है। पर इसमे अभिमानकी क्या बात है ? राजा भगीरथने बड़ी भारी तपस्या की, उससे भगवान् शिव प्रसन्न हुए और उन्होने तुम्हे सिरपर धारण कर लिया। इससे तो उन प्रभुकी ही महत्तापर प्रकाश पडता है ।। १४२ ।।

संसार एव गुणवांस्त्वमपीह दिव्या
तद्राजसे गुणवती सुरदीर्घिकाऽऽख्या ।
मुख्यो गुणो जयति तत् स्वजलैः पवित्रै-
र्जीवान् पवित्रयसि दीव्यसि सच्चरित्रैः ।। १४३ ।।

माँ ! यह ससार ही त्रिगुणात्मक होनेसे गुणवान् है, तुम दिव्या होकर भी यहाँ आयी हो, अत सुरदीर्घिका नामसे सुशोभित हो। अतएव गुणवती भी हो ही। तुम्हारा मुख्य गुण यह सबके ऊपर विराजमान है कि तुम अपने पवित्र जलसे प्राणिमात्रको पवित्र करती हो और उत्तम चरित्रोसे प्रकाशित होती हो ।। १४३ ।।

तत्ते जलं ह्यघहरं बहुशो मयापि
न्यस्तं कपालफलके शुभदं मृतेऽपि ।
पूतोऽस्मि तेन सकृदेव यदङ्गसङ्गाद्
वत्सागराः समतरन् भसिते स्थितेऽपि ।। १४४ ।।

देवि ! तुम्हारा जल पापराशिको हर लेने वाला है। मृत पुरुषके शरीरपर भी वह पड जाय तो उसे शुभ गति देनेवाला होता है। तुम्हारे उस जलको मैने भी अनेको बार अपने मस्तकपर धारण किया है और उससे पवित्र हो गया हूँ। एक ही बार उस जलका सस्पर्श होनेसे सगरके सभी पुत्र, यद्यपि उनका भस्ममात्र ही शेष था, नरकसे तर गये ।। १४४ ।।

भो शन्तनोः प्रियतमे ! शृणु मद्वचस्त्वं
प्रेक्षां क्षिपस्व मयि भक्तिपरेऽनुगे च ।
त्वत्पुत्रभीष्मचरणाब्जसुगन्धलुब्धो
भृङ्गोऽस्म्यहं नय शिवं, कृपया च सिञ्च ॥ १४५ ॥

हे राजा शन्तनुकी प्रियतमा रानी ! मेरी बात सुनो, मुझपर दृष्टिपात करो। क्योंकि मै तुम्हारा भक्त तथा अनुगामी हूँ। तुम्हारे पुत्र भीष्मके चरणकमलके सौरभपर मुग्ध होनेवाला भ्रमर हूँ। मुझे शिवके पास पहुँचा दो और अपनी कृपाधारासे मुझको सीचो ॥ १४५ ॥

आः ! किं शृणोति भवती मम मुत्तरङ्गं
चैतद्वचस्त्वमपि नृत्यसि मुत्तरङ्गम् ।
न्यस्ता प्रियेण शिरसीति विचारयन्ती
मत्ता किमद्य भवगाऽपि मदं क्षरन्ती ? ॥ १४६ ॥

आ. क्या तुम हर्षकी हिलोरोसे युक्त मेरी यह बात सुन रही हो ? तुम भी तो मोदकी तरङ्गे प्रकट करती हुई नाच रही हो। 'मेरे प्रियतमने मुझे सिरपर धारण कर रक्खा है।' यही विचारकर तुम मतवाली हो गयी हो क्या ? तभी तो भवगा ( ससारगामिनी या शिवगामिनी ) होकर भी जलके रूपमे मद ( अभिमान )का ही क्षरण करती हो ॥ १५६ ॥

आह्लादयन्त्यनुपमैः किरणैः सदा त्वं
धन्याऽस्यहो ! शशिकले ! जगतः प्रिया त्वम्
अंशं क्षिपस्व मयि दुर्गतिकेऽपि देवि !
भूयासमत्र यदनेन परार्थसेवी ॥ १४७ ॥

देवि चन्द्रकले ! तुम अपनी अनुपम किरणोंसे सदा आह्लाद प्रदान करती रहती हो, इसीलिए सम्पूर्ण जगत्‌को प्रिय हो। अहो ! तुम धन्य हो। मै दुर्गतिमे पडा हूँ। मुझमे भी अपना अश डाल दो। जिससे मै भी यहाँ परमार्थस्वरूप शिवकी सेवाका अधिकारी हो जाऊँ ॥ १४७ ॥

तापं समस्तजगतां हरसीन्दुमौलौ
या त्वं स्थिताऽसि वरदे ! गिरिशप्रियाऽसि ।
त्वत्तो वरानभिलषन्ति तथावियोगाद्
आर्ताः प्रिया अभिसरन्ति च यामिनीषु ॥ १४८ ॥

वरदायिनी चन्द्रकले ! तुम जो चन्द्रशेखरके मस्तकपर विराज रही हो और समस्त जगत्का सन्ताप हर लेती हो, इससे भगवान् शिवको तुम बहुत ही प्रिय हो। तुमसे लोग अभीष्ट वर पाना चाहते है तथा जो वियोगसे पीडित हैं, वे लोग रात्रियोमे प्रियतमाओ का अभिसरण करते है ॥ १४८ ॥

**तापं तमश्च युगपज्जगतां हरन्ती**
**त्वं राजसेऽत्र भगवानत एव तां त्वाम् ।**
**बिभ्रज्जटासु ससुखं भ्रमति स्वयम्भूः**
**स्वांश्चोद्धरंस्त्वमपि पश्य ! सुदुःखितं माम् ॥ १४९ ॥**

देवि ! तुम जगत्के ताप और अन्धकारको एक साथ ही हर लेती हो। इसीलिए यहाँ तुम्हारी बडी शोभा होती है। यही कारण है कि स्वयम्भू भगवान् शिव तुम्हे अपनी जटाओमे धारण किये अपने भक्तोका उद्धार करते हुए सुखपूर्वक विचरते रहते हैं। तुम भी मेरी ओर देखो, मै बहुत दु खी हूँ ॥ १४९ ॥

**आह्लादिनी त्वमसि तस्य जगद्विधातु–**
**र्मद्वाक्यमार्तिविधुरं शृणु कान्तिदेवि !**
**चन्द्रोऽपि ते प्रियतमो मयि तेऽनुकम्पा**
**चास्तीह चेच्छशिकलेऽत्र विभौ निधेहि ॥ १५० ॥**

हे कान्ति देवि ! हे चन्द्रकले ! तुम उन जगत्स्रष्टा भगवान् शकरको आह्लाद प्रदान करनेवाली हो, अत पीडा-जनित चीख-पुकारसे युक्त मेरी बात सुनो। चन्द्रमा भी तुम्हारे प्रियतम हैं ( और मै भी शिवभक्त होनेसे तुम्हारा स्नेहभाजन हूँ ) यदि यहाँ मेरे प्रति तुम्हारी थोड़ी-सी भी अनुकम्पा हो तो उन भगवान् शिवके समीप मुझे पहुँचा दो—ले जाकर रख दो ॥ १५० ॥

**चन्द्रं श्रिता त्वमपि हा ! स शिवस्वरूपः**
**शीर्षं श्रितः शिवपरश्च सदाऽऽत्मरूपः ।**
**किं वा करिष्यत इमौ विवशौ, मदीये,**
**विज्ञापनीयविषये, पतितोऽस्म्यगाधे ॥ १५१ ॥**

हाय रे मेरा दुर्भाग्य ! तुम चन्द्रमाका आश्रय लेकर विराज रही हो, चन्द्रमा भगवान् शङ्करके मस्तकपर अधिष्ठित हो शिवस्वरूप हो गये हैं। वे शिवकी आराधनामे तत्पर रहनेवाले और सदा आत्मस्वरूप है। ये दोनो ( चन्द्रकला और चन्द्रमा ) अपने आश्रयोकी समाराधनामे मग्न है, अत मेरी क्या सहायता करेंगे ? मेरी दुरवस्थाका जो भगवान् शिवसे निवेदन करना हैं, इस विषयमे वे दोनो विवश हैं—असमर्थ है। ऐसी दशामे मै तो अगाध भयसागरमे गिर पड़ा ! मेरा कौन उद्धार करेगा ? ॥ १५१ ॥

नन्दिन् ! प्रभो ! त्वमसि तस्य जगद्विधातुः
प्रेष्ठस्तथोत्तमगुणैः स भवान् विभातु ।
शक्तिस्तवास्ति यदि तच्चरणे निधातुं
मत्क्रन्दनं त्वनुगृहाण दयां विधातुम् ॥ १५२ ॥

प्रभो नन्दिन् ! आप उन जगत्-स्रष्टा भगवान् शिवके सर्वाधिक प्रिय है। देव ! आप अपने उत्तम गुणोसे इसी तरह सुशोभित होते रहे। यदि आपमे मेरे करुण क्रन्दनको भगवान् शिवके चरणो तक पहुँचा देनेकी शक्ति हो तो ऐसी दया करनेके लिए मुझपर अवश्य अनुग्रह कीजिए ॥ १५२ ॥

पृष्ठे वहंस्त्वमपि भो ! सततं ततं तं
लोके परिभ्रमसि चक्रमिवाऽस्थिरो हा !
स्वं कर्म किं न कुरुषेऽद्य गतः श्रमं वा
मौनं श्रितोऽसि वृषराज ! किमर्थमद्धा ? ॥ १५३ ॥

हे वृषभराज ! सदा सर्वत्र व्याप्त रहनेवाले उन भगवान्को अपनी पीठपर ढोते हुए आप समस्त लोकोमे चक्रकी भाँति तीव्र गतिसे घूमते रहते हैं। आज आप अपना काम क्यो नही करते है ? उन्हे लेकर मेरी ओर क्यो नही आते है ? अथवा थक तो नही गये हैं ? किसलिए आज आप चुप बैठे है ? ॥ १५३ ॥

उत्थापय प्रभुवरं तममेयशक्तिं
संदर्शयेशपदपद्मगतां स्वभक्तिम् ।
ध्यानं श्रितोऽपि भगवान् यदि तं वहेथा
व्युत्थापितः स विहरेन्मुदमावहेथाः ॥ १५४ ॥

नन्दिकेश्वर ! उन अप्रमेय शक्तिशाली, प्रभुओके भी प्रभु भगवान् शिवको समाधिसे उठाइये। ईशके चरणारविन्दोमे जो आपकी भक्ति है, उसे दिखाइये—सफल कीजिये। यद्यपि भगवान् ध्यान लगाये बैठे है, तथापि यदि आप उन्हे पीठपर बिठाकर ले चलियेगा तो वे अवश्य समाधिसे जागकर आपके साथ विचरने लगेगे, फिर तो आपको परम आनन्दकी प्राप्ति होगी ॥ १५४ ॥

लाङ्गूलमात्रमपसार्य न च त्वयाऽहं
संप्रेक्षितः पशुरसीह यथार्थतस्त्वम् ।
होपेक्षितः पशुपतिं श्रितवांश्च सोऽहं
प्राप्स्यामि किं नु पशुतोऽद्यसृतिं हतोऽहम् ॥ १५५ ॥

हाय ! आपने तो अपनी पूँछमात्र हिलाकर भी मेरी ओर नही देखा। वास्तवमे आप निरे पशु ही निकले। जो पशुपति ( शिव )का आश्रय लेकर भी उपेक्षित ही रह गया, वही मै आज पशुमात्रसे कौन-सा मार्ग पा सकूँगा। हाय ! हाय ! मै तो मारा गया ॥ १५५ ॥

शेषोऽस्ति शेष इह योऽस्ति गले विशेषः
साक्षादशेषगुणपात्रमतः स शेषः।
तं प्रार्थयेऽहमपि किं न यदस्मि शेषः
शेषेषु शेषविषयेषु विशेषशेषः ॥ १५६ ॥

अब प्रार्थना सुनानेके लिये भगवान् शेष ही शेष रह गये हैं, जो भगवान्के नीलकण्ठमे विशेष भूषणके रूपमे शोभा पाते हैं। वे साक्षात् सपूर्ण गुणोके आधार है, अतएव अशेष-रूप कहे जाते है। मै उन्हीसे क्यो न प्रार्थना करूँ ? क्योकि मै भी उन अशेष भगवान्का शेष ( अशविशेष ) हूँ। शेष-विषयी भूत जो शेष वस्तुएँ है, उनमे मै विशेष शेष हूँ। (अत शेषकी अशेषस्वरूप शेषके प्रति प्रार्थना सर्वथा उचित है )॥ १५६ ॥

स्वामिन्! हतोऽस्मि विविधैर्विषयैर्विशेषैः
शेषैश्च कामहतकैर्मदमानमत्तैः।
दुष्टैः खलैश्च मनुजाऽपसदैर्मृतैर्हा!
नित्यं कदर्थितमनाः शरणं गतस्त्वाम् ॥ १५७ ॥

स्वामिन् ! मै नाना प्रकारके विशेष विषयोसे मारा गया हूँ। शेष जो अधमाधम काम ( अभिलाष ) हैं, उन्होने भी मुझे मृतक-सा कर दिया है। मद और मानसे मतवाले जो दुष्ट, खल एव अधम मनुष्य है, वे भी यद्यपि मरेके ही समान है, तथापि उन्होने मेरे मनको अत्यन्त पीडा दी है। ऐसी स्थितिमे असहाय एव निराश होकर आपकी शरणमे आया हूँ ( आप मेरा उद्धार कीजिए। ) ॥ १५७ ॥

जिह्वासहस्रयुगलं तव तद्ध्यमोघं
यत्तं स्तुवीत्यसकृदत्र भवं शुभं हि।
धन्यस्त्वमेव यदनेन यमेन दृष्टो
योऽधः करोषि तमपीह भवार्थगोऽसि ॥ १५८ ॥

शेष ! आपके दो सहस्र जिह्वाएँ हैं और वे भी अमोघ हैं—अपना काम करनेमे कभी चूकती नही हैं—असफल नही होती है। आपकी ये जिह्वाएँ निरन्तर शुभ स्वरूप भव ( ससार या शिव )की स्तुति करती रहती हैं। भगवन् ! आप ही धन है। क्योकि इन युगल सहस्र जिह्वाओद्वारा आप उस कालको भी नीचा दिखा देते हैं, जो यमराजसे दृष्ट या पोषित है। अतएव भवार्थ हैं—ससार या भगवान् शिवके अर्थसाधनमे तत्पर हैं ॥ १५८ ॥

शेषोऽप्यशेष इव भासि तदुच्चसत्त्वं
तत्त्वं सदैव नुवसीशगलं श्रितस्त्वम् ।
शेषोऽभवं ह्यहमपीह भवे धृतार्थः
शेषे रतोऽप्यसुगमः खलु तत्पदार्थः ॥ १५९ ॥

अनन्त ! आप शेष होकर भी अशेष ( सपूर्ण परमात्मा )के समान भासमान हो रहे हैं। क्योकि शिवके गलेमे रहकर आप उस उच्च सत्त्व एव परम तत्त्व परमेश्वरकी सदैव स्तुति करते है। इधर मै भी भव ( जगत् अथवा शिव )मे अपना सर्वार्थ समर्पण करमे शेष हो गया हूँ और उन शेषरूप शिवमे ही रत हूँ। तथापि तत्पदार्थ ( परमात्मा शिव ) मेरे लिए सुगम ( सुलभ ) नही हो रहे हैं ॥ १५९ ॥

एकाऽस्ति मेऽत्र रसनाऽपि च दुष्टकर्मा
जीवोऽस्मि तुच्छगतिकोऽत्र च मृत्युधर्मा ।
किं स्तौमि भो ! तमखिलेश्वरमादिदेवं
हाऽसंस्कृतः शठगतिश्च कुपात्रमेवम् ॥ १६० ॥

प्रभो ! ( आपकी सहस्र जिह्वाएँ हैं, किन्तु ) मेरी तो इस जगत्मे एक ही जीभ है। ( आप पुण्यकर्मा है, किन्तु ) मैं सदा दुष्ट कर्मोमे लगा रहता हूँ, आप उत्तम गतिवाले परमेश्वर है और मै ) तुच्छ गतिवाला साधारण जीव हूँ। ( आप अमरणधर्मा है और मै) मरणधर्मा हूँ। हाय ! ( इतना अन्तर रहते भी मै आपकी तरह ) उन अखिलेश्वर आदिदेव-की कैसे स्तुति कर सकता हूँ। इतना ही नही, मै सस्कार हीन हूँ, शठतुल्य गतिवाला हूँ और ऐसा कुपात्र हूँ, फिर मुझमे आपके स्तवनकी योग्यता या क्षमता कैसे हो सकती है ?॥ १६० ॥

सत्यं प्रभो ! विषमयोऽस्ति भवान् विषाब्धौ
यत्स्थापितोऽतिविषमेऽत्र गलेऽमलेन ।
तत्रापि शैत्यगुणतो भवता बताऽय-
माराधितो गलगतेन शिवश्छलेन ॥ १६१ ॥

प्रभो ! सचमुच ही आप विषमय है। क्योकि अमलात्मा भगवान् शिवने आपको विषके सागररूप अपने कण्ठमे स्थापित कर रक्खा है। आश्चर्य है कि वहाँ उनके गलेमे रहते हुए भी आपने अपने शीतलत्व गुणके बहानेसे उन भगवान्को आराधना द्वारा प्रसन्न कर लिया है ॥ १६१ ॥

स्वामिन् ! यदस्ति गुणगौरवतः सदार्हं
सद्वस्तु तत्त्वमथवाऽप्रकटं महार्घम् ।
तत्त्वं श्रयन् विलससीश ! भवंश्च तद्वत्
साक्षादशेष इव राजसि सत्यमेतत् ॥ १६२ ॥

स्वामिन्! इस विश्वमे जो वस्तु गुण-गौरवकी दृष्टिसे सदा अर्चनीय तथा सत् है, अथवा अप्रकट बहुमूल्य तत्त्व है, उस परतत्त्व शिवका आश्रय लेकर तथा स्वय भी वैसे ही होकर आप शेष होते हुए अशेषकी भाँति शोभा पा रहे हैं। वास्तवमे आपका यह अशेषभाव ही सत्य है॥ १६२॥

तस्माद्भवन्तमनवद्यमनन्तपारं
यत्संश्रितोऽस्मि परमेश्वरकण्ठहारम्।
स्फारं विनाश्य भवभारमनर्थकारं
स्वामिन्! नयस्व तदगारमनन्तसारम्॥ १६३॥

आप अनवद्य, अनन्त, अपार तथा परमेश्वर शिवके कण्ठहार है। आपका मैने जो आश्रय लिया है, इसके फलस्वरूप आप मेरे बढे चढे, अनर्थकारी भवभारका सहार करके उन प्रभुके अनन्त-सार अगार ( धाम ) मे मुझे पहुँचा दीजिए॥ १६३॥

स्वांशेन कालियतनुं धृतवन्तमित्थं
सम्भाव्य नाथ! यमुनाऽन्तरितं समर्थम्।
शीर्षे च कृष्णपदचिन्हविभूषितं त्वा
संलक्ष्य रौमि नय तत्र मृतोऽत्र हा! हा!!॥ १६४॥

नाथ! पहले आप ही अपने अशसे कालियनागका रूप धारण करके यमुनाजीके जलमे रहते थे, अत मेरे कष्ट-हरणमे आप पूर्ण समर्थ हैं—ऐसी सभावना करके तथा आपके मस्तकको श्रीकृष्णके चरणचिन्होसे विभूषित देखकर मै आपको पुकारता हूँ—रो-रोकर विनती करता हूँ कि मुझे भगवान् शिवके समीप ले चलिए। हाय-हाय! यहाँ तो मै मारा ही गया॥ १६४॥

आः! किं भवानपि न पश्यति तत्सहस्रं
नेत्रद्वयं च समभूदत एव तुच्छम्।
तद्गच्छ शेष! विवशोऽसि सरीसृपोऽसि
नोद्धारकोऽसि सविषोऽसि विषं श्रितोऽसि॥ १६५॥

आह! क्या आप भी मेरी ओर नही देखते हैं? फिर तो आपके दो हजार नेत्र अत्यन्त तुच्छ हैं—व्यर्थ है। अत जाइए, शेषजी महाराज! आप बेबस—असमर्थ हैं। आखिर सरीसृप ( साँप ) ही तो ठहरे। आप विषैले हैं, विषका आश्रय लिये बैठे हैं, अत मेरे उद्धारक नही हो सकते॥ १६५॥

स्वामिन् विशाख ! गतशाखममुं विकाण्डं
स्थाणुं श्रित समवलोकय दुःखभाण्डम् ।
चण्डैः प्रचण्डगतिभिर्यमचण्डमुण्डै—
र्मुण्डे प्रताड्य विनिभर्त्सितमुग्रतुण्डैः ॥ १६६ ॥

स्वामी विशाख ( स्कन्द ) ! मै शाखा और काण्डसे रहित स्थाणु ( ठूँठ काठ या शिव )का आश्रय लेकर दु खका भाण्ड ( या भाण्डार ) बन गया हूँ। आप मुझ दुखियाकी ओर देखिए, ये भयानक तीखी चोचसे युक्त और प्रचण्ड गतिसे चलनेवाले यमराजके चण्ड-मुण्ड ( दूत ) मेरे माथेपर ठोकर मार-मारकर मुझे डाँट-फटकार रहे है, ( कृपया बचाइए ) ॥ १६६ ॥

त्वं षण्मुखः शरवणे विभुवह्निजन्मा
जानासि दुःखमपि मेऽसि च शुद्धकर्मा ।
तस्माद् यतस्व सुगिरा जगतामधीशं
कर्तुं प्रसन्नमनसं गिरिशं गिरीशम् ॥ १६७ ॥

आपके छ मुख है ( अत आपकी वाणीमे छ गुनी शक्ति है )। सरकडेके वनमे सर्वव्यापी अग्नि देवसे आपका प्राकट्य हुआ है। आप मेरे दु खको भली-भाँति जानते है तथा स्वय शुद्धकर्मा ( सच्चरित्र या सदाचारी ) भी हैं। अत कैलाश पर्वतपर शयन करनेवाले जगदीश्वर गिरीश ( शिव ) को प्रसन्नचित्त बनानेके लिए आप अपनी वाणी द्वारा एक बार प्रयत्न तो कीजिए ॥ १६७ ॥

सेनापतित्वमसमं कृतवान् भवांश्च
सञ्चालिताः सुरगणाः परिपालिताश्च ।
तं तारकासुरमिभेन्द्रमिवाऽत्र सिंहः
शक्त्याऽवधीस्त्वमसि तत्प्रभुदेवसिंहः ॥ १६८ ॥

आपने ऐसे सेनापतित्वका कार्य सभाला है, जिसकी कही तुलना नही है। आपके द्वारा देवसमुदायका सचालन और परिपालन हुआ है। जैसे कोई सिह गजराजको मार डाले उसी प्रकार आपने शक्ति द्वारा उस प्रसिद्ध तारकासुरका वध किया था, इसलिए आप शक्ति-शाली देवताओमे सिहके तुल्य हैं ॥ १६८ ॥

जानासि तत्स्थितिगती असि यत्स्वगेहे
तस्मात् प्रभो ! प्रविश चान्तरुमेशदेहे ।
शान्तं समुद्रमिव नक्रगणैः प्रमथ्य
तं त्वं प्रबोधय, दयस्व गणैः सतथ्य ! ॥ १६९ ॥

प्रभो ! आप भगवान् शिवके अपने गृहमे रहनेवाले है, इसलिए उनकी स्थिति और गतिको अच्छी तरह जानते है, अत उमावल्लभके शरीरमे प्रवेश कीजिये—अन्त प्रेरणा देकर जगाइए अथवा हे सत्यवादी कार्तिकेयजी ! अपने गणोके साथ जाकर ठीक उसी तरह कोलाहलसे उन्हे जगानेकी दया कीजिए, जैसे मगरमच्छगण शान्त समुद्रको भी मथकर अशान्त कर देते हैं ॥ १६९ ॥

शक्तिर्बलं गतिमती कुशलत्वमेवं
वीर्यञ्च तत्र फलभाङ् नहि नाथ ! सत्यम् ।
योऽसौ विभुर्जगति खेलति पुत्रिकाभि—
र्जीवादिभिः शिशुरिवाऽत्र विचित्रिताभिः ॥ १७० ॥

नाथ ! उन परमेश्वरके प्रति किसी भी प्राणीकी शक्ति, बल, गति, मति, कुशलता तथा पराक्रमका प्रयोग भी कोई फल नही दे सकता, यह सर्वथा सत्य बात है। वे भगवान् जीव आदिके साथ उसी प्रकार खेलते है, जैसे नन्हा शिशु विचित्र पुतलियोके साथ खेला करता है ॥ १७० ॥

लीलाविनोदिनमनन्तमनन्तसारं
नागेन्द्रहारममलं करुणावतारम् ।
प्राप्तुं तमव्ययमहं भगवन्तमित्थं
क्रन्दामि भो ! कुरु कृपां गमयाऽत्र चारम् ॥ १७१ ॥

भगवन् ! जो लीलाओ द्वारा मनोविनोद करनेवाले, अनन्त, असीम सार-शक्तिसे सम्पन्न, भुजगेन्द्रहारसे विभूषित, निर्मल, करुणाके अवतार और अविनाशी है, उन भगवान् शिवको प्राप्त करनेके लिए मै इस प्रकार क्रन्दन कर रहा हूँ। हे स्वामी स्कन्द ! कृपा कीजिए और मुझे शीघ्र उनके पास पहुँचाइए ॥ १७१ ॥

हा ! किं शृणोति न भवानपि रोदनं मे
दुर्भाग्यमेव विलसत्यथवाऽत्र तन्मे ।
नृत्यन्तमद्य पुरतःस्थितबर्हिवृन्दं
संप्रेक्षते प्रभुरहो ! यदुपेक्षितोऽहम् ॥ १७२ ॥

हाय ! क्या आप भी मेरा रोदन नही सुनते हैं ? अथवा यहाँ मेरा दुर्भाग्य ही विलास कर रहा है। इस समय सामने स्थित होकर नृत्यमे लगे हुए मयूरोके समुदायकी ओर भगवान् स्कन्द देख रहे है। इसीलिए इन्होने मेरी उपेक्षा कर दी है ॥ १७२ ॥

कोऽन्यो पुनर्विलसतीह मदग्र एकः
स्थूलोदरो धनपतिः किमु यक्षराजः ? ।
प्रेष्योपमः स्वकरसंधृतरत्नकुम्भो
ज्ञातो मयाऽहहह ! नर्मसखः प्रभोः सः ॥ १७३ ॥

यहाँ दूसरे कौन एक महापुरुष मेरे सामने सुशोभित हो रहे हैं ? इनका पेट तोदके कारण स्थूल दिखायी देता है। क्या ये यक्षराज धनपति हैं ? इन्होने सेवककी भाँति अपने हाथमे रत्नमय कलश ले रक्खा है। अहा हा ! अब पहचाना, ये मेरे प्रभुके नर्म-सखा कुबेर ही है ॥ १७३ ॥

धन्योऽसि वैश्रवण ! यस्य सखा त्वमेवं
देदीप्यसे पदयुगेऽत्र विभोः सुखेन ।
नार्हः प्रभुः किमिह शम्भुपदाब्जसेवा—
हेवाकिनां सुकृतिनामपि वीक्षितुं नः ॥ १७४ ॥

विश्रवाके पुत्र कुबेर ! आप धन्य है। प्रभुके सखा होकर आप इस प्रकार भगवान्‌के युगल चरणोमे सदा सुखसे सुशोभित होते रहते हैं। हम भी यहाँ भगवान् शिवके चरणारविन्दोकी सेवाके लिये सदा उत्सुक रहनेवाले पुण्यात्मा जन है, क्या वे प्रभु इस प्रकार हमारी दृष्टिके पथमे आने योग्य नही है ? ( अवश्य है, आप उन्हे दर्शन देनेके लिए प्रेरित कीजिए ) ॥ १७४ ॥

सत्यं तदेव यदि नो भगवन्तमीशं
सृष्टिस्थितिप्रलयकारिणमिद्धशक्तिम् ।
किं सेवसे ? कथमिहासि सखा त्वमित्थं
तस्य प्रभो स्वचरणाऽश्रितसत्कथस्य ? ॥ १७५ ॥

यही सत्य है, यदि ऐसा नही है तो आप सृष्टि, पालन और सहार करनेवाले, समृद्ध शक्तिशाली भगवान् शिवकी सेवा क्यो करते हैं ? अपने चरणाश्रित भक्तोकी सत्कथा जिनकी जिह्वापर सदा रहती है, उन प्रभुके ऐसे प्रिय सखा आप यहाँ कैसे हुए ? ॥ १७५॥

सोऽयं विभुर्विलसतीदृशनिर्विकल्पे
सच्चिन्मये परहिते सुखदे समाधौ ।
तस्मान्न पारयति भक्तवरान् गुणैः स्वै—
राप्यायितुं विवशतां गत आत्मयोगात् ॥ १७६ ॥

ये भगवान् ऐसी सच्चिन्मयी परहितसाधिका, सुखदायिनी निर्विकल्प समाधिमे स्थित हो, अत्यन्त शोभा पा रहे है। अत अपने योगसे विवशताको प्राप्त होकर ये अपने गुणो द्वारा श्रेष्ठ भक्तोको आप्यायित ( परितृप्त ) करनेमे समर्थ नही हो रहे है ॥ १७६ ॥

तत्तस्य भक्तशमदस्य परस्य शम्भो—
नित्यं प्रियस्त्वमसि नर्मसखः सुहृच्च ।
किं नेक्षसेऽधिपवरस्य तदस्य कर्म
यच्छिष्यते बहुविधं विततं जगत्सु ॥ १७७ ॥

इसलिए आप मेरी सहायता कीजिए। क्योकि भक्तोको शान्ति प्रदान करनेवाले उन परमेश्वर शिवके आप नित्य प्रिय, नर्मसखा और सुहृद् हैं। क्या आप अपने श्रेष्ठ प्रभुके उस कार्यको नही देख रहे है, जो जगत्मे बहुविध रूपसे फैला हुआ बाकी पडा है ॥ १७७ ॥

सक्ताः प्रभोः पदयुगेषु शुभप्रदेषु
भक्ता इमे हितपरा विलसन्ति कृत्ये ।
यावन्न पश्यति विभुर्विरतः समाधे—
स्तावत्त्वमेव कुरु तस्य सुकर्म सर्वम् ॥ १७८ ॥

भगवान्के कल्याणप्रद युगल चरणोमे आसक्त हुए ये परहित-परायण भक्तजन कर्तव्य-पालनमे लगे हुए बडी शोभा पा रहे है। भगवान् समाधिसे विरक्त होकर जबतक इनकी ओर नही देखते हैं, तबतक आप उनके समस्त सत्कर्मोका सम्पादन कीजिये ॥ १७८ ॥

सन्मन्त्र ! योग्यसचिवोऽसि विभोस्तदस्य
स्याद्धृद्यमद्य च तवाऽपि तदर्हकृत्यात् ।
तद्रावणाग्रभव ! मामपि पश्य तूर्णं
पूर्णं कुरुष्व मम हृद्गतकाममेतम् ॥ १७९ ॥

उत्तम मन्त्र देनेवाले कुबेर ! आप उन भगवान्के योग्य सचिव है। अत उनके योग्य कार्य करनेसे आज आपका भी प्रिय एव हित होगा। अत रावणके बडे भाई ! आप मेरी ओर भी शीघ्र दृष्टिपात कीजिए। और मेरे इस हृद्गत मनोरथको पूर्ण कर दीजिये ॥ १७९ ॥

शश्वत्-प्रियस्त्वमसि तस्य विभोः कुवेर !
त्वं ह्येक एव बहुधा कृतशम्भुसेवः ।
त्वामेव भूय उरुगायपदं श्रयन्तं
चोपासते जगति ते धृतनामरूपाः ॥ १८० ॥

कुबेर ! आप उन भगवान् शिवके सदैव प्रिय है। आपने अकेले ही शम्भुकी बहुविध सेवाएँ की है। आप बहुतोके द्वारा गाये जानेवाले भगवच्चरणोके आश्रित है। अत ससारमे आपके नामरूप धारण करनेवाले बहुत-से धनकुबेर आपकी ही बारम्बार उपासना करते हैं॥ १८०॥

सिद्धिं ददासि भगवन्नुभयार्थरूपां
त्वं तत्प्रियेभ्य इह भुक्तिपदाऽभिधेयाम्।
अन्याश्च मुक्तिपदभाजमपीह देव !
ते हस्त एव भवतो लसतः सदैव॥ १८१॥

भगवन् ! आप भगवान् शिवके प्रिय भक्तोको यहाँ दोनो प्रकारकी सिद्धि प्रदान करते है। उनमेसे एकका नाम है भुक्ति और दूसरीको मुक्ति कहते है। देव ! ये दोनो ही सिद्धियाँ आपके हाथमे ही सदा सुशोभित होती है॥ १८१॥

ऐश्वर्यसन्निधिरसीश्वर ! दातुमेतत्
कष्टं न ते निधिपतिस्त्वमसीह यस्मात्।
मुक्तिं प्रदातुमपि तत्पुरुषस्य सङ्गा—
च्छक्नोसि भो ! विदिततत्त्व उपायदानात्॥ १८२॥

ईश्वर ! आप सकल ऐश्वर्योंके उत्तम निधान हैं। यह ऐश्वर्य प्रदान करना आपके लिए कष्टसाध्य नही है, क्योकि आप निधिपति हैं। आप तत्पुरुष शिवके सङ्गसे मुक्ति भी देनेमे समर्थ है। भुक्ति-मुक्तिके उपाय देनेके कारण आपका तत्त्व सबको विदित है॥ १८२॥

त्वं यादृशः शिवपरोऽसि पदाऽनुरक्त—
स्तत्तादृशोऽहमपि चाऽस्मि शिवस्य भक्तः।
किं नेक्षसेऽमुमथ भो ! सहधर्मिणं मां
तत्क्रन्दनादुपरतं कुरु संयतस्व॥ १८३॥

आप जैसे शिवपरायण और उनके चरणानुरागी भक्त है, वैसा ही शिवभक्त मै भी हूँ। हे देव ! मै आपका सहधर्मी हूँ। आप मेरी ओर क्यो नही देखते हैं। अत मुझे करुण-क्रन्दनसे विरत कीजिये और मेरे मनोरथको पूर्ण करनेके लिए भली-भाँति प्रयत्न कीजिये॥ १८३॥

यक्षाऽधिपस्त्वमसि देवधनादिकानां
गोप्ता परन्तु तव तत्र न किञ्चिदस्ति।
तल्लुण्ठितं सकलमेव सुखं यदासीत्
सापत्न्यभावमनुसृत्य तवानुजेन॥ १८४॥

आप यक्षराज हैं। देवताओके धन आदिके रक्षक हैं। परन्तु अब वहाँ आपका कुछ भी नही है। जो था, वह सारा ही सुख आपके छोटे भाई रावणने शत्रुता मनमे लेकर लूट लिया ॥ १८४ ॥

ज्ञातं मयैतदखिलं धनवैभवादि
यच्चास्ति नास्ति तव तत्र तथाऽधिकारः।
नाम्ना कुबेर इति विश्रुतमात्रकर्मा
त्वं राजसेऽलमलमत्र गतोऽहमग्रे ॥ १८५ ॥

अब मैने जान लिया। वहाँ जो सारा धन वैभव आदि है, उसमे आपका कोई अधिकार नही रहा। आप नामके ही कुबेर हैं। आपका कर्ममात्र विख्यात है। आप अपने उस कर्मसे ही शोभा पा रहे हैं। अत बस कीजिये बस। आपसे कुछ होनेवाला नही है। अत मैं आगे चला ॥ १८५ ॥

हा ! किं करोमि प्रमथा· परितो भवन्त—
स्तं संश्रिताः स्थ भवतामपि नास्ति चान्तः।
यूयं दयध्वमिह तत्र विभोः समक्षं
मां प्रापयध्वमभवश्च विबोधयध्वम् ॥ १८६ ॥

हाय, हाय ! मैं क्या करूँ ! हे प्रमथगणो ! आपलोग चारो ओरसे भगवान् शङ्करकी सेवामे उपस्थित हैं। आपलोगोका भी अन्त नही है। आप दया करे और मुझे भगवान्के सामने उनके निकट पहुँचा दे। साथ ही उन अजन्मा प्रभुको समाधिसे जगा दे ॥ १८६ ॥

'भूताः स्म' यूयमिह शोचथ किं ? वयं के
स्थाणुं प्रबोधयितुमित्यपि नैव शोच्यम्।
स्वामी चराचरमयो विभुरव्ययोऽसौ
हृष्टो भवद्भिरत एव तदेव कार्यम् ॥ १८७ ॥

भूतगणो ! तुमलोग यहाँ क्या सोच रहे हो ! 'हमलोग कौन हैं ? स्थाणु ( ठूँठ या शिव ) को जगाने वाले' ऐसी बात भी कभी मनमे नही लानी चाहिए। वे भगवान् चराचरमय अविनाशी शिव, तुम्हारे स्वामी हैं। तुम लोगोसे सदा प्रसन्न ही रहते हैं। अत उनकी प्रसन्नताके लिए ही वह कार्य करो ॥ १८७ ॥

तस्मै प्रदर्शयत दिव्यगुणान् गतीश्च
योगश्च दिव्यममलं सुकला मतीश्च।
यैरालबालसदृशैर्जलरूपयत्नैः
स्थाणुः प्ररोक्ष्यति दयाऽङ्कुरमत्र सिक्तः ॥ १८८ ॥

तुम उन्हे अपने दिव्य गुण और गति दिखाओ। दिव्य निर्मल योग, उत्तम कला और मतिका प्रदर्शन करो। वे तुम्हारे गुण आलवाल ( थाला ) का काम करेगे और तुम्हारे यत्नरूप जलसे सीचा जाकर वह स्थाणु भी अवश्य ही दयामय अकुर प्रकट करेगा ॥ १८८ ॥

श्रुत्वैव मर्त्यरवमीदृशमार्तिजातं
किं भो ! पलायथ भयेन इहाऽस्मि सोऽहम् ।
भूतेभ्य एव भयमावहतीति लोको
मिथ्याऽभवद् यदिह बिभ्यति मर्त्यतस्ते ॥ १८९ ॥

अरे ! मुझ मरणधर्मा मनुष्यकी यह आर्तपुकार सुनते ही तुमलोग भयसे भाग क्यो चले। मै तो यहाँ निर्भय खडा हूँ। लोग भूतोसे ही डरते है, यह बात आज मिथ्या प्रमाणित हो गयी। क्योकि वे भूतगण मनुष्यसे ही डर रहे है ॥ १८९ ॥

त्वं वीरभद्र भगवन् ! प्रमथाऽऽदिकानां
श्रेष्ठस्तथा गणपतिश्च महामहिम्नाम् ।
भूतांस्तथा प्रमथकाननुगृह्य सर्वान्
नृत्य स्वनाथमभितोऽनुगृहाण भक्तान् ॥ १९० ॥

भगवन् वीरभद्र ! आप प्रमथादिगणोमे श्रेष्ठ हैं और उन महामहिम गणोंके गणपति भी हैं। आप समान भूतो और प्रमथोको साथ लेकर अपने स्वामीके चारो ओर नृत्य कीजिये और इस नृत्य द्वारा भक्तजनोको अनुगृहीत कीजिए ॥ १९० ॥

नृत्येद्भवान् यदि कला सकलाः प्रगृह्य
हृष्टो भविष्यति कृतज्ञविभुर्गुणेन ।
उन्मील्य नेत्रयुगलं स्वसमाधितोऽपि
प्रेक्षिष्यते परिकरान् सफला भवेम ॥ १९१ ॥

यदि आप समस्त कलाओको लेकर नृत्य करेगे तो कृतज्ञ भगवान् शिव आपके इस गुणसे प्रसन्न होगे। अपनी समाधिसे भी विरत हो, दोनो नेत्र खोलकर परिकरोको देखेंगे। फिर तो हम सफल मनोरथ हो जायेगे ॥ १९१ ॥

ते पञ्चतत्त्वपरिपूरितदेहमात्रा
विज्ञापिता इह परं विफला अभूवन् ।
तत्त्वैकमात्रगतिवायुविशिष्टरूपां—
स्तान् प्रेरयंस्त्वमसि तादृश एव हा धिक् ? ॥ १९२ ॥

वे भूतगण पचतत्त्वसे परिपूरित देहमात्र धारण करनेवाले है। उनसे जब मैने अपनी प्रार्थना निवेदित की तो वे सबके सब इसे सिद्ध करनेमे विफल हो गये। वीरभद्र ! एकमात्र तत्त्वगति वायुसे विशिष्ट रूपवाले उन भूतोको प्रेरित करते हुए तुम भी वैसे ही हो गये— वायुरूपमे परिणत हो, अदृश्य होकर चल दिये। हाय ! धिक्कार है ॥ १९२ ॥

त्वं स्फोट एव डमरो ! श्रुतिनादपूर्णः
पूर्णोऽप्यपूर्णहृदयो दृढघोषघूर्णः ।
त्वां ताण्डवेऽपि च हरो न जहाति तस्मा—
च्छब्दायसेऽलिरिव तस्य विभोः कराब्जात् ॥ १९३ ॥

हे डमरू ! तुम श्रुतिनादसे परिपूर्ण स्फोटरूप ही हो। पूर्ण होते हुए भी अपूर्ण हृदय होकर दृढघोषसे घूर्णित होते हो। भगवान् शङ्कर तुम्हे ताण्डव नृत्यके समय भी नही छोडते है। तुम उन भगवान्के कर-कमलमे स्थित रहकर भ्रमरकी भाँति शब्द करते हो ॥ १९३ ॥

सत्साधनं त्वमसि भो ! जगति प्रधानं
तत्संस्कृते स मुनि-पाणिनये निदानम् ।
यस्माद् ददाऽवहह ! व्याकरणात्मकानि
सूत्राणि तानि भगवानइउण्मयानि ॥ १९४॥

हे डमरू ! तुम इस जगत्मे प्रधान एव उत्तम साधन हो। इसीलिए भगवान् शङ्करने तुमसे प्रकट करके पाणिनी मुनिको सस्कृत भाषा विषयक व्याकरणात्मक 'अइउण्' इत्यादि सूत्र दिये। यह कितने हर्षकी बात है अत तुम पाणिनीय व्याकरणके आदिकारण हो ॥१९४॥

वाद्यस्व तत्स्वयमुमेशविभोः प्रियस्त्वं
तूर्णं क्वणत्स्वरमिहाऽद्य रवो विशेत् खम् ।
श्रुत्वा प्रभुः स्वदहरेऽत्र परे स्थितोऽपि
पश्येत् समाधिविरतः करुणं भवेच्छम् ॥ १९५ ॥

अत. तुम स्वय बज उठो। क्योकि भगवान् उमेशको तुम बहुत ही प्रिय हो। तुम्हारा स्वर गूँज उठे और यहाँ गम्भीर घोष आकाशमे फैल जाय। भगवान् शिव अपने परम हृदयाकाश—समाधिमे स्थित रहकर भी उस डमरूनादको सुने और समाधिसे विरत हो अपनी करुणाभरी दृष्टिसे हम सबकी ओर देखे। इससे कल्याण होगा ॥ १९५ ॥

तच्छक्तिरेव विलसत्यथवाऽत्र तन्मे
ह्याक्रन्दितेन रुदितेन भवेन्न किञ्चित् ।
ईक्षा प्रभोः सुखमयी जयतीह दिव्या
कर्तुं ह्यकर्तुमपि या सफला सदैवम् ॥ १९६ ॥

अथवा उन भगवान् शिवकी शक्ति ही यहाँ विलास कर रही है। अत मेरे रोने-चिल्लानेसे यहाँ कुछ होनेवाला नही है। भगवान्‌की आनन्दमयी दिव्य दृष्टि ही सबके ऊपर विराजमान है। जो करने न करने और अन्यथा करनेमे सदैव सफल है ॥ १९६ ॥

भो भो त्रिशूल ! दृढशक्तिसमन्वितं त्वं
त्रैलोक्यनाशनविधौ च भृशं समर्थम् ।
तस्माद् दयस्व लघु तान् कफवातपित्ताञ्—
छूलञ्च नाशय कुरुष्व सुनाम सार्थम् ॥ १९७ ॥

अरे ओ त्रिशूल ! तुम्हारी शक्ति अत्यन्त सुदृढ है। तुम तीनो लोकोका नाश करने की क्रियामे अत्यन्त समर्थ हो। इसलिए शीघ्र दया करो। मेरे शरीरमे जो बात, पित्त और कफजनित रोग हैं, उनको तथा शूलको भी नष्ट कर दो और इसप्रकार अपना नाम सार्थक कर लो ॥ १९७ ॥

निष्कास्य शक्तिमतुलां त्रिभिरङ्गकैस्तैः
स्याच्चेन्निखातमतिशक्ति भवत् तदत्र ।
शीघ्रं भविष्यति विभो ! भुवनं समस्तं
ह्यस्तं तदैव भगवांश्च निरीक्षतेऽत्र ॥ १९८ ॥

प्रभो त्रिशूल ! यदि आप अपनी अनुपम शक्ति प्रकट करके अपने तीन अङ्गो (शूलो) द्वारा गड जॉय तो सारा विश्व शीघ्र ही अस्त हो जायगा। क्योकि आपकी शक्ति असीम हैं। जान पडता है कि ऐसा होनेपर ही भगवान् शिव इधर दृष्टिपात करेगे ॥ १९८ ॥

किं वा करोम्यहह ! हृद्गतकामनायाः
सम्पूरणार्थमसमां विभुदृष्टिमाप्तुम् ।
आक्रन्दनं कृतवतोऽपि मम श्रमोऽत्र
दैवादभूद् विफल एव करोमि भूयः ॥ १९९ ॥

हाय हाय ! क्या करूँ ! अपनी हार्दिक कामनाकी पूर्तिके निमित्त अनुपम भगवद्दृष्टि प्राप्त करनेके लिए मैने सब ओर बडा क्रन्दन किया। तो भी दैववश मेरा यह श्रम निष्फल ही हुआ। अब पुन वही करूँगा ॥ १९९ ॥

भो भो पिनाक ! विधृताऽखिलशक्तिरीश—
स्तस्य प्रभोर्धनुरसि त्वमतः स शम्भुः ।
त्वां वै बिभर्त्यसमरूपधरो यदाऽसौ
नूनं जयेच्छरगणान् सृजते त्वदत्र ॥ २०० ॥

अरे ओ पिनाक ! तुम उन भगवान्‌के धनुष हो, जिन्होने पूर्ण शक्ति धारण कर रखी है। इसीलिए वे अनुपमरूपधारी प्रभु जब तुम्हे हाथमे लेते हैं, तो निश्चय ही उनकी विजय होती है। वे तुमसे बाण-समूहोकी सृष्टि ( वर्षा ) किया करते है ॥ २०० ॥

सैका स्मृतिः स्मृतिपथश्च ममाऽऽगताऽद्य
या संव्यनक्त्यखिलविश्वपतेर्महत्त्वम् ।
कृष्णाय धर्मगुरवे स्वसुतानिमित्तं
बाणो यदैव विमुमोच शरानमोघान् ॥ २०१ ॥

बाणास्तदस्य वरवारणवेगतुल्या
गत्वा मृगेन्द्रमिव तं भगवन्तमारात् ।
विद्ध्वाऽप्यहो ! युधि पराभवमापुरस्माद्
दृष्ट्वा यदैव कुपितो भगवान् भवोऽभूत् ॥ २०२ ॥

आज एक स्मरणीय घटना मेरे स्मृतिपथपर उतर आयी है, जो सम्पूर्ण जगत्‌के स्वामी भगवान् शिवकी महत्तापर प्रकाश डालती है। जिस समय अपनी पुत्रीको निमित्त बनाकर बाणासुरने धर्मगुरु श्रीकृष्णपर अपने अमोघ बाण छोड़े थे, उस समय श्रेष्ठ गजराजके समान वेगशाली उसके वे बाण भगवान् श्रीकृष्णके पास उसी प्रकार गये जैसे हाथियोका समुदाय मृगराज सिहपर आक्रमण करता है। युद्धस्थलमे वे बाण भगवान्‌को बीधकर भी पराभवको प्राप्त हुए। यह देखते ही भगवान् भव (शिव) कुपित हो उठे ॥ २०१–२०२ ॥

त्वां वीक्ष्य येन निजभक्तविपोषकेन
तेनाऽपि विश्वपतिना रणकामुकेन ।
संयोजितः शर उपायविदा शिवाऽऽख्यो
नारायणेन परमेष यदैव रुद्धः ॥ २०३ ॥

फिर अपने भक्तोका पोषण करनेवाले विश्वनाथ शिवने युद्धकी इच्छा मनमे लेकर तुमपर दृष्टिपात किया। वे उपायके ज्ञाता तो हैं ही, उन्होने शिव-बाणका सन्धान किया, परन्तु यह नारायणास्त्रसे तत्काल अवरुद्ध हो गया ॥ २०३ ॥

दृष्ट्वा तदेतदखिलं निजभक्तभक्तं
तं चाशुतोषमपि विश्वपतिं स्वहृत्स्थम् ।
गान्धर्वमस्त्रमुपयुज्य विभुः स कृष्णः
संजृम्भमाणमकरोच्च तदा हतस्त्वम् ॥ २०४ ॥

ये सब देखकर तथा यह विचार करके कि आशुतोष जगदीश्वर शिव अपने भक्तोके भक्त है और वे मेरे हृदयमे भी विराजमान है, भगवान् श्रीकृष्णने गान्धर्वास्त्रका प्रयोग करके उन महेश्वरको सजृम्भमाण कर दिया—वे उस बाणके प्रभावसे खडे-खडे जँभाई लेने लगे। पिनाक ! उस समय तुम हतप्रतिभ हो गये थे ॥ २०४ ॥

त्वां व्याहरामि किमिहाऽद्य विभुं तमेनं
तूर्णं प्रबोधयितुमेवमनीशमत्र ।
मत्काव्यनायकमृते तदनुग्रहं च
मन्ये न चाऽस्ति गतभीश्च विबोधयेद् यः ॥ २०५ ॥

तुम तो यहाँ उन भगवान्को समाधिसे तुरन्त जगानेमे असमर्थ हो गये। फिर मै तुमसे क्या कहूँ ? जान पडता है मेरे काव्यके नायक भगवान् श्रीकृष्ण और उनके अनुग्रहको छोडकर दूसरा कोई ऐसा नही है, जो निर्भय होकर उन्हे जगा सके ॥ २०५ ॥

त्वां ज्ञापयाम्यहमुपायममोघमेकं
कर्तुं यतस्व तदिहाऽव्यय ईश एषः ।
जागर्ति येन गुणविह्वलितो ममार्त्या
त्वं निर्गुणोऽपि गुणवान् भव भो ! मदुक्त्या ॥ २०६ ॥

पिनाक ! मै तुम्हे एक अमोघ उपाय बता रहा हूँ। तुम उसे ही यहाँ काममे लानेका प्रयास करो। ये अविनाशी ईश्वर मेरी पीडासे प्रभावित एव गुणसे विह्वल होकर जिससे जाग जाँय वह करो—तुम निर्गुण होकर भी आज मेरे कहनेसे गुणवान् बन जाओ ॥२०६॥

पश्चाच्छृणु श्रितपरात्मगतिं ह्यतर्क्यं
तं निर्गुणं परगुणैः सगुणीभवन्तम् ।
ध्यात्वा त्वमस्य करपङ्कजमार्तिहारि
श्रित्वा शरान् समुपयुज्य भव प्रहारी ॥ २०७ ॥

इसके बाद क्या करना है, सुनो ! जिन्होने परमार्थगतिका आश्रय लिया है, जो तर्ककी पहुँचसे परे हैं, निर्गुण होकर भी पराये गुणोसे सगुण हो जाते हैं, उन भगवान्का ध्यान करके तुम इनके आर्तिहारी करकमलका आश्रय लो। फिर बाणोका उपयोग करके प्रहार आरम्भ कर दो ॥ २०७ ॥

इत्थं मया सुविहितोऽनुनयोऽपि हन्त !
जातो वृथा विहतधीषु कृतो यथा हि ।
अस्थान आपतित एष मतिर्ममाऽभूद्
दुष्टाऽत्र भूय उरुगायपदं श्रयामि ॥ २०८ ॥

हाय ! इस प्रकार मैने बहुत अनुनय-विनय की किन्तु सब व्यर्थ हो गयी । हतबुद्धिजनोके प्रति किया गया जिस प्रकार अयोग्य स्थानमे आ पडता है उसी प्रकार यह मेरा अनुनय भी व्यर्थ हो गया । मेरी बुद्धि यहाँ दूषित हो गयी । अत पुन भगवान् उरुगाय (कृष्ण या शिव) के चरणोकी शरण लेता हूँ ॥ २०८ ॥

हा धिग् ! हतोऽस्मि सुदृढं प्रभुसेविकास्ता
या अष्टसिद्धय इहाऽप्रतिरुद्धवीर्याः ।
दृश्यन्त आसु विहिता विनतिः स्तुतिश्च
नूनं फलत्यहह ! ता अपि विस्मृता धिक् ! ॥ २०९ ॥

हाय ! धिक्कार है । मै हर तरहसे मारा गया । भगवान्की सेवा करनेवाली जो आठ सिद्धियाँ हैं, वे यहाँ अप्रतिहत शक्तिशालिनी देखी जाती है । उनके प्रति की गयी विनय अथवा स्तुति निश्चय ही फलदायिनी होती है । किन्तु वे भी मुझे विस्मृत हो गयी । कितने कष्टको बात है ॥ २०९ ॥

देव्यो ! भवत्य इह संददतु स्वदृष्टी—
र्भूयासमाभिरहमद्य भृशं प्रसन्नः ।
याः प्राप्य निर्गुणमजं सदुपायलाभा—
दुद्बोधयामि गुणवन्तममुं करोमि ॥ २१० ॥

देवियो ! यहाँ आप ही लोग अपनी दृष्टि दे । आपकी कृपादृष्टियोसे ही आज मै अत्यन्त प्रसन्न हो जाऊँगा । इन्हे पाकर एक उत्तम उपाय मिल जानेसे मै निर्गुण और अजन्मा शम्भुको समाधि से जगाऊँगा और इन्हे सगुण बनाऊँगा ॥ २१० ॥

हा ! धिङ् ! मृतोऽस्म्यहमिहाऽपि च सिद्धयस्ताः
सन्त्यत्र वारवनिता इव चार्थलुब्धाः ।
योगी न चाहमिह नास्ति च मेऽर्थ ईदृङ्
मां किं भजन्त्यहह ! ता गुरुयोगगम्याः ॥ २११ ॥

हाय ! धिक्कार है । मै तो यहाँ मर गया । ये सिद्धियाँ भी यहाँ वाराङ्गनाओकी भाँति अर्थलुब्ध प्रतीत होती है । मै योगी हूँ नही और मेरे पास यहाँ ऐसा कोई अर्थ नही है । फिर गुरुके योगसे सुलभ होनेवाली वे सिद्धियाँ मुझे कैसे अपनायेगी ॥२११॥

धिग् ! धिग् ! हतोऽस्म्यशरणोऽस्मि किमारभेऽहं
को वा शृणोति मम तुच्छमिरं मृतोऽहम् ।
ये शक्तिमन्त इह सन्ति महामहान्त
आश्रित्य तानपि भवे विफलोऽस्म्यशान्तः ॥ २१२ ॥

धिक्, धिक् ! मै मारा गया। मुझे कोई शरण देनेवाला नही है। मै क्या करूँ ? कौन मेरी तुच्छ वाणीको सुनेगा। हाय ! मै मर गया। जो लोग यहाँ शक्तिशाली और महान्से भी महान् हैं, उनकी शरणमे जाकर भी मुझे सफलता नही मिली। मै अशान्त हो गया हूँ॥ २१२॥

स्वामिन् विनायक विभो ! गणनायकस्त्वं
जातः सनायक इहाऽपि विनायकोऽहम् ।
तत्संश्रयामि भवतोऽङ्घ्रिममङ्गलघ्नं
निघ्नन्तमद्य मम विघ्नममुं ह्यघघ्नम् ॥ २१३ ॥

मेरे स्वामी भगवान् विनायक ! आप गणनायक हैं। यद्यपि मै भी यहाँ विनायक हो (नायकरहित) हूँ तथापि आपको पाकर सनायक हो गया हूँ। आपका चरण अमङ्गल-हरण, मेरे विघ्नोका विनाशक तथा अघनाशक है। अत मै इसीकी शरण लेता हूँ ॥२१३॥

पूर्वं भवन्तमृषयः स्तुतिभिः स्तुवन्ति
सिद्ध्यर्थमत्र गुणगौरवतो भजन्ति ।
पश्चाद्भजामि भगवन्तमहो ! परन्तु
मूर्खोऽस्मि पादयुगले च लुठाम्यहं तु ॥ २१४ ॥

ऋषि लोग यहाँ सिद्धि प्राप्त करनेके लिए नाना प्रकारके स्तुतियो द्वारा पहले आपका स्तवन करते हैं। फिर आपके गुणोमे गौरव भावना रखते हुये आपका भजन करते है। परन्तु अहो ! मै ऐसा मूर्ख हूँ कि पीछे आप-भगवान्का भजन कर रहा हूँ। प्रभो ? मै आपके दोनो चरणोमे लोट रहा हूँ॥ २१४॥

मध्यो न चादिरिह यस्य तु नास्ति चाऽन्तः
सद्वस्तु तत्त्वमसि राजसि नाथ ! शान्तः ।
तस्मान्न तथ्यमिह पूर्वपरत्वभेदे
भेदोऽपि भेदयति किं भगवन्नभेदे ॥ २१५ ॥

नाथ ! जिसका यहाँ न तो आदि है, न मध्य है, और न अन्त ही है, वह सद्वस्तु आप हैं। आप शान्त भावसे विराजते हैं। इसलिए पहले पोछेके भेदमे कोई तथ्य नही है।

भगवन् ! क्या अभेद अथवा अद्वितीय आप परमेश्वरमे भी भेद-दृष्टि कोई भेद उत्पन्नकर सकती है ? ॥ २१५ ॥

संश्रित्य लक्ष्यमिह कृष्णगुणाऽनुवादं
यद्व्यापृतोऽस्मि गजवक्त्र ! गिरामतीते ।
तस्मिन्ननन्तविषये मम का गतिः स्या—
देवं विरौमि मयि धेहि सहायमद्धा ॥ २१६ ॥

गजानन ! भगवान् श्रीकृष्णके गुणानुवादका लक्ष्य लेकर मै यहाँ काव्य रचनाके व्यापारमे लगा हूँ। जहाँ वाणीकी गति नही है, उस अनन्त विषयमे मेरी क्या गति हो सकती है ? । ऐसा सोचकर मै विलाप करता हूँ । आप मेरी सहायता कीजिये ॥ २१६ ॥

यस्माद्गुरुत्वमधिगम्य लघुत्वमाप्य
काव्यं करोमि परिपूर्णमिदं विभाव्य ।
अग्रेसरोऽभवमहं जगतां गुरुः स
शान्तो निरिन्धन इवाऽग्निरभूद्गिरीशः ॥ २१६ ॥

जिनसे उनका गुरुत्व ( उपदेशकत्व ) पाकर और लघुत्व ( शीघ्रता ) को अपनाकर मै इस काव्यको परिपूर्ण कर लूँगा, ऐसी आशा लगा रखी थी और इसीके भरोसे मै अपने कर्तव्य पथपर आगे बढ गया था । वे जगद्गुरू भगवान् शङ्कर तो विना ईंधनकी अग्निके समान शान्त ( समाधिस्थ ) हो बैठे हैं । ( ऐसी दशामे मै क्या करूँ ? ) ॥ २१६ ॥

कुत्रास्ति षाऽधिकरणं क्व च सन्ति वृद्धा
न्याय्यं च मे ददति केऽधिकृता विपक्षाः ? ।
गच्छामि कुत्र विलपामि जगद्गुरुर्हा !
मां त्यक्तवानहह ! पश्यत पूज्यपादाः ! ॥ २१७ ॥

( क्या मै अपने विषयमे न्याय करानेके लिए किसी न्यायालयमे जाऊँ ? ) कहाँ है वह न्यायालय ? कहाँ है ऐसे बृद्धजन ? जो मुझे न्यायोचित फैसला देगे । कौन-से ऐसे अधिकृत ( न्यायाधीश ) हैं, जो पक्षपातरहित होकर विचार करेगे हाय, मै कहाँ जाऊँ ? किससे रो-रोकर बताऊँ कि पूज्यपाद गुरुजनो ! देखो, जगद्गुरु भगवान् शङ्करने मुझे त्याग दिया हैं ॥ २१७ ॥

युक्तं कथं भवति तच्छरणाऽऽगता ये
त्यक्तास्तु कैरिह महात्मभिरीश्वरैश्च ? ।
वक्तव्यतां च गतवान् स विभुर्यदत्र
तस्माद् गजानन ! विबोधय पूज्यमद्य॥ २१८ ॥

यह बात कैसे उचित हो सकती है। किन महात्मा पुरुषो और उच्चकोटिके महानुभावोने यहाँ शरणागतोका परित्याग किया है। गजानन ? मेरी उपेक्षाके कारण भगवान् शङ्कर यहाँ वक्तव्यता ( लोगोकी आलोचना )के पात्र बन गये हैं। अतः आप अपने पूज्य पिताजीको अब जगाइए॥ २१८॥

त्वं वै कृपानिधिरहो ! गुणपक्षपाती
यद्राजसे पदयुगेऽत्र विभोर्गताधिः।
जानासि तद्गतिमती च सदा गतोऽङ्कं
निःशङ्कमङ्ग ! वितराशु कृपामभङ्गाम्॥ २१९॥

अहो ! आप कृपाके सागर है। गुणोके पक्षपाती है। क्योकि—यहाँ भगवान्के युगल चरणोमे निश्चिन्त विराजते है। उनकी गति-मतिको जानते हैं। सदा नि शक होकर उनके अकमे खेला करते है। अत हे पूज्य गणेश ? अब शीघ्र मुझे अपनी चिरस्थायिनी कृपाका वितरण कीजिए॥ २१९॥

सिद्धिं कलौ वितरसीश्वर ! साधकेभ्यः
प्राक् त्वां भजन्ति लघु तेऽपि च साधनैः स्वैः।
मूर्खोऽस्म्यहं तु भगवंस्तदुभौ न जाने
साध्यं भवत्पदयुगं शुभदं तु जाने॥ २२०॥

हे सर्वसमर्थ गणनायक ? आप कलियुगमे साधकोको सिद्धि प्रदान करते है। और वे साधक भी पहले अपने साधनो द्वारा शीघ्रतापूर्वक आपका भजन करते है। परन्तु भगवन् ! मै मूर्ख हूँ। साधन और साधक कैसे और क्या होते हैं ? इन दोनोका मुझे ज्ञान नही है। आपके युगलचरण ही शुभदायक होनेके कारण मेरे साध्य है। इतना ही मै जानता हूँ॥ २२०॥

तस्माद् दयस्व भगवन् ! मयि दीनवृत्तौ
योऽस्म्यत्र साहसिक ईशकथाभिगाने।
एकैकवर्णमिह लब्धसुवर्णवर्ण !
पक्षी कणानिव गृणन् विलिखाम्यवर्ण !॥ २२१॥

अत' भगवन् ! मुझ दीन वृत्तिवाले दासपर दया कीजिए। जो कि यहाँ भगवान् श्रीकृष्णकी लीलाकथाके गानका—महाकाव्यके रूपमे उनके चारू चरितामृतके रचनाका साहसकर बैठा है। प्रभो ! आपको सोने जैसा सुन्दर वर्ण ( रंग ) प्राप्त है, तथापि आप अवर्ण ( ब्राह्मणादिवर्णके अभिमानसे रहित ) हैं। भगवन् ! जैसे पक्षी एक-एक दाना चुगता है, उसीप्रकार मै भी इस काव्यमे एक-एक अक्षर चुनकर लिख रहा हूँ॥ २२१॥

आः किं भवानपि विभो ! बधिरायते हा !
पीडां न पश्यति कथं यदुपेक्षितोऽद्धा ।
मग्नोऽभवत् प्रभुरपीह मनःप्रियेण
तन्मोदकेन विहरन् निजमूषकेण ॥ २२२ ॥

आह, प्रभो ! क्या आप भी बहरे जैसे हो रहे है, हाय, मेरी पीडा क्यो नही देखते हैं। आपने भी क्यो मेरी उपेक्षाकर दी ? । जान पडता है, आपको अभिमान हो गया है, आप समर्थ होते हुए भी यहाँ अपने मनको प्रिय लगनेवाले मोदक ( लड्डू ) लिये अपने वाहन मूषकके द्वारा विचरने लगे ॥ २२२ ॥

हा धिग् ! हतोऽहमिह दिव्यविभूतियुक्तान्
संश्रित्य यानपि महापदभूषितांस्तान् ।
एवंविधोऽभवमहो ! यदि तुच्छदेवान्
स्यात् का गतिर्मम तु चेदभजिष्यमन्धान् ? ॥ २२३ ॥

हाय, धिक्कार है ! मै तो मारा ही गया । जब यहाँ दिव्य-वैभवसे सम्पन्न और महापदसे विभूषित उन बडे बडे देवताओका आश्रय लेकर भी मेरी ऐसी अवस्था हो गयी तो यदि सर्वथा तुच्छ और अन्धे देवताओका आश्रय लेता तो मेरी क्या गति होती ? ॥ २२३ ॥

आस्तां तदत्र विलपामि पदाब्जयुग्मं
ध्यायन्नतन्द्रितमनोमयमस्य शम्भोः ।
गायन् गुणाञ्जगति पावनहेतुभूतान्
गृह्णंश्च नाम हर ! शङ्कर ! नाथ ! बम्भो ! ॥ २२४ ॥

अच्छा, अब अन्य लोगोके सामने रोना, गिडगिडाना बन्द हो, अब तो मै भगवान् शम्भुके तन्द्रारहित मनोमय चरणारविन्दयुगलका ध्यान करता हुआ विलाप करूँगा। ससारमे पवित्रताके हेतुभूत उनके पावन गुणोका चिन्तन और 'हर ! शङ्कर ! नाथ ! बम्भोले !" आदि नामोका उच्चारण करूँगा ॥ २२४ ॥

एकं विहाय भगवन्तमनाथनाथं
त्रैलोक्यशिक्षणरतं ननु मामनाथम् ।
कर्तुं सनाथमिह सन्ति च के समर्थाः
सर्वे कृतान्तवशगा नितरां ह्यनर्थाः ॥ २२५ ॥

एकमात्र उन अनाथनाथ त्रिभुवन-शिक्षण परायण भगवान् शङ्करको छोड़कर मुझ अनाथको सनाथ बनानेमे कौन-कौनसे और कितने लोग समर्थ है ? सभी तो कालके वशीभूत है और नितान्त अनर्थमे डूबे हुए हैं ॥ २२५ ॥

गच्छेयमद्य भगवञ्छरणं कमन्यं
पूर्णं समर्थतरमादिश माश्च तस्मात् ।
शीघ्रं कृपां कुरु विभो ! मयि हीनवृत्तौ
सिद्धिं लभेय परमां पदयोरकस्मात् ॥ २२६ ॥

भगवन् ! अब मै दूसरे किस सर्वथा परिपूर्ण तथा अत्यन्त सामर्थ्यशाली पुरुषकी शरण मे जाऊँ ? इसलिए भी मुझे आज्ञा दीजिये । प्रभो ! मुझ दीन-हीनपर शीघ्र कृपा कीजिये । जिससे आपके चरणोमे प्रणत होकर मै अकस्मात् परम सिद्धि प्राप्तकर लूँ ॥ २२६ ॥

जानासि विश्वमखिलं परितो विभाति
तिष्ठद्व्रजद्द्वितयरूपमिदं यदीश ! ।
अन्तर्गतोऽहमपि तस्य जगद्गुरुं त्वां
क्रन्दाम्यतः समवलोकय मां गिरीश ! ॥ २२७ ॥

हे ईश्वर ! यह सब ओर जो स्थावर-जगम उभयरूप विशाल विश्व विभासित हो रहा है, इसे आप अच्छी तरह जानते है। मै भी इसीके अन्तर्गत हूँ। आप इस जगतके गुरु हैं। इसीलिये मै आपके निकट क्रन्दनकर रहा हूँ। गिरीश ! मुझे अपनी कृपा दृष्टिसे देखिये ॥२२७॥

ब्रूते स्म मद्गुरुरपीह भजन् भवन्तं
शम्भो ! गुरो ! शिव ! हरेति महेश्वरेति ! ।
तस्यैव मय्यपि विभो ! स्मृतिराविरस्ति
तद्वीर्यसंस्कृतिरियं न जहात्यहो ! माम् ॥ २२८ ॥

मेरे पिताजी भी यहाँ आपका भजन करते हुये "शम्भो ! गुरो ! शिव ! हर ! महेश्वर !" इत्यादि रूपसे आपके नामोका कीर्तन किया करते थे। विभो ! मुझे भी आज उनके उसी नामकीर्तनकी स्मृति हो आयी है। अहो ! उनके वीर्यका यह शुभ-सस्कार मुझे छोड नही रहा है ॥ २२८ ॥

दृष्टान्त एष भगवन् ! स पिता यथा मे
तस्याऽपि चान्य इह विद्यत एव देव ! ।
अन्यः पुनस्तत इतोऽभवदन्य ईश !
हीत्थं भवान् सकलविश्वनृणां पिताऽऽद्यः ॥ २२९ ॥

भगवन् ! यह एक दृष्टान्त प्रस्तुत है। देव ! जैसे मेरे पिताजी थे, वैसे ही उनके भी कोई दूसरे पिता थे ही। फिर उनके भी दूसरे और दूसरेके भी दूसरे पिता थे। इस तरह पूर्व-पूर्व पिताका विचार करनेपर आप ही समस्त विश्वके प्राणियोके आदि पिता सिद्ध होते हैं ॥ २२९ ॥

सम्बन्धबन्धमिममाप्य निबन्धबन्ध—
मास्वाद्य काव्यमयमेनमुमेश ! वन्द्य ! ।
उन्मील्य चार्धनयनं शशभृच्छ्रितं तत्
सौधोज्वलं प्रकुरु हृन्मम दुष्टमेतत् ॥ २३० ॥

वन्दनीय उमेश ! मेरे साथ इस सम्बन्ध-बन्धन ( रिश्तेदारी ) का अनुभव करके और मेरे इस काव्यमय निबन्ध वन्धका आस्वादन करके अपने चन्द्राश्रित वामनयनको आधा खोलकर मेरे उस दुष्ट हृदयको सौधोज्वल (सुधासे उज्वल प्रासाद या अमृतके समान निर्मल) कर दीजिये ॥ २३० ॥

येन प्रभो ! व्रजपतेश्चरितं विचित्रं
चित्रं यथा सुमनसां हृदि विन्यसेयम् ।
देवा धियं ददति येषु दयन्त एतां—
लोकश्रुतिं कुरु मितां वितराऽत्र दीक्षाम् ॥ २३१ ॥

प्रभो ! जिससे मै व्रजराज भगवान् श्रीकृष्णके विचित्र-चरित्रको विद्वानो तथा देवताओके हृदयमे चित्रकी भाँति रखसकूँ, ऐसा अनुग्रह कीजिये । "देवता लोग जिसपर दया करते है, उसे उत्तम बुद्धि देते हैं ।" इस प्रसिद्ध जनश्रुतिको आप प्रमाणित कीजिये—सत्य कर दिखाइये । यहाँ मुझे दीक्षा दीजिये ॥ २३१ ॥

दीक्षात्रयी जयति नाथ ! मया श्रुतेयं
कूर्मी खगी च शफरी च ददाति यां ताम् ।
दृक्स्पर्शबोधमयरूपविधारिणी या
साध्नोति कार्यमखिलं तव सिद्धिदा सा ॥ २३२ ॥

नाथ ! मैने तीन प्रकारकी दीक्षा सुनी है, जो उत्कृष्ट फल देनेवाली है । इनमेसे पहली दीक्षा कच्छपी, दूसरी दीक्षा पक्षिणी और तीसरी दीक्षा मछली देती है । पहली है दृग-दीक्षा, दूसरी स्पर्शदीक्षा और तीसरी है ध्यानदीक्षा । ये तीन रूप धारण करनेवाली जो दीक्षा है, सम्पूर्ण कार्य सिद्ध कर देती है । साधककी इच्छा हो तो वह आपकी सिद्धि भी दे सकती है अर्थात् वह आपकी प्राप्ति करा सकती है ॥ २३२ ॥

मत्स्यी ददाति पृथुकेभ्य उमेश ! यां सा
दीक्षा मयाऽपि भगवन् ! भवतः समाप्या ।
ध्यानेन ताञ्च मयि धेहि यतोऽनुकम्प्याः
स्वामिन् ! वयं हि जयतीह तवाऽनुकम्पा ॥ २३३ ॥

भगवन् उमेश ! मछली अपने बच्चोको जो दीक्षा देती है, वही आपसे मुझे भी प्राप्त होनी चाहिये। आप ध्यानके द्वारा मुझे वही दीक्षा दे। क्योकि हे स्वामिन् ! हम सब जीव आपके कृपापात्र है। आपकी कृपा ही इस जगतमे विजयिनी है ॥ २३३ ॥

यां प्राप्य कृष्णगुणवर्णनजातशक्तिः
पश्येयमीशमहिमानमिहाऽतिशक्तिम् ।
यं निर्दिशंश्च विलिखंश्च पठन् समाप्तौ
स्यां हर्षपूरितमना भवतः सुखाब्धौ ॥ २३४ ॥

आपके उस कृपाको पाकर मुझमे भगवान् श्रीकृष्णके गुणो और लीलाओके वर्णनकी शक्ति उत्पन्न हो जाय और मैं भगवान्की लोकोत्तर शक्तिशालिनी महिमाको प्रत्यक्ष देख सकूँ। भगवान्के उस महिमाका निर्देशन, लेखन और पठन करता हुआ मै ग्रन्थकी समाप्ति होनेपर हर्षसे पूरित चित्त हो आपके सुख समुद्रमे निमग्न हो जाऊँ ॥ २३४ ॥

यत्स्पर्शनेन गदितेन निरीक्षणेन
सञ्जायतेऽमलमतीन्द्रियबोधवस्तु ।
तच्छाम्भवं वितर नाथ ! जगद्गुरुस्त्वं
यत् ख्यातवानिह भवान् निगमाऽऽगमेषु ॥ २३५ ॥

नाथ ! जिसके स्पर्श, उच्चारण और निरीक्षणमात्रसे निर्मल, अतीन्द्रिय बोधवस्तु ( इन्द्रियातीतज्ञान ) की प्राप्त हो जाती है। उसी शाम्भव-ज्ञान ( शाम्भवी-दीक्षा ) को मुझे दीजिये। क्योकि आप जगद्गुरु हैं। आपने ही उस ज्ञानका निगमो और आगमोमे वर्णन किया है ॥ २३५ ॥

दीक्षां सदैव विशदां किल तां दिशन्ति
स्निह्यन्ति यत्र बहुधा गुरवो जयन्ति ।
शिष्या भवन्ति कृतिनश्च तयैव यत्ते
कुर्वन्ति तुच्छमखिलं पदमाप्य तत्ते ॥ २३६ ॥

जिस शिष्यके प्रति गुरुजनोका बहुत स्नेह होता है, उसे ही सदैव वे वह उज्वल दीक्षा देते है। और उसी दीक्षासे शिष्यगण कृतकृत्य हो जाते हैं। क्योकि वे उस दीक्षाके प्रभावसे ही आपके चरणोको पाकर ससारकी अन्य सारी वस्तुओको तुच्छ समझ लेते है ॥ २३६ ॥

प्राप्या मयाऽपि भगवन् ! किल सैव दीक्षा
यां प्राप्तुमेव चरणेषु निवेदनं मे ।
तस्माद् विलोकय विभो ! विवशं वशं मां
कुर्वन् नयत्यहह ! काल इतः स्वधाम ॥ २३७ ॥

भगवन् ! मुझे भी वही दीक्षा मिलनी चाहिये। उसीको पानेके लिए मैने आपके चरणोमे निवेदन किया है। अत विभो ! मेरी ओर देखिए। अहह ! काल मुझ बेवसको वशमे करके यहाँसे अपने लोकमे लिए जा रहा है ॥ २३७ ॥

मां नाथ ! हन्त ! हतशक्तिमनीशमेवं
संप्रेक्ष्य दुर्धरगतिर्दृढशक्तिरेषः ।
नित्यं कदर्थयति सोऽत्र बलाद् विकर्षन्
कर्षन् बलं त्वयि रतं त्ववमत्य कोऽसौ ? ॥ २३८ ॥

हाय, हाय नाथ ! मेरी शक्ति नष्ट हो गयी है। मै असमर्थ हो गया हूँ। जिसकी गतिको रोकना बहुत कठिन है। वह यह दृढशक्तिशाली काल मुझे इस प्रकार दुर्बल देख अपनी सेनाके साथ आकर आपके चरणोमे रत होनेपर भी मेरी अवहेलना करके मुझे बलात् अपनी ओर खीचता और प्रतिदिन पीडा देता है। आपके सामने वह कौन होता है ? ॥ २३८ ॥

तद्दुर्जयं बलमपीह विचित्रमेवं
प्रत्यूहरूपमनिशं त्वयि भक्तिभाजाम् ।
यद्भृत्यतामुपगतान् परिवारवृत्तौ
भ्रान्तान् विधाय बहुधाऽस्तबलान् करोति ॥ २३९ ॥

उस कालकी दुर्जय एव विचित्र सेना भी आपमे भक्तिभाव रखनेवाले लोगोके लिए निरन्तर इस प्रकार विघ्नरूप हो रही है। जो लोग परिवार पालनमे भृत्यकी भाँति जुटे हुए हैं, उनको बहुधा भ्रान्त बनाकर वह काल सेना बलहीन कर देती है ॥ २३९ ॥

शान्तं मनो विगतवृत्ति विगृह्य नाथ !
तिष्ठामि ते चरणचिन्तनतत्परोऽहम् ।
यावत्तदैव गृहिणी समुपेत्य पार्श्वे
मामेव नाथ ! वदतीह विलोकयेति ॥ २४० ॥

नाथ ! मै वृत्तिशून्य शान्त मनको लेकर आपके चरण-चिन्तनमे ज्यो ही तत्पर होता हूँ, त्यो ही मेरी घरवाली पास आकर मुझसे ही कहने लगती है कि "हे नाथ ! यहाँ मेरी ओर तो देखिये" ॥ २४० ॥

नास्त्यद्य चान्नलवणेन्धनशर्करादि
संपादये कथमहं प्रिय ! भोजनादि ।
उत्तिष्ठ ! गच्छ धनमाहर यत्र तत्र
गत्वाऽपि चिन्तयसि किं शिशवो रुदन्ति ॥ २४१ ॥

"आज घरमे अन्न, नमक, ईंधन और चीनी आदि कुछ भी नही है। फिर हे प्रिय ! मै भोजन आदि कैसे बनाऊ ? उठिये, जाइये, जहाँ-तहाँ जाकर भी धन लाइए। यहाँ क्या सोचते या क्या ध्यान लगाये बैठे हैं ? बच्चे भूखसे रो रहे है" ॥ २४१ ॥

तद्बाणतुल्यमसहं दृढसत्यपूतं
श्रुत्वा वचो निगदितं करुणं प्रियायाः ।
भूत्वाऽप्युदारहृदयो विवशोऽहमीश !
गच्छामि दुष्टहृदयान् प्रति याचनार्थम् ॥ २४२ ॥

ईश ! प्रिय-पत्नीका कहा हुआ बाणके समान असह्य तथा दृढ सत्यसे पवित्र वह करुण वचन सुनकर उदार हृदय होकर भी मै विवश हो दुष्टचित्त लोगोसे याचना करनेके लिए चल देता हूँ ॥ २४२ ॥

ते कालपाशशिथिलावयवा अपीश !
स्वं मन्वतेऽमरमिवाऽत्र दुराग्रहा हा ! ।
भूयोऽभिमानवशतोऽमितवित्तयुक्ता—
वित्तं विना ददाति तुच्छवचांसि तेभ्यः ॥ २४३ ॥

जगदीश्वर ! ये कालपाशसे शिथिल शरीरवाले होकर भी दुराग्रहके कारण यहाँ अपने आपको अमर-सा मानते है। ये कितने खेदकी बात है। वे अधिक अभिमानवश असीम वैभवसे युक्त होने पर भी उन याचकोको धन दिए बिना ही ओछे वचनोका दान दिया करते हैं ॥ २४३ ॥

दुःखं तदेतदसमं भगवन् ! ममाऽद्य
त्वां संस्तुवन्नहमिहाऽव्ययमेकरूपम् ।
वाच्यो भवामि नितरां सुरवाग्विदां त—
न्मार्गेण भृत्यवपुषाश्च बुधब्रुवाणाम् ॥ २४४ ॥

भगवन् ! आज मुझे अनुपम दु ख तो इस बातका है कि मै यहाँ एकरूपसे अविनाशी ईश्वरकी स्तुतिमे सलग्न होकर भी सुरभाषाके उन विद्वानोके लिए भी अत्यन्त निन्दनीय

हो रहा हूँ, जो शरीरसे गुलाम या भृत्य होते हुए भी अपनेको बडा भारी पण्डित कहा करते है ।। २४४ ।।

सोऽयं दरिद्रः इह भूरिधना वयं यत्
सत्पण्डिताश्च गुरुमानमदान्विताश्च ।
किं तेन, तन्मृतगिरा च तथास्तुतेन
सर्वे मृता, इह वयं सफला धनेन ।। २४५ ।।

धनी लोग कहा करते हैं कि—यह दरिद्र है और इस ससारमे हम लोग अधिक धन वैभववाले है, अच्छे पण्डित हैं तथा भारी मान और मदसे सम्पन्न हैं। उस दरिद्रसे क्या लेना है और उसकी मरी हुयी संस्कृत भाषा द्वारा की गयी वैसी स्तुतिसे भी क्या होना है ?। ये सब संस्कृतके विद्वान् मर गये हैं। यहाँ धन होनेके कारण हमारा ही जीवन सफल है ।। २४५ ।।

धन्या महान्त इह ते मरणेऽपि देहं
द्रव्यं नयन्ति सममित्थमवेक्षमाणः ।
त्यक्त्वाऽधमर्णततिगां शिशुपालनार्थां
चिन्तां निवृत्त इत एव वसामि शान्तः ।। २६६ ।।

ऐसा कहने वाले ये महानुभाव धन्य हैं। जान पडता है, यहाँ मृत्यु हो जाने पर भी ये अपने देह और द्रव्यको साथ ले जायेगे। ऐसा सोचता हुआ मै बाल-बच्चोके पालन-पोषणके लिए ऋण माँगने वाले लोगोमे व्याप्त चिन्ताको त्यागकर इधर घरकी ओर ही लौट आता हूँ और वही शान्त होकर बैठ रहता हूँ ।। २४६ ।।

तावत् कृपाऽऽविशति हन्त ! हृदन्तरे ते
प्राप्नोति चान्नमयमार्गमसौ प्रिया मे ।
तेनैव तृप्त इह तुष्टमनाः प्रभोऽहं
सत्कर्मणीदृशि लगामि लिखाम्यभीक्ष्णम् ।। २४७ ।।

हर्षकी बात है कि मेरी यह स्थिति देखकर आपके हृदयमे कृपाका आवेश होता है। और मेरी पत्नीको अन्न मिलनेका मार्ग प्राप्त हो जाता है। प्रभो ! उसीसे तृप्त और सन्तुष्ट चित्त होकर मै ऐसे सत्कर्ममे लग जाता हूँ और निरन्तर लिखता रहता हूँ ।। २४७ ।।

रीत्याऽनया विलिखता भगवन् ! मयाऽपि
चानूदितं मम गिरा बहुकाव्यरत्नम् ।
वाल्मीकि-कृष्णरचितं पुरुषार्थसारं
रामायणं रुचिरभागवतादिकञ्च ॥ २४८ ॥

भगवन् ! इस रीतिसे लिखते हुए मैने अपनी वाणीमे बहुत-से काव्य रत्नोका अनुवाद किया । महर्षि वाल्मीकि और व्यासके रचे हुए पुरुषार्थ सारभूत रामायण और रुचिर भागवत आदिका भी भाषान्तर किया है ॥ २४८ ॥

क्वाऽहं भवच्चरणचिन्तनरूढबुद्धिः
शान्तस्पृहः कविमना विषयेष्वलुब्धः ।
क्वामी मनुष्यहतका धनमानलुब्धा
ये मां दरिद्र इति तुच्छधियाऽऽक्षिपन्ति ॥ २४९ ॥

कहाँ तो आपके चरणोके चिन्तनमे स्थिर बुद्धि, शान्तकाम और विषयोके प्रति लोभरहित कवि हृदय मै हूँ और कहाँ वे अधम मनुष्य ? जो धन और मान पर लुभाकर अपनी तुच्छ बुद्धिसे 'ये दरिद्र है' ऐसा कहते हुए मुझपर आक्षेप करते हैं ॥ २४९ ॥

तेषां करालतरकालहतात्मनां हा !
नाऽहं करोमि नुतिगानमहर्निशं तु ।
दारिद्र्यमीदृशमहं सुखदं वरञ्च
मन्ये हरं परिणुवंस्तदपेक्षया तु ॥ २५० ॥

वे अत्यन्त विकराल कालके गालमे जाने वाले हैं । मै उनका अहर्निश गुणगान नही करता हूँ । महेश्वर ! मै आपका स्तवन करके ऐसे दारिद्र्यको भी उन धनियोकी स्तुतिसे मिलनेवाले धनकी अपेक्षा श्रेष्ठ और सुखद मानता हूँ ॥ २५० ॥

येन त्वदन्य इह देववराश्च तुच्छा
इत्थं च शास्त्रगुरुभिश्च विमृश्य तत्त्वम् ।
त्यक्ताः सुखं गतभिया सुधिया सदैवं
सोऽयं कथं पुनरुपाश्रयते धिगेतान् ! ॥ २५१ ॥

इसीलिए आपसे भिन्न जो दूसरे श्रेष्ठ देव हैं, वे तुच्छ है । इस प्रकार शास्त्रो और गुरुजनो द्वारा तत्त्वका विचार करके मैने निर्भय हो, शुद्ध बुद्धिसे सदाके लिए उनका

अनायास ही त्यागकर दिया है। वही यह आपका दास अब पुन उन देवताओका आश्रय कैसे ले सकता है ?। अब तो यह इन्हे धिक्कारता है ॥ २५१ ॥

तस्माद्गतिर्मम विभोऽस्ति सरस्वतीयं
या त्वां स्तुवीत्यसकृदत्र गुणाब्धिमग्ना।
धन्या धनं तु विषमाऽपि समाऽपि सा मे
या निर्गुणाऽपि गुणिनं भजतेऽनुयामम् ॥ २५२ ॥

अत प्रभो ! अब तो मेरी यह सरस्वती ही मेरा सहारा है। जो आपके गुण-सागरमे निमग्न हो निरन्तर यहाँ आपकी स्तुति करती रहती है। यही हमारे लिए धन्य है, यही मेरा धन है। यह सम हो या विषम, मेरी तो सब कुछ यही है। यह स्वय निर्गुणा होकर भी आप सगुण परमेश्वरका प्रत्येक याममे भजन जो करती है ॥ २५२ ॥

आत्माऽऽत्मपुत्र उरुगाय! तथाऽऽत्मवाणी
सर्वप्रियैव भवतीह यथेशवाणी।
आश्रित्य तामिह मयाऽप्यत एव नाथ!
त्वं संस्तुतोऽसि कुरु कर्णगतां तदेनाम् ॥ २५३ ॥

हे उरुगाय ! अपना आत्मा, अपना बेटा और अपनी वाणी, ये सबको प्रिय लगते हैं। ठीक उसी तरह जैसे ईश्वरकी वाणी ! अतएव नाथ ! मैने भी उस वाणीका आश्रय लेकर आपकी स्तुति की है। मेरी इस स्तुतिरूपिणी वाणीको आप कर्णगत कीजिये—ध्यानसे सुनिये ॥ २५३ ॥

स्वामिन्! निषेधविधिकर्मपरा हि लोका
आश्रित्य यौ च समदन्ति फलं कृतानाम्।
सोऽहन्त्वहो! गतभयस्तदुभौ विहाय
निशङ्क एव विहरामि चरामि सर्वम् ॥ २५४ ॥

स्वामिन् ! प्राय लोग निषेध और विधिसे युक्त कर्म करनेमे लगे रहते है। और विधि-निषेधका ही आश्रय लेकर अपने कर्मोका फल भोगते हैं। अहो ! मै तो निर्भय होकर उन दोनो प्रकारके कर्मोको त्यागकर नि.शङ्क विचरता हूँ। भला-बुरा सब कुछ करता रहता हूँ ॥ २५४ ॥

त्यक्तो मया विधिरिह श्रुतिवाक्यरूप-
स्तद्वन्निषेध उरुगाय! निषिद्ध एव।
जातो विधिर्मयि निषेध इह स्वकृत्यात्
सोऽयं निषेध उभयेश! विधिर्ह्यभूच्च ॥ २५५ ॥

श्रुति वाक्यरूप जो विधि है, उसको मैने यहाँ त्याग दिया है। इसी प्रकार हे उरु-गाय ? निषेव भी मेरे लिये निषिद्ध ही है। विधि-निषेध दोनोके स्वामी शिव ! मुझमे अपने कृत्यके अनुसार विधि ही निषेध बन गया है अर्थात् मैं विहित कर्मको ही निषिद्ध कर्मकी भाँति त्याग चुका हूँ। और निषेध ही मेरे लिये विधि हो गया है—अर्थात् निषिद्ध कर्म ही मै करता रहता हूँ॥ २५५॥

शास्त्राणि ते विधिनिषेधमयस्वकृत्या
गच्छन्ति सत्पदमितीह गदन्त्यशङ्कम्।
कृत्वा तदत्र बिपरीतमहो! मया तु
स्वेष्टं कृतं गतभियैव निरकुशेन॥ २५६॥

आपके शास्त्र नि शङ्क होकर कहते है कि विधि-निषेधमय कर्तव्यके पालनसे कर्मठ पुरुष उत्तम पदको प्राप्त होते हैं। परन्तु मैने तो इसके विपरीत ही आचरण किया है। अहो! मुझ निरङ्कुशने डर-भय छोडकर मनमाना किया है॥ २५६॥

नाऽहं विभो! तदुभयोः फल आत्मभोग्य
इच्छामि भोक्तुमिह ये स्त उभे स्वरूपे।
स्वर्गे प्रभो! जिगमिषाऽस्ति न पुण्ययोगात्
पापान्न वाऽस्ति नरकाच्च भयं यदस्य॥ २५७॥

विभो! मै उन दोनो ही प्रकारके कर्मफलोको, जो मेरे अपने ही भोग्य हैं, नही भोगना चाहता। वे दोनोकेस्वरूपभूत हे प्रभो! पुण्य-योगसे मुझको स्वर्गमे जानेकी इच्छा नही है। और पापके फलस्वरूप नरकमे गिरनेका भी मुझे भय नही है॥ २५७॥

यद् यत् कृतं निवसताऽत्र मया त्वनर्थं
सार्थञ्च सर्वमपि वेत्ति भवान् विभुत्वात्।
तत्राऽस्य का गतिरुमेश! गुरुर्यदि त्वं
न प्रेक्षसेऽमुमथ चेदमृतो मृतो हा!॥ २५८॥

मैने यहाँ रहकर जो-जो निरर्थक या सार्थक कर्म किया है, वह सब आप जानते है। क्योकि–विभु होनेके कारण आप सर्वत्र विद्यमान हैं। उमेश! वहाँ इस दासकी क्या गति होगी? यदि आप गुरु होकर भी इसकी ओर नही देखते है तो हाय, यह जीते-जी ही मर गया॥२५८॥

त्वत्तो विरोधयति नाथ! मृतस्त्वितोऽपि
वार्ता प्रसर्पति यदाऽत्र तवाऽङ्घ्रिसंस्थान्।
"भूत्वा भवाऽऽश्रित इहेदृश आत्ममानी
सोऽभूद्भवाऽऽश्रित" इमेऽपि यदा ब्रुवन्ति॥ २५९॥

नाथ ! यदि यह दास यहाँ मर गया तो यह बात आपके विरूद्ध पडती है। जब यह वार्ता आपके चरणाश्रित भक्तोके पास पहुँचेगी तो सबके सब यही कहेगे कि—यह भगवान् भवके आश्रित रहनेवाला ऐसा आत्ममानी था किन्तु भवाश्रित ( ससारके आश्रित ) हो गया ॥ २५९ ॥

एतादृशे व्यतिकरे भगवन्तमित्थं
संसेवमानमनिशं गुणगानमग्नम् ।
प्रेक्षस्व भक्तममुमात्मपदस्थमाशु—
तोषस्वभावविवशो भव चाऽऽशुतोषः ॥ २६० ॥

ऐसे अवसर पर इस प्रकार आप भगवान्‌की निरन्तर सेवा करते हुए आपके ही गुणगानमे मग्न रहनेवाले और आपके चरणोमे पडे हुए इस भक्तकी ओर शीघ्र देखिए। और अपने सन्तोषी स्वभावसे बिवश होकर मेरे लिये आशुतोष हो जाइये—शीघ्र प्रसन्न होइये ॥ २६० ॥

किं वा ब्रवीति भगवान् स्वकृतं त्ववश्यं
भोक्तव्यमत्र पुरुषैर्नियमस्त्वलङ्घ्यः ।
तत् स्वीकरोम्यहमथाऽऽदिश ! कोऽत्र दण्डो
योऽर्हो भवेन्मयि विभो ! विनिपात्यतां सः ॥ २६१ ॥

भगवान् क्या कह रहे है ? । "यही न कि—सभी पुरुषोको अपने कर्मका फल अवश्य भोगना पडता है। इस नियमका उल्लङ्घन नही किया जा सकता है"। तो मै आपकी इस आज्ञाको स्वीकार करता हूँ। आदेश दीजिये, यहाँ कौन ऐसा दण्ड है, जो मेरे योग्य होगा ?। विभो ! मुझपर वही दण्ड गिराया जाय ॥ २६१ ॥

रे स्वेष्टकृत् ! त्वमसि भक्तवरो ममैको
नेशोऽस्म्यहं तदिह दण्डयितुं स्वयं त्वाम् ।
तद्गच्छ संधृतगतिस्त्वमितस्तदीशं
वैवस्वतं स हि फलं वितरत्यमुत्र ॥ २६२ ॥

क्या कह रहे हैं—"रे मनमानी करनेवाले मानव ? तू मेरा एक श्रेष्ठ भक्त है। अत तू गति धारण करके यहाँसे दण्ड देनेमे समर्थ अथवा दण्डके स्वामी वैवस्वत यमके पास चला जा। वे ही परलोकमे कर्मोका फल देते हैं ॥ २६२ ॥

सोऽहं यमश्च नियमश्च शिवोऽहमेको
जीवः शिवोऽभयमिहाऽभयमेकमेव ।
हंसोऽप्यसावहमुभौ शिवजीवरूपौ
मद्रूप एव सकलं ह्यकले विभाति ॥ २६३ ॥

"वह मै हूँ, यम और नियम भी मैं हूँ, मै ही एकमात्र शिव हूँ, जीव भी मै हूँ, जीव और शिव दोनो एक रूप ही हैं। हस भी मै हूँ, शिव और जीव, उभयरूप भी मै ही हूँ। सकल और निष्कल रूपमे जो कुछ प्रतीत होता है, वह सब मेरा ही स्वरूप है" ॥ २६३ ॥

अद्वैतमेव तदिदं परिदृश्यमानं यन्नाम-
रूपकमिदं परितो विवर्तः ।
ब्रह्मैव तच्च सुजना मनसा विभाव्य
स्वात्मानुभूतिपथतो विरमन्ति कृत्यात् ॥ २६४ ॥

"चारो ओर जो नामरूपात्मक विवर्त दिखाई दे रहा है, वह सब अद्वैत रूप ही है। अत. सन्त जन मनसे सबको ब्रह्मरूप ही जानकर स्वात्मानुभवके पथपर चलते हुए समस्त कृत्योसे विरत हो जाते हैं" ॥ २६४ ॥

आस्तां ! प्रभो ! स्वगुरुणाऽनुचरेषु देयो
दण्डोऽपि गेय इव दृष्ट इहैव सद्भिः ।
तत् स्वीकरोमि मम जीवनकाल एव
भूत्वाऽस्य दृष्टिपथगोऽत्र भवान् ददातु ॥ २६५ ॥

प्रभो ! बहुत अच्छा, ऐसा ही हो। अपने गुरुद्वारा अनुगामी शिष्योको दिया हुआ उचित दण्ड भी प्रशसाके ही योग्य होता है। यह बात इस लोकमे सत्पुरुषोने प्रत्यक्ष अनुभवकी है। अत मै दण्ड स्वीकार करता हूँ। आप मेरे जीवनकालमे ही यहाँ मेरी दृष्टिके समक्ष प्रकट होकर स्वय वह दण्ड दे ॥ २६५ ॥

तन्नाचिकेतसदृशो मृड ! तत्र गन्तुं
नाऽहं समर्थ उरुगीतपद ! शृणु त्वम् ।
मृत्वा प्रयामि परमत्र भवेत् पणोऽयं
सोऽहं म्रियेय भवतः पुरि काशिकायाम् ॥ २६६ ॥

हे मृड ! मै नचिकेताके समान स्वयं अनुसरण करके यमराजके लोकमे जानेमे समर्थ नही हूँ। बहुतोके द्वारा सस्तुत चरणारविन्दवाले देव ! मेरी बात सुनिये। मै मरकर यहाँसे नरकलोकमे जाऊँगा। परन्तु यह शर्त रहे कि मै आपकी पुरी काशीमे ही मरूँ ॥ २६६ ॥

यत्र शृणोमि सदयस्त्वमिमान् मुमूर्षून्
संश्रावयस्यखिलसद्गुरुरेव भूत्वा ।
तत्तारकं प्रथितमन्त्रममोघवीर्यं
तस्माद् ब्रवीमि पुनरत्र जय त्वमित्थम् ।। २६७ ।।

जिस काशीपुरीके लिए मै सुनता हूँ कि—वहाँ मरनेवाले लोगोपर दया करके आप स्वय सबके सद्गुरु हो तारक-मन्त्र सुनाया करते हैं। तारक-मन्त्र बहुत प्रसिद्ध है और उसकी शक्ति अमोघ है। इसलिए मै फिर यहाँ कहता हूँ कि—यहाँ ऐसे ही सद्गुरु रूपमे आपकी जय हो ! ।। २६७।।

तस्यां स्थितौ मम च तत्र तथा मुमूर्षो—
स्तद्दक्षिणे श्रुतिपुटे ससुखं त्वमेत्य ।
यच्छ्रावयिष्यसि विभो ! परमेशमन्त्रं
तत्तारकं न तु भवेत्, प्रभवेत् तदेतत् ।। २६८ ।।

विभो ! उस अवस्थामे मै भी जब उस तरीकेसे वहाँ मरने लगूगा, तब आप स्वय सुखपूर्वक उपस्थित हो मेरे दाहिने कानमे जो परमेश-मन्त्र सुनाइयेगा वह अवश्य ही तारक-मन्त्र ( श्रीराम ) न हो, वह यह हो ।। २६८ ।।

मत्प्रार्थितं तदधुनैव धृताऽवधानो
मन्त्रं शृणोम्यहमुमेश ! तदा वदेस्त्वम् ।
किं ? स्वात्मना नरकपं यममेनमीशं
संगम्य शीघ्रमित एव शमाप्नुहीति ? ।। २६९ ।।

उमेश ! वह मेरी प्रार्थना यह है कि जिसको अभी ही ध्यान देकर आप सुने और उस समय मुझे सुनावे, मै सुनूँगा। क्या कहा ? प्रभो ! ‘अपने सूक्ष्म शरीरको साथ ले उन सर्वसमर्थ नरकोके स्वामी यमराजके यहाँ जा तुरन्त उन्हीसे आत्म-कल्याण प्राप्त कर ले’’ ।। २६९ ।।

आस्तां ! तदस्त्वलमलं परमत्र देव !
सैषा स्थितिर्भवतु तत्र तव प्रसादात् ।
यां पूर्वमेव ससुखं प्रविचिन्त्य पश्चाद्
विज्ञापयामि भगवन् ! पदपङ्कजेषु ।। २७० ।।

भगवन् ! देव ! बस, यह यहाँ इतना ही रहे, किन्तु वहाँ आपके कृपा प्रसादसे ऐसी स्थिति हो जाय कि जिसका पहले ही सुखपूर्वक चिन्तन करके पीछे आपके चरणारविन्दोमे इस प्रकार निवेदन करूँ ।। २७० ।।

यास्यामि देववर ! संयमिनीं यदाऽहं
दिव्यां मनोगतिमवाप्य भवत्कृपातः ।
तस्मिन् क्षणे परमभागवतो यमोऽसौ
स्यात् संस्थितः समुपदिश्य गणान् सभायाम् ॥ २७१ ॥

देवेश्वर ! जब मै आपकी कृपासे दिव्य एव मनके समान गति पाकर सयमनी पुरीमे जाऊँगा, उस समय परम भगवद्-भक्त भगवान् यम सभामे अपने गणोको उपदेश देते हुए बैठे हो ॥ २७१ ॥

स्याद्भूय एतदपि तत्र मया विदृष्टं
नीलाञ्जनाऽऽभमखिलेश ! तदाऽस्य रूपम् ।
सर्वासु दिक्ष्वविहतं मह ऐशमीश !
प्रक्षिप्य शान्तमनिशं रमणीयमेवम् ॥ २७२ ॥

अखिलेश्वर ! उस समय वहाँ मुझसे देखा गया भगवान् यमराजका वह स्वरूप बिल्कुल अञ्जनके समान काला हो और हे ईश ! सारी दिशाओमे अप्रतिहत ईश्वरीय तेज फेंककर निरन्तर शान्त एव रमणीय रूपमे विराजमान हो। ( इस स्थितिमे मै वहाँ पहुँचूँ ॥ २७२ ॥

स्वैः किङ्करैः प्रियहितैर्मृड ! चित्स्वरूपै-
रेशैर्मनोगतिधरैर्धृतकालपाशैः ।
क्रूरैः भयङ्करमुखैः सुमुखैश्च सभ्यैः
सम्यग् वृतो ह्युभयतः स विभुर्यदा स्यात् ॥ २७३ ॥

हे मृड ! जिस समय वह भगवान् यम, प्रिय हितैषी एव चित्स्वरूप अपने किङ्करोंके साथ, जो कालपाश धारण किये मनोजव, ईश्वरीय शक्तिसे सम्पन्न क्रूर, भयकर मुखवाले और सुन्दर मुखवाले सभासद भी हैं, दोनो ओरसे घिरे रहकर बैठे हो ॥ २७३ ॥

स्यादेष भूय उरुगायविभोस्तवैव
तुल्यानि नेत्रपुटकानि धृतस्तदाऽपि ।
स्युर्येषु सूर्यशशिवह्निविभा विभाता-
स्त्रैलोक्यगाः स्थिरचरान् स्वसुखं ददत्यः ॥ २७४ ॥

उस समय वे बहुतोके द्वारा जिनकी महिमाका गान किया जाता है, ऐसे आप भगवान्के ही समान, तीन नेत्रपुट धारण किये हो। उन तीनो नेत्रोमे क्रमश. सूर्य,

चन्द्रमा और अग्निकी प्रभा उद्भासित हो, जो तीनो लोकोमे व्याप्त रहकर चराचर जीवोको आत्माका सुख दे रही हो ॥ २७४ ॥

स्यात्तत्र वह्निमयनेत्रपुटे स्वकीये
दत्तावधान उरुशक्तिभृतं गुरुं त्वाम् ।
ध्यात्वाऽत्र रूपमिह तत्तव किङ्कराँश्च
पश्यंस्त्वयीशपद एव निमग्न एषः ॥ २७५ ॥

अपने आप ही के समान उस अग्निमय तृतीय नेत्रपुटमे सावधानोसे आप अनन्त शक्तिशाली गुरुदेवका ध्यान करते हुए वे भगवान् यमराज आपके रूपको ध्यानमे चढा आपके गण उन प्रमथादि किङ्करोको देखते हुए आपके ही श्रीचरणोमे मग्न हुए बैठे हो। ( उस समय मै वहाँ पहुँचूँ ) ॥ २७५ ॥

तत्रैव भाग्यवशतः समुपस्थितं मां
संप्रेक्ष्य संव्यथित एष क आगतोऽत्र ।
इत्थं स्फुरन्मतिरसौ विरमन् स्वकृत्याद्
यावद्विपश्यति तदाऽस्य पुरो गतः स्याम् ॥ २७६ ॥

वहाँ अपने ध्यान स्थलमे ही भाग्यवश मुझे उपस्थित देखकर यमराज, "यहाँ कौन आ गया" यह सोचते हुए कुछ व्यथित हो, अपने कार्यसे विरत हो जायेगे। और जब अपनी बुद्धि या होश-हवासको ठीक करके मुझे गौरसे देखेगे, तब मै उनके सामने उपस्थित हो जाऊँ ॥ २७६ ॥

निर्दिश्य भागवतधर्ममसम्प्रदायं
सत्सम्प्रदायममुमात्महितप्रदायम् ।
यावद् यमो विकचपङ्कजकोशतुल्यै-
र्नेत्रैर्विलोकयति तावदहं पुरः स्याम् ॥ २७७ ॥

सम्प्रदाय रहित भागवत धर्मका उपदेश देकर फिर सत्सम्प्रदायसे युक्त एव आत्म-हितप्रदायक भागवत धर्मका वर्णन पूरा करके जब यमराज विकसित कमल-कोषके समान नेत्रो द्वारा मुझे देखनेकी चेष्टा करेगे तब मै उनके आगे खडा हो जाऊँ ॥ २७७ ॥

स्यान्नाथ ! भूय इह सन्निकटं समेत्य
बद्धाञ्जलिं स्थितमहो विहितप्रणामम् ।
मां वीक्ष्य साधु करुणामृतसिन्धुरेष
शान्तः प्रसादमुपयातु मया स्तुतः स्यात् ॥ २७८ ॥

हे नाथ ! यह भी हो कि निकट आकर प्रणाम करके हाथजोड खडे हुये मुझको भलीभाँति देखकर ये करुणामृत सागर यमराज शान्त एवं प्रसन्न हो जॉय और मै इनकी स्तुति करने लगूँ ॥ २७८ ॥

शान्तं प्रसन्नतरमात्मविदां मुनीनां
प्राणायनं शुभकरं परमात्मसंस्थम् ।
कालं विभाव्य सकलं विकलश्च सत्यं
तद्ब्रह्म यच्छरणगोऽत्र भवेयमन्ते ॥ २७९ ॥

आत्मवेत्ता मुनियोके प्राणाधार, शुभकारक, अत्यन्त प्रसन्न, एव शान्त यमराजको आप परमातमामे स्थित सकल ( कलासहित या सगुण ) विकल ( कलारहित या निर्गुण ) कालरूप ब्रह्म, समझ कर अन्ततोगत्वा मे वहाँ उनके शरणागत हो जाऊँ ॥ २७९ ॥

भृत्येऽथ तच्चरणगे त्रिविधोक्तरूपा
दीक्षाऽपि सा भवति नाथ ! मयोपलभ्या ।
दृक्स्पर्शबोधमयरूपवती हिता या
सिद्धिं ददाति परमां गुरुतुष्टिकृद्भ्यः ॥ २८० ॥

नाथ ! ये सेवक इस तरह जब उनके चरणोकी शरण ग्रहण कर ले, तव इसे पूर्वोक्त सर्वहितकारिणी दीक्षा भी, जो दृग्दीक्षा, बोधदीक्षा और स्पर्शदीक्षाके रूपमे प्रसिद्ध है, मिल जानी चाहिये। जो साधक अपनी सेवासे गुरुको सन्तुष्ट कर पा लेते है, उन्हे यह दीक्षा परमसिद्धि प्रदान करती है ॥ २८० ॥

औद्दालकिः स इत एव विनिर्गताशः
सर्वं सुखेन समवाप्य शिवाश्रितोऽभूत् ।
सोऽहं न नाथ ! यमराडतिथिर्धृताश-
स्त्वय्यस्मि यद्यपि तथाऽपि लभेय दीक्षाम् ॥ २८१ ॥

नाथ ! उद्दालक पुत्र नचिकेता, जिनकी सारी अभिलाषाये समाप्त हो चुकी थी, यही से यमराजके पास गये और सुखपूर्वक सम्पूर्ण ज्ञान पाकर आप भगवान् शिवके आश्रित हो गये, परन्तु मै तो न यमराजका अतिथि हूँ, और न निष्काम ही। मैने तो आशा धारण कर रखी है, वह भी ससारके लिए नही, केवल आपके लिए। यद्यपि मै आशावान् हूँ, तथापि मुझे दीक्षा प्राप्त हो जाय ॥ २८१ ॥

काव्यं विलिख्य च कठोपनिषद्गतार्थं
पूर्णाहुतिप्रथितनाटकमप्यनर्हम् ।
न्यस्ते उभे स्व इह ये तदिमे गृहीत्वा
गत्वाऽन्तकाय विनिवेद्य तथा भवानि ॥ २८२ ॥

भगवन् ! इस प्रकार भूतलपर उसी कठोपनिषद् वर्णित अर्थसे युक्त "नाचिकेतसम्" नामक काव्य लिखकर और "पूर्णाहुति" नामसे प्रसिद्ध एक अनमोल नाटककी रचना करके, ये दोनो वस्तु मैने जो रख छोडी है, उन्ही दोनोको लेकर मै सयमनी पुरीमे जाऊँगा और यमराजको समर्पित करके नचिकेताके समान ही उनका कृपापात्र बन जाऊँगा । ॥ २८२ ॥

आज्ञा प्रदीयत उमेश ! किमत्र मह्य
छात्राय विश्वगुरुणा भवता तदाप्त्यै ।
प्राप्नोमि तामिह यदि त्वममुं प्रपश्ये—
र्गच्छेयमेवमधुनैव तदन्तिकं यत् ॥ २८३ ॥

उमावल्लभ ! आप जगद्गुरु है, मुझ अपने शिष्यको उक्त वस्तुकी प्राप्तिके लिए यहाँ आज्ञा दे रहे हैं क्या ? यदि आपकी आज्ञा हो गई तो मै अवश्य वह सिद्धि प्राप्त कर लूँगा । यदि आप इस सेवकको कृपा दृष्टिसे देख ले तो मै अभी यमराजके निकट जा पहुँचूँगा ॥२८३॥

त्वां कालकाल इति लोकजना ब्रुवन्ति
नैतद् ध्रुवं किमथवा प्रभुरेव सोऽस्मिन् ? ।
तत् सत्यमेव यदि चेत् स्वजनोऽयमस्यां
देव ! स्थितौ भगवता गुरुणाऽनुकम्प्यः ॥ २८४ ॥

देव ! ससारके लोग कहते है कि "आप कालके भी काल ( मृत्युञ्जय ) है ।" क्या यह ध्रुव सत्य नही है ? अथवा वे यमराज ही इस ससारमे सबसे बडे प्रभु हैं ? यदि पूर्वोक्त कथन सत्य है तो ऐसी स्थितिमे यह स्वजन आपका भक्त गुरुस्वरूप आप भगवान्‌के द्वारा दया करने योग्य है—अनुग्राह्य है ॥ २८४ ॥

पश्येयमत्र तदहं भगवन्तमेवं
तद्रूप एव विलसन्तमनन्तशक्तिम् ।
रज्ज्वामहेर्भ्रम इवाऽत्र भवन् विनश्येत्
तन्मद्भ्रमश्च, स यमो न भवेद् भवान् स्यात् ॥ २८५ ॥

मै वहाँ यमराजके रूपमे आप अनन्त शक्तिशाली भगवान् शिवको ही विलसित देखूँ । जैसे यहाँ रस्सीमे सर्पका भ्रम होता है और वह ज्ञान होने पर नष्ट भी हो जाता है, उसी प्रकार

मेरा वह यमराज रूपी भ्रम भी नष्ट हो जाय और आप ही उस भ्रमके अधिष्ठानभूत रज्जुकी भाँति वहाँ शेष रह जाय ॥ २८५ ॥

सैषा स्थितिर्भवति चेदिह नाथ ! सोऽयं
स्वर्गे तथैव नरके विगतः श्रितो वा ।
नो खिद्यते तदुरुदुःखभयान्न चाऽसौ
मोमुद्यतेऽप्सरस आप्य सुखेन वाऽऽसाम् ॥ २८६ ॥

नाथ ! यदि ऐसी स्थिति हो जाय तो आपका यह दास स्वर्गमे गया हो या नरकमे पडा हो, इसके लिए दोनो समान होगे । न तो यह नरकमे महान् दुःखके भयसे खिन्न होगा और न स्वर्गकी अप्सराओको पाकर उनके सुखसे अधिक आनन्दित ही होगा ॥ २८६ ॥

स्वामिन् ! मदीयकथनं किमिदं ह्यसत्यं
किं वा न सम्भवति चैतदिहैव काले ।
मन्येऽहमीश ! सकलं निमिषात् करोषि
कर्तुं ह्यकर्तुमपि शक्त उरुक्रमोऽसि ॥ २८७ ॥

स्वामिन् ! क्या यह मेरा कथन असत्य है, अथवा क्या यह भूतलमे ही इसी क्षण हो जाना सम्भव नही है ? ईश ! मै तो ऐसा मानता हूँ कि आप यह सब पलभरमे कर सकते हैं । क्यो कि आप करने और न करने मे भी समर्थ महान् शक्तिशाली जो हैं ॥ २८७ ॥

आवेदनं शृणु विभो ! पुनरेतदेकं
मल्लौकिका गुरव ईशगलोकनाथाः ।
मन्त्रान् समूचुरज ! यैस्तव कूटताया
रूपं विदृश्यत इहैवमहं व्यपश्यम् ॥ २८८ ॥

विभो ! फिर मेरा यह एक दूसरा निवेदन भी सुन लीजिये । मेरे लौकिक गुरु ईश्वर-भक्त लोकनाथ रेग्मी ( नेपाली ) ने मुझे उन मन्त्रोका उपदेश दिया है, जिनसे आपकी कूटता ( तटस्थता ) का रूप दिखाई देता है । अजन्मा प्रभो ! जिससे मैने भी यहाँ आपके उक्त स्वरूपका दर्शन किया है ॥ २८८ ॥

तैरेव भूय इह नाथ ! निदर्शितस्त्वं
चातुर्मुखीं स्वतनुमङ्ग ! शिलामयीं स्वाम् ।
धृत्वा तथा जड इवाऽत्र भवन् स्थितोऽप्य-
स्मद्देश एव मृड ! चिन्मय एव दृष्टः ॥ २८९ ॥

हे नाथ! आपने हमारे देश (नेपाल)मे शिलामयी चतुर्मुख-मूर्ति धारण कर रखी है तथा जडकी भाँति यहाँ विराजमान हो रहे है। वे ही आप उन्ही गुरुदेवके द्वारा मेरे अपने ही देशमे चिन्मय दिखाये और देखे गये है अर्थात् गुरुदेवकी कृपासे मुझे वह शिलामयी मूर्ति भी चिन्मयी दिखाई दी है ॥ २८९ ॥

जानासि विश्वमखिलं तदिदं च सत्यं
वेत्स्येव नाथ ! पुनरत्र विडम्बना का ? ।
तद्दर्शय स्वमिह मां मुहुरार्तशब्दै-
राक्रन्दमानमनिशं त्वदुरुन्तुदैस्तैः ॥ २९० ॥

हे नाथ! आप सम्पूर्ण विश्वको जानते है। अत यह मेरे इस सत्य कथनको भी जानते ही होगे, फिर यहाँ विडम्बना क्या है ? मै आपके मर्ममे पीडा पहुँचानेवाले आर्त शब्दो द्वारा निरन्तर क्रन्दन करता हूँ—रोता-विलखता हूँ। अत पुन मुझे यहाँ अपने स्वरूपका दर्शन कराइये ॥ २९० ॥

इत्थं विभो ! विलपितैर्बहुवारमेभिः
शब्दैर्विकर्णकटुमिर्निगमागमोक्ताः ।
ते त्वत्प्रियाः परिकरा विबुधाश्च शैवा
उत्का बभूवुरिह किन्तु भवांस्तु नाऽभूत् ॥ २९१ ॥

विभो! इस प्रकार मेरे बारम्बार विलाप किये गए और कर्णकटु शब्दोसे आपके निगमागम वर्णित प्रिय परिकर, देवता और शैवभक्त भी उकता गये हैं, परतु यहाँ आप ही को उकताहट नही हो रही है ॥ २९१ ॥

स्थाणुः शिलामय उमेश ! यथाविधो वा
स त्वं प्रभुर्भव यदिच्छसि तत्तथैव ।
नाऽहं त्यजामि भगवन् ! गुरुरूपिणं त्वां
दृष्टोऽसि यत्त्वमिह चर्मदृशा मयैव ॥ २९२ ॥

उमेश! आप स्थाणु ( ठूँठ ) हो या पत्थर, अथवा जैसे भी हो, सर्वसमर्थ हैं। अत जैसी इच्छा हो, वैसे ही रहे। कितु भगवन्! मै गुरुरूपी आपको छोड नही सकता। क्यो कि यहाँ मैने ही इन चर्मचक्षुओसे एकबार आपका जो दर्शन पा लिया है ॥ २९२ ॥

यद्वा भवान् विमनुते मम भारतीयं
व्यर्था मृषेति च विभो ! न तु तत्र शङ्क्यम् ।
शब्दो हि वेदमय एष तवोच्चशक्ते-
र्निश्वास एव स च मय्यपि यैस्तुतस्त्वम् ॥ २९३ ॥

सर्वव्यापी प्रभो ! अथवा आप ऐसा तो नही मानते कि मेरी यह वाणी व्यर्थ और मिथ्या है। यदि यह आपकी मान्यता हो तो ऐसी शङ्का उचित नही है। क्यो कि शब्द ही वेदमय है और यह वेद सर्वोच्च शक्तिशाली आप परमेश्वरका नि श्वास है। वही मुझमे भी है, जिसके शब्दो द्वारा मैने आपकी स्तुति की है ।। २९३ ।।

इत्थं मया निगमरूपविधृष्णुना त्वं
शब्देन तेन विषमेण विभुः स्तुतोऽसि ।
येन प्रभो! ससुखमेव निशा समस्ता
शस्ता कृताऽऽश्रितपरात्मगिराऽत्र वेत्सि ? ।। २९४ ।।

प्रभो ! इस प्रकार मैने उस विषम शब्द राशिके द्वारा निगमरूपधारी आप सर्वव्यापी प्रभुका स्तवन किया है। आप जानते हैं, मैने परमात्म-सम्बन्धिनी वाणीका आश्रय लेकर उसके द्वारा अपनी सारी रात सुखपूर्वक ही प्रशस्त बनायी है—सारी रात जगकर जो मैने आपकी स्तुति बनायी है, उससे मेरी रात्रि धन्य-धन्य हो गई है ।। २९४ ।।

तस्मादिमां मम गिरं प्रति निर्निमेषो
भूत्वा समीक्ष्य सदयं स्वरतिं निधेहि ।
त्वां प्रेक्षतेऽप्रतिम! वारविलासिनीव
कश्चिद्विटं श्रितपदाऽपि हरेरसौ हि ।। २९५ ।।

हे अनुपम शक्तिशाली प्रभो ! इसलिए मेरी इस वाणीकी ओर अपलक दृष्टिसे देखकर दयापूर्वक इसे अपना प्रेम प्रदान कीजिए। यद्यपि इसने भगवान् श्रीकृष्णके चरणोका आश्रय लिया है, तथापि जैसे कोई वाराङ्गना किसी विटकी ओर देखती है, वैसे ही यह आपकी ओर देख रही है ।। २९५ ।।

यद्दृश्यतेऽत्र भगवन्! स उरुर्विरोध—
स्त्वद्भक्तशैववरवैष्णवसम्प्रदाये ।
स्मृत्वा तदेव विषमामनयोः स्थितिश्च
बुद्ध्वा विविच्य भज मां शिव! योऽस्मि शैवः ।। २९६ ।।

भगवन् ! यहाँ जो आपके भक्त शैवो और श्रेष्ठ वैष्णवोके सम्प्रदायमे जो महान् विरोध दिखाई देता है, उसको याद करके और इन दोनोकी विषम स्थितिको समझकर विवेकपूर्वक मुझे अपनाइये। क्यो कि हे शिव ! मै जो भी हूँ, शैव ही हूँ ।। २९६ ।।

शैवोऽस्मि नाऽहमघहन्! गदितं मृषा मे
दुष्टं ह्यभूदहह! वैष्णव एव सोऽस्मि।
अत्रापि हन्त! लपितं न मया सुचारु
स्वामिन्! क्षमस्व तदुभौ श्रित एव सोऽस्मि॥ २९७॥

पापहारी प्रभो! मै शैव नही हूँ। मैने जो अपनेको शैव कहा है, मेरा यह कथन दूषित और मिथ्या हो गया। अहह! मै तो वैष्णव ही हूँ। परन्तु खेद है कि यहाँ भी मैने सुन्दर बात नही कही। स्वामिन्! इसके लिए क्षमा कीजिए। वस्तुत मै शैव और वैष्णव दोनोका ही सेवक हूँ॥ २९७॥

छायामिवेह भगवन्! बहुरूपिणीं तां
मायां विगृह्य परतत्त्वमयोऽपि च त्वम्।
स्वात्मानमेव शिवविष्णुविभेदकेषु
रूपेष्वहो! यदिह दर्शयसि स्वभक्तान्॥ २९८॥

भगवन्! छायाकी भाँति, जो यहाँ बहुरूपिणी माया है, उसीको ग्रहण करके पर-तत्त्वस्वरूप होते हुए भी आप अपने आपको ही शिव, विष्णु आदि विभेदक रूपोमे अपने भक्तोको दिखाते हैं, यह कैसा आश्चर्य है?॥ २९८॥

मह्यं न रोचत इदं तव तद्विनोदो
ह्यस्मान् विरोधयति यन्मिथ आत्ममूढान्।
अद्वैततत्त्वपरिनिष्ठितसम्प्रदाया
धन्या हि ते सकलधर्मसमत्वदायाः॥ २९९॥

प्रभो! मुझे आपका यह विनोद—मायाका आश्रय ले अभेदमे भेदका दर्शन कराना बिल्कुल ही नही रुचता है। क्यो कि आत्मज्ञानमे मूढ हम मनुष्योमे आप इस विनोदके द्वारा परस्पर विरोध उत्पन्न कर देते हैं। वे अद्वैततत्त्वमे परिनिष्ठित सम्प्रदाय ही धन्य है, जो समस्त धर्मोमे समताकी स्थापना करते है॥ २९९॥

अद्वैततत्त्वमिदमव्ययमेकरूपं
सत्यं सनातनमनन्तमपौरुषेयम्।
एतत् कदापि भवतीह न संप्रदाय—
स्तेभ्यस्त्वयैव विहितो हि सृतेर्हि दायः॥ ३००॥

भगवन्! यह अद्वैत-तत्त्व अविनाशी, एकरूप, सत्य, सनातन, अनन्त और अपौरुषेय है। यह कदापि सम्प्रदाय नही हो सकता। यह तो आपके द्वारा ही विहित वैसे ही लोगोके लिए सन्मार्गका दर्शन है॥ ३००॥

स्वामिन् ! पुरा जगति धर्म विलोप एत्य
साक्षात् त्वमेव शिव ! शङ्कर एव भूत्वा ।
सर्वं चकर्थ विषमं सममेव धर्मं
तत् किं ? नवानमयनं त्विदमन्यदास्ते ? ॥ ३०१ ॥

स्वामिन् ! पूर्वकालमे जब जगतके भीतर धर्मका लोप होने लगा था, उस समय हे शिव ! साक्षात् आप ही शंकराचार्य होकर यहाँ आए और आपने उस समय समस्त वैषम्यपूर्ण धर्मको सम बनाया । क्या यह अद्वैत नही है ? क्या यह कोई दूसरा नवीन मार्ग है ? ॥ ३०१ ॥

आचार्यशङ्करशरीरगतस्वरूप–
स्त्वं तत्र भट्टवर-मण्डनमिश्रमुख्यान् ।
अन्यांस्तदन्यपथगांश्च विधर्मिणस्तान्
द्वैतान् विजित्य स्वमतानुगतानकार्षीः ॥ ३०२ ॥

प्रभो ! आचार्य शङ्करके शरीरमे आत्मारूपसे विद्यमान आपने ही भट्टप्रवर कुमारिल एव मण्डन-मिश्र आदि विद्वानोको तथा उनसे भिन्न मार्गपर चलनेवाले अन्यान्य विरुद्ध-धर्मी द्वैतवादियोको जीतकर सबको अपने मतका अनुगामी—अद्वैत पथका पथिक बना लिया ॥ ३०२ ॥

तस्मात् प्रभो ! ससुखमत्र तमेव धर्मं
ह्याश्रित्य चात्मरत एव विलेखनीं स्वाम् ।
इत्थं प्रचाल्य तव सन्नुतिमेव गीत्वा
भूत्वैव शैव उरुगाय ! हरिं गतः स्याम् ॥ ३०३ ॥

इसलिये उरुगाय ! बहुसख्य जनोसे स्तुत प्रभो ! मै यहाँ सुखपूर्वक उसी धर्मका आश्रय ले आत्मरत होकर ही इसीप्रकार अपनी लेखनी चलाता हुआ आपकी उत्तम स्तुतिका ही गान करके शैव, होता हुआ ही श्रीहरिका शरणागत होऊँ ॥ ३०३ ॥

अन्या गतिर्मम विभो ! न भवेद्विना त्वां
सैकाऽस्तु गीस्त्वदनुगा सुमतिश्च सा स्यात् ।
सर्वस्वमेव मम या तदिमाश्च माश्च
प्रेक्षस्व चाऽद्य, किमुमेश ! सुवीक्षितेति ? ॥ ३०४ ॥

विभो ! आपके सिवा दूसरी कोई मेरी गति न हो। एकमात्र वह वाणी तथा वह उत्तम बुद्धि ही मेरा अवलम्ब रहे, जो आपमे लगी हुई हो । उमेश ! यह वाणी मेरा ही सर्वस्व

है। आप इसको और मुझको आज अपनी कृपा दृष्टिसे देखिये। क्या कहा ? अच्छी तरह देख लिया। ॥ ३०४॥

**धन्योऽस्मि भो ! तदहमद्य बुधैः प्रशस्यो**
**जातस्तथाऽबुधवरैस्तु विनिन्द्य एवम् ।**
**जाता तथैव मम वाक् च तव प्रियेव**
**धिक् तान् ! ब्रुवन्त्यविहतेयमितः प्रयाति ॥ ३०५ ॥**

यदि ऐसी बात है तो भगवन् ! आज मै धन्य हो गया। विद्वानोकी प्रशसाका पात्र बन गया। तथा इसी प्रकार मूर्खोसे विनिन्दनीय हो गया। मेरी वाणी भी आपकी प्रिया ललित-त्रिपुरसुन्दरी जैसी ही हो गयी, और उन निन्दकोको धिक्कार देती हुई अप्रतिहत गतिसे आगे बढ रही है ॥ ३०५ ॥

**तस्मादुपस्तुहि सरस्वति ! सत्पतिं तं**
**सूक्तैर्यथाविभवमाप्नुहि तत्त्वजातम् ।**
**स्याच्छोभनं तदितरद्ध्यथवा निकामं**
**वामं प्रसन्नमनसं कुरु तं प्रकामम् ॥ ३०६ ॥**

इसलिये हे मेरी सरस्वती ! ( हे मेरी वाणी ! ) अब तुम अपने श्रेष्ठस्वामी भगवान् शङ्करका अपने वाग्वैभवके अनुसार सूक्तियो द्वारा स्तवन करो और उन प्रभुसे तत्त्वज्ञान प्राप्त करो। भले ही तुम्हारा वाग्वैभव सुन्दर हो, या असुन्दर हो अथवा निकम्मा हो। उसीके द्वारा तुम इच्छानुसार भगवान् वामदेवको प्रसन्नचित्त करो ॥ ३०६ ॥

**स्त्रीलिङ्गगा त्वमसि वाङ् ! मम यादृशी स्या-**
**स्त्वां तादृशीं स्मरति सोऽपि विभुर्यतोऽसौ ।**
**नास्त्यत्र तस्य कुमती रुचिरेयमेषा**
**गर्ह्येति पूर्वमसृजद्विविधा यतस्ताः ॥ ३०७ ॥**

मेरी वाणी ! तुम स्त्रीलिङ्ग शब्दोमे परिगणित हो। जैसी भी क्यो न हो, उसी रूपमे भगवान् शङ्कर तुम्हारा स्मरण करते है। उनके मनमे ऐसी कुबुद्धि नही है कि यह सुन्दर भाषा है अथवा निन्दनीय असुन्दर भाषा है। क्योकि उन भगवान्ने स्वय ही पूर्व-कालमे विविध भाषाओकी रचना की थी ॥ ३०७ ॥

**धन्याऽसि वाणि ! मम शान्तिसुखाऽब्धिमग्ना**
**सार्था त्वमेव भवसिन्धुरसेऽपि भग्ना ।**
**या त्वं प्रशंससि वरं स्ववचःकटाक्षै-**
**र्भित्वाऽपि मर्म वरदं शरवन्निखातैः ॥ ३०८ ॥**

मेरी वाणी ! तुम धन्य हो, क्योकि भवसागरके रसमे डूबी रहनेपर भी तुम भगवान् शङ्करके गुणचिन्तन एव जय गान सुखके समुद्रमे मग्न होकर अपना जीवन सार्थक कर रही हो। अपने वचनरूपी तीक्ष्ण कटाक्षोसे, जो वाणोकी भाँति धस गये हैं, मर्म भेदकर—अपने श्रेष्ठ वर वरदायक भगवान् शम्भुकी प्रशसाकर रही हो, मर्मस्पर्शी वचनो द्वारा प्रभुके गुण गा रही हो ॥ ३०८ ॥

आश्रित्य हीन्द्रियगणान् मम भारतीं त्वां
यावद्रतिं प्रकुरुते त्वयि वीक्षमाणः।
तावत्त्वयैव कुटिले ! स विभुः सरागः
स्वीयैः कठोरवचनैः क्रियते विरागः ॥ ३०९ ॥

अपने इन्द्रिय वर्गका आश्रय ले भगवान् शङ्कर मेरी वाग्रूपा तुम सरस्वतीकी ओर देखकर जबतक तुममे अनुराग या प्रेम करते हैं, तबतक ही हे कुटिले ! तुम अपने कठोर वचनोसे उन सानुराग प्रभुको विरक्तकर देती हो ॥ ३०९ ॥

स्वात्मानमत्र परिधेहि यतः परात्मा
पश्येत् सतां च तव चाऽव्यय ईश आत्मा।
किं तेन नीरसगिरा गदितेन देवि !
यद् द्रावयत्युपलमेव न सार्थमेनत् ॥ ३१० ॥

इसलिये जो सत्पुरूषोके और तुम्हारे अविनाशी ईश्वर और आत्मा हैं, उन्हीमे अपनी आत्माको स्थापितकर दो। जिससे वे परमात्मा तुम्हे देखे। देवि ! नीरस वचन द्वारा किया गया उस भाषणसे क्या लाभ, जो पत्थरको भी पिघला न दे। वह भाषण तो व्यर्थ ही है ॥ ३१० ॥

शक्तिं समाहर निदर्शय रूपमग्र्यं
व्यामोहयाऽत्र जगतां पतिमात्मनैव।
साकार ईश इह वाणि ! तवेष्टपूर्तिं
शीघ्रं करोति स विभुर्यत आशुतोषः ॥ ३११ ॥

वाणी ! तुम शक्ति एकत्र करो और अपना अत्यन्त सुन्दर रूप दिखाओ। अपने उस स्वरूपसे ही यहाँ जगदीश्वर शिवको लुभा लो। वे साकार ईश्वर शीघ्र ही यहाँ तुम्हारे अभिलषित मनोरथकी पूर्ति करेगे। क्योकि वे भगवान् आशुतोष जो ( शीघ्र प्रसन्न होनेवाले ) हैं ॥ ३११ ॥

तद्व्याहराऽत्र गुणलुब्धमनास्त्वमेवं
तं त्वत्पतिं विभुमनेकगुणेषु लुब्धम्।
मूलं श्रिताऽसि च सहस्रदलं श्रितोऽसौ
वाणी परा त्वमसि सोऽस्ति परो वरोऽसौ ॥ ३१२ ॥

तुम्हारा मन उनके गुणोपर लुब्ध है। और वे प्रभु भी तुम्हारे अनेक गुणोपर लुब्ध हैं। अत तुम अपने पति उन परमेश्वर शिवकी महिमाका बखान करती रहो। तुम मूलाधारमे स्थित हो और वे सहस्रदल कमलसे उपलक्षित सहस्रारचक्रका आश्रय लिये बैठे हैं। तुम परा वाणी हो और वे परं वर ( स्वामी ) है ॥ ३१२ ॥

तत्संगमोऽस्तु युवयोः शिवयोः शिवाय
योगेन सुन्दरतरो भवतारणाय ।
गन्धं धरेव धरताद् भवती पतिं तं
गन्धो धरामिव धरेद् भवतीं सतीं सः ॥ ३१३ ॥

तुम दोनो शिवरूप हो। तुम्हारा यह समागम लोककल्याणके लिए हो। यह सम्बन्ध योग्यताकी दृष्टिसे अत्यन्त सुन्दर तथा ससार-सागरसे लोगोको पार करनेवाला हो। जैसे पृथ्वी गन्ध धारण करती है उसी प्रकार तुम अपने उन परम-पतिको धारण करो और जैसे गन्ध तन्मात्रा पृथ्वीको धारण करती है उसी प्रकार वे भगवान् तुम जैसी सतीको धारण करे ॥ ३१३ ॥

पत्न्यो यथेह परितः स्वपतिं श्रयन्ते
कुर्वन्ति मुग्धमनसं श्लथशब्दवाक्यैः ।
तद्वच्छुभे ! त्वमपि तं पशुपं पशोर्मे
त्रातारमद्य कुगिराऽपि सुखं स्तुवीहि ॥ ३१४ ॥

शुभे ! जैसे इस लोकमे अनेक पत्नियाँ सब ओरसे अपने पतिका ही आश्रय लेती हैं, और शिथिल शब्दवाले वचनो—टूटे-फूटे वाक्यो द्वारा भी उस पति देवताके मनको मुग्ध कर देती है। उसी प्रकार तुम भी मुझ पशुका उद्धार करनेवाले उन पशुपतिनाथका आज अपने शिथिल शब्दो द्वारा भी सुखपूर्वक स्तवन करो ॥ ३१४ ॥

पूर्वोक्तनिर्गुणगुणान् विगुणा मनुष्या
नित्यं स्तुवन्ति सुखमाप्तुमनेकमन्त्रैः ।
किं प्राप्नुवन्ति सरले ! तत ईश्वरस्ते
स्वं निर्गुणत्वगुणमेव ददाति तद्वत् ॥ ३१५ ॥

मेरी सीधी-साधी वाणी ! ससारके बहुतेरे गुणहीन मनुष्य, गुणहीनता ही जिनका गुण है, ऐसे पूर्वोक्त मनुष्योका सदा सुख पानेकी आशासे अनेक मन्त्रो ( गुप्तभाषण, स्तुतिकरण, मिथ्याप्रशंसन आदि ) से स्तवन करते है। किन्तु वे उनसे पाते क्या है ? वही न कि उनकी गुणहीनता। इसी तरह वे जगदीश्वर शिव भी तुम्हारे स्तुतिसे प्रसन्न हो, तुम्हे अपनी निर्गुणताका ही गुण देगे। ( इसका फल यह होगा कि तुम मुक्त हो जाओगी ॥ ३१५ ॥

सन्तीह दिव्यपुरुषाः कति किन्तु तान् के
जानन्ति निर्गुणगुणैः पिहिताः स्वयं ते ।
सम्प्रेक्ष्य भूतमत ईशपदानुगांस्तान्
संस्थाप्य चान्त इह तद्गुणितां श्रय त्वम् ॥ ३१६ ॥

इस ससारमे कतिपय दिव्य पुरुष हैं, परन्तु उन्हे जानते कितने लोग हैं ? क्योकि उन्होने स्वय अपने आपको अपने, निर्गुणगुणोसे ढक रक्खा है । अत भूतकाल पर दृष्टिपात करके ईश्वर शिवके चरणारविन्दोके जो अनुगामी भक्तजन हैं, उनको अपने सामने रखकर– उन्हीके आदर्शपर चलकर यहाँ अन्ततोगत्वा उन्हीके गुणका आश्रय लो । उन्हीकी भाँति भगवद्भजनका गुण अपना लो ॥ ३१६ ॥

स्यात् येन वाणि ! तव सुन्दरमेव सर्वं
रूपं प्रसादगुणजं ध्वनिभूषितञ्च ।
चित्रं ह्यलङ्कृतिभिरेव मनोहरश्चेत्
तर्हीह दोषयुजि च त्वयि रज्यतेऽसौ ॥ ३१७ ॥

वाणि ! जिससे तुम्हारा सब कुछ सुन्दर ही हो जाय, ऐसा करो ! । यदि तुम्हारा रूप, प्रसाद गुणसे युक्त हो, उसे ध्वनि विभूषित करे और अनेकानेक अलकारोसे विचित्र शोभा धारण कर यदि वह अत्यन्त मनोहर हो जाय तो ( श्रुतिकटु आदि ) कतिपय दोषोसे युक्त होने पर भी तुममे वे प्रभु अवश्य अनुरक्त होगे ॥ ३१७ ॥

किं काङ्क्षसेऽत्र विषमे ! त्वयि विश्वरूपो
हृष्टः स्वयं भवति चेदहहाऽसि धन्या ।
दिव्या नवाम्बरधरा ग्रहमाल्यदीप्ता
चान्द्री कलेव जयतात् तव भूतिरेषा ॥ ३१८ ॥

अरी विषम स्वभाव वाली मेरी वाणि ! यदि तुम पर विश्वरूप प्रभु स्वय प्रसन्न हो जायँ तब तो अहा ! हा ! तुम धन्य हो गयी । फिर तुम्हे यहाँ और क्या चाहिये ? यह जो तुम्हारी दिव्य विभूति है, वह नवाम्बर धारिणी ( नित्य-नूतन आकाश अथवा नई साड़ी, धारण करने वाली ) तथा ग्रह-नक्षत्ररूप मालाओसे उद्दीप्त, चन्द्रकलाकी भाँति सर्वोपरि विराजमान हो ॥ ३१८ ॥

विद्वांस उन्नतहृदो रसपानमत्ता
मत्ता भवन्ति यदि तेऽत्र गुणेषु सक्ताः ।
दुष्टाः खलास्तु विहसन्ति गुणेष्वसक्ता
रक्ताः प्रियेषु विहसन्तु, वयन्तु भक्ताः ॥ ३१९ ॥

वाणी ! यदि यहाँ तुम्हारे गुणोमे आसक्त होने वाले उदार हृदय विद्वान् रसपानसे मत्त होकर मस्त हो जाते है तो यह तुम्हारे लिए गौरवकी बात है। परन्तु जो दुष्ट स्वभाव-वाले खल हैं, वे तो गुणोपर रीझते नही है, मन चाहे भोगोमे रचे-पचे रहते हैं। अत वे हँसते है तो हँसे, हमलोग तो उनके भक्त ही है ॥ ३१९ ॥

ते तद्विधाः सुगुणिनः सुधियोऽपि देवि !
त्वां निर्गुणामपि निरीक्ष्य दृढाऽनुमेयाम् ।
धुन्वन्त आत्मशिर ईशरतेति मत्वा
स्निह्यन्ति चेज्जयसि भो ! भज तानपि त्वम् ॥ ३२० ॥

हे देवि ! वैसे उत्तम गुणवाले शुद्ध-बुद्धिसे युक्त विद्वान् तुम्हे गुण-शून्य देखकर भी जब दृढता-पूर्वक यह अनुमान कर लेगे कि यह ईश्वर-शिवमे अनुरक्त है, तो अपना शिर हिलाते हुए तुम पर स्नेह करने लगेगे। यदि ऐसा हुआ तो वाणि ! तुम्हारी विजय है। फिर तो तुम उन गुणग्राही सज्जनोको भी अपनाओ—कृपापात्र बनाओ ॥ ३२० ॥

तत्पश्य नाथ ! मम वागसमस्वभावा
त्वां पश्यतीह कृतपादरतिः सरागा ।
सान्निध्यमाप्तुमसमं विषमे भवाब्धौ
स्वैरेव कर्मनिवहैर्मृड ! पातिता हा ! ॥ ३२१ ॥

नाथ ! जगदीश्वर शिव ! देखिये, मेरी विषम स्वभाववाली वाणी आपके चरणोमे प्रेम रखकर, आपके प्रति अनुरक्त होकर आपकी ओर देख रही है। तथा आपका अनुपम सान्निध्य प्राप्त करना चाहती है। हाय ! इसे अपने ही कर्मसमूहोने विषम भव-सागरमे गिरा दिया है ॥ ३२१ ॥

नोचेत् प्रभो ! गतिमती न ममाऽत्र केचित्
किं वर्णयामि च मनोवचनातिगेऽपि ।
वागेव न स्फुरति काव्यकलानिबन्धे
का शक्तिरीश ! मम कृष्णगुणाऽनुबन्धे ॥ ३२२ ॥

प्रभो ! यदि ऐसा न होता तो मुझे अधिक कठिनाई नही होती। इस कार्यमे न कोई मेरी गति है, न मति है। फिर मै क्या वर्णन करूँगा। जो मन और वाणीकी पहुँचसे परे है, उस अतर्क्य विषयमे मेरी तो वाणी ही नही स्फुरित होती है। हे ईश्वर ! जब काव्य-कला निबन्धमे ही मेरी कोई शक्ति नही है तो साक्षात् भगवान् श्रीकृष्णके गुणानुबन्धमे मेरा कैसे वश चल सकेगा ? ॥ ३२२ ॥

एकैकवर्णमिह शब्दमयं गृहीत्वा
भूत्वा च भिक्षुरिव नाथ ! कृतोञ्छवृत्तिः ।
प्राप्स्ये कदाऽहमथ सत्कविशक्तिगम्यां
तृप्तिं परां श्रमहरां मृड ! मूढवृत्तिः ॥ ३२३ ॥

हे नाथ ! हे मृड ! जैसे कोई उच्चकोटिका भिक्षु उञ्छवृत्तिसे जीवन निर्वाह करता है, उसी प्रकार मूढ-वृत्तिवाला मै शब्दमय एक-एक वर्णका सग्रह करके काव्य लिखकर उत्तम कवियोकी शक्तिसे प्राप्त होनेवाली तथा जन्म-मरणका क्लेश हर लेने वाली परा-तृप्तिको कैसे प्राप्त कर सकूँगा ? ॥ ३२३ ॥

ईदृग्विधस्तु विषयो विबुधैरुपास्य-
स्तैरेव गम्य इह देववराऽत्र भाष्यः ।
मत्तुल्यशक्तिविभवो मनुजो महेश !
कर्तुश्च चिन्तनमपीह न योग्य ईश ! ॥ ३२४ ॥

देवेश्वर महेश ? ऐसा विषय—भगवत्सम्बन्धी काव्यका निर्माण तो विबुधो (विद्वानो तथा देवताओ) के लिये उपास्य है—वे ही इसे कर सकते है। वे ही इसको समझ सकते हैं तथा वे ही इस पर विशद-व्याख्या लिख सकते है। जिसकी शक्तिका वैभव मेरे समान है, वह मनुष्य तो इस विषयके चिन्तनका भी अधिकारी नही है। फिर वह इसके निर्माणमे समर्थ कैसे हो सकता है ? ॥ ३२४ ॥

वाल्मीकिरस्मि न विभो ! न च शक्तिसिन्धु-
र्व्यासोऽस्मि, तौ हि कृतिनौ भृतशब्दसिन्धू ।
यस्मै ददौ वरमभीष्टमसौ विधाता
प्रापाऽन्य ईशगतियोगमभूच्च धाता ॥ ३२५ ॥

प्रभो ! न तो मै आदिकवि वाल्मीकि हूँ और न शक्तिका समुद्र व्यास ही हूँ। उन दोनो पुण्यात्मा पुरुषोने तो शब्दका महासागर ही धारणकर रखा है। इनमेसे पहले अर्थात् वाल्मीकिको साक्षात् विधाता ब्रह्माने काव्य-निर्माणके लिये अभीष्ट वरदान दिया था और दूसरे व्यासजी ईश्वरीय-गति योग पाकर स्वय धाता बन गये ॥ ३२५ ॥

साक्षात् तवैव शमदस्य जगद्गुरस्य
पार्श्वेस्थितस्य कवि-भट्ट-जगद्धरस्य ।
दासोऽस्म्यहं शृणु विभो ! भवतोऽपि मह्यं
सोऽसौ प्रियो गुरुतरश्च कृतः सहायः ॥ ३२६ ॥

मै तो ऐसा नही हूँ। आप सबको शान्ति प्रदान करनेवाले तथा जगत्को धारण करनेवाले हैं। आपके ही पार्श्वभागमे स्थित जो कवि शिरोमणि जगद्धर-भट्ट है, उनका मै दास हूँ। प्रभो! सुनिये। मै उन्हे आपसे भी बढकर प्रिय एव गुरुतर सहायक बना चुका हूँ॥ ३२६॥

प्राप्तोपदेश इह तत्स्तुतिकाव्यतोऽहं
भूत्वैकलव्य इव सद्गुरुमाश्रयंस्तम्।
अग्रेसरोऽभवमहो! हरिकाव्यबन्धे
लुब्धो यथा मृड! मृगो मृगनाभिगन्धे॥ ३२७॥

दूसरोको सुख पहुँचानेवाले शिव? उन्ही जगद्धर-भट्टके "स्तुतिकुसुमाञ्जलि" नामक स्तोत्र-काव्यसे उसी तरहका स्तुति-काव्य लिखनेके लिए उपदेश या प्रेरणा पाकर मै एकलव्य जैसा बन गया हूँ और उन्हीको सद्गुरु मानता हुआ मै यह "हरिकाव्यबन्धन प्रबन्ध" लिखनेमे अग्रेसर हो गया हूँ। जैसे मृग अपनी ही नाभिसे उत्पन्न होनेवाली कस्तूरीकी सुगन्ध पर लुभाया रहता है, उसी प्रकार मै भी इस हरिकाव्य-प्रबन्धपर लट्टू हो रहा हूँ॥ ३२७॥

अस्त्यत्र वाच्यमघहन्! क्व च तत्कवित्वं
अस्मानमेव सरसं प्रकरोति यद्धि।
स्थाणुं तथाऽङ्कुरयतीह दयाऽङ्कुरं यच्—
छ्रुत्वैव चेतनमचेतनवद्विभाति॥ ३२८॥

पापहारी प्रभो! यही मुझे आपसे कुछ कहना है। कहाँ जगद्धर-भट्टका वह कवित्व जो पत्थरको भी पिघला देता है, तथा आप जैसे स्थाणुको भी दयामय अङ्कुर उत्पन्न करनेके लिए विवश कर देता है। जिस काव्यको सुनते ही चेतन भी आत्मविभोर होकर जडवत् बन जाता है॥ ३२८॥

धन्या हि सा रसवती कविगी प्रगल्भा
या वल्लभा प्रियपदाब्जरता सुधाभा।
पश्यन्ति ये सुमनसोऽपि तदीयरूपं
कुर्वन्ति हेति च निरूप्य निजं कुरूपम्॥ ३२९॥

धन्य है, उन भक्तराज महाकविकी वह वाणी, जो प्रगल्भा होकर भी रसवती है। जो आप प्रियतमके चरणविन्दोमे रत होकर आपकी वल्लभा बन गई है। तथा जो सुनने या पढनेमे अमृतके समान मधुर लगतो है। जो विद्वान् अथवा देवता उस काव्यके सुन्दर रूपको देखते हैं, वे अपने काव्यकी कुरूपता पर दृष्टि डालकर "हा धिक्!" कर बैठते हैं॥ ३२९॥

शब्दैर्विचित्रपदवाक्यमयैर्मनोज्ञै—
रर्थैर्निसर्गमधुरैर्गुरुतां श्रितैस्तै ।
निर्माय काव्यमिह येन समर्प्य गीत्वा
त्वं नर्तितः स्मरसि मत्त इवाऽत्र भूत्वा ॥ ३३० ॥

भगवन् ! क्या आपको स्मरण है कि जगद्धर भट्टने विचित्र पद-वाक्य-विन्याससे युक्त सुन्दर शब्दो तथा स्वभावत मधुर एव गौरवपूर्ण अर्थोसे काव्यका निर्माण करके आपको समर्पित किया, गाकर सुनाया और आप मतवालेसे होकर नाच उठे थे ॥ ३३० ॥

का वा कथाऽत्र मम नाथ! सरस्वतीयं
नैतादृशी रसवती दधती सुधां न ।
शब्दार्थभारभरिता न तथा सुरीतिः
प्रीतिश्च कर्तुमसमेह सुलक्षणा न ॥ ३३१ ॥

नाथ ! यहाँ मेरे विषयमे क्या कहना है । मेरी यह सरस्वती न तो वैसी रसवती है और न सुधाका माधुर्य ही धारण करती है । विलक्षण शब्दो और अर्थोके भारसे भरी हो, ऐसी बात भी नही है । तथा वैसी उत्तम रीति ( पदसघटना ) भी नही है । इसमे कोई उत्तम लक्षण भी नही है । ऐसी दशामे यह आपसे प्रीति करनेके सर्वथा अयोग्य है ॥ ३३१ ॥

कृष्णं श्रिता तव पदाब्जरतिः कुरूपा
दोषोज्ज्वला कुपथगा युवती सतीव ।
त्वां प्राप्तुमद्य भवभीतिहरं वरं सा
ह्याकाङ्क्षते पदमिवेश्वर! किङ्किणीव ॥ ३३२ ॥

मेरी सरस्वती कुरूपा है । इसने कृष्णका आश्रय लिया है तथा यह प्रेम करती है आप भगवान् शिवके चरणारविन्दोसे यह गुणोसे नही, दोषोसे ही उजागर है । जैसे कोई सती युवती कुपथगामिनी हो जाय, उसी तरह यह मेरी वाणी उत्तम मार्गसे भ्रष्ट है । तथापि हे ईश्वर ! जैसे किङ्किणी ( करधनी ) अपने लिए उचित स्थान ( कटि प्रदेश ) को चाहती है, उसी प्रकार यह भवभयहारी वरके रूपमे आपको पानेकी अभिलाषा रखती है ॥ ३३२ ॥

सैषा च मे तरुशिखास्थितजन्ममृत्यु—
संहारकाणि सुफलानि भवन्मयानि ।
प्राप्तुं स्पृहा बलिसमं द्विज-वामनस्त्वां
याचेऽत्र भो! सफलबाहुरहं भवेयम् ॥ ३३३ ॥

यह मेरी स्पृहा तो देखिये, वृक्षोकी ऊँची शिखा पर लगे हुए उत्तम फलोके समान जन्म-मृत्यु भयहारी सुफल, जो आप भगवान् शिवके स्वरूपसे अभिन्न है, मै पाना चाहता हूँ तथा जैसे द्विज वटुक वामनने बलिसे याचना की थी, उसी प्रकार मै आप—जैसे दानीसे याचना कर रहा हूँ। हे भगवन्! मैने जो याचनाके लिए हाथ फैलाये है, यह व्यर्थ न जाय। मै सफलबाहु हो जाऊँ।। ३३३ ।।

**नीहारविन्दुभिरहं भरणं पयोधेः**
**कुर्वन् विभौ स्थिरमतिः सफलो भवामि।**
**दीपैर्हृषीकगणतैलनिषेकपूर्णैः**
**सूर्यप्रभामपि समुज्ज्वलयामि मूढः ।। ३३४ ।।**

प्रभो! ओसकी बूँदोसे महासागरको भरनेकी चेष्टा करता हुआ मै आप भगवान्मे अपने बुद्धिको दृढता पूर्वक स्थापित कर रहा हूँ। और सोचता हूँ कि इस कार्यमे सफल हो जाऊँगा। इन्द्रियवर्गरूपी तैलविन्दुओसे भरे हुए दीप जलाकर मै उनके द्वारा सूर्यकी प्रभाको भी अत्यन्त उज्ज्वल बनानेकी चेष्टा कर रहा हूँ। कैसा मूढ हूँ ?।। ३३४ ।।

**संदर्शयाम्यहमजं पुरुषं परेशं**
**तन्निर्गुणं ह्यपि गृहीतगुणाऽनुबन्धम्।**
**गीर्वाणवाक्यविदुषां हृदयारविन्दे**
**तं स्थापयामि निरवद्यगुणैश्च वन्द्यम् ।। ३३५ ।।**

जो अजन्मा, अन्तर्यामी तथा प्राकृत-गुणोसे रहित साक्षात् परमेश्वर हैं, उन्ही भगवान्को मै गुणोके बन्धनसे बँधा हुआ दिखाऊँगा। अनवद्य ( अनिन्द्य ) गुणोसे वन्दनीय उन भगवान् श्रीकृष्णको मै सस्कृतभाषाके विद्वानोके हृदयारविन्दपर स्थापित करूँगा।। ३३५ ।।

**मत्साहसं तु जयतीदृशमत्र नाथ!**
**तट्टिट्टिभोऽस्मि विधरामि खमापतेच्चेत्।**
**उत्क्षिप्तके पदयुगे च मयान्तरिक्षे**
**यद्व्यापृतोऽस्म्यहमशक्यनिबन्धबन्धे ।। ३३६ ।।**

मेरे इस दुस्साहस की जय हो। नाथ! मै टिट्टिभ हूँ और पैर ऊपर करके इसलिए पडा हूँ कि यदि आकाश गिरे तो उसे मै इन पैरोपर ही रोक लूँगा। मैने भी आकाशमे पाँव उठा रखे हैं, जब कि ऐसे अशक्य निबन्धको लिपिबद्ध करनेके व्यापारमे मै लगा हुआ हूँ।। ३३६ ।।

धृष्टं मया निगदितं मृड ! यत्र तत्र
दुर्वाच्यमार्तमनसाऽनुपयुक्तमत्र ।
क्षान्त्वा दयस्व गुरुताञ्च सुधाञ्च सिञ्च
गृह्णीष्व पादपतनं गुरुदक्षिणाञ्च ॥ ३३७ ॥

हे मृड ! मेरा मन आर्त होनेके कारण मैने इस काव्यमे यत्र-तत्र कई धृष्टतापूर्ण, दुर्वाच्य तथा अनुपयुक्त बाते कह डाली हैं। उन्हे क्षमा करके मुझपर दया कीजिये। अपनी गुरुताकी सुधासे मुझे सीचिये और गुरु-दक्षिणाके रूपमे अपने चरणारविन्दोमे मेरा साष्टाङ्ग प्रणाम ग्रहण कीजिये ॥ ३३७ ॥

शान्तं प्रसन्नतरमद्य मनो मदीयं
यस्मान्मयाऽनुमितमीश ! भवान् प्रसन्नः ।
वर्धस्व गच्छ पथि लब्धधनः सुखी स्याः
शृण्वन्निदं हृदि वचोऽस्मि सुखाब्धिमग्नः ॥ ३३८ ॥

हे ईश ! आज मेरा चित्त अत्यन्त प्रसन्न एव शान्त है। क्योकि मैंने अनुमान कर लिया है कि आप मुझपर प्रसन्न है। मै अपने हृदयमे आपका यह आशीर्वचन सुन रहा हूँ कि "तुम उत्तरोत्तर बढो, अपने रास्तेपर चलते रहो और अपने हृदय-धन श्रीकृष्णको प्राप्त करके सुखी हो जाओ।" यह आशिर्वाद सुनकर मै सुखके सागरमे मग्न हो गया हूँ ॥ ३३८ ॥

तस्माद्विभो ! प्रकृतमेव निरीक्षमाणः
सञ्जातगद्गदवचाः पदयोः पतामि ।
धन्यो दयानिधिरतुल्यगुणो महात्मा
वर्धस्व भक्तहृदि नाथ ! वदँल्लिखामि ॥ ३३९ ॥

अत हे प्रभो ! अब मै अपने प्रकृत विषयको ही देखता और गद्गद वाणीमे बोलता हुआ आपके चरणोमे प्रणत हो रहा हूँ "नाथ ! आप धन्य हैं, दयाके निधान है। आपके गुणोकी कही तुलना नही है, आप परमात्मा हैं, अपने भक्तोके हृदयमे इसी प्रकार बढते रहिये।" ऐसा कहता हुआ मै यह महाकाव्य लिख रहा हूँ ॥ ३३९ ॥

स्वामिन् ! वसन्ततिलकास्तवकाङ्किताङ्गा
त्वङ्गा तवाऽङ्घ्रिरमणीव समुत्तरङ्गा ।
वाक्यावलिर्मम विभो ! कुसुमाञ्जलीव
साश्रीः स्थिरा विलसतात् पदयोः प्रियेव ॥ ३४० ॥

विभो ! मेरी यह वचनावली जगद्धर भट्टकी "स्तुति कुसुमाञ्जलीकी भाँति आपके चरणोमे शोभा बिखेरती हुई स्थिरभावसे सुशोभित हो। ठीक उसी तरह जैसे प्रिया पार्वती शोभा पाती है। स्वामिन्! मेरी कविता आपके अङ्कमे विलास करनेवाली रमणी शिवाकी भाँति सुन्दर अङ्गवाली है। इससे रसकी तरङ्ग उछलती रहती है। इसने वसन्ततिलकाके पुष्पगुच्छसे अपने अङ्गोको विभूषित कर रखा है ॥ ३४० ॥

**याचे तदन्यदनवद्यमनन्तपारं**
**सद्वस्तु चैकमिह तच्छृणु भो परात्मन्!।**
**सैषा स्तुतिस्तव विभोर्धृतसत्यरूपा**
**त्वां प्रीणयेद् भवजनैः पठिता यदि स्यात् ॥ ३४१ ॥**

हे परात्मन्! मै यहाँ इसके सिवा एक और अनिन्द्य, अनन्त, और अपार सद्‌वस्तुकी याचना करता हूँ, उसे सुनिये। यह स्तुति आप सर्वव्यापी भगवान्‌के सत्य रूपको धारण किए हुए है। यदि ससारके लोग उसका पाठ करे तो यह आपको अवश्य सन्तुष्ट करे ॥ ३४१ ॥

**भुजङ्गप्रयातं यथा नाथ! तत्र भुजङ्गप्रयातं तथा मे मनोऽत्र।**
**चतुर्भिर्यकारैर्यमैर्योगयज्ञै-र्यशोभिर्भवन्तं भजेयं भवेऽत्र ॥ ३४२ ॥**

नाथ! जैसे आपके निकट-भुजङ्गोका चलना-फिरना होता रहता है, उसी प्रकार मेरा मन भी यहाँ भुजङ्गोकी भाँति कुटिल गतिसे चलने लगा है। (इस प्रकार यह भुजङ्ग प्रयात नामक छन्द बन गया है।) चार यकार (यगण, ।ऽऽ) भुजङ्गप्रयात छन्द बनता है। इसी प्रकार मेरे मनके भुजङ्गप्रयातमे भी यम, योग, यज्ञ और यश—ये चार यकार हो, और उनके द्वारा मै इस संसारमे सदा आपका भजन करता रहूँ ॥ ३४२ ॥

**जयति नाथ! ते भक्तिरुत्तमा भवविनाशिनी भक्तहृद्गमा।**
**सुखविधायिनी तापहारिणी सुमतिदायिनी शान्तिकारिणी ॥ ३४३ ॥**

नाथ! आपकी उत्तम भक्ति ही सर्वोपरि विराजमान है। अत उसकी जय हो। वह भक्तके हृदयमे विराजमान हो, जो भव-भयका नाश करनेवाली सुखसाधिका, त्रितापहारिणी, शान्तिकारिणी तथा सुबुद्धिदायिनी है ॥ ३४३ ॥

**जयति ते दया मूकतामपि हरति या प्रभो! मूढतामपि।**
**गमयतीह या पङ्गुमप्यहो! गिरिशिरस्तथा त्वत्पदं विभोः ॥ ३४४ ॥**

प्रभो! आपकी उस दयाकी जय हो, जो गूँगेपन और मूढताको भी हर लेती है। जो पङ्गुको पर्वतके शिखर पर तो चढा ही देती है। आप सर्वव्यापी प्रभुके पदकी भी प्राप्ति करा देती है। यह उसका आश्चर्यमय चमत्कार है ॥ ३४४ ॥

या कृपा पदतः प्राप्ता कविभिश्च महात्मभिः ।
सा मय्यपि जगन्नाथ ! वितराऽत्र दयस्व हि ॥ ३४५ ॥

हे जगन्नाथ ! कवियो और महात्माओने आपके पदसे जो कृपा प्राप्त की है, वह मुझपर भी हो । आप उसका वितरण कीजिये और दयालु होइए ॥ ३४५ ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
द्वितीयो व्यगमत् सर्गो महाकाव्ये स्तवात्मके ॥ ३४६ ॥

कृष्णप्रसाद घिमिरेकी कृति—"श्रीकृष्णचरितामृत नामक स्तोत्रमय महाकाव्यमे यह दूसरा सर्ग पूरा हुआ ॥ ३४६ ॥



# तृतीयः सर्गः

( प्रस्तुतकाव्य दशलक्षणलक्षित श्रीमद्भागवत महापुराणमुपजीव्य विलिखितत्वात्
सर्वप्रथम विद्वत्प्रबोधनपूर्वक तत्रेशानुकथा-पर्यन्ताना सप्तानामपि सर्गविसर्गा-
दीना सक्षिप्तस्वरूपनिदर्शनम् । श्रीकृष्णावतारस्य पूर्णावतारप्रतिपादनम् ।
स एव चराचराणामात्माऽतस्तल्लीलैव जगत्सुखावहेतिस्थिरीकरणञ्च । )

( वंशस्थेन्द्रवंशयोरुपजातिवृत्तम् )

[ प्रस्तुत महाकाव्य दस लक्षणोसे लक्षित श्रीमद्भागवत महापुराणका आश्रय लेकर लिखा गया है । अत सर्वप्रथम विद्वानोंके उद्बोधनपूर्वक सर्ग-विसर्गसे लेकर ईशानुकथापर्यन्त सात लक्षणोके स्वरूपको सक्षेपसे प्रदर्शित किया गया है। भगवान् श्रीकृष्णका अवतार पूर्णावतार है, इसका प्रतिपादन किया गया है । वे भगवान् श्रीकृष्ण ही चराचर-जगत्के आत्मा है । अत इनकी लीला ही समस्त विश्वको सुख देनेवाली है । इस सिद्धान्तको यहॉ स्थिर किया गया है । ]

**विद्वद्वरा ! ध्यानपरा भवन्तु भो यद्वर्णयाम्यत्र मनीषितं प्रियम् ।**
**क्रमं समालम्ब्य मनागितस्ततः पश्यंल्लिखन् भागवतानुगां स्थितिम् ॥**

श्रेष्ठ विद्वानो ! आप लोग इधर ध्यान दे । मै यहाँ अपनी मनोवाञ्छित प्रिय वस्तुका वर्णन करता हूँ । क्रमका अवलम्बन करके कुछ इधर-उधर देखकर श्रीमद्भागवतके अनुकूल स्थितिका चित्रण कर रहा हूँ ॥ १ ॥

**यस्मिन् विभोर्लोकशिखामणेर्भृशं ह्यलौकिकं पावनकर्म विद्यते ।**
**धृतात्मभिर्योगिभिराग्रहग्रहं गीतं यदेतच्छ्रुतिसारसंग्रहम् ॥**

इसमे अखिल ब्रह्माण्डशिरोमणि सर्वव्यापक भगवान् श्रीकृष्णका लोकपावन अलौकिक कर्म ( दिव्य लीलाचरित ) शोभा पा रहा है । मनको वशमे रखनेवाले योगी महात्माओने भी इस लीला-चरितको श्रुतिसार-सग्रह मानकर बडे आग्रहके साथ इसका गान किया है ॥ २ ॥

**तज्जीवनाऽऽधारमयं महात्मनां मनो महाभागवतं च दृश्यते ।**
**निवेश्य यस्मिन् स्वगतोज्ज्वलं महः कृष्णेन कृष्णेन सताऽपि भूषते ॥**

महात्माओका मन और महाभागवत शास्त्र ये दो ही भगवान् श्रीकृष्णके जीवनाधार दिखाई देते है। जहाँ श्रीकृष्ण कृष्णवर्णके होकर भी तेजकी स्थापना करके शोभा पाते हैं ॥ ३ ॥

**विहाय चैतद्द्वयमिश्वराभिधतद्वस्तुनो जीवनचित्रचित्रणे ।**
**भृशं समीक्ष्याऽपि न लभ्यते गतिर्विमुह्यतेऽस्मिन् विदुषाञ्च यन्मतिः ॥**

इन दोको छोडकर ईश्वर-नामधेय भगवद्-वस्तुके जीवनचित्रका चित्रण करनेके लिए बहुत विचारने पर भी दूसरा कोई अवलम्ब नही प्राप्त होता है। क्योकि भगवच्चरित्रका वर्णन करनेमे विद्वानोकी भी मति जो मोहित हो जाती है ॥ ४॥

**तस्मादहं तद्विभुकृष्णजीवनं निर्दर्शये भागवताऽऽश्रयं श्रयन् ।**
**द्वैपायनेनाऽत्र समस्तवाङ्मयं निर्मथ्य कृष्णात्मकसार उद्धृतः ॥**

इसलिये मै श्रीमद्भागवतका आश्रय लेकर भगवान् श्रीकृष्णके जीवन चरित्रका दिग्दर्शन करा रहा हूँ। श्रीकृष्ण-द्वैपायन व्यासजीने समस्त वाङ्मयका मन्थन करके इस श्रीमद्भागवतमे श्रीकृष्णमय सार-तत्त्वको उद्धृत किया है ॥ ५ ॥

**तं ब्रह्म शब्दात्मकमित्यमी बुधाः स्फोटेन नादेन भजन्त्यनादकम् ।**
**वैज्ञानिका यूयमनेकयुक्तिभिरकार्ष्ट सार्थं स्थिरयन्त्रगं च यम् ॥**

वह ब्रह्म शब्दात्मक प्रणवरूप है। इसलिए ये विद्वान् स्फोटरूप नादके द्वारा उस नादरहित तत्त्वका भजन ध्यान करते हैं। वैज्ञानिको ! आपलोगोने अनेक प्रकारकी युक्तियाँ करके उस शब्द-ब्रह्मको स्थिर यन्त्र ( रेडियो आदि )मे आबद्ध करके उसकी नित्य सत्ताको सार्थक किया है ॥ ६ ॥

**व्याप्तं प्रपञ्चेऽपि परात्मगं च तं विभाव्य बुद्ध्याऽप्यनुभूय चात्मनि ।**
**न विश्वसन्त्याधुनिका मनागपि तदीशसत्तासु कुतर्कमास्थिताः ॥**

समस्त प्रपञ्चमे व्याप्त उस परमात्माको भी बुद्धिके द्वारा व्यक्त करके अपने आत्मामे अनुभव करके भी आधुनिक वैज्ञानिक कुतर्कका आश्रय ले उस ईश्वरकी सत्तापर तनिक भी विश्वास नही करते हैं ॥ ७ ॥

**किं ब्रूमहे तान् प्रकृतौ महत्तमान् सिद्धं प्रकृत्यैव सुनिश्चितब्रुवान् ।**
**भ्रष्टान् स्वतः कारणकार्ययोः परे तत्त्वेऽक्षमान् पीतसुधान् भवाजिरे ॥**

जो प्रकृति विज्ञानमे महत्तम विद्वान हैं, और सब कुछ प्रकृतिसे ही सिद्ध हुआ है, ऐसा दृढ निश्चयके साथ बोलते हैं, किन्तु स्वत कार्य-कारण भावसे भ्रष्ट है, ससाररूपी प्राङ्गणमे जिन्हे सुधा-पानका आनन्द मिलता है और जो परम तत्त्वके अनुभवमे सर्वथा असमर्थ हैं, उन लोगोके विषयमे हम क्या कहे ? ॥ ८ ॥

**ईदृक्पुराणं विषयं विलिख्य भो ! किं प्राप्स्यते भद्रमनेन हा ! त्वया ।**
**ब्रुवन्त इत्थं सुधियस्तु मामपि व्यगर्हयन् येऽत्र कियत्पदं श्रुताः ॥**

जिन्होने यहाँ इस काव्यके कुछ पदोका श्रवण किया है, ऐसे उत्तम बुद्धिवाले पण्डितोने भी ऐसा कहते हुए कि—"हाय भाई ! तुम ऐसा पुराण ( पुराना ) विषय लिखकर इसके द्वारा कौन-सा कल्याण प्राप्त करोगे।" मेरी निन्दा की है ॥ ९ ॥

धन्या महान्तः खलु येऽमरा इह जीवत्त्वमाप्तं किल तैर्ब्रुवन्तु ते ।
निवेदये तान् मुखमुद्रणाक्षमः पन्थानमार्या ! वितरन्तु मामिति ॥

वे महात्मा निश्चय ही धन्य है, अमर हैं। उनका ही जीवत्व प्राप्त करना यहाँ सार्थक है। मै उनका मुँह बन्द करनेमे तो समर्थ नही हूँ, किन्तु उनसे यह निवेदन करता हूँ कि—हे आर्य-पुरुषो ! आप ही लोग मुझे मार्ग दिखावे ॥ १० ॥

विवादलेशोऽपि न चाऽत्र युज्यते न वा मदीयो विषयोऽस्त्यसाविह ।
प्राणी स्वतन्त्रोऽस्ति हि कृत्यनिर्णये स्वतन्त्रता केति विचार्यतां परम् ॥

यहाँ लेशमात्र भी विवाद करना उचित नही है और न यह मेरा विषय ही है। प्रत्येक प्राणी अपने कर्तव्यका निर्णय करनेमे स्वतन्त्र है। परन्तु उसकी वह स्वतन्त्रता क्या है, इसपर अच्छी तरह विचारकर लेना चाहिए॥ ११ ॥

किमिन्द्रियाणां सुखदुःखभोगिनां दासत्वमेवाऽधिगतं प्रतिक्षणम् ।
स्वातन्त्र्यमस्माकमहो ! न चेदिदं सुबन्धनन्त्वेव शरीरबन्धनम् ॥

क्या सुख-दु खका भोग करनेवाली इन्द्रियोकी प्रतिक्षण दासता ही हमलोगोको प्राप्त हुई स्वतन्त्रता है ?। यदि हाँ ! तब तो बडे आश्चर्यकी बात है। और यदि नही, तो यह शरीर-बन्धन ही सबसे बडा बन्धन है॥ १२ ॥

अस्यां स्थितौ कां गतिमाप्नुयादसौ जीवः शरीरस्थित ईश्वरोऽपि सन् ।
तदाऽस्य किं वाऽत्र पुनर्भवादयो भवन्ति नैते विषया दशाश्च किम् ॥

ऐसी स्थितिमे शरीरके भीतर विद्यमान जीव साक्षात् ईश्वर या ईश्वराश होकर भी किस गतिको प्राप्त होगा ?। क्या उस समय इसके पुनर्जन्म आदि नही होते है ! ये विषय और दशाये क्या इसे नही उपलब्ध होती है ?॥ १३ ॥

यावच्छरीरं ध्रियते सहोद्गतै स्तत्प्राकृतैः सम्मिलितैश्च तत्त्वकैः ।
तावद्धि सर्वं क्रियते स्वतन्त्रितैरस्माभिरेषा सुमतिर्विगृह्यते ॥

जबतक कि यह शरीर रहता है, तभीतक इसके साथ ही उत्पन्न हुए उन प्राकृतिक सम्मिलित एवं स्वतन्त्र-से प्रतीत होनेवाले तत्त्वोद्वारा सब कुछ किया जाता है। हमलोगोने इस तरहकी सुबुद्धि ग्रहण की है॥ १४ ॥

आस्तां ! तथा चेद्वयमत्र दीक्षिताः श्रीकृष्णभक्त्या कृतकाव्यकीर्तने ।
स्वैरं व्रजामोऽद्य सुखेन संगता ऋणैर्गृहीत्वाऽपि घृतं निपीय च ॥

यदि ऐसा है तो रहे, हमलोग यहाँ भगवान् श्रीकृष्णकी भक्तिसे किए जानेवाले काव्यके कीर्तनकी दीक्षा ले चुके हैं। इसलिए आज ऋण लेकर भी घृत-पान करके हम सुख-पूर्वक स्वच्छन्द-पथसे चल रहे है ॥ १५ ॥

ते तद्विधानां यदहो ! वयं वृथा कौपीनशेषा अपि वाच्यतां गताः ।
क्षिपन्ति येऽस्मान् बहुधा शरोपमैः क्रूरैर्वचोभिर्हृदि सेश्वरा इति ॥

प्राचीन विद्वानो ! यद्यपि हमलोगोके पास वैभवके नाम पर केवल कौपीनमात्र शेष रह गया है, तथापि हमलोगोको ऐसे लोगोके आक्षेपका पात्र बनना पडा है, जो बहुधा बाणोके समान तीक्ष्ण क्रूरतापूर्ण वचनो द्वारा हमारे हृदयपर यह कहकर चोट करते रहते है कि—ये बडे ईश्वरवादी बने हुए हैं ॥ १६ ॥

विभिन्नया ध्यानधिया समाहिता यूयं यतध्वे यदवाप्तुमत्र भोः ! ।
नैतत् पदं तन्न च शान्तिदं च तन्निरापदं चैकपदं पदं हि तत् ॥

माननीय आधुनिक विद्वानो ! आप लोग विभिन्न प्रकारकी चिन्तनशील बुद्धिके द्वारा एकाग्रचित्त हो, जिस वस्तुको पानेके लिए यहाँ प्रयत्न करते हैं, वह वास्तवमे न तो प्राप्तव्य पद है और न शान्ति ही देनेवाला है। हम जिसे प्राप्तव्य मानते है, वह एकमात्र अद्वितीय वस्तु सर्वथा निरापद है ॥ १७ ॥

नभोगतं दिव्यगतिश्च साधिता गतश्च चान्द्रस्थलमीक्षितं तथा ।
सुखेन पातालतलं विलोडितं न कृत्यशेषं भवतां विलोक्यते ॥

आपलोग आकाशमे भी उडते हैं। आपने दिव्य गति साध ली है। चन्द्रलोकमे जाकर वहाँ के स्थलका निरीक्षण कर लिया है और सुखपूर्वक पातालस्थलीका भी आलोडन-विलोडन कर लिया है। अब आपलोगोके लिये कोई भी कर्तव्य शेष नही दिखाई देता है ॥ १८ ॥

धन्या भवन्तस्तदपीह यत्नतः कर्तव्यशेषोऽपि विचार्य तां बुधाः ! ।
आत्मा स्वयं प्राणिशरीरमास्थितः किं स्यात्, कथं स्यादिति चिन्तयन्तु भोः ! ॥

विद्वानो ! धन्य हैं, आपलोग ! तथापि यहाँ अब भी आपके लिए कुछ करना शेष रह गया है। इस बात पर यत्न-पूर्वक विचार करे। प्राणियोके शरीरमे विद्यमान जो यह आत्मा है, वह क्या है, और कैसा है ? इस तत्त्वका आपलोग चिन्तन करे ॥ १९ ॥

दृष्ट्वा शरीरं बहुधा मृताऽमृतं परीक्षितं यैश्च सुखं ह्युपायकैः ।
तेऽत्र प्रमाणानि, वदन्ति किञ्च ते श्रोतव्यमेषाञ्च वचः समीरितम् ॥

जिन लोगोने बारम्बार मृत अथवा जीवित शरीरकी अनेक उपायोसे सुखपूर्वक परीक्षा की है, वे इस विषयमे प्रमाणभूत हो सकते हैं। वे क्या कहते हैं ? उनकी कही हुई बातको सुनना चाहिए ॥ २० ॥

**शल्यक्रियाभिर्वपुषां शरीरिणां विदार्य मर्माणि निरीक्षितान्यपि ।**
**न दृश्यतेऽसौ स्वदितान्नपाचको यत्पाच्यते किन्तु किमेष ? तद्ध्ययम् ! ॥**

शल्य-क्रिया ( चीर-फाड ) के द्वारा देहधारियोके शरीरके मर्मस्थानोको चीर-चीरकर देखा गया है, तो भी जो खाये हुये अन्नको पचानेवाला है, वह वैश्वानर वहाँ नही दिखाई देता है। किन्तु उसके द्वारा भोजन पचाया जाता है। वह कौन हो सकता है ? हम तो कहते हैं कि यह वही आत्मतत्त्व है ॥ २१ ॥

**स एव नित्यः परतत्त्वगो महान् एकोऽप्यनेको बहुयोनिगश्च यः ।**
**आनन्दसच्चिन्मय एकरूपको भूत्वाऽपि मायावशतो भ्रमत्यदः ॥**

वह जीवात्मतत्त्व ही नित्य है और परमात्मतत्त्वसे जुडा हुआ है। वह महान् है, वह एक और अनेक भी है। वही अनेक योनियोमे विचरण करनेवाला है। वह अद्वितीय, सच्चिदानन्दमय होकर भी मायाके वशमे होकर ससारमे भ्रमण करता रहता है ॥ २२ ॥

**माया च सैषा गुणतो विमोहिनी प्रमाथिनी हीन्द्रियवर्गपोषिणी ।**
**अहंममाद्यैरशुभैर्हतोदया नृत्यन्त आत्मान इमे ययेह भोः ! ॥**

माया वही है, जो तीनो गुणो द्वारा जीवोको मोहमे डुबाती है, उनके मनको मथ डालती है और इन्द्रियोका पोषण करती है। इसीकी प्रेरणासे अहकार और ममता आदि अशुभ भावोसे युक्त हो जानेके कारण जीवात्माओका अभ्युदय रुक जाता है और वे इस मायाके इशारेपर नाचने लगते है ॥ २३ ॥

**तच्छुद्धिरेवेह यदा भवत्यहो ! तदैव सोऽसावपि शुद्धतामितः ।**
**प्रगच्छति स्वं पदमव्ययं हितं यत्प्राप्तिरेवाऽत्र भवत्सु युज्यते ॥**

उन अशुभ-भावोकी निवृत्तिके कारण जब अन्त करणकी शुद्धि होती है तभी वह जीवात्मा भी शुद्ध भावको प्राप्त होता है और अपने हितकर अविनाशी पदकी ओर वेगपूर्वक चल पडता है। उसीको प्राप्तकर लेना आप लोगोके लिए भी उचित है ॥ २४ ॥

**विहाय चेमं स्वहिताऽहितप्रदं प्रकुर्वतां नाकपदाऽधिरोहणम् ।**
**तदुत्तमं वाऽपि निरर्थकं भवेद् यन्नाशयेन्मृत्युममुं न कर्हिचित् ॥**

यह जीवात्मा स्वय अपने लिये हितप्रद और अहितप्रद भी होता है, इसे ठुकराकर यदि कोई स्वर्ग शिखरपर भी आरूढ हो जाय अथवा उससे भी ऊँचे स्थानपर पहुँच जाय, उसका वह उन्नयन निरर्थक ही हो जाता है, क्योकि स्वर्गादि उसके मृत्युभयको नही दूर कर सकता हैं ॥ २५ ॥

तदस्तु, तेऽनीश्वरवादिनो ( ऽ ) बुधाः ! शृण्वन्तु भो ! आधुनिकाश्च सन्मताः ।
श्रीकृष्णतत्त्वं सकलं स्वतो महत् पश्यन्तु तत् स्वात्मनि सर्वशक्तिमत् ॥

अस्तु, वे अनीश्वर वादी बुध और सत्पुरूषोसे सम्मानित आधुनिक वैज्ञानिक मेरी बात सुने । श्रीकृष्ण-तत्त्व स्वत महान् और सम्पूर्ण है । उस सर्वशक्तिमान् तत्त्वको आप लोग अपने अन्तरात्मामे देखे ॥ २६ ॥

आर्यैर्विभाव्योऽत्र गुहास्ववस्थितः स एव चास्माकमिहाऽव्ययेश्वरः ।
सैषोऽस्ति युष्मास्वपि किन्तु तं मुधा यूयं ह्यनादृत्य सदा विगर्हथ ॥

जिसका अन्यान्य महात्माजन अपनी हृदय गुहामे अवस्थित देखते है, वही हमलोगो के अविनाशी ईश्वर श्रीकृष्ण यहाँ सर्वत्र विराज रहे हैं। ये आपलोगोमे भी विद्यमान हैं। किन्तु आप व्यर्थ ही उनका अनादर करके सदा उनकी निन्दा करते रहते हैं ॥ २७ ॥

शक्तिर्यदोजश्च बलञ्च विद्यते युष्मासु या बुद्धिरिह प्रदृश्यते ।
तत् किं ? कुतः प्राप्तमिदं ? विचार्यतां तच्छक्तिरेवाऽत्र विराजतेतराम् ॥

आपलोगोमे जो शक्ति, ओज और बल विद्यमान हैं तथा जो बुद्धि दिखाई देती है। वह सब क्या है ? कहाँ से प्राप्त हुआ है ? उसपर विचार कीजिये। एकमात्र भगवान श्रीकृष्णकी शक्ति ही यहाँ बिराज रही है ॥ २८ ॥

यच्छक्तिमादाय सचन्द्रतारकं नभो विभात्याविधि तुच्छकीटकम् ।
चराचरं विश्वमहर्निशं यतः सद्भाति चैतन्यमयं ज्वलत्प्रभम् ॥

जिनकी शक्तिका आश्रय लेकर चन्द्रमा, तारामण्डल, आकाश तथा तुच्छ कीटसे लेकर ब्रह्माजी पर्यन्त चराचर जगत् अहर्निश जिसकी सत्तासे प्रकाशित होता है, वह उद्दीप्त प्रभासे भासमान चैतन्यमय श्रीकृष्ण ही हैं ॥ २९ ॥

तदत्र कृष्णं परमात्मरूपिणं जानीत भो ! स्वे हृदि भान्तमव्ययम् ।
तस्यैव लीलेह विवर्ण्यते भृशं व्यासोऽभवद् यत्स्वयमेव वर्णने ॥

इसलिये हे विद्वानो ! अपने हृदयमे भासमान अविनाशी तत्त्वको आपलोग परमात्मा श्रीकृष्ण ही जाने । इस काव्यमे उन्हीकी लीलाका विशेष वर्णन दिया जा रहा है । वे भगवान् स्वय ही अपनी लीलाका वर्णन करनेके लिये व्यासरूपमे अवतीर्ण जो हुए थे ॥ ३० ॥

विदृश्यते भागवतद्रुमो महान् कैवल्यशान्तिप्रद आत्मतत्त्वदः ।
आनन्दसच्चिन्मय ईशरूपको वैराग्यकृत् सज्जनसङ्गसौख्यभृत् ॥

यहाँ जो भागवत नामसे प्रसिद्ध पुराणरूपी महान् वृक्ष दिखाई देता है, वह आत्मतत्त्वका ज्ञान देनेवाला तथा कैवल्य-शान्तिप्रदान करने वाला है। वह साक्षात् भगवानका स्वरूप और सच्चिदानन्दमय है। वे ससारसे वैराग्य उत्पन्न करनेवाला और सत्सगका सुख धारण करनेवाला है ॥ ३१ ॥

**स्कन्धाश्च ते द्वादश दिव्यरूपकाः श्रयन्त एतं प्रथमेऽत्र वस्तुतः।**
**पारीक्षितं कर्म विभाव्य शर्मदं श्रोतृस्वरूपेण निरूपितं पुरा ॥**

इस भागवत वृक्षके बारह दिव्य स्कन्ध ( तने ) है। इसके प्रथमस्कन्धमे राजा परीक्षितके कल्याणप्रद कर्मकी विभावना करके सबसे पहले श्रोताके रूपमे उनका निरूपण किया गया है ॥ ३२ ॥

**वक्तुर्द्वितीयेऽमृतपाकतत्फलं ह्यास्वादकस्येह शुकस्य जीवनम्।**
**विवर्ण्य किञ्चित्तदमुष्य सन्मुखान् निरूपितोऽयं दशभिः सुलक्षणैः ॥**

द्वितीयस्कन्धमे भगवानरूपी कल्पतरुके अमृतमय पके फलका आस्वादन करनेवाले शुकदेवजीके जीवनवृत्तका कुछ विवरण देकर उनके सुन्दर मुखारविन्दसे दश उत्तम लक्षणो द्वारा इस भागवत-द्रुमका उपपादन किया गया है ॥ ३३ ॥

**तस्मान् महाभागवते सभक्ति तत् पुराणरूपश्च विवर्णित विभोः।**
**सर्गादिरूपैर्नवभिर्निरन्तरं तदाश्रयं वस्तु विविच्य यत्नतः ॥**

तदनन्तर महाभागवतमे भक्त सहित भगवानके पुराणरूपका विशिष्ट वर्णन उपलब्ध होता है। क्रमश नव-स्कन्धोमे सर्गादिरूप नव लक्षणोका निरन्तर विवरण देकर दशमस्कन्धमे अन्तिम लक्षण आश्रय वस्तुका यत्नपूर्वक विवेचन किया गया है ॥ ३४ ॥

**तदित्थमस्त्यत्र निरूपितं मया संक्षिप्य सर्गादिकवस्तुसप्तकम्।**
**गत्वा निरोधे विहिता स्थितिः स्थिरा निर्दश्र्य मुक्तिं किल साऽऽश्रयोऽस्म्यहम् ॥**

इस प्रकार इसमे सक्षेपसे मैने सर्गादि सात वस्तुओका निरूपण किया है। निरोध प्रकरणमे पहुँचकर स्थिर स्थितिका सम्पादन किया है। फिर मुक्ति तत्त्वको भी प्रदर्शित करके मै आश्रय-युक्त हो गया हूँ ॥ ३५ ॥

**तद्ब्रह्म यद्भागवते सविस्तरं प्रपञ्च्यते कृष्णपदेन सन्ततम्।**
**यदाश्रयोऽसौ प्रतिपाद्यतत्त्वको नवैरुपायैर्बहुधाऽत्र शोभितः ॥**

वह ब्रह्म जिसका भागवतमे श्रीकृष्ण-नामसे विस्तारपूर्वक वर्णन किया गया है, वही आश्रय है। जिसके तत्त्वका प्रतिपादन करना है। वह उस ग्रन्थमे नये-नये उपायोद्वारा अनेक प्रकारसे वर्णित एवं सुशोभित हुआ है ॥ ३६ ॥

तद्ग्रन्थनिर्मातुरियं कला कलौ यदाश्रयेणैव तरेयुरित्यमी ।
वक्तुश्च लक्ष्यं परमं तदेव हि श्रोतुः स्थितिश्चाऽत्र निदर्शिता सती ॥

ग्रन्थनिर्माताकी यह कला है, जिसका आश्रय लेकर कलियुगमे ये सभी जीव तर जायेगे। वक्ताका परम लक्ष्य वह आश्रय-तत्त्व ही है और श्रोताकी भी उसी तत्त्वमे सम्यक् स्थिति दिखाई गई है ॥ ३७ ॥

पश्यन्तु सर्गे सुधियो यथाक्रमं ह्यव्यक्ततो व्यक्तमिदं प्रजायते ।
साम्ये स्थितिः सा परतत्त्वनोदिता क्षोभत्वमाप्ता सृजतीदृशं जगत् ॥

सुधीजन, देखे! सर्ग प्रकरणमे क्रमश अव्यक्तसे व्यक्त जगत्की उत्पत्ति बतायी जाती है। तीनो गुणोकी साम्यावस्थामे स्थिति प्रकृति कही गयी है। वह परम तत्त्व परमात्मासे प्रेरित हो क्षोभ ( गुण-वैषम्य )को प्राप्त होकर इस ससारकी सृष्टि करता है ॥ ३८ ॥

यथौ विसर्गे विधिसृष्टतामितं जगत् सुविस्तीर्णमनेकतां गतम् ।
प्रपञ्च्यते मानसिकस्तपोमयः सोऽयं विसर्गोऽपि परार्थतामितः ॥

विसर्ग प्रकरणमे यह बात बतायी गई है कि किस प्रकार इस जगत्की विस्तारपूर्वक सृष्टि ब्रह्माजीसे हुई। और किस प्रकार यह अनेकरूपोमे फैली। इसमे तपोमय मानसिक सृष्टिका भी विस्तार बताया गया है। यही विसर्ग कहा गया है। यह सृष्टि भी परार्थ ही है ॥ ३९ ॥

स्थाने स्थितिर्दृश्यत एव यत्र ते लोकाः सपाला बहुजीवसंकुलाः ।
तिष्ठन्ति वैकुण्ठपतेः स्थितिं स्थिरां जिगीषवः स्वेन तथाऽऽत्मकर्मणा ॥

स्थान-प्रकरणमे स्थितिका वर्णन देखा जाता है, जहाँ बहुसख्यक जीव-समुदायसे व्याप्त लोक और लोकपाल निवास करते है। वैकुण्ठनाथ भगवान् विष्णुकी जो सुस्थिर स्थिति है, उसे स्वत तथा अपने पुण्य कर्मसे जीतने या प्राप्त करनेकी इच्छावाले वे लोकपाल यत्नशील देखे जाते हैं ॥ ४० ॥

लीलाविहारे हरिरेव पोषणे सुदुःखितान् स्वान् बहुरूपधारिणः ।
वेदांश्च साधूंश्च दयादिभिर्गुणैः पश्यन् स्वयं पालयतीह यत्नतः ॥

भगवान्का जो लीला-विहार एवं अनुग्रह है, उसका नाम पोषण है। इस पोषणमे अनेक रूपधारी अत्यन्त दु खित स्वकीय भक्तजनो, वेदो एव साधु-पुरुषोको अपने दया आदि गुणोसे देखते हुए भगवान् स्वय यत्नपूर्वक सबका पालन करते है ॥ ४१ ॥

ऊतावनेकान् सुखदुःखभोगिनो जीवान् प्रदर्श्याऽमितकर्मवासनाः ।
वैराग्यमुद्भावयितुं भवं प्रति प्रदर्श्यते यत्परमा कृपा भृशम् ॥

ऊति कहते हैं, कर्मवासनाको । इस प्रसङ्गमे अपरिमित कर्मवासनावाले अनेकानेक जीवोको सुख-दु ख भोगते दिखाकर ससारकी ओरसे वैराग्य करानेके लिए भगवान्की अत्यन्त उत्कृष्ट कृपा दिखाई गई है ॥ ४२ ॥

मन्वन्तरे ते मनवश्चतुर्दश क्षिपन्ति कालं मनुपुत्रदैवतैः ।
कृत्वा च सत्कर्म परत्वमिच्छवश्चरन्ति धर्मञ्च महत्तमा हि ते ॥

मन्वन्तरके प्रसगमे सद्धर्मकी स्थिति दिखाई गई है । इस प्रसगमे यह कहा गया है कि चौदह मनु, मनुपुत्र तथा देवता एकसाथ एक मन्वन्तरका काल व्यतीत करते हैं । वे परम-पदकी प्राप्तिके इच्छुक होकर सत्कर्म करते हुए धर्माचरण करते है । वे सबके सब बड़े महात्मा हैं ॥ ४३ ॥

तदत्र चेशानुकथासु विस्तरं प्रपञ्च्यते भक्तचरित्रमद्भुतम् ।
जीवा यदाश्रित्य तरन्ति दुस्तरं भवं भवे भक्तिमवाप्य चेदृशम् ॥

श्रीमद्भागवतका सातवाँ लक्षण ईशानुकथा है । भगवान् और भगवद्भक्तोके चरित्रका वर्णन ही ईशानुकथा कहलाती है । इस प्रसङ्गमे भक्तोके अद्भुत-चरित्रका विस्तार पूर्वक वर्णन किया जाता है । जिसका आश्रय लेकर जीव दुस्तर भवसागरसे पार हो जाते है और भगवान् भव ( शिव एव विष्णु ) की ऐसी भक्ति पा लेते हैं, जो उनकी मुक्तिमे सहायक है ॥ ४४ ॥

अतः परं यत्स्थितिहेत्वपाश्रयाश्चेतोहरा ये विषया विवक्षिताः ।
अत्रैव पश्यन्तु हरिप्रिया बुधाः ! कृष्णात्मकास्ते प्रतिपादिता मया ॥

इसके बाद जो स्थितिके हेतुसे सम्बन्ध रखनेवाले जो मनोहर विषय विवक्षित हैं, उन सबको भगवान् श्रीहरिके प्रिय पण्डितजन यही देखे । मैने उन सब विषयोको कृष्ण-स्वरूप बताया है ॥ ४५ ॥

परन्तु जानन्तु यदत्र वर्ण्यते वर्णात्मकं ब्रह्म तमीश्वरं विभुम् ।
कृष्णश्च कोऽसाविति संशयो मुधा माऽभूत् परं ब्रह्म स एव चेश्वरः ॥

परन्तु इस काव्यमे जिस वर्णस्वरूप ब्रह्मका वर्णन है, उसे आप लोग सर्वव्यापी परमात्मा जाने । 'कृष्ण कौन है ?' यह व्यर्थ सशय आपके मनमे नही होना चाहिए, क्योकि वे श्रीकृष्ण ही ईश्वर एव परब्रह्म है ॥ ४६ ॥

शङ्काऽपि का वाऽत्र भवान् स्वयं यदि यद्वर्तते स्वानुभवश्च लक्ष्यते ।
तदीशसत्तासु चिदर्थविस्तृतं चराचरं चाऽप्यभितो विराजते ॥

अथवा यहाँ शका भी क्या हो सकती है ? आप स्वय यदि अपने हृदयमे देखे तो वहाँ स्वानुभवैकगम्य श्रीहरि जो हैं, उनका साक्षात्कार हो सकता है। अत उन ईश्वरकी सत्तामे ही यह चिदर्थ-विस्तृत चराचर जगत् सब ओर विराजमान हैं।

तस्माद्भवन्तः सुधियो विनश्वरे भवे भवेऽनश्वर एव सन्मतिम् ।
निधाय सोऽहं नियमानुसारिणीं क्रीडां करोमीति विभावयेत वै ॥

अत आप सुधीजन इस विनाशशील जगतमे अविनाशी भव ( भगवान् शङ्कर एव विष्णु )मे ही अपनी शुद्ध-बुद्धि लगाकर, "मै स्वय ही भगवत्-स्वरूपसे नियमानुसारिणी क्रीडा कर रहा हूँ" ऐसी भावना करे ॥ ४८ ॥

विभावनञ्चैतदमुष्य चिन्तनं विभाव्यते सद्भिरपीह दुष्करम् ।
समत्वमाप्तैः स्थिरधीभिरेव तत् संसाध्यते यत्नत एव केवलम् ॥

यह भावना ही उन भगवान्का चिन्तन है। जो सन्त-महात्माओके लिए भी यहाँ अत्यन्त दुष्कर प्रतीत होता है। जिनकी बुद्धि स्थिर है तथा जो सर्वत्र समभावको प्राप्त हैं, केवल ऐसे महानुभाव ही यत्नपूर्वक इस साधनका निर्वाह कर सकते हैं ॥ ४९ ॥

दृष्टा उपाया अपि तेऽत्र सन्ति ये मयाऽनुभूता इह पूर्ववर्णिताः ।
श्रद्धां पुरस्कृत्य भवन्त आदरात् पठन्तु कुर्वन्तु तथाबुभूषवः ॥

इस विषयमे जो दृष्ट या अनुभूत उपाय है तथा जिनका मैने स्वय अनुभव किया है, उनका वर्णन पहले किया जा चुका है। आप लोग वैसे सिद्ध होना चाहे तो श्रद्धाको आगे रखकर आदरपूर्वक इसका पाठ करे ॥ ५० ॥

परन्तु तं कृष्णपदाऽङ्कितं विभुं लघुं महान्तं गुणिनञ्च निर्गुणम् ।
यां दृष्टिमास्थाय समीक्षतेऽत्र यो भवत्यहो ! सोऽपि तथाविधोऽस्ति यत् ॥

परन्तु जो लोग यहाँ भगवान् श्रीकृष्णको लघु, महान्, गुणी और निर्गुण, जिस किसी भी दृष्टिको अपनाकर देखेगें, वे स्वय भी वैसे ही हो जायेगे। यह एक अद्भुत बात है। क्योकि जिसकी जैसी दृष्टि है, वह स्वय भी वैसा ही है ॥ ५१ ॥

तादृक्स्वरूपं परमेतमादृतं प्रपत्तिमाश्रित्य परामनन्यगाम् ।
चित्तं स्थिरीकृत्य गतक्रियं हितं शीघ्रं भजध्वं ह्यवतारविश्रुतम् ॥

अवतारोमे विख्यात ऐसे सर्वस्वरूप इन परमात्मा श्रीकृष्णकी आदरपूर्वक उत्तम एव अनन्य शरण लेकर चित्तको व्यापार शून्य एव सुस्थिर करके अपने हितके लिए शीघ्र उनका भजन कीजिये ॥ ५२ ॥

ये तेऽवतारा अभवन् युगे युगे स्वांशावताराः खलु ते परात्मनः ।
कृष्णावतारस्तु सुरार्थकारकः पूर्णावतारः श्रुतिसाधुशान्तिदः ॥

युग-युगमे भगवान्के जो-जो सुप्रसिद्ध अवतार हुए हैं, वे सब निश्चय ही उन परमात्माके अशावतार है । परन्तु देवताओंकी अर्थसिद्धि करनेवाला जो श्रीकृष्णावतार है, वह पूर्णावतार कहा गया है । वह श्रुतियो तथा साधु-पुरुषोको भी शान्ति देनेवाला है ॥ ५३ ॥

यस्मिन् समस्तं महदल्पभूषितं सद्वस्तु चैश्वर्यपदाऽभिधं च तत् ।
विगृह्य भव्यं भवभूतभावनो भवात्मकोऽभूद् भजतां भवाप्तये ॥

जिनमे महान् और अल्पके भेदसे भूषित समस्त ऐश्वर्य एव सद्वस्तु विद्यमान है, वे भवभूतभावन भगवान् भव्य रूप ग्रहण करके भक्तोको कल्याणकी प्राप्ति करानेके लिए भवरूपमे प्रकट हुए है ॥ ५४ ॥

यदा महामोहतमोऽभिवर्धते रजश्च सत्त्वं प्रतिबाधते यदा ।
तदैव चाऽऽविर्भवतीह सोऽव्ययः श्रुतिं समुद्धर्तुमनाः कृपापरः ॥

जब महामोहमय तमोगुण बढ जाता है, तथा रज और सत्त्वगुणको दबा देता है, तभी वे अविनाशी एव कृपालु परमेश्वर श्रुतियोका समुद्धार करनेके लिए यहाँ अवतीर्ण होते हैं ॥ ५५ ॥

क्षणं निवेश्यैव मनो यदत्र तां भ्रान्तिं विहायेह बुधा ममत्वगाम् ।
गच्छन्ति लीलामयरूपिणो हरेः पदं विसृज्याऽत्र महाऽऽपदां पदम् ॥

विद्वज्जन क्षणभर भी उन भगवान्मे यदि यहाँ मन लगा दे तो ममतामयी भ्रान्तिको भगाकर और इस जगत्की बडी-बडी आपत्तियोको त्यागकर लीलामय रूपधारी श्रीहरिके पदको प्राप्तकर लेते है ॥ ५६ ॥

आत्मा स एवाऽत्र महात्मनामपि सोऽसौ परात्मा च जडात्मनामपि ।
लीलाऽपि तस्याऽत्र जगत्सुखाऽऽवहा लोका अलोकाः प्रभवन्ति यां श्रिताः ॥

वे परमात्मा ही महात्माओ तथा जडात्माओके भी आत्मा हैं । उनकी लीला भी यहाँ जगत्को सुख देनेवाली ही होती है । जिसका आश्रय लेकर ये लोक अलौकिक स्थितिको प्राप्तकर लेते है ॥ ५७ ॥

क्वेदृङ्महावस्तुविशेषवर्णनं क्वाऽहं विमूढो जन उत्कटोऽर्णवः ।
सैषा तितीर्षा च खगेशसाहसं पारं नयत्येव गुरोः कृपाऽपि माम् ॥

कहाँ ऐसी महावस्तु—विशेषका वर्णन और कहाँ मुझ जैसा मूढ मनुष्य ! मेरे सामने उत्कट महासागर है। इसे पार करनेकी जो मेरी इच्छा है, यह गरुडका-सा साहस है। परन्तु गुरुकी कृपा मुझे भी पार लगा देगी ही ॥ ५८ ॥

**प्राप्नोम्यहं तां यदि नाऽत्र सद्धितां विदूयते नेह मनोऽपि सज्जनाः !**
**शरण्यमैशं सदसद्विवेकिनां यद्विद्यते श्रीपदमत्र तद्गतौ ॥**

यदि मै सत्पुरुषोका हित करनेवाली उस कृपाको नही पाऊँगा तो भी हे सज्जनो ! यहाँ मेरे मनको दु ख नही होगा। क्योकि सद्सद्-विवेकी पुरुषोके लिए भगवान्के श्रीचरण ही उसकी प्राप्तिके लिए शरणागत रक्षक है ॥ ५९ ॥

( अनुष्टुब्वृत्तम् )

**अस्त्वेतत् तत् परं ब्रह्म सच्चिदानन्दशब्दितम् ।**
**जयतात् कृष्णसूत्रेण ग्रथितं सच्छिवाऽऽत्मकम् ॥**

अस्तु, सच्चिदानन्द शब्दसे प्रतिपादित वह परब्रह्म परमात्मा श्रीकृष्ण सूत्रसे ग्रसित है। वह सत् एव शिवरूप है। उसकी जय हो ॥ ६० ॥

**शृण्वन्त्वत्र बुधा भक्तान् पूर्वं तज्जयवर्णनात् ।**
**महाभागवताँश्चेमान् द्वादश प्रणमामि यत् ॥**

विद्वान्पुरुष ! सुने। मै पहले भगवान्के भक्तोकी जय बोलकर इन सुप्रसिद्ध बारह महाभागवतोको प्रणाम करता हूँ ॥ ६१ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**तृतीयो व्यगमत् सर्गो महाकाव्ये स्तवात्मके ॥**

कृष्णप्रसाद घिमिरेकी कृति इस स्तोत्रात्मक श्रीकृष्णचरितामृत महाकाव्यमे तीसरा सर्ग पूरा हुआ ॥ ६२ ॥



# चतुर्थः सर्गः

( महाभागवतेभ्यो विद्वद्वर्गेभ्यश्च कवयितुर्नमस्कारसमर्पणम् । महाविभूतिपतेर्धीरोदात्तस्य काव्यनामकस्य स्वरूपनिदर्शनपूर्वक सक्षेपतो बाल्यावस्थात स्वधामगमनपर्यन्त-कृत्यप्रदर्शनम् । कवेर्भागवतमेवोपजीव्य भाष्यरूपेण काव्यनिर्माणप्रतिज्ञा च । )

( वसन्ततिलकावृत्तम् )

धन्या हि ते सुकृतिनो विशदाशया ये कृष्णं निवेश्य हृदये सततं ततं तम् ।
पश्यन्ति यत् करतलामलकीफलाभं विश्वं समस्तमधुनाऽपि विहीनलाभम् ॥

जिनका हृदय अत्यन्त उज्वल और उदार है, जो इस समय भी सदा सर्वत्र व्यापक उन भगवान् श्रीकृष्णको हृदयके सिहासन पर बिठाकर लाभ-लोभ रहित इस समस्त विश्वको हाथ पर रखे हुए आँवलेके फलकी भाँति प्रत्यक्ष देखते हैं, वे पुण्यात्मा जन धन्य है ! ॥ १ ॥

धन्योऽस्ति सोऽपि यदनेन गुणेन साम्ना बद्धं चराचरजगद् दृढकालदाम्ना ।
यो निर्गुणोऽपि गुणितां भजतीह चेद्वा किं निर्गुणाः सुगुणिनो न वयं भवामः ॥

जिन्होने सामगुणसे बद्ध चराचर जगत्को सुदृढ कालरूपी डोरीसे बाँध रखा है, वे परमात्मा भी धन्य है । यदि वे निर्गुण होकर भी सगुण हो जाते है तो हम जैसे गुण-हीन मनुष्य क्या गुणवान् नही हो सकते ? ॥ २ ॥

मान्याश्च तेऽपि महनीयमहाचरित्राः पूज्याः प्रशस्यपदपद्मपदैः पवित्राः ।
ये द्वादश प्रवरभागवताः प्रकृष्टाः सृष्टाश्च येन विजयं तु दिशन्तु हृष्टाः ॥

जिनके महान् चरित्र अत्यन्त महनीय है, जो अपने प्रशस्त चरण-कमलोसे पूज्य तथा पवित्र हैं, जो बारह श्रेष्ठ भागवतो ( भगवद्भक्तो ) मे परिगणित होते है तथा जिनकी सृष्टि अत्यन्त उत्कृष्ट मानी गई है, वे महात्मा भी मेरे परम माननीय हैं । वे सबके सब हर्षसे उत्फुल्ल होकर मुझे विजय प्रदान करे ॥ ३ ॥

काष्ठात्स्वतोऽनल इवात्र भवन् स्वयम्भूर्यस्मादवाप्य सकलं श्रुतितत्त्वसारम् ।
यो निर्ममे जगदिदं प्रथमो महात्मा काव्येऽत्र भागवतरूपमयः स दीव्यात् ॥

काष्ठसे स्वत प्रकट हुए अग्निकी भाँति जो स्वयम्भू ब्रह्माजी जिनसे प्रकट हो उन्हीसे सम्पूर्ण श्रुतियोके तत्त्वका सारभूत ज्ञान पाकर इस जगत्के निर्माणमे लगे थे, वे प्रथम महात्मा महाभागवतस्वरूप विधाता इस काव्यमे प्रकाशमान हो ॥ ४ ॥

तत्तत्त्ववस्तु परिगृह्य ततो द्वितीयो योऽभूद्बहिर्विदितनारदनामधारी ।
सन्मार्गनोदितजगत्सकलोऽकलोऽसो पुष्णातु मां सकलया कलयावतारी ॥

उन्हीसे तत्त्व वस्तुका उपदेश पाकर जो दूसरे महाभागवत महात्मा प्रकट हुए, जिन्हे बाह्य जगतमे लोग नारदके नामसे जानते है, जो सम्पूर्ण जगत्को सन्मार्ग पर चलनेकी प्रेरणा देते है, जिनमे सम्पूर्ण कलाये विद्यमान है तथापि परमार्थरूपसे जो निष्कल हैं, वे अवतारी-पुरुष देवर्षि नारद अपनी सम्पूर्ण कलासे मेरा पोषण करे ॥ ५ ॥

गौरीं च जह्नुतनयां च शशाङ्करेखां वृद्धां कृपां च हृदये विनिवेश्य चारी ।
मां मूढमत्र परिपातु भवोऽभवोऽसौ यो हन्त ! नित्यमभवद् गिरिजाभिसारी ॥

जो गौरीको वामाङ्गमे, गङ्गाको मस्तक पर, चन्द्रकलाको ललाटमे और बढी हुई कृपाको हृदयमे रखकर विचरते रहते है, वे तीसरे महाभागवत अजन्मा शिव, जो नित्यप्रति गिरिजाके सङ्ग अभिसरण या सचरण करनेवाले है, इस जगतमे मुझ मूढकी रक्षा करे ॥ ६ ॥

पादाम्बुजेषु निपपात हरिर्हि येषां तेषां तु शक्तिरथ भक्तिरवर्णनीया ।
यैर्वर्षपञ्चकमितैः प्रियभृत्ययुग्मं शप्त्वाच्युतस्य विहितं रहितं हि तेन ॥

जिनके चरणारविन्दोमे भगवान् श्रीहरि भी नतमस्तक हुए थे, उन चौथे महाभागवत सनकादिकोकी शक्ति और भक्तिका वर्णन करना असम्भव है। उन्होने पाँच वर्षकी अवस्थामे ही भगवान् अच्युतके दो प्रिय सेवकोको शाप देकर उन्हे हितसे रहित अथवा उन भगवान्से वियुक्त कर दिया था। ( वे इस काव्यमे मुझे उत्तम दृष्टि प्रदान करे। ) ॥ ७ ॥

मात्रे वितीर्य परिभूतविवेकबुद्ध्यै साङ्ख्योक्ततत्त्वमतिबुद्धि ममत्वशुद्ध्यै ।
योऽनाशयत् कुमतिमात्ममतेरवाप्त्यै भूत्यै भवेत् स कपिलोऽपि कवित्वगुप्त्यै ॥

जिनकी विवेक-बुद्धि तिरोहित हो गई थी, उन माता देवहूतिको जिन्होने उनके ममता आदि दोषोकी शुद्धिके लिए साधारण मानवकी बुद्धिसे परेकी वस्तु साख्य-तत्त्वका बोध प्रदान किया तथा आत्मज्ञानकी प्राप्तिके लिए अज्ञानमयी कुबुद्धिका नाश किया, वे पाँचवे महाभागवत कपिलदेवजी मेरे कवित्वकी रक्षा तथा मुझे कल्याणमय ऐश्वर्यका दान करे ॥ ८ ॥

यो लोकलोचनमयेन मनोहरेण शास्त्रेण शस्त्रसदृशेन विनिर्मितेन ।
हन्ति स्म दुर्गतिततिं विपदां विचारैर्धर्मं दिशन् स मनुरत्र भवेन्मुदे नः ॥

जिन्होने विचार पूर्वक निर्मित शस्त्र सदृश मनोहर लोकलोचनरूपी शास्त्रके द्वारा, विपदाओंसे सबद्ध दुर्गति-परम्पराका नाश कर दिया वे धर्मका उपदेश देनेवाले छठे महाभागवत स्वायम्भुव मनु ( इस काव्य-रचना द्वारा ) हमारे आनन्दका विस्तार करे ॥ ९ ॥

त्यक्त्वा स्थितिं कुलगतिं कुमतिं विभूतिं मुक्त्वा भयं यदभयं शरणं श्रयन् यः ।
दैत्याङ्घ्रिशूनचकथत् सकलां सुशिक्षां पश्येत् स दैत्यशिशुरत्र दिशन् सुभिक्षाम् ॥

जिन्होने दैत्योकी वर्तमान-स्थिति, कुल परम्परा, कुबुद्धि तथा वैभवको ठुकराकर भय छोडकर अभयस्वरूप भगवान्‌की शरण ले अपने साथी बालक दैत्योको भगवद्भक्तिकी सारी उत्तम शिक्षा प्रदान की, वे सातवे महाभागवत दैत्यराजकुमार प्रह्लादजी इस काव्यमे मुझे भी शिक्षाकी भिक्षा देते हुए मेरी ओर कृपादृष्टिसे देखे ॥ १० ॥

मुक्त्वा गुणादिजननीं प्रकृतिं दृढां स्वां तद्ब्रह्म निर्गुणगुणेन भजञ्छुकोऽसौ ।
यद्योगशक्तिमुपलभ्य गुणाश्रयोऽभूत् तत्कर्मसिद्धिजनको जनकोऽत्र जीयात् ॥

गुण-आदिकी जननी प्रकृतिको तथा अपनी दृढ प्रकृति ( स्वभाव ) को भी त्यागकर जो शुकदेवजी निर्गुण-गुणसे ब्रह्मके चिन्तनमे सलग्न थे, वे भी जिनकी योगशक्तिको पाकर गुणाश्रयी हो गये—निर्गुण-ब्रह्मसे हटकर सगुण-ब्रह्म श्रीकृष्णको भजने लगे, वे कर्मसिद्धि-जनक आठवे महाभागवत राजा-जनक इस काव्यमे समाविष्ट हो विजय लाभ करे ॥ ११ ॥

गृह्णामि नायुधमहं समरे प्रतिज्ञा सैषा कृतेति यदुवाच हरिः परन्तु ।
व्यर्थीकृताऽहहह ! धारयता रथाङ्गं भीष्मेण भीष्मनियमेन महान् स दीव्यात् ॥

"मै महाभारत-समरमे शस्त्र ग्रहण नही करूँगा । यह मैने प्रतिज्ञा कर ली है ।" ऐसी बात स्वय भगवान् श्रीकृष्णने ही कही थी परन्तु आश्चर्यकी बात है कि भयकर नियमवाले देवव्रत-भीष्मने भगवान्‌के हाथमे रथ-चक्र धारण कराकर उनकी पूर्वोक्त प्रतिज्ञा व्यर्थकर दी । ऐसे नवे महाभागवत महात्मा-भीष्म मेरे इस काव्यमे प्रकाशमान हो ॥ १२ ॥

यो वामनाय सगुणाय परात्मकाय पृथ्वीं प्रदाय चरणाय तृतीयकाय ।
दत्वाऽपि शीर्षमसुरोऽपि च दानबद्धं यं द्वारपालमकरोत् स बलिर्दिशेच्छम् ॥

जिन्होने सगुण परमात्मा वामनको सारी पृथ्वी दानमे देकर उनके तीसरे चरणको रखनेके लिए अपना मस्तक अर्पित कर दिया और इस प्रकार असुर होकर भी जिन्होने भगवानको दानसे बाँधकर अपना द्वारपाल बना दिया, वे दशवे महाभागवत राजा बलि हमे कल्याण प्रदान करे ॥ १३ ॥

ऊत्वा सदोषमृषिकण्ठनिबिष्टसर्पं कालाहिनात्तमरणार्थिनमस्तदर्पम् ।
योऽमूमुचत् तत इहैत्य परीक्षितं तं तं व्याससूनुमथ भागवतं श्रयेऽहम् ॥

जो अपनी कर्मवासनासे विवश हो अपराध कर बैठे, जिन्होने ऋषिके कण्ठमे मरा साँप लपेट दिया और इसीलिए काल-सर्पसे डँसे जाकर मरनेका जिन्हे शाप मिला था । अतएव जो दर्प-शून्य होकर मृत्युकालकी प्रतीक्षा कर रहे थे, उन राजा परीक्षितको जिन्होने यहाँ आकर भव-बन्धनसे मुक्त कर दिया, उन ग्यारहवे महाभागवत श्री शुकदेवजी की मै शरण लेता हूँ ॥ १४ ॥

तिष्ठन् पदे कृतहिताहितदे प्रियान् स्वान् भृत्यान् ह्यजामिलगतान् विनिवारयन् सन् ।
तान् सद्वरान् परमभागवतान् गुणज्ञान् यो निर्दिदेश स यमोऽपि यमं ददातु ॥

जिन्होने किए हुए कर्मका शुभाशुभ फल देनेवाले धर्मराजके पदपर प्रतिष्ठित हो, अजामिलके यहाँ गए हुए अपने प्रिय सेवकोको रोका और उन सन्तशिरोमणि परम भागवत एव गुणज्ञ पार्षदोको भागवत-धर्मका उपदेश किया, वे बारहवे महाभागवत यम हमे यम ( अहिसा, सत्य और ब्रह्मचर्य आदि सद्गुण ) प्रदान करे ॥ १५ ॥

( इन्द्रवज्रा )

सन्त्यत्र ये भागवता गुणज्ञा सन्तो महान्तोऽखिलतत्त्वविज्ञाः ।
विन्दन्तु मां ते च विमूढमज्ञं कुर्वन्तु शीघ्रं कृपयाऽत्र तज्ज्ञम् ॥

इस ससारमे जो-जो गुणज्ञ, निखिलतत्त्ववेत्ता, महान् भागवत-सन्त हैं, वे मुझे मूढ और अज्ञ जाने और शीघ्र कृपा करके श्रीकृष्णतत्त्वका ज्ञाता बना दे ॥ १६ ॥

( उपजातिः )

दाने दरिद्रोऽस्मि परन्तु माने यद्वर्तते शीर्षमनेन जाने ।
श्रीपादपद्मे करुणानिधाने लुठामि तावद्यदहं विमाने ॥

मै उन महात्माओकी सेवामे कुछ धन दान कर सकूँ, इसके लिए तो दरिद्र हूँ—कोरा कगाल हूँ परन्तु उनका सम्मान करनेके लिए मेरा यह मस्तक प्रस्तुत है । मै इसीके द्वारा अर्थात् इसीको झुकाकर उनका भली-भाँति समादर कर सकूँगा, इस बातको मै अच्छी तरह जानता हूँ। अतएव मै उनके अभिमान रहित करुणानिधान श्रीचरणारविन्दमे पहले ही लोट रहा हूँ ॥ १७ ॥

( अनुष्टुब् )

ब्रह्म नीलं महो वन्दे परमानन्दशान्तिदम् ।
यस्मिन्निवेशितात्मानो महात्मानो भवन्ति तत् ॥

मै ब्रह्मस्वरूप उस श्यामतेजकी वन्दना करता हूँ, जो परमानन्दमयी शान्ति प्रदान करनेवाला है और जिसमे मन लगाने वाले महात्मा-जन उसीके स्वरूप हो जाते हैं ॥ १८ ॥

नाना मार्गेण यं प्राप्तुं यतन्ते विबुधा बुधाः ।
तमभ्रसदृशं कृष्णं कृष्णं कृष्णोऽभिवन्दते ॥

देवता और विद्वान, नाना मार्गों द्वारा जिन्हे पानेका प्रयत्न करते है, उन मेघ-तुल्य कृष्णवर्णवाले श्रीकृष्णकी यह कवि कृष्णप्रसाद वन्दना करता है ॥ १९ ॥

यस्य चूडामणिरथोऽसौ चन्द्रको दिवि चन्द्रवत् ।
सुमनोभिः समैः सौम्यैः शोभते जयताद्धि सः ॥

जिसके मस्तककी चूडामणि बना हुआ मोर का पख समस्त सुन्दर सुमनोसे विभूषित हो आकाशमे चन्द्रमाकी भाँति शोभा पाता है, उन भगवान् श्रीकृष्णचन्द्रकी जय हो ॥ २० ॥

यस्य स्मरणमात्रेण चित्तं शान्ति समश्नुते ।
चैत्योऽसौ चित्स्वरूपेण चित्ते चैत्यं प्रचोदयात् ॥

जिनके ( रूप-गुण आदिके ) स्मरण मात्रसे चित्त शान्ति का अनुभव करता है, उस चित्तमे चित्स्वरूपसे विराजमान वे चैतन्यमय परमात्मा चित्तगत जीवात्माको अपनेमे मिल जानेकी प्रेरणा दें ॥ २१ ॥

यस्य लीलाकथाः शान्त्या श्रुत्वा चेमा यथा तथा ।
हृदि विन्यस्य धीरास्ते धीराणां धुरि धीमताम् ॥

जिनकी लीलाकथाओंको शान्तिपूर्वक सुनकर और इन्हे जैसे-तैसे हृदयमे धारण कर वे धीर पुरुष बुद्धिमान और धीर-जनोके अग्रगण्य हो जाते हैं। ( उन भगवान श्रीकृष्णकी जय हो। ) ॥ २२ ॥

छायामिव पृथग्भूतां मायामाश्रित्य लीलया ।
यद्ब्रह्म भासते नाना तत् क्रीडेदत्र लीलया ॥

अपनी ही पृथक हुई छायाकी भाँति, मायाका लीलापूर्वक आश्रय लेकर जो ब्रह्म नाना रूपोमे भास रहा है, वह इस काव्यमे अपनी लीला शक्तिसे क्रीडा करे ॥ २३ ॥

अहं सम्मान्य प्राचीनान् मान्यानस्य जगत्पतेः ।
बलं दाक्ष्यं महौजश्च सत्त्वं शक्तीश्च वर्णये ॥

अब मै माननीय महात्माओको प्रणामपूर्वक सम्मान देकर जगदीश्वर श्रीकृष्णके बल, कौशल, महान् ओज, सत्व तथा शक्तियोका वर्णन करता हूँ ॥ २४ ॥

कृष्णनामात्मकं वस्तु स्फुरत्येव विशेषतः ।
किमस्मासु जडेष्वत्र त्रिदशेष्वपि यत्समम् ॥

श्रीकृष्ण नामात्मक जो वस्तु है, वह सर्वत्र ही विशेषरूपसे स्फुरित होती है। हम जैसे जड मनुष्योकी तो बात ही क्या है, वह देवताओमे भी समान रूपसे प्रकाशमान है ॥ २५ ॥

( वसन्ततिलका )

बाल्ये स्वमुग्धचरितेन विचित्रितेन मन्दस्मितेन रुदितेन च जल्पितेन ।
योऽत्राकरोत् स्ववशगं मुनिमानसं च ह्याबालवृद्धवनितादिमयं व्रजं च ॥

जिन्होने बाल्यावस्थामे ही अपने मनोमुग्धकारी विचित्र चरित्रसे, मन्दमुस्कानसे बालोचित रोदनसे तथा तोतली बातोसे भी मुनियोके मनको तथा बाल बृद्ध और वनितादिसे भरे हुये समूचे ब्रजको भी अपने वशमे कर लिया था ॥ २६ ॥

पूर्णोऽप्यपूर्णसमयो मथुरां समेत्य यः संजहार कुमतीन् सुमतीन् गृहीत्वा ।
पित्रोः पदं सुखमयं च विधाय येन मातामहश्च विहितो नृपतिः सुखेन ॥

इसके बाद अपूण समयके होते हुए भी परिपूर्ण हो, जिन्होने मथुरामे आकर कुत्सित बुद्धिवाले दुष्टोका सहार किया और सद्बुद्धिवाले सज्जनोको अपनी ओर खीच लिया और माता-पिताके स्थानको सुखमय बनाकर मातामह उग्रसेनको सुखपूर्वक राजा बना दिया ॥ २७ ॥

भूभारभूतभयभावकभूतवर्गान् सर्वान् विनाश्य सुखदां स्वपुरीं श्रयन् यः ।
शान्तः समूढसमयः समये समस्तं सस्त्रीगणं स्वकृत शान्तिसुखैः समृद्धम् ॥

पृथ्वीके भारस्वरूप तथा भयके उत्पादक समस्त भूतवर्गोको नष्ट करके जिन्होने नूतन बसाई हुई सुखदायिनी द्वारिका-पुरीका आश्रय ले शान्तभावसे मर्यादाका पालन किया और समयानुसार समस्त स्त्रीगणोको शान्ति सुखसे समृद्ध बना दिया ॥ २८ ॥

दुष्टान् विचित्रबलवीर्यविरूढगर्वान् मित्रार्जुनप्रभृतिभिश्च विनष्टदर्पान् ।
संस्थाप्य सूर्यसुतसद्मनि धाम शान्तं गच्छन्नशिक्षयदसौ स्थितिमुद्धवं स्वाम् ॥

विचित्र बल और वीर्यके कारण जिनका गर्व बहुत बढ गया था, उन दुष्टोका अपने मित्र अर्जुन आदिकी सहायतासे दर्प चूर्णकर दिया और सबको यमलोकमे भेजकर अपने शान्तिमय धामको पधारते हुए जिन्होने सखा-उद्धवको अपनी स्थितिकी शिक्षा दी ॥ २९ ॥

कृत्यं समाप्य सकलं सकलो महात्मा प्रस्थाप्य सद्म सबलं बलमप्युपायैः ।
अन्ते जगाम गुणवत्सु च दत्तशिक्षः स्वं धाम चिन्मयमहो ! मयि दत्तभिक्षः ॥

इस प्रकार यहाँका समस्त कार्य पूर्ण करके जो स्वरूप परमात्मा श्रीकृष्ण उपायो द्वारा बलराम सहित यदुवशियोकी सेनाको भी परमधाम भेजकर अन्तमे गुणवानोको शिक्षा देकर मुझे भी ऐसे सत्कर्म करते रहनेकी प्रेरणामयी भिक्षा प्रदानकर अन्तमें निज चिन्मय धामको पधारे, उन भगवान्‌की लीला कितनी आश्चर्यमयी है ? ॥ ३० ॥

( उपजातिः )

तदत्र श्रीकृष्णचरित्र-वर्णनं यद्दृश्यते भागवते मनोरमम् ।
मया समाश्रित्य तदेव केवलं विवर्ण्यते नान्यत उत्तमं ह्यपि ॥

अत उन भगवान् श्रीकृष्णचन्द्रके चरित्रका जो मनोरम वर्णन श्रीमद्भागवतमे दृष्टिगोचर होता है, केवल उसीका आश्रय लेकर मै इस काव्यमे उक्त लीलाका विशेषरूपसे वर्णन करूँगा। उत्तम और सुन्दर होने पर भी अन्य ग्रन्थोसे कुछ नही लिया है ॥ ३१ ॥

कृष्णेन कृष्णस्यससूत्रमव्ययं यदङ्कितं भागवतीयजीवनम् ।
तस्यैव कृष्णेन मयाऽपि कृष्णगं भाष्यं कृतं शम्भुकृपावशादिदम् ॥

कृष्ण-द्वैपायन वेदव्यासने श्रीकृष्णके जिस अविनाशी भागवतीय जीवनका सूत्ररूपसे वर्णन किया है, उसीका मै कृष्णप्रसाद घिमिरेने भी श्रीकृष्ण प्रीत्यर्थ यह भाष्य किया है। भगवान् शङ्करकी कृपासे ही यह कार्य सम्भव हो सका है ॥ ३२ ॥

( अनुष्टुब् )

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
अगाच्चतुर्थसर्गोऽयं महाकाव्ये स्तवात्मके ॥

इस प्रकार कृष्णप्रसाद घिमिरेकी कृति इस 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे यह चौथा सर्ग पूरा हुआ ॥ ३३ ॥



# पञ्चमः सर्गः

[ श्रीकृष्णावतारोपक्रमप्रसङ्गे धरित्रीपितामहसंवादे ध्यानावस्थितस्य ब्रह्मणो योगावस्थायां स्वात्मन्येव भगवतो भाविलीलाऽऽलोकनम् । देवेभ्यस्तत्कथनम् । तेषा च व्रजमण्डलेऽन्यत्राऽपि च स्वोपयुक्तसेवौपयिकतरुगुल्मपशुपक्षिगोगोपगोप्यादीना तत्तद्योनिषु जन्मग्रहणनिर्देश-नम् । सर्वकार्यसम्पादनानन्तर ह्यघटनघटनाघटनपटीयस्या भगवत्या योग-मायाया. सर्वै' साकं भगवदवतारप्रतीक्षणम् । ]

( मन्दाक्रान्तावृत्तम् )

मन्दाक्रान्ता प्रकृतिकृतिभिर्यत्स्थितिर्भव्यरूपा
मन्दाक्रान्ता सुकृतिकृतिभिर्यद्गतिर्दिव्यरूपा ।
मन्दाक्रान्ता धृतिविधृतिभिर्यैश्च बुद्धिर्यदीया
मन्दाक्रान्ता जयति सुखदा भक्तभक्तिस्तदीया ॥ १ ॥

जो भव्य रूपवाली स्थिति या सत्ता है, उस पर स्वभावत कुशल पुरुषोने धीरे-धीरे पैर रखा अथवा हस्तगत किया है। जो दिव्य रूपवाली गति है, उसे सत्कर्म करनेमे निपुण पुरुषोने धीरे-धीरे आक्रान्त किया अथवा जाना या पाया है। जिन लोगोने जो भगवत्-सम्बन्धिनी बुद्धि, धैर्य एव विशिष्ट धारणाके द्वारा धीरे-धीरे आत्मसात् किया है, उन महा-प्रभुके भक्तोकी वह भक्ति जो धीरे-धीरे प्राप्त की जाती है तथा जो आत्यन्तिक सुख प्रदान करने वाली है, वही ससारमे सबसे श्रेष्ठ है। उसकी सदा जय हो ॥ १ ॥

मन्दाक्रान्तं हृदयममलं त्वद्गुणैर्यन्मदीयं
मन्दाक्रान्तं हृदयममलं मद्गुणैस्तत्त्वदीयम् ।
मन्दाक्रान्ता भवति न कथं सावयोः प्रीतिराद्या
मन्दाक्रान्ता गतिरिह भवेत्त्वत्प्रसादादतो मे ॥ २ ॥

प्रभो श्रीकृष्ण ! आपके सद्गुणोने मेरे निर्मल अन्त करणपर धीरे-धीरे अधिकार जमाया है। यह भी सम्भव है कि मेरे गुणोने आपके निर्मल हृदयको धीरे-धीरे आकृष्ट किया हो। फिर हे नाथ ! हम दोनो जीवात्मा परमात्माकी जो आदि ( पुरातन ) प्रीति है, वह धीरे-धीरे क्यो नही प्राप्त होती ? अत मेरी प्रार्थना है कि इस काव्य-लेखनमे आपके अनुग्रहसे मेरी गति धीरे-धीरे बढती ही चली जाय ॥ २ ॥

मन्दाक्रान्तं तव पदयुगं योगिभिः शान्तिदं तन्
मन्दाक्रान्तं विलसति यथा चित्तमप्येकवृत्ति ।
मन्दाक्रान्तं हरति च तमस्तन्महो सौररूपं
मन्दाक्रान्तं त्वयि विजयतां कर्म चैतद्विभो ! मे ॥ ३ ॥

भगवन्! आपके उस परम शान्तिदायक युगल चरणारविन्दको जैसे योगियोने धीरे-धीरे आत्मसात् किया है, जैसे यह चञ्चल चित्त भी धीरे-धीरे अभ्यासपूर्वक आक्रान्त होने पर एकवृत्ति या एकाग्र हो जाता है तथा जैसे सूर्यदेवका वह महान् आश्चर्यमय तेज धीरे-धीरे आक्रमण करके अन्धकार-राशिको हर लेता है, उसी प्रकार मेरा यह काव्यनिर्माण-रूप कर्म आपपर धीरे-धीरे प्रभाव डालकर सर्वत्र विजयी हो ॥ ३ ॥

**तन्त्रैर्मन्त्रैः सयमनियमैः पूजिता नित्यरम्या**
**यन्त्रैर्यज्ञैर्व्रतविततिभिर्भूषिता भावगम्या ।**
**आसीत्पृथ्वी ललितरमणीवाभ्रयुक्तेव शम्पा**
**देवैर्मर्त्यैः सुकृतिकृतिभिः शोभिता द्वापरान्ते ॥ ४ ॥**

पूर्वकालमे, द्वापर युगके परिशिष्ट भागमे यह पृथ्वी तन्त्रो, मन्त्रो तथा यम और नियमो द्वारा पूजित होकर नित्य रमणीय शोभा धारण करती थी। यन्त्रो, यज्ञो तथा व्रत-समूहोसे भूषित हो, बादलोसे मिली हुई विजलीकी भाँति प्रकाशित हो, परम सुन्दरी रमणीके समान भावगम्या जान पडती थी। उन दिनो देवता, मनुष्य नाना प्रकारके पुण्य-कर्मोका अनुष्ठान करते हुए इस वसुन्धराकी शोभा बढाते थे ॥ ४ ॥

**कालः सर्वं ग्रसति, नियमो विद्यते यद्विधातु-**
**रासीत् पूर्वं यदिह नहि तद्दृश्यते चान्यकाले ।**
**सूर्यः प्राचीं प्रमृजति करैः प्राग्प्रभाते स एव**
**पश्चाद् वृद्धां स्वजति गलितस्तद्वशो हा! प्रतीचीम् ॥ ५ ॥**

जगत्स्रष्टा विधाताका यह नियम है कि काल सबको अपना ग्रास बना लेता है। क्योकि पहले क्षणमे जो वस्तु यहाँ रही है, वह दूसरे क्षणमे नही दिखाई देती है। सूर्यदेव पहले प्रात कालमे प्राची ( पूर्व दिशा या नवोढा नायिका ) का अपने करो ( किरणो या हाथो )से स्पर्श करते है। परन्तु वे ही सीधे चलकर जब गलित ( वृद्ध ) हो जाते हैं, तब वृद्धा प्रतीचीका उसके वशीभूत हो, आलिङ्गन करते है। यह कैसे दु खकी बात है ॥ ५ ॥

**सैषा देवी प्रगुणितगुणाऽमोघवीर्येण तेन**
**नीता ग्लानिं हतविगुणिभिः साधनैर्दूषितेन ।**
**दैत्यैः क्रूरैर्मनुजहतकै राजभिर्भारभूतै-**
**र्व्याप्ता नित्यं कुमतिगतिभिर्दुःखिताऽभूद् भृशं हा! ॥ ६ ॥**

नष्टप्राय गुण-हीन साधनोसे दूषित हुए अमोघ शक्तिशाली उस विकरालकालने प्रकृष्ट गुणवाली इन देवी वसुन्धराको ग्लानिपूर्ण अवस्थामे पहुँचा दिया। क्रूर दैत्यो तथा भूभारभूत-नराधम राजाओसे जिनकी मति गति कुत्सित हो चुकी थी, व्याप्त होकर ये भू-देवी सदा दु खसागरमे अत्यन्त डूबी रहने लगी। यह बडे खेदकी बात थी ॥ ६ ॥

अन्तेऽशोचद्धृतपरिकरा साऽत्र जीर्णा विदीर्णा
गच्छेयं हा! क्व शरणमहं त्रायते माऽद्य को वा।
त्राताऽऽसीद्योऽप्रविहतगतिर्मे पतिर्विश्वगोऽसौ
ह्यन्यस्तादृङ् नहि भवगतौ कष्टनाशे समर्थः ॥ ७ ॥

इस प्रकार दुष्टोके द्वारा जीर्ण और विदीर्ण की गई तथा परिकरोसे हीन हुई पृथ्वी देवी अन्तमे इस प्रकार सोचने लगी—'हाय! अब मै कहाँ किसकी शरणमे जाऊँ? अब मेरी रक्षा कौन करेगा? अप्रतिहत गति और शक्तिवाले मेरे पति, जो मेरे रक्षक रहे है, इस समय विश्वव्यापी स्वरूपमे रम रहे है। (उनका ध्यान मेरी ओरसे हट गया है।) इस जगतमे वैसा क्लेशनाशन-समर्थ दूसरा कोई प्रभु नही है ॥ ७ ॥

विज्ञाप्येऽस्मिन् विधिरुपचितः सृष्टिकर्ता हि योऽसौ
वक्ता कंचित्सुखकरमुपायं स कर्ता च भद्रम्।
इत्थं ध्यात्वा व्यवसितमतिः सिद्धिकामा धरित्री
रूपं धृत्वा व्यथितसुरभेर्ब्रह्मलोकं जगाम ॥ ८ ॥

मेरी समझमे इस विज्ञापनीय विषयको बतानेके लिए इस समय सृष्टिकर्ता ब्रह्मा ही सबसे बढकर है। क्योकि वे ही कोई सुखदायक उपाय बतावेगे और मेरा भला करेगे। ऐसा सोचकर ऐसा ही करनेका दृढ निश्चय मनमे लेकर सिद्धिकामा धरणिदेवी एक पीडित गौका रूप धारण करके ब्रह्मलोकको गई ॥ ८ ॥

स्वं निर्दिश्यातिशयगलितां सत्त्वमात्रावशिष्टां
शिष्टां निष्ठां शुभनतियुतां सम्मतां तां निवेद्य।
सर्वाः पीडाः श्रुतिपथगताः साऽकरोद् ब्रह्मणस्ताः
कष्टं पश्चान्निगदितवती प्रार्थयन्ती दयाञ्च ॥ ९ ॥

वहाँ जाकर पृथ्वीने अपने उस स्वरूपको दिखाया जो रक्त-मास गल जानेसे अत्यन्त दुर्बल कङ्काल-सा प्रतीत होता था। उस शरीरमे केवल प्राणमात्र अवशिष्ट रह गये थे। ऐसी शारीरिक स्थितिको दिखाकर शेष शिष्टाचार-निष्ठा व्यक्त करती हुई पृथ्वीने सर्वसम्मत शुभ प्रणाम-परम्परा निवेदित की। तत्पश्चात् अपनी सारी पीडाये ब्रह्माजीके कानोमे डाल दी और कष्ट-कथा सुनाती हुई दयाके लिए प्रार्थना करने लगी ॥ ९ ॥

श्रुत्वा सर्वं विधिरवहितस्तद्वचः संविभाव्य
मत्वा कार्यं धृतपरिकरं शङ्करं च प्रगृह्य।
देवैः सर्वैरनुगतपदः क्षीरसिन्धोस्तटं तत्।
स्मारं स्मारं हरिपदयुगं शीघ्रमेवाजगाम ॥ १० ॥

ब्रह्माजीने सावधान होकर सब बाते सुनी और पृथ्वीके कथन पर भली-भाँति विचार किया। फिर पृथ्वीका उद्धार कार्य आवश्यक समझकर उन सभी देवोको अपना अनुगामी बनाकर श्रीहरिके युगल चरणारविन्दोका चिन्तन करते हुए वे शीघ्रतापूर्वक क्षीरसागरके तटपर आये ॥ १० ॥

शान्ते रम्ये विशदपुलिने तत्र गत्वा स धाता
दीर्घं दध्यौ क्षितिदुरिततो जातकम्पोऽन्वशोचत् ।
किं वा कुर्या निखिलभवपः श्रीपतिः क्वाऽत्र विष्णु-
र्विश्वं व्याप्याऽसुभिरपि सुरैर्योऽविमृश्यो बभूव ॥ ११ ॥

क्षीर-सागरके उस शान्त सुरम्य एव उज्ज्वल पुलिनपर पहुँचकर विधाता बडी देर तक कुछ सोचते रहे। पृथ्वीके क्लेशका विचार करके वे कम्पित हो उठते। उन्होने विचार किया कि अब मै क्या करूँ? निखिल जगत्के प्रतिपालक लक्ष्मीपति भगवान् विष्णु यहाँ कहाँ मिलेगे?। वे तो अपने विश्वव्यापी स्वरूपमे स्थित होकर ऐसे हो गए हैं कि देवता लोग प्राण देकर भी उनका साक्षात्कार नही कर सकते ॥ ११ ॥

तस्मात् कंचित्स्फुटतरमुपायं प्रगृह्याऽत्र वृत्ते
बुद्धिं शौर्यं बलमपि ततः प्राप्य कृत्ये प्रवृत्ते ।
सिद्धिः शान्तिर्भवति सुगमा किन्तु मार्गेण केन
गम्यो देवो विभुरिह भवेद्योग एवाऽत्र मुख्यः ॥ १२ ॥

इसलिए इस विषयमे कोई सरलतर उपाय ग्रहण करके भगवान्से प्रस्तुत कार्यके लिए बुद्धि, बल और शौर्य प्राप्त किया जाय, तभी सफलता मिलेगी और शान्ति सुलभ होगी। परन्तु किस मार्गसे उन सर्वव्यापी भगवान्की प्राप्ति होगी। अच्छा! याद आया, इसके लिए तो योग ही मुख्य-साधन है ॥ १२ ॥

ध्यायन्नित्थं व्यवसितमना योगिराजो विधाता
शान्ते स्वान्ते सकलकरणं सन्निरुध्यात्मनैव ।
तूर्णं योगं ह्यविशदतुलं तं परात्मात्मरूपं
प्रष्टुं चान्तर्हृदयकुहरे योऽस्ति सर्वत्र लीनः ॥ १३ ॥

इस प्रकार सोच-विचार कर मन ही मन ऐसा निश्चय करके योगिराज ब्रह्मा अपने शान्त अन्त करणमे समस्त इन्द्रिय-वृत्तियोका अपने आप ही निरोध करके तत्काल अनुपम परमात्म-योगमे प्रविष्ट हो गये। हृदय-गुफामे जो सर्वत्र व्यापक प्रभु लीन है, उनसे कर्तव्य-विषयक प्रश्न करनेके लिए ब्रह्माने समाधि लगाई थी ॥ १३ ॥

यः कोऽप्यस्मिन् व्यवसितमतिर्मार्गमाश्रित्य भव्यं
लक्ष्यं लब्धुं लगति यदि चेत्प्राप्स्यतेऽसौ तदन्ते ।
किं वक्तव्यं पुनरिह विधिर्यत्स्वयं मार्गद्रष्टा
कर्मण्यस्मिन् सविधि यतते तस्य लक्ष्यार्थलब्धौ ॥ १४ ॥

जो कोई भी मनुष्य इस विषयमे दृढ निश्चय करके भव्य योगमार्गका आश्रय ले लक्ष्य-प्राप्तिके लिए यदि प्रयत्नमे लग जाता है, तो वह अन्ततोगत्वा उस लक्ष्यको अवश्य प्राप्त कर लेगा। फिर जो यहाँ साक्षात् योगमार्गके द्रष्टा विधाता ही इस समाधि-कर्मके लिए सविधि प्रयत्न कर रहे हैं तो उनके लक्ष्यार्थकी प्राप्तिके विषयमे तो कहना ही क्या है ? ॥ १४ ॥

आधिव्याधिक्षयकरमसौ तत्र धृत्वा समाधिं
स्वान्तेऽपश्यत् पुरुषममलं श्यामलं ब्रह्म चैत्यम् ।
तुष्टस्तूर्णं विधिरिह विभुं पौरुषैर्दिव्यसूक्तैः
स्तुत्वा वृत्तं स्थिरमचकथत् यज्जगत्यां तदाऽभूत् ॥ १५ ॥

आधि और व्याधिको विनाश करनेवाली समाधिको वहाँ धारण करके ब्रह्माजीने अपने हृदयके भीतर निर्मल पुरुष चिदानन्दमय श्याम ब्रह्मको देखा। देखकर उन्हे बडी प्रसन्नता हुई। उन्होने दिव्य पुरुषसूक्तके मन्त्रो द्वारा उन प्रभुका स्तवन किया। फिर उस समय पृथ्वीपर जो कुछ घटित हो रहा था, वह सारा वृत्तान्त स्थिरतापूर्वक कह सुनाया ॥ १५ ॥

स्वान्ते तस्मिन्मुकुरविमले सच्चिदानन्दधाम्नि
ब्रह्माऽपश्यद्भूततनुकृता भाविलीला हरेस्ताः ।
आत्मारामोऽभवदिह तदाऽनाहतैर्नादरूपै–
र्लीलाह्लादैर्वितरितदयो जातकर्तव्यबोधः ॥ १६ ॥

ब्रह्माजीने दर्पणके समान निर्मल उस सच्चिदानन्द-धाम अपने हृदयमे, श्रीहरिके भावी लीला चरित्रोको प्रत्यक्ष देखा। उस समय वे आत्माराम हो गये। उस समय भगवान्ने अपने अनाहत-नादरूप लीलाह्लादसे ब्रह्माजी पर दया की थी जिससे उन्हे अपने कर्तव्यका बोध हो गया ॥ १६ ॥

अन्तर्लीने भगवति हृदि ज्ञातविश्वप्रपञ्चः
सोऽसौ धाता प्रियपरिकरान् स्वानुगांस्तानवोचत् ।
त्रातुं साधूञ्छ्रुतिसुरगणान् पातुमस्मांश्च लीलां
कर्तुं भूमाववतरति भो ! सोऽव्ययः पूर्णकामः ॥ १७ ॥

तदनन्तर भगवान् ब्रह्माजीके हृदयमे ही अन्तर्धान हो गए। अब ब्रह्माजीको बाह्य जगत्के प्रपञ्चका भान हुआ—वे बहिर्मुख हो गए। तब उन विधाताने अपने अनुगामी एव प्रिय परिकर देवताओसे इस प्रकार कहा—'देवगण ! साधु-सतोका परित्राण, वेदो तथा देवगणोका सरक्षण और अपनी दिव्य लीलाकी अवतारणा करनेके लिए वे अविनाशी पूर्ण-काम परमात्मा इस भूतलपर अवतार लेने वाले है ॥ १७ ॥

लीलाः कर्ता त्रिभुवनपतिर्यत्र लोकातिगास्ताः
सच्चिद्रूपं सकलममलं चाप्य कृष्णावतारम् ।
बाल्येऽरण्यं तदनु मथुरां द्वारकामेत्य पश्चात्
संहर्ता योऽसुरनरभवान् भारभूतांश्च सर्वान् ॥ १८ ॥

'वहाँ वे त्रिभुवननाथ भगवान् श्रीहरि निर्मल, परिपूर्ण एव सच्चिदानन्दमय श्रीकृष्णावतार-ग्रहण करके नाना प्रकारकी अलौकिक लीलाये करेगे। बाल्यावस्थामे महावन और वृन्दावनमे जाकर तथा तरुण एव किशोर अवस्थामे मथुरा और द्वारकामे पहुँच कर वहाँ रहते हुए वे पृथ्वीके भारभूत समस्त असुरभावापन्न दुष्ट मनुष्योका सहार करेगे ॥ १८ ॥

अग्रे तत्राऽखिलभवगुरोर्जन्मतः शौरवीर्यात्
प्रादुर्भूतो हलधरविभुस्तत्कलानन्तरूपः ।
सेवां कर्ता प्रियहितरतस्तस्य सेव्यस्य विष्णो–
र्मायां श्रित्वा कृतबहुविधां मोहयन्तीं जगत् ताम् ॥ १९ ॥

'सम्पूर्ण जगतके एकमात्र गुरु, श्रीकृष्णके प्रादुर्भावसे पूर्व ही वसुदेवजीके वीर्यसे उन्हीकी कला-भूत अनन्त-स्वरूप शेष भगवान् हलधर ( बलराम ) के रूपमे प्रकट होगे। जो अपने सेव्य श्री विष्णु ( कृष्ण )के प्रिय एव हित साधनमे लगे रहकर जगतको मोहने वाली बहुरूपिणी मायाका आश्रय ले उनकी सेवा करेगे।' ॥ १९ ॥

तस्माद् देवा ! निजनिजगुणैः शक्तिभिः सद्बलैश्च
सम्पन्नं सद् सुललितमथो शुद्धसत्त्वाऽभिरामम् ।
दिव्यं रूपं व्रजपरिसरे द्राक् विधृत्यैव तस्य
सेव्यस्यैवं प्रकुरुत सुखं स्वानुरूपां सुसेवाम् ॥ २० ॥

इसलिए देवताओ ! अब तुम लोग उस व्रजमण्डलमे तुरन्त ही अपने-अपने गुणो-शक्तिओ–सद्बलोसे सम्पन्न शुद्धसत्त्वसे सुन्दर एव महान् कमनीय दिव्य रूपको धरकर आरामपूर्वक उन सेवनीय महाप्रभुकी—अपने आत्माके अनुरूपकी सुसेवा करो ॥ २० ॥

इत्यादिश्यामितबलगुणो देवयोनिर्विधाता
त्रैलोक्येषु प्रथितममलं ब्रह्मलोकं जगाम ।
सेन्द्रा देवा जगति सुखदं त्र्यम्बकं वीक्ष्य यान्तं
नत्वा पश्चादमुमनुययुर्धाम शान्त्याऽथ सर्वे ॥ २१ ॥

इस प्रकार आदेश दे अपरिमित बल और गुणोसे सुशोभित देवसृष्टिके मूलकारण विधाता अपने त्रिभुवन-विख्यात निर्मल धाम ब्रह्मलोकको चले गये। जगत्मे सबको सुख देनेवाले त्रिनेत्रधारी भगवान् शङ्करको जाते देख इन्द्रादि देवताओने उन्हे नमस्कार किया और फिर वे सब लोग उन्हीका अनुसरण करते हुए शान्तिपूर्वक अपने-अपने स्थानको चल दिये ॥ २१ ॥

गत्वा तत्रावहितमनसो देवगन्धर्वसिद्धा
लोकेशाद्याः सुरमुनिगणा यक्षविद्याधराश्च ।
ज्ञाते तत्त्वे मुदितकरणास्तद्धयभीक्ष्णं विभाव्य
स्वेष्टं स्वाराधयितुमिहते जन्म भूम्यामगृह्णन् ॥ २२ ॥

वहाँ पहुँचकर सावधान-चित्त हो, ब्रह्मा आदि देवता मुनिगण, देव-गन्धर्व, सिद्ध, यक्ष और विद्याधर भावी श्रीकृष्णावतारके तात्त्विक वृत्तान्तको जानकर अपनी सम्पूर्ण इन्द्रियोसे आनन्दमग्न हो गये। बारम्बार उस बातपर विचार करके उन्होने अपने इष्टदेवकी आराधनाके लिए इस भूतलपर जन्म ग्रहण किया ॥ २२ ॥

सेवां स्मृत्वा हरिपदगतां भक्तिपूतां सतां तां
श्रद्धां धृत्वा भवभयभिदां ज्ञानिनां तुष्टिदान्ताम् ।
देवाः सेन्द्रा अथ यदुकुले भेजिरे जन्म भक्त्या
स्वांशाद्रूपं बलगुणमयं द्राक् प्रगृह्यैव शक्त्या ॥ २३ ॥

सत्पुरुषोके द्वारा की जानेवाली जो श्रीहरिके चरणकमलोकी भक्तियुक्त सेवा है, उसका स्मरण करके तथा ज्ञानियोको भी तुष्टि प्रदान करनेवाली जो भवभयभेदिनी श्रद्धा है, उसको धारण करके इन्द्र सहित सम्पूर्ण देवताओने शीघ्र ही यथाशक्ति बल और गुणसे पूर्ण अशावतार ग्रहण करके भक्तिभावसे यदुकुलमे जन्म लिया ॥ २३ ॥

तद्वच्चान्ये बहुगुणयुता ज्ञानिनो ब्रह्मनिष्ठाः
सिद्धा दिव्याः परममुनयो योगिनो भक्तनिष्ठाः ।
नित्या विष्णोः प्रियपरिकराः पार्षदाः सर्व एव
रूपं धृत्वाऽप्यतिशुशुभिरे स्वांशतः पूर्वमेव ॥ २४ ॥

इसी प्रकार अन्यान्य बहुगुण सम्पन्न ज्ञानी, ब्रह्मनिष्ठ, सिद्ध, दिव्य-योनिके प्राणी, श्रेष्ठ मुनि, योगी, भक्तगण, सृष्टि-समुदाय तथा भगवान विष्णुके नित्य एव प्रिय परिकर सभी पार्षद गण अपने-अपने अशसे मानवरूप धारण करके भगवान्के अवतारसे पहले ही भूतल-पर अत्यन्त शोभा पाने लगे ।। २४ ।।

आसन् येषामनुपमकलाः शक्तयो भूतयो या–
स्ताभिस्तैस्तैरभिमततमं रूपमास्थाय सौम्यम् ।
सेव्यं स्वेष्टं मुदितकरणं कर्तुमस्मिन् विहारे
जन्माधारि प्रथितकुलगं वीर्यशौर्यप्रपूर्णम् ।। २५ ।।

जिन-जिन देवता आदिके पास जो-जो अनुपम कलाये, शक्तियाँ तथा विभूतियाँ ( ऐश्वर्य समुदाय ) थी, उन-उनके साथ उन सभीने अपने मनके अनुरूप सौम्यरूप ग्रहण करके इस लीलाविहारमे अपने सेव्य इष्टदेवता श्रीकृष्णको प्रसन्न करनेके लिए विख्यात कुलमे वीर्य और शौर्यसे भरा-पूरा जन्म धारण किया ।। २५ ।।

वेदा देवा ऋषिमुनिगणा गोपगोप्यो ह्यभूवन्
कामासक्ता विभुविहरणे कर्तुमेकान्तकामम् ।
प्रादुर्भूता प्रियजनयुता सा रमा सारकामा
वामा कामालसमृदुगतिस्तन्मना दिव्यरामा ।। २६ ।।

वेद, देवता तथा ऋषि-मुनियोके समुदाय गोप-गोपियोके रूपमे प्रकट हुए। वे सबके सब भगवान्के लीलाविहारमे उनकी एकान्तत प्रिय इच्छा पूर्ण करना चाहते थे। अत इसी शुभकामनामे आसक्त होकर अवतीर्ण हुए थे। इधर देवी रमा भी अपने प्रियतमकी सारभूत सेवा करनेकी इच्छा मनमे लेकर अपनी प्रिया सहचरियोके साथ दिव्य सुन्दरी रमणी ( श्रीराधा )के रूपमे अवतीर्ण हुई। उनकी मनोहर मथर गति प्रेमभारसे अलसायी-सी जान पड़ती थी और वे एकमात्र प्रियतम श्यामसुन्दरमे ही मन रमाये रहती थी ।। २६ ।।

वृन्दारण्ये व्रजपरिसरे माथुरे द्वारकायां
रक्ता भक्ता विशदयशसो धार्मिकाः सत्यसन्धाः ।
अन्धाः प्रेम्णा हरिपदरताः सद्व्रताः सत्पथाश्च
सर्वेऽस्तिष्ठंस्तृणतरुलतारूपमप्यत्र धृत्वा ।। २७ ।।

जो-जो भगवान्के अनुरक्त भक्त थे, जो उज्ज्वल यशवाले धार्मिक और सत्यप्रतिज्ञ पुरुष थे, तथा जो प्रेमसे अधे होकर श्रीहरिके चरणोमे रत रहकर उत्तम व्रतका पालन तथा सन्मार्ग पर विचरण करते थे, वे सब वृन्दावनमे, व्रज मण्डलमे, मथुरामे तथा द्वारकापुरीमे तृण, तरु एव लताका रूप धारण करके भी निवास करने लगे ।। २७ ।।

गावो भूत्वाऽऽगमनिगमका दुग्धधाराः स्रवन्तो
　　जन्माऽगृह्णन् मुदितकरणैः पक्षिभिश्चान्वभावि ।
याभिर्यैश्च व्रजपरिकरं माथुरं तत्प्रदेशं
　　तूर्णं पूर्णं ह्यभवदमृतैस्तैः कृतैः सद्रवैश्च ॥ २८ ॥

आगमो और निगमोके समुदाय दूधकी धारा बहानेवाली गौओका रूप धारण करके वहाँ प्रकट हुए। दिव्य लोकके पक्षी भी आनन्दित अन्त करणवाले होकर वहाँ व्रजके विहङ्गमो ( शुक-सारिका, मयूर आदि )के रूपमे अवतीर्ण हुए। उन गौओ तथा पक्षियोसे व्रजका परिसर भाग तथा मथुरामण्डल शीघ्र ही पूर्ण हो गया। गौओके दुग्धकी अमृतमयी धाराओसे व्रजका वनप्रान्त सीच उठा और कुञ्ज-कुञ्ज विहङ्गमोके कलरवसे मुखरित हो उठा ॥ २८ ॥

( शालिनी )

इत्थं देवी योगमाया रराज सर्वं कृत्यं कुर्वती सुव्यवस्थम् ।
यत्र स्वामी जन्म कृष्णावतारं धृत्वा धृष्टान् धर्षयिष्यत्यजस्रम् ॥ २९ ॥

इस प्रकार देवी योग-माया भगवल्लीला सम्बन्धी सम्पूर्ण कृत्योकी सुव्यवस्था करती हुई उस व्रजमण्डलमे शोभा पाने लगी, जहाँ उनके स्वामी श्रीकृष्णावतार धारण करके धृष्ट असुरोका निरन्तर दमन करनेवाले थे ॥ २९ ॥

( स्वागता )

स्वागतं भवगतेर्भवतः स्यात् स्वागतं तव वयश्च विदध्मः ।
स्वागतं विमलपादविहार ! स्वागतं जय विभो ! प्रियहार ! ॥ ३० ॥

भगवन् श्रीकृष्ण ! आप ससारके आश्रय हैं। आपका स्वागत हो ! । हम सब लोग आपका स्वागत करते है। अपने निर्मल चरणोसे भूतलपर विचरनेवाले श्यामसुन्दर आपका स्वागत है। विभो ! आपका बारम्बार स्वागत है। प्रिय भक्तजनोके कण्ठहार आपकी जय हो ॥ ३० ॥

( उपजातिः )

प्रतिक्षणं वाक्यमनेकमीदृशं प्रियं ब्रुवन्तः सकलाः कलामयाः ।
कृष्णावतारेण तदत्र भाविना ह्याह्लादितास्तस्थुरहो ! वयं यथा ॥ ३१ ॥

विविध कलाओसे अलकृत वे सभी देवाशजन्मा व्रजवासी निकट भविष्यमे होनेवाले श्रीकृष्णावतारसे अत्यन्त आह्लादित हो, उपर्युक्त प्रकारसे प्रतिक्षण अनेकानेक स्वागत एवं जयकार सबन्धी वचन बोलते हुए हम पाठकोकी ही भाँति भगवद्-दर्शनकी प्रतीक्षा करते हुए वहाँ रह रहे थे ॥ ३१ ॥

( अनुष्टुप् )

**जय ! कृष्ण ! हृषीकेश ! स्वागतं तेऽस्तु दीव्यताम् ।**
**स्वभक्तहृदये चेत्थं स्फुरतां हन्त ! वर्धताम् ॥ ३२ ॥**

भक्तोके चित्तको अपनी ओर खीचनेवाले सच्चिदानन्दघन श्रीकृष्ण ! आपकी जय हो । सम्पूर्ण इन्द्रियोके स्वामी हृषिकेश ! आपका स्वागत हो । हम बडे हर्षके साथ प्रार्थना करते है कि आप अपने भक्तोके हृदयमे इसीप्रकार क्रीडा करे, प्रकाशित हो और निरन्तर बढते रहे ॥ ३२ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**व्यगमत् पञ्चमः सर्गो महाकाव्ये स्तवात्मके ॥ ३३ ॥**

कृष्णप्रसाद घिमिरेकी कृति इस 'श्रीकृष्ण चरितामृत' नामक स्तोत्रात्मक महाकाव्यमे पाँचवाँ सर्ग पूर्ण हुआ ॥ ३३ ॥



# षष्ठः सर्गः

[ मथुराया विवाहप्रसङ्गे वधूवरयोर्दैवकीवसुदेवयो स्वगृहप्रवेशे कसमुद्दिश्य
सञ्जातामाकाशवाचं श्रुत्वा स्वमृत्युभयतो नववधू हन्तुकाम कस
सस्तभ्य समाश्वासन वरवसुदेवेन स्वसद्वाक्यनिदर्शनञ्च ]

( वंशस्थेन्द्रवंशयोरुपजातिवृत्तम् )

महापुरी सा मथुरा जयत्यहो ! रत्नं रसाया अमला सुखाकरा ।
यस्यां वसन्ति स्म सुखं सुरासुरा भ्रातृत्वमादाय समानवाः पुरा ॥ १ ॥

अहो ! उस आश्चर्यमयी महापुरी मथुराकी जय हो, जो वसुन्धराका रत्न है, निर्मल है और सुखोकी खान है । जहाँ पूर्वकालमे देवता, असुर और मनुष्य परस्पर भ्रातृ-भाव रखते हुए सुखपूर्वक निवास करते थे ॥ १ ॥

बिराजिता सिद्धिसमृद्धिभिः सदा सुशोभितानेकगुणैर्विभूषिता ।
सौधोज्ज्वला सज्जनसाधुशालिनी याऽऽसीत् सरत्ना स्फुरितेव कामिनी ॥ २ ॥

वह सिद्धियो और समृद्धियोसे विराजित तथा अनेकानेक गुणोसे सदा सुशोभित एव विभूषित थी । सुधा-लिप्त प्रासादोसे वह पुरी अत्यन्त उज्वल दिखाई देती थी । सत्पुरुष एव साधु महात्मा उसकी शोभा बढाते थे । वह रत्न-जटित नगरी रत्नमालाओसे अलकृत रमणीकी भाँति उद्दीप्त होती थी ॥ २ ॥

यदङ्गसङ्गेन सुखाब्धिगामिना प्रलोभितो गौरवगृध्नुनाऽमुना ।
वसन् सदाङ्के लुठति स्म माधवो धवो रमाया अपि साधवो यथा ॥ ३ ॥

सुख-समुद्रकी उपलब्धि करानेवाले जिस नगरीके गौरवाभिलाषी अङ्ग-सङ्गसे लुभाकर रमापति माधव भी साधु-सन्तोकी भाँति सदा उसके अङ्कमे लोटते रहते थे ॥ ३ ॥

तस्यां प्रजारञ्जनपालनव्रती स शूरसेनो नृपतिः स्म राजते ।
शूरेण येनाक्षतवीर्यसंपदा यदोः कुलं तद्विपुलीकृतं भृशम् ॥ ४ ॥

उस नगरीमे प्रजाजनोके रञ्जन और पालनका व्रत लेनेवाले राजा शूरसेन शोभा पाते थे । उन शूरवीर नरेशने अपने अक्षत बल-विक्रमकी सम्पत्तिसे यादवकुलको अत्यन्त विपुल वैभवशाली बना दिया था ॥ ४ ॥

आसीत्तदा माथुरशौरमण्डलं सभाजितं सुष्ठुतया विराजितम् ।
सा राजधानी मथुरा यतो गुणैः सुशोभिताऽभूद्धरिखेलनस्थली ॥ ५ ॥

उनके राज्यकालमे माथुर या शूरसेन जनपद अतिशय सौन्दर्यसे सुसज्जित एव सुशोभित था। भगवान्‌की क्रीडास्थली वह राजधानी मथुरा अनेकानेक गुणोसे विभूषित थी ॥ ५ ॥

**कालेन सर्वे कवलीकृता यदा भौजोग्रसेनो नृपतां ययौ तदा।**
**यत्पुत्र आसीद्बलवीर्यदुर्मदः कंसो न कं शोच्यदशामलम्भयत् ॥ ६ ॥**

जब कालने समस्त पूर्ववर्ती नरेशोको अपना ग्रास बना लिया, तब भोजवशो उग्रसेन मथुराके राजा हुए। जिनका पुत्र बल-वीर्यके अभिमानसे उद्दण्ड राजकुमार कस था। उस कसने किसको नही शोचनीय दशाको पहुँचा दिया था ॥ ६ ॥

**तस्यां तु शौरिर्वसुदेव आत्मवान् धीरो युवासीद्बहुधा समृद्धिमान्।**
**तद्भ्रातृपुत्रीं गुणरूपशालिनीं तां देवकीं यः समुवाह कामिनीम् ॥ ७ ॥**

उसी नगरीमे शूरपुत्र वसुदेव रहते थे, जो बडे मनस्वी, धीर, युवक तथा अनेक प्रकारके समृद्धियोसे सम्पन्न थे। उन्होने उग्रसेनके भाईकी पुत्री देवकीसे विवाह किया, जो रूप-गुणसे शोभायमान तथा उन्हीको पति बनानेकी कामना रखनेवाली थी ॥ ७ ॥

**ददावतो देवक उत्तमः पिता तस्मै सुतां स्वां विधिना सदासिकाम्।**
**देयैरनेकैर्धनरत्नवाजिभी - रथैर्महार्हैर्वसनै - रलङ्कृताम् ॥ ८ ॥**

अत उत्तम पिता देवकने बहुमूल्य वस्त्राभूषणोसे अलकृत अपनी पुत्री देवकीको वेदोक्त विधिके अनुसार वसुदेवजीके हाथमे दे दिया। साथ ही दहेजके रूपमे बहुत-से धन-रत्न, हाथी, घोडे तथा रथ दिए। देवकीकी सेवाके लिए बहुत-सी दासियाँ भी अर्पित की ॥ ८ ॥

**पितृव्यकन्या भगिनी ममोत्तमा सा प्रापणीया स्वगृहान् मयाऽधुना।**
**मत्वेति तत्स्यन्दनवाजिरश्मयः कंसेन चाऽग्राहिषताऽनुकम्पिना ॥ ९ ॥**

'पितृव्य ( चाचा ) की पुत्री मेरी उत्तम बहिन है, इस समय मुझे ही इसे इसके घर ( ससुराल ) पहुँचाना चाहिए' ऐसा सोचकर कृपालु कसने देवकीके रथके घोडोकी बागडोर स्वय अपने हाथमे ले ली ॥ ९ ॥

**मनोहरैस्तूर्यरवैर्विभूषिते वधूप्रयाणे पथि भव्यतामिते।**
**तमेव चोद्दिश्य नभः पदं गता ह्यमानुषी वाक् प्रजगाविदं वचः ॥१०॥**

मनोहर वाद्य-रवोसे विभूषित भव्य राजमार्ग पर जब नव वधूका प्रस्थान हो रहा था, उसी समय कसको ही सबोधित करके आकाशवाणीने उससे यह बात कही—॥ १० ॥

हे कंस ! यां त्वं नयसे गुरोर्गृहं शृण्वत्र रे मूढ ! मनागिदं हितम् ।
गर्भाष्टमोऽस्याः सुत एव सत्क्रियो वधिष्यति त्वां तदिदं विचारय ! ॥११॥

'ओ मूढ कस ! तू जिसे श्वसुरके घरको लिए जा रहा है, इसके सम्बन्धमे नेक-सी यह हितकर बात सुन ले। गर्भसे इसका आठवाँ पुत्र ही, जो सत्कर्म करने वाला होगा, तेरा वध करेगा, इस बात पर विचार कर ॥ ११ ॥

अश्रावि कंसेन सरस्वतीदृशी व्यक्तं तदा तूर्यरवेऽपि तादृशि ।
कचे गृहीत्वा भगिनीं रुषासिना हन्तुं प्रवृत्तोऽथ भयाद् गतत्रपः ॥१२॥

यद्यपि उस समय वाद्योका वैसा तुमुल-नाद हो रहा था, तो भी कसको वह आकाश वाणी सुस्पष्ट सुनाई दी। फिर तो रोषसे उसने तलवार खीच ली। और बहिनके केश पकड-उसे मार डालनेको उद्यत हो गया। भयके कारण उसने लज्जाको तिलाञ्जलि दे दी थी ॥ १२ ॥

विगृह्य हस्तं विनिवारयंस्तदा वरो वरोऽसौ वसुदेव उच्चधीः ।
उवाच कंसं विनयेन सामभिः पश्यत्सु जन्येषु कुतूहलाक्षिभिः ॥१३॥

उस समय बरातीजन कौतूहलसे आँखे फाड-फाडकर देख रहे थे। श्रेष्ठ स्वभाव और उच्च विचारवाले वर-महानुभाव वसुदेवने कसका हाथ पकड लिया और उसे मना करते हुए विनय एव सान्त्वनायुक्त वाणीमे कहा—॥ १३ ॥

अहो ! भवान् भोजयशस्करो भृशं विराजते रत्नमिवेह राजसु ।
प्रशंसितो वीर्यबलेन भूयसा शूरैश्च वीरैश्च गुणैश्च कर्मभिः ॥१४॥

'अहो ! आप तो भोजवशका यश बढानेवाले है ( फिर इस क्रूर कर्मपर कैसे उतारू हो गए )। यहाँ राजाओमे आप रत्नके समान शोभा पाते है। समस्त शूरवीरोने आपके महान् वीर्यबल गुण और कर्मोकी प्रशसाकी है ॥ १४ ॥

तस्माज्जघन्यं भगिनीविशंसनं कुकर्म चेत्थं न हि कर्तमर्हसि ।
विवाहकाले भगिनीं सुतोपमां को वा विहन्यादहहा ! खलादृते ? ॥१५॥

'इसलिए आपको ऐसा कुकर्म नही करना चाहिए। बहिनको मारना बडा नीच काम है। हाय, हाय ! किसी दुष्टको छोडकर दूसरा कौन ऐसा मनुष्य होगा जो विवाहकालमे बेटी जैसी छोटी बहनका वध करेगा ॥ १५ ॥

भवेऽथ मृत्युस्तु शरीरधारिणां ह्यहार्यरूपो भवितैष निश्चयः ।
जीवस्तु भोक्ता स्वकृतस्य तत्फलं शुभाशुभं कर्मवशंगतः प्रभो ! ॥१६॥

'प्रभो ! इस ससारमे देहधारियोकी मृत्यु अनिवार्य है। यह निश्चय ही होकर रहती है। जीव तो कर्मके वशीभूत होकर अपने किये हुए शुभाशुभका फलमात्र भोगता है ॥ १६ ॥

म्रियेऽहमित्येष च निश्चयोऽपि भो ! जीवस्य मिथ्या भवबन्धनं च सः ।
आत्मा कदाचिन्न मृतो न जायते कुबुद्धिरेषा हि कथं प्रकल्प्यते ? ॥१७॥

'राजन् ! मै मरूँगा।' जीवका यह निश्चय भी मिथ्या ही है, भव-बन्धनमात्र है। आत्मा तो न कभी मरता है न कभी जन्म लेता है। फिर आप इस जीने-मरनेकी कुबुद्धिकी कल्पना कैसे करते है ? ॥ १७ ॥

तस्मात् परद्रोह इहेदृशः प्रभो ! कार्यो न केनाऽपि हितेच्छुनात्मनः ।
भूत्वा भृशं पीडित आयतौ यतः कर्ताऽवशोऽसौ नरके पतिष्यति ॥१८॥

'प्रभो ! अत अपने हितकी इच्छा रखनेवाले किसी भी मनुष्यको ऐसा परद्रोह नही करना चाहिए। क्योकि भविष्यमे द्रोहकर्ता पुरुष अत्यन्त पीडित हो, विवश होकर नरकमे गिरेगा' ॥ १८ ॥

इत्थं स चोक्तोऽपि वरेण सामभिर्भेदैश्च गूढं प्रतिबोधितोऽपि च ।
व्युपारमन्नाऽत्र बधूवधादसौ सखाऽसुराणामनुगश्च वृत्तितः ॥१९॥

इस प्रकार वर महानुभावने साम और भेद-युक्त वचनो द्वारा बडी गूढ बातें कहकर कसको समझानेकी चेष्टा की। परन्तु वह वधू-वधसे विरत नही हुआ। ऐसा क्यो न हो, वह जो असुरोका सखा था और वृत्तिसे उन्हीका अनुगामी था ॥ १९ ॥

विचारयामास तदत्र सन्मना निवारयेऽमुं सुतदानतो न किम् ? ।
मृत्युस्वरूपोऽयमुपस्थितः पुरो निवारणीयो बलबुद्धितो न किम् ? ॥२०॥

तब शुद्ध हृदयवाले वसुदेवने यहाँ यह विचार किया कि 'पुत्रको दे देनेकी प्रतिज्ञा करके इसे क्यो न रोकूँ' ? । इस समय तो यह मेरे सामने मृत्युरूप होकर उपस्थित है। अपने बल और बुद्धिके अनुसार इसके निवारणकी चेष्टा क्यो न की जाय ? ॥ २० ॥

भवन्ति पुत्रा न भवन्ति मेऽत्र वा मृत्युर्ह्यमुं मारयतीह किं न वा ? ।
विपर्ययो वा भविता न किं सुता एनं विहन्युः किमहो ! परेच्छया ? ॥२१॥

'पता नही यहाँ मेरे पुत्र उत्पन्न होगे या न होगे ? । यह भी सम्भव है कि कसकी मृत्यु ही इसे मार डाले। क्या इसके विपरीत कोई बात नही हो सकती। अहो ! यह भी तो हो सकता है कि परमात्माकी इच्छासे मेरे पुत्र ही इसे मार डाले ॥ २१ ॥

अदृष्टमेवाऽत्र प्रधानकारणं मृत्यौ च जन्मन्यपि देहिनां परम् ।
वह्नेर्यथा काष्ठवियोगयोगयोर्निमित्तमेवाऽस्ति यदत्र कारणम् ॥२२॥

'देहधारियोके जन्म और मृत्युमे यहाँ अदृष्ट ही प्रधान कारण है। जैसे अग्निका काष्ठसे वियोग और सयोग होनेमे कोई अज्ञात निमित्त ही कारण होता है॥ २२॥

दृष्ट्वा हठं चाऽप्रतिवार्यमीदृशं तत्प्राप्तकालं विमृशन्नसौ भृशम् ।
उवाच तं सत्यवचा उदारतां प्रदर्शयञ्छुष्कमना हसन्निव ॥२३॥

कसका ऐसा अनिवार्य हठ देखकर तत्काल प्राप्त कर्तव्यका विशेष विचार करके उदारता दिखाते हुए और शुष्क हृदयसे हँसते हुए—सत्यवादी वसुदेवने उससे कहा—॥ २३॥

वधिष्यति त्वां तु न देवकी स्वसा सुतेभ्य एवाऽत्र भयं न किं तव ? ।
समर्पयिष्यामि सुतांस्तु तानहं स्युर्जन्मभाजो यदि ते यदा तदा ॥२४॥

'राजन्! तुम्हे तुम्हारी बहन देवकी तो मारेगी नही। इसके पुत्रोसे ही तुम्हे भय है न! अत यदि इसके पुत्र जन्म लेगे तो जब-जब उनका जन्म होगा, तभी-तभी उन पुत्रोको आपके हाथमे सौप दूँगा॥ २४॥

भीतोऽप्यसौ तद्वसुदेवसत्यतां जानन्निवृत्तो भगिनीवधादथ ।
कंसं प्रशंसन् स वरोऽपि सद्वरां वधूं समाश्लिष्य गृहान् ययौ ततः ॥२५॥

यद्यपि कस मृत्युसे डरता था, तथापि वह वसुदेवजीकी सत्यवादितासे भी भली-भाँति परिचित था। अत उनकी उक्त बात सुनकर वह अपनी बहिनके वधसे निवृत्त हो गया। वर वसुदेवजी भी सुन्दरी वधूको हृदयसे लगाकर कसकी प्रशसा करते हुए अपने घर चले गये॥ २५॥

काले गते तद्वसुदेववीर्यतो ज्येष्ठं सुतं सा सुषुवे स्वगर्भतः ।
नीत्वा स कंसाय ददौ तमात्मजं धृतात्मनां किं भवतीह दुस्त्यजम् ? ॥२६॥

समय बीतनेपर देवकीने अपने गर्भसे वसुदेवजी के वीर्यसे सम्भूत ज्येष्ठ पुत्रको जन्म दिया। वसुदेवने उस पुत्रको ले जाकर कसके हाथमे दे दिया। जिन महात्माओने अपने मनको वशमे कर लिया है, उनकी लिए भला किस वस्तुका त्याग करना कठिन है ?॥ २६॥

अथाऽब्रवीत् कंस इमां व्यवस्थितिं तत्सत्यनिष्ठां च विलोक्य विस्मितः ।
भो ! सत्यवादिन् ! नय बालकं त्वमुं नास्माद्भयं मेऽस्ति वदन् प्रहर्षितः ॥२७॥

वसुदेवजीके इस दृढ निश्चय और सत्यनिष्ठाको देखकर कस चकित रह गया और वसुदेवसे बोला—'हे सत्यवादी महापुरुष! इस बालकको आप ले जाइए। इससे मुझको कोई भय नही है।' इतना कहकर वह हर्षसे खिल उठा॥ २७॥

**गर्भाद् भवेद् यो युवयोरिहाष्टमाद् देयः स मह्यं शिशुरेक एव तु ।**
**भूया भविष्येऽपि च सत्यवागतो व्रजस्व गेहं प्रिय ! शान्तिमाप्नुहि ॥२८॥**

उसने फिर कहा—'आप दोनोके आठवे गर्भसे जो उत्पन्न हो, एकमात्र वही शिशु आप मुझे दे दीजियेगा। प्रियवर ! आजकी ही भाँति आप भविष्यमे भी सत्यवादी सिद्ध हो, अत आप अपने घरको जाइये और शान्ति प्राप्त कीजिए ॥ २८ ॥

( अनुष्टुप् )

**बलवीर्यमदान्धस्य दुष्टस्याऽमिततेजसः ।**
**तस्य वाक्ये तु विश्वासं नाकरोच्छूरनन्दनः ॥२९॥**

कस बल-वीर्यके मदसे अन्धा हो रहा था। वह अमित तेजस्वी और दुष्ट था। अतः शूरनन्दन वसुदेवने उसकी बात पर विश्वास नही किया ॥ २९ ॥

**तस्मात् खिन्नमना भूत्वा गृहीत्वा सुतमात्मनः ।**
**पत्न्यै ददौ गृहं गत्वाऽवदद् वृत्तं यथाऽभवत् ॥३०॥**

वे खिन्नचित्त हो, वहाँसे अपने पुत्रको लेकर लौट आए। घर जाकर उन्होने वह पुत्र पत्नीके हाथोमे दे दिया और सारा वृत्तान्त यथावत् कह सुनाया ॥ ३० ॥

( शार्दूलविक्रीडितम् )

**संसारः खलु सारहीन इह ये तिष्ठन्ति तेऽपि स्वता**
**निःसारा बहुधा परन्तु सुधियः सन्त्यत्र सारप्रियाः ।**
**येषां सारत एव साररसिका हंसा यथा नीरतः**
**सारं सत्यमयं विगृह्य सततं प्राणन्ति, धन्या हि ते ॥३१॥**

यह ससार सारहीन है। जो लोग यहाँ रहते हैं, वे भी स्वतः प्राय नि सार ही हैं। परन्तु जिनकी बुद्धि शुद्ध है, वे यहाँ सर्वप्रिय होकर रहते है। उनके उस सार-भूत वस्तुसे ही सार-रसिक पुरुष, नीरसे क्षीर लेनेवाले हसोकी तरह सत्यमय सारका संग्रह करके सदा जीवन धारण करते है। वैसे लोग ही धन्य हैं ॥ ३१ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**व्यगमत् षष्ठसर्गोऽयं महाकाव्ये स्तवात्मके ॥३२॥**

कृष्णप्रसाद घिमिरेकी कृति इस 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे यह छठाँ सर्ग पूरा हुआ ॥ ३२ ॥

# सप्तमः सर्गः

[ कंसगृहे नारदाऽऽगमनम् । देवर्षिणा तत्प्रबोधनञ्च ]

( प्रहर्षिणीवृत्तम् )

**कंसोऽसावथ विरराज भव्यरूपे स्वे कोष्ठे रुचिरतरे महार्हद्रव्यैः ।**
**एकाक्युच्छ्वसितमना भृशं भयाब्धौ मग्नोऽभूद्धृदयगता यदा गिरस्ताः ॥**

तदनन्तर कंस बहुमूल्य उपकरणोंसे सुसज्जित, अतिशय सुन्दर अपने भव्य भवन ( बैठक )में विराजमान हुआ। वह अकेला था, जोर-जोरसे साँस चलनेके कारण उसका मन अत्यन्त उद्विग्न हो रहा था। जब उसने पूर्वोक्त आकाशवाणी पर मन ही मन विचार किया तब तो वह भयके महासागरमें डूबने लगा ॥ १ ॥

**कालेऽस्मिन् समयबलेन नोदितोऽसौ देवर्षिः कृतपरिवादिनीनिनादः ।**
**तत्रैवाऽऽपतदसमो हरे ! मुरारे ! सद्बुद्धिं वितर विभो ! वदन् सहासः ॥**

इसी समय कालरूप परमात्माकी शक्तिसे प्रेरित हो, अनुपम वैशिष्ट्यशाली देवर्षि नारद वीणा बजाते और 'हरे, मुरारे, भगवन् ! सद्बुद्धि दीजिए' इस प्रकार गाते हुए उन्मुक्त हासके साथ वहीं उतर पड़े ॥ २ ॥

**उत्थाय प्रणतिततीः समर्प्य पादे पाद्यार्घ्यैः ससुखमपूजयन् मुनिं सः ।**
**चाऽपृच्छत् कुशलमसौ ततः स्वकृत्ये साशङ्कोऽवददथ तं मुखं निरीक्ष्य ॥**

उन्हें देखते ही कंस उठकर खड़ा हो गया और उनके चरणोंमें प्रणाम पर प्रणाम—बारम्बार प्रणाम अर्पित करके उसने मुनिका पाद्य-अर्घ्य आदिके द्वारा सानन्द पूजन किया। तत्पश्चात् उनका कुशल समाचार पूछा—फिर अपने कृत्यके विषयमें सशंक हो मुनिके मुँहकी ओर देखते हुए उनसे कहा—॥ ३ ॥

**किं वृत्तं वद भगवन् ! क्षितौ प्रजानां का वार्ता दिवि च सुराः कथं वसन्ति ?।**
**तेषां किं व्यवसितमद्य मेऽत्र कृत्ये किं किं वा स्थिरमतयश्च मां वदन्ति ? ॥**

'भगवन् ! बताइये, भूमण्डलकी प्रजाका हाल-चाल क्या है ? । क्या वृत्तान्त है ? ! स्वर्गलोकमें देवता लोग कैसे रहते हैं ? उनलोगोंका क्या निश्चय है—वे क्या करना चाहते हैं तथा यहाँ मेरे कार्यके विषयमें स्थिर विचार करके आजकल वे मेरे प्रति क्या-क्या कहते हैं ? ॥ ४ ॥

**श्रुत्वेदं वचनमनिन्दितं ततोऽसौ देवर्षिः स्मितरुचिरं विहस्य किञ्चित् ।**
**तं चोचेऽसुरगणपूजितं सुभीतं तत्कृत्यं सुरगणचेष्टितं च वृत्तम् ॥**

उसके इस अनिन्दित ( उत्तम ) वचनको सुनकर देवर्षिने किञ्चित् मनोहर मन्द मुस्कान प्रकट करके असुर-समुदायसे पूजित और अत्यन्त भयभीत कससे उसके कार्य व्यवहारको लेकर और उसके प्रति देवताओंद्वारा की जानेवाली चेष्टाका वृत्तान्त बताते हुए इस प्रकार कहा—॥ ५ ॥

वीरस्त्वं क्षितिविदितो (ऽ) विमृश्यकारी स्वच्छन्दः प्रियजनपोषको विहारी।
वीर्येण प्रथितयशा बलेन चैव त्रैलोक्यं लघु कृतवान् भवान् द्रुतं भोः ! ॥

'राजन् ! तुम, भूमण्डलमे विख्यात वीर हो। सोच-विचारकर ( अथवा विना सोचे-समझे ) काम करनेवाले हो। स्वच्छन्द हो। अपने प्रेमीजनोका पोषण करते हो तथा मन-माने विहारमे लगे रहते हो। बल और पराक्रमकी दृष्टिसे तुम्हारा यश विख्यात हो चला है। कसराज ! तुमने अपनी महत्ताके सामने तीनो लोकोको लघु बना दिया है ॥ ६ ॥

धन्यस्त्वं शृणु ! विदितं च तेऽस्ति सर्वं कर्तव्ये विधिविहिते कृतेऽपि लोकाः।
पाण्डित्यं हृदयगतं प्रदर्शयन्तः स्वेच्छं वा किमिह वदन्ति नाव्यलीकम् ? ॥

'तुम धन्य हो ! मेरी बात सुनो। तुम्हे सब कुछ ज्ञात भी है। विधि-विहित कर्तव्य करनेपर भी लोग उसके विषयमे हार्दिक पाण्डित्य दिखाते हुए अथवा स्वेच्छासे ही कुछ टीका-टिप्पणी किया करते है जो सत्य नही होती ॥ ७ ॥

यच्छौरेः प्रथमसुतं जघान न त्वं तन्नाऽभूदुपचितमत्र शान्तिदं ते।
स्यात् का वा परिगणना च तत्र युक्ता देवक्याः सुतजननेऽष्टमे च गर्भे ? ॥

'तुमने जो वसुदेवके प्रथम पुत्रको नही मारा, वह मेरी दृष्टिमे यहाँ तुम्हारे लिए उपयुक्त या शान्तिदायक नही हुआ। फिर मै सोचता हूँ कि देवकीके पुत्र-जनन और अष्टम गर्भके विषयमे कैसी परिगणना उचित होगी ? ( पहलेसे आठवाँ या आठवेसे पहला ? किसको आठवाँ कहा जायेगा ) ? ॥ ८ ॥

आस्तां तच्छ्रवणयुगं वितीर्य मह्यं श्रोतव्यं शृणु कटु यत्तथापि कंस !।
त्वां सर्वे बुधविबुधा विशेषतोऽत्र पश्यन्ति ह्यसमदृशा किमर्थमेवम् ? ॥

'जो हो छोड़ो इन बातोको। कस ! अब तुम अपने दोनो कान मुझे ( मेरी ओर ) देकर कुछ होनेपर भी जो अवश्य सुनने योग्य है, मेरी उस बातको सुनो। इस त्रिभुवनमें समस्त विद्वान्, विशेषत देवता लोग तुम्हे क्यो ऐसी विषम दृष्टिसे देखते हैं ? यह विचारणीय है ॥ ९ ॥

त्रैलोक्यं पवन इव भ्रमन् गतोऽहं स्वर्गेऽपि स्थितिमसमां त्वदृष्टवान् भोः !।
नाऽवोचन् किमपि सुरा यदा तदाहं ध्यानस्थोऽभवमतुलं श्रितश्च योगम् ॥

'वायुकी भाँति तीनो लोकोमे भ्रमण करता हुआ एक दिन मै स्वर्गमे भी गया, किन्तु कस ! मुझे वहाँकी स्थिति बडी विषम दिखाई दी। उस समय देवताओने जब मुझसे कुछ भी नही कहा—तब मैने ध्यान लगाया और अनुपम योगका आश्रय लिया ॥ १० ॥

विज्ञातं किल सकलं तदैव वृत्तं त्रैलोक्ये बुधविबुधा यदत्र सन्ति।
ते सर्वे त्वयि विषमां मतिं दशश्च सत्रासं ह्यतिभयदां विनिक्षिपन्ति ॥

'उसी समय मुझे सारा वृत्तान्त समझमे आ गया। त्रिलोकीमे जो-जो विद्वान् और देवता विद्यमान है, वे सब तुम्हारे प्रति विषम बुद्धि रखते है। और तुमपर त्रासयुक्त अत्यन्त भयदायिनी दृष्टि डालते है ॥ ११ ॥

वीरस्त्वं त्वतिमनुजं करोषि कर्म यद्यत्तद्भवति विमृश्यमत्र तेषाम्।
तस्मात्तेऽसफलगिरा शपन्ति कंस! केचित्त्वां प्रधनमृतं च कामयन्ते ॥

'तुम वीर तो हो ही, यहाँ जो-जो अति मानव ( मनुष्यके लिए असाध्य ) कर्म करते हो, वह उनके लिए विचारणीय बन जाता है। कस ! इसीलिए वे अपनी सफल या असफल वाणीद्वारा तुम्हे शाप देते है। कोई कोई तो युद्धमे तुम्हारी मृत्युकी कामना करते भी है ॥१२॥

देवास्ते व्यवसितबुद्धयोऽत्र तस्मात् सञ्जाता निजबलसत्त्वपौरुषाद्यैः।
भूयिष्ठां यदुकुलगां तनुं गृहीत्वा त्वां हन्तुं छलबलतः स्थिता अमर्षैः ॥

'अत वे देवता यहाँ निश्चित विचार करके अपने बल, सत्व और पौरुष आदिके साथ जन्म ले चुके हैं। उनमे से अधिकाश यदुकुलमे देहधारण करके छल, बल और अमर्षसे तुम्हे मार डालनेके लिए स्थित हैं ॥ १३ ॥

यान् यान् स्वान् स्मरसि सदा त्वमत्र वीर ! तान् सर्वान् स्मर विवशान् रिपून् स्वयं त्वम्।
काले त्वां विहितविलं यदा कदापि ते सर्वे यमसदनं नयन्ति विद्धि ॥

'तुम यहाँ जिन-जिनको अपनापनके साथ स्मरण करते हो, उन सबको अभीतक विवश होकर बैठे हुए अपने शत्रु समझो। समय आनेपर जब कभी भी तुममे कोई छिद्र प्रकट होगा—तुम्हारी त्रुटि दिखायी देगी, वीर ! तब वे सब मिलकर तुम्हे यमलोक भेज देगे, ऐसा निश्चय समझो ॥ १४ ॥

अत्रत्याः शृणु यदवोऽन्धकाश्च भौजास्ते शौराः प्रियपुरुषाः स्त्रियश्च तास्ताः।
देवांशान् स्मर सकलान् वरांश्च गोपान् नन्दाद्यानपि रिपवो ममेति विद्धि ॥

'कंस ! ध्यान देकर सुनो। यहाँ जो यदु, अन्धक, भोज और शूरसेन वशमे प्रकट जो प्रिय-पुरुष तथा उनकी स्त्रियाँ हैं, उन सबको तुम देवताओके अशसे उत्पन्न समझो तथा जो नन्दादि श्रेष्ठ गोप हैं, इनको भी 'ये मेरे शत्रु हैं'। ऐसा जानो ॥ १५ ॥

त्वं चासीरसुरवरः स कालनेमिः प्राग्घ्योनौ प्रथिततरो महाञ्जगत्याम् ।
जानीहि प्रभुवरविष्णुना हतोऽसि यद्दौष्ट्यं ह्यतिमति जीववर्गे तदाऽभूत् ॥

'तुम पूर्वजन्ममे असुरशिरोमणि कालनेमि थे। उस समय भूमण्डलमे तुम्हारी बड़ी ख्याति थी। जब जीवोके प्रति तुम्हारी दुष्टता-बुद्धि औचित्यकी सीमाको लाँघ गयी तब अत्यन्त सामर्थ्यशाली भगवान् विष्णुने तुम्हे मार डाला था—इस बातको अच्छी तरह जान लो ॥ १६ ॥

देवक्या उदरगतः स शौरिवीर्यात् कृष्णत्व समधिगतो जनिष्यतेऽत्र ।
कैशोरे निजवयसि प्रवर्तमानः सोऽसौ द्राक् परमबलो वधिष्यति त्वाम् ॥

'वे ही विष्णु वसुदेवके वीर्यसे देवकीके गर्भमे आकर कृष्ण वर्ण एव कृष्णनामसे प्रसिद्ध होकर यहाँ जन्म लेगे। जब वे किशोर-अवस्थामे पहुँच जायेगे, तब अतिशय बलशाली होकर शीघ्र ही तुम्हारा वध कर डालेगे ॥ १७ ॥

दैत्यैस्तैरसुरनरैर्नरेन्द्रसंज्ञैः पृथ्वीयं कृतवृजिना भृशं निमग्ना ।
भारास्ते किल विषमा अतो निहन्तुं सोद्योगा अमरगणाश्च, भो ! गतोऽहम् ॥

'इधर 'राजा' नामधारी दैत्यो तथा असुर-स्वभाववाले मनुष्योद्वारा इतना पापाचार किया जा रहा है, कि उसके भारी भारसे यह वसुन्धरा रसातलमे धसती जा रही है। ये सब विषम-भार असह्य है, इसीलिए देवगण तुमको तथा उन असुर-भावापन्न नरेशोका वध करनेके लिए उद्योगशील हैं। लो ! अब मै चला ॥ १८ ॥

सर्वात्मन् ! वितर शिवं ब्रुवन् महर्षिर्देवर्षिस्त्वथ परिवादिनीं विनाद्य ।
स्वर्यातो मृदुमधुरै रवैर्मुरारेर्गायंस्तान् हृदयगतान् गुणान् प्रशंसन् ॥

'सर्वात्मन् कल्याण प्रदान कीजिए।'—ऐसा कहते हुए देवर्षि महर्षि नारद वीणा बजाकर मृदु मधुर स्वरोमे मुरारिके उन हृद्गत गुणोका गान एव प्रशसा करते हुए स्वर्गलोकको चल दिये ॥ १९ ॥

देवर्षौ गतवति तत्र भोजवीरः कंसोऽसौ मनसि चिरं विमृश्य सर्वम् ।
कर्तव्यं व्यवसितबुद्धिरस्थिरोऽपि ह्यभ्रान्तं दृढमकरोत् स्वमृत्युभीत्या ॥

देवर्षिके चले जानेपर भोजवशी वीर कसने चिर कालतक सब बातोपर मनमे विचार करके अस्थिर होनेपर भी मृत्युके भयसे निश्चित बुद्धि हो अभ्रान्त वन कर्तव्यका दृढ निश्चय कर लिया ॥ २० ॥

( वसंततिलकावृत्तम् )

ये नाम दुष्टपुरुषाः क्षितिपा नृपाश्च सन्तीह लुब्धहृदयाः परदेहगेहे ।
कुर्वन्ति तेऽत्र नहि दुष्करकर्म किं किं तच्छोणितं ह्यपि पिबन्ति स्वकर्मसिद्धम् ॥

इस ससारमे जो दुष्ट जमीदार या राजा पराये धन-जन या देह—गेहमे आसक्त-चित्त होते हैं, वे यहाँ कौन-कौन-सा दुष्कर्म नही करते है ? वे अपने कर्मोसे सिद्ध किया गया दूसरोका खूनतक पी लेते है ॥ २१ ॥

( वंशस्थ वृत्तम् )

**कंसेन तेनाक्षतवीर्यसंपदा पूर्वं गृहीतौ प्रियपूज्यदम्पती ।**
**बद्ध्वा भृशं तौ निगडैर्दृढायसैः कारागृहे स्वे निहितौ ससंभ्रमम् ॥**

अक्षत बल-सम्पत्तिवाले उस कसने पहले अपने प्रिय एव पूज्य दम्पति ( वसुदेव देवकी )को पकड लिया और उन्हे सुदृढ लोहेकी बेडी-हथकडीसे खूब बाँधकर शीघ्र ही कारागारमे डाल दिया ॥ २२ ॥

**ताभ्यामभूद्यत्प्रतिवत्सरं शिशुर्जघान तं तं स्वयमेव दुष्टधीः ।**
**इत्थं तयोः षट्शिशवो विनाशिताः कालः करालोऽथ बभूव दत्तभीः ॥**

उन दोनोसे वहाँ प्रति वर्ष जो-जो बालक उत्पन्न होता उसे दुष्ट बुद्धि कस स्वय अपने हाथो मार डालता था। इस प्रकार उनके छ शिशु विनष्ट कर दिये गये। इस पापसे बढा हुआ काल विकराल होकर कसको भय देने लगा ॥ २३ ॥

**विरुध्य पश्चाद्यदुभोजवृष्णिभिर्ये तत्र सन्ति स्म सुशीलसाधवः ।**
**हन्ति स्म तांस्तानपि तुच्छधीरयं प्रमथ्य वीर्येण रुषा च दुर्मदः ॥**

तत्पश्चात् तुच्छ बुद्धिवाले इस दुर्मद कसने यदु, भोज और वृष्णिवशके लोगोसे विरोध ठानकर उनमे जो सुशील तथा साधु-पुरुष थे, उन सबको अपने रोष और बल-वीर्यसे मथ कर मार डाला ॥ २४ ॥

**स्वं चोग्रसेनं पितरं विगृह्य हा ! प्रक्षिप्य कोष्ठे बलदर्पतो हि सः ।**
**राज्यं स्वयं माथुरशौरसेनयोश्चकार दुष्टैर्मिलितो भृशं खलः ॥**

औरोकी तो बात ही क्या है ? उस दुष्टने बलके घमण्डमे आकर अपने पिता राजा उग्रसेनको भी पकड कर एक कमरेमे नजर बन्द कर लिया और स्वय दुष्ट असुरोसे मिल कर माथुरमण्डल तथा शूरसेन जनपदका राज्य करने लगा ॥ २५ ॥

**आसन् सखायोऽपि तथैव तस्य ते यथा स आसीदतिदुष्टनिर्घृणः ।**
**कुर्वन्त उद्योगमनेकदुःखदं द्रोहात्मकं ये प्रथिताः समन्ततः ॥**

जैसे राजा कस अत्यन्त दुष्ट तथा निर्दय था, वैसे ही उसके सहायक मित्र भी थे। वे अनेक दु खदायक द्रोहात्मक उद्योग करते हुए चारो ओर अपने कुकर्मके कारण विख्यात थे। ॥ २६ ॥

प्रलम्बचाणूरमहाशनादिका　दुष्टास्तृणावर्तबकाः　सधेनुकाः ।
ते मुष्टिकारिष्टबकीहयादयः प्रिया वयस्याः परितस्तमाश्रयन् ॥

वे प्रलम्ब, चाणूर, महाशन आदि (अघासुर) दुष्ट, तृणावर्त, धेनुक, मुष्टिक, अरिष्ट, पूतना तथा केशी आदि असुर उसके प्रिय मित्र थे और उसे चारोओरसे घेरे रहते थे ॥ २७ ॥

(अनुष्टुप्)

आसीत्तच्छ्वशुरो　मित्रं　जरासन्धो　महाबलः ।
बाणश्चाऽप्रतिमो लोके चैद्यश्चाऽन्ये नृपास्तथा ॥

उसका श्वसुर महाबली जरासन्ध भी उसका मित्र था । लोकमे जिसकी कही तुलना नही थी, वह बाणासुर तथा शिशुपाल आदि अन्य नरेश भी उसके सहायक थे ॥ २८ ॥

यस्य　बुद्धिर्बलं　शक्तिर्यादृश्यस्ति　धरातले ।
तादृशी　तस्य　मिलति　दैवतः　सहयोगिता ॥

भूतल पर जिसकी बुद्धि, बल और शक्ति जैसी होती है, दैववश उसके वैसे ही सहयोगी भी मिल जाते हैं ॥ २९ ॥

अनेन　नियमेनैव　जगत्यां　ये　तदाऽभवन् ।
दुष्टाः　क्रूराश्च　राजानः　संगतास्तादृशामुना ॥

इसी नियमके अनुसार पृथ्वीपर उस समय जो-जो दुष्ट और क्रूर राजा थे, वे सब वैसे ही स्वभाववाले कससे मिल गये थे ॥ ३० ॥

यान् समाश्रित्य दुर्मेधाः कंसोऽसौ यदुवृष्णिगान् ।
वृद्धान् वीरांश्च सद्वृत्ताञ्जघान भयतो भृशम् ॥

उसका सहारा लेकर दुर्बुद्धि कसने यदुवशी तथा वृष्णिवशी बृद्ध-पुरुषोको, जो वीर और सदाचारी भी थे, अत्यन्त भयके कारण मार डाला ॥ ३१ ॥

(वसंततिलकावृत्तम्)

दुष्टैः खलैश्च बहुभिः श्रितघोरवृत्तैस्ते पीडितास्तत इमे यदुवृष्णिवीराः ।
स्वान् स्वान् विगृह्य विविशुः कुरुकेकयांश्च शाल्वान् विदर्भनिषधानथ कोसलांश्च ॥

घोरवृत्तिका आश्रय लेनेवाले बहुसख्यक दुष्ट और खलोसे पीडित हो, ये यदुवशी और वृष्णिवशी वीर अपने-अपने परिवारको लेकर कुरु, केकय, शाल्व, विदर्भ, निषध और कोशल-जनपदोमे चले गये ।। ३२ ।।

(अनुष्टुप्)

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**व्यगमत् सप्तमः सर्गो महाकाव्ये स्तवात्मके ।।**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे सातवाँ सर्ग पूरा हुआ ।। ३३ ।।



# अष्टमः सर्गः

[ देवकीगर्भेऽनन्तप्रवेशः । मायेशयो सवाद । गर्भसङ्कर्षणञ्च । तथा भगवतो वसुदेववीर्यतो देवकीगर्भप्रवेशश्च ]

( वंशस्थेन्द्रवंशयोरुपजातिवृत्तम् )

कंसेन बालेषु हतेषु षट्सु हा ! वृद्धेष्वधर्मेषु जगत्सु विस्तृतम् ।
नश्यत्सु वृद्धेषु सुदुःखितेष्वभूद् भ्रश्यत्सु धर्मेषु च दुर्गतिः सताम् ॥

कसने जब देवकीके छ बालकोकी शोकजनक हत्या कर डाली, जगत्मे अधर्म की विस्तृत वृद्धि होने लगी, बडे बूढे लोग नष्ट एव अत्यन्त दु खित हो गये और धर्मका नाश होने लगा, तब साधु-सन्तोकी बडी दुर्गति हुई ॥ १ ॥

हर्तुं स्थितिं तां भवभीतिदां तथा कर्तुं च लीलां बुधचित्तगां सदा ।
कृष्णावतारोपचिता हरेः कला तद्देवकीगर्भगता बभौ वदा ॥

उस समय उस भवभीति दायिनी अवस्थाका निराकरण तथा विद्वानोके लिये सतत चिन्तनीय लीलाका विस्तार करनेके लिए श्रीहरिकी कृष्णावतारोपयोगिनी कला माता-देवकीके गर्भमे प्रविष्ट हो, शोभा पाने लगी ॥ २ ॥

वदन्ति यां शेष इति स्वभावतः सहस्रशीर्षा पुरुषो हि यश्च सः ।
अलौकिकं ज्ञानमनन्तमस्य यद्विराजतेऽनन्त इति ब्रुवन्त्यतः ॥

यह वह कला थी, जिसको शेष कहते हैं और जो स्वभाविक रूपसे सहस्रशीर्षा ( सहस्र-मस्तकधारी ) पुरुष हैं। इनका अलौकिक एव अनन्त ज्ञान प्रकाशित होता है, इसी लिए विद्वान् पुरुष इन शेषको 'अनन्त' कहते हैं ॥ ३ ॥

तस्मिन् प्रभौ गर्भगते विभुर्हरिर्भीतानपश्यत् खलकंसतो यदून् ।
तान्निर्भयान् कर्तुमना मनागसौ मायामवोचन्निजशक्तिमव्ययाम् ॥

प्रभु शेषके गर्भगत हो जानेपर सर्वव्यापी श्रीहरिने देखा—समस्त यादव दुष्ट-कसके भयसे पीडित हैं। तब उन्हे निर्भय करनेकी इच्छा मनमे लेकर उन भगवान्ने अपनी अविनाशिनी शक्ति योगमायासे थोडेमे इस प्रकार कहा—॥ ४ ॥

त्वं योगमाये ! शृणु मद्वचो हितं शीघ्रं व्रजं गच्छ मनोहरं त्वितः ।
गोपैश्च गोपीभिरधिष्ठितं श्रिया गोभिर्वृषैर्भूषितमञ्जसा कुरु ॥

'योगमाये ! तुम मेरा हितकर वचन सुनो। यहाँसे शीघ्र ही महोहारिणी व्रजभूमिको चली जाओ। वहाँ गोप और गोपियाँ निवास करती हैं तथा वह गायो और बैलोसे विभूषित है। तुम अनायास ही उस व्रजको लक्ष्मीसे सम्पन्न कर दो ॥ ५ ॥

**शौरेः प्रिया तत्र विराजते भृशं सा रोहिणी नन्दगृहं गता स्थिता।**
**अन्यास्तथाऽन्ये च हिताः प्रियव्रताः सेव्यं तमाश्रित्य वसन्ति निर्भयाः ॥**

'व्रजमे वसुदेवजीकी प्रिय-पत्नी रोहिणी नन्दरायके गृहकी शरण लेकर रहती है और अतिशय शोभा पाती है। उनकी अन्य स्त्रियाँ तथा अन्यान्य हितैषी प्रिय-व्रत जन भी उस सेव्य व्रजका आश्रय ले वहाँ निर्भय हो निवास करते है ॥ ६ ॥

**तां देवकीगर्भगतां कलां शुभे ! । ममेति जानीहि पदानुगां सदा ।**
**विकृष्य तस्या उदरे यथासुखं निवेशय त्वं ह्यसि यत्पटीयसी ॥**

'शुभे ! देवकीजीके गर्भमे जो कला निवास करती है, उसे तुम सदा मेरे ही चरणोका अनुसरण करनेवाली मेरी 'अनन्त' नामक कला समझो। उसे तुम देवकीके उदरसे खीचकर सुखपूर्वक रोहिणीके गर्भमे स्थापित कर दो। तुमसे इस लिए कहता हूँ कि तुम इस कलामे अत्यन्त पटु हो ॥ ७ ॥

**ततस्त्वहं तद्वसुदेववीर्यतस्तां देवकीमेव सुखं समास्थितः ।**
**तद्गर्भतः पूर्णकलां समाश्रितः प्रादुर्भविष्यामि सुतस्वरूपतः ॥**

तत्पश्चात् मै उन वसुदेवजीके वीर्यसे उन्ही देवी-देवकीके ही गर्भमे सुखपूर्वक स्थित हो अपनी सम्पूर्ण कलाओको साथ लिए उस गर्भसे उन दोनोके पुत्ररूपसे प्रकट होऊँगा ॥ ८ ॥

**त्वं दिव ! तत्रैव जनिष्यसे ततो यशोदया तत्पतिनन्दवीर्यतः ।**
**आवां तदा गोकुलमण्डले तथा वृन्दावनेऽस्मिन् विहराव ईश्वरि ! ॥**

'देवि ! ईश्वरि ! उस समय तुम भी उसी व्रजमे यशोदाद्वारा उनके पति नन्दरायजीके वीर्यसे जन्म ग्रहण करोगी। फिर हम दोनो गोकुल-मण्डल तथा वृन्दावनमे लीलाविहार करेगे ॥ ९ ॥

**एतन्निमित्तं मनुजा धरातले धूपोपहारबलिभिर्विभूतिभिः ।**
**अर्चन्ति नित्यं फलदां वरेश्वरीं त्वां तुष्टिदां भक्तजनानुकम्पिनीम् ॥**

'तुम्हारे ऐसा करनेके कारण भूतलपर मनुष्य धूप आदि उपहार, बलि एव वैभवके द्वारा नित्य तुम्हारी पूजा करेगे। क्योकि तुम मनोवाञ्छित फल देनेवाली, वरदान देनेमे समर्थ, सबको सन्तोष देनेवाली तथा भक्तजनोपर अनुग्रह करनेवाली हो ॥ १० ॥

**कुर्वन्ति नामानि च ते यथा तथा स्थानानि निर्माय च मन्दिराणि ते ।**
**निरीक्षिता हृष्टहृदः शुभे ! त्वया त्वां स्थाप्य चित्ते विहरन्ति ये सुखम् ॥**

'भूलोकनिवासी तुम्हारे लिए स्थानो और मन्दिरोका निर्माण करके यथायोग्य समुचित नाम रखेगे । शुभे ! तुम्हारी कृपा-दृष्टि पडनेपर उन सबके मन प्रसन्न हो जायेगे और लोग तुम्हे अपने हृदय-मन्दिरमे स्थापित करके सुखपूर्वक विचरेगे ॥ ११ ॥

**त्वं भद्रकाली विजया च चण्डिका कृष्णा च दुर्गा कुमुदाऽम्बिका शिवा ।**
**नारायणी दिव्यविभूतिरीश्वरी कन्या च माया शुभदेति कथ्यसे ॥**

लोगोद्वारा तुम भद्रकाली, विजया, चण्डिका, कृष्णा, दुर्गा, कुमुदा, अम्बिका, शिवा, नारायणी, दिव्य-विभूति, ईश्वरी, कन्या, माया और शुभदा आदि नामोसे पुकारी जाओगी ॥ १२ ॥

**सा गर्भसंकर्षणगा कला व्रजे प्राप्नोति सिद्धिं महतीं स्वयं ततः ।**
**वदन्ति यां राम इति प्रभुर्ह्यसौ यदत्र कर्ता स्वजनानुरञ्जनम् ॥**

'तुम्हारेद्वारा गर्भसे खीचकर व्रजमे ले जायी गयी वह मेरी कला वहाँ स्वत महती सिद्धिको प्राप्त होगी । उसे लोग राम या बलराम कहेगे । वे बलराम प्रभु वहाँ रहकर स्वजनोका अनुरजन ( प्रीति सम्बर्द्धन ) करेगे' ॥ १३ ॥

**आज्ञां जगद्भर्तुरहार्यरूपिणीं लीलामयीं तां प्रतिगृह्य चिन्मयीम् ।**
**पृथ्वीं गता सा स्वविभूतितोऽञ्जसा चकार सर्वं प्रियवस्तु तादृशम् ॥**

विश्वम्भर श्रीहरिकी उस अहार्य-शक्तिरूपिणी लीलामयी एव चिन्मयी आज्ञाको स्वीकार करके देवी योगमाया पृथ्वीपर उतर गयी और अपने वैभवसे—अघटित घटना घटन पटीयसी शक्तिसे अनायास ही सब कुछ उनके कथनानुसार सम्पन्न कर दिया । यह भगवान्के लिए प्रियकारक वस्तु थी ॥ १४ ॥

**बभूव संयोग इहेदृशो यदा पत्युश्च पत्न्याश्च सुयोगकाङ्क्षिणोः ।**
**संमेलने तद्वसुदेवगं महो दधार रोहिण्यपि सा क्षणात्ततः ॥**

जब ऐसा सयोग हुआ, एक दूसरेसे मिलनेकी इच्छा रखनेवाले पति और पत्नीका सगम हुआ ( आज कलकी भाँति पहले भी कैदियोसे उनके स्वजन मिल सकते थे तदनुसार वसुदेव और रोहिणीका सयोग होनेपर ) वसुदेवके तेजको देवी रोहिणीने क्षण भरमे धारण कर लिया ॥ १५ ॥

**अमुं सुयोग्याऽवसरं विगृह्य सा मायाऽप्यभूद् गर्भविकर्षणे क्षमा ।**
**तद्देवकीगर्भगतोऽप्यसौ शिशुस्तयैव तस्या उदरे प्रवेशितः ॥**

इस योग्य अवसरको पाकर योगमाया भी देवकीके गर्भका विकर्षण करनेमे समर्थ हुई। उसोने देवकीके गर्भ-गत शिशुको रोहिणीके उदरमे प्रविष्ट कर दिया ।। १६ ।।

**विभ्रंशितः सप्तमगर्भ ईदृशी जनश्रुतिः सा प्रससार सर्वतः ।**
**तैलं यथा वारिषु तत्क्षणादहो ! प्राप्तो जनैः प्रत्यय ईशमायया ॥**

फिर तो चारो-ओर ऐसी किम्वदन्ती फैल गई कि देवकीका सातवाँ गर्भ गिर गया। जैसे जलमे तेल फैलता है, उसी प्रकार यह समाचार तत्क्षण सब ओर व्याप्त हो गया। अहो ! ईश्वरकी मायाके प्रभावसे लोगोने इसपर विश्वास कर लिया ।। १७ ।।

**अतः परं दिव्यविभूतिमाश्रितो हरिः शरण्योऽभयदः सतां गुरुः ।**
**प्रविष्टवानानकदुन्दुभेर्मनः स्वांशेन पूर्णेन विशुद्धमुन्नतम् ॥**

इसके बाद दिव्य विभूतिका आश्रय लेकर सबको अभय देनेवाले शरणागतवत्सल तथा साधु-सन्तोके गुरु श्रीहरिने अपने पूर्ण अशके साथ वसुदेवके विशुद्ध एव उन्नत हृदयमे प्रवेश किया ।। १८ ।।

**तयोर्विहारे तत आत्मगं महो न्यधात् स पत्न्या उदरेऽतिनिर्मले ।**
**तद्धारयन्ती शुशुभेऽथ देवकी प्राचीव चन्द्रं ह्यदितिर्विभुं यथा ॥**

तदनन्तर उन दम्पतिके विहार कालमे वसुदेवने अपना तेज, अपनी पत्नी-देवकीके अत्यन्त निर्मल उदरमे स्थापित कर दिया। उस गर्भको धारण करके देवकी चन्द्रमाको गर्भमे लेनेवाली प्राची तथा भगवान् वामनको उदरमे धारण करनेवाली देवी अदितिके समान सुशोभित हुईं ।। १९ ।।

**श्रुत्वा चरैस्तामतिदिव्यरूपिणीं ज्वलत्प्रभां गर्भभरालसां पुनः ।**
**संभ्रान्तचित्तो भयवेगमूर्च्छितः कंसोऽथ कारागृहमागमद् द्रुतम् ॥**

तदनन्तर अपने चरोके मुँहसे उन देवकीको फिर भी अतिशय दिव्यरूपकी एव अपनी कान्तिसे ही जगमगाती और गर्भके भारसे अलसाई हुई सुनकर अत्यन्त भ्रान्त चित्तका हो, भयके वेगसे मूर्छित-सा हुआ वह कस तुरन्त उसी कारागृहमे आ पहुँचा ।। २० ।।

**दृष्ट्वेदृशीं तां भयदायिनीमितः स तर्कयामास तदा हृदन्तरे ।**
**मन्मृत्युरस्या उदरं समाश्रितः स एव नूनं न पुरेदृशी यत. ॥**

देवकी कसके लिए भयदायिनी प्रतीत होने लगी। उसे ऐसी तेजस्विनी देख कसने मन ही मन अनुमान कर लिया कि मेरी मृत्युका कारणभूत शिशु अब इसके उदरमे आया है। निश्चय ही यह वही है। क्योकि पहले यह ऐसी दीप्तिमती नही दिखाई देती थी ।। २१ ।।

**किं घातयेऽहं भगिनीमिमां सतीं किं वा स्वयं हन्म्यधुना स्वमृत्युदाम् ? ।**
**यद्वा विहन्याद्द्वितनूर्विधारिणीं स्त्रियं बुधः कोऽत्र ? खलस्तु नास्म्यहम् ॥**

क्या मै सती बहनको मरवा डालूँ अथवा अपनेको मृत्यु प्रदान करनेवाली इस देवकीको स्वय ही मार डालूँ ? अथवा दो शरीर-धारण करनेवाली गर्भवती स्त्रीको कौन विद्वान् मारेगा ? मै ऐसा खल तो नही हूँ ॥ २२ ॥

**जीवंस्तु कोऽज्ञोऽपि कुकर्म चेदृशं करोत्यहो ! यत्र शपन्ति तं जनाः ।**
**गन्ता मृते घोरतमो दशाद्वये विगर्हितं यत् खलु मृत्युतो महत् ॥**

अहो ! कौन मूर्ख भी जीते जी ऐसा कुकर्म करेगा, जिसके लिए लोग उसे कोसेगे, गालियाँ देगे अथवा शाप देगे और मरनेपर उसे घोर अन्धकारपूर्ण नरकमे गिरना पडेगा । जो दोनो दशाओमे गर्हित है । वह कर्म तो मृत्युसे भी बढकर भयदायक है ॥ २३ ॥

**तदस्तु जाते ह्युदरस्थबालके तं हन्म्यहं चेति विचार्य यत्नतः ।**
**बधान्निवृत्तोऽथ मनस्तु तस्य तद्बभ्यासीद् भृशोद्विग्नमहो ! प्रतिक्षणम् ॥**

अस्तु, अब बहिनका वध नही करना है । इसके उदरका बालक जब जन्म लेगा, तब उसे ही मार डालूँगा । यत्नपूर्वक ऐसा विचार करके वह देवकीके वधसे विरत हो गया । परन्तु उसका मन क्षण-क्षणमे अत्यन्त उद्विग्न रहने लगा ॥ २४ ॥

**भुञ्जान आसीन इतस्ततो व्रजन् भ्रमन् पिबंश्चैकमना भयादतः ।**
**तं संस्मरन्मृत्युस्वरूपमात्मनो दधार चित्ते च विकल्प्य भाविनम् ॥**

वह खाते-पीते, उठते-बैठते और चलते-फिरते उस बालकके भयसे एकाग्रचित्त हो, अपने मृत्युस्वरूप उस शिशुका स्मरण करता हुआ चित्तमे उसके भावीरूपकी कल्पना करके उसको निरन्तर धारण किये रहता था ॥ २५ ॥

**निरीक्ष्य तस्या उदरं गतं हरिं ब्रह्मर्षिदेवर्षिसुरानुगस्ततः ।**
**ईशानमादाय समं तदागतस्तुष्टाव गीर्भिर्वरदं पितामहः ॥**

देवकीके उदरमे श्रीहरिका निवास हुआ देख अपने पीछे ब्रह्मर्षियो तथा देवताओका समूह लिये भगवान् शङ्करके साथ पितामह-ब्रह्मा वहाँ आये और अपनी वाणी द्वारा उन वरदायक प्रभुका स्तवन करने लगे ॥ २६ ॥

**सत्याश्रयं सत्यपरं स्वभावतः सत्यात्मकं त्वां शरणं गता वयम् ।**
**निवेदयामो भगवन्त्वमाश्रिता माऽभूद्भयं भोजपतेर्भवेश्वर ! ॥**

'अखिल ब्रह्माण्डनायक जगदीश्वर ! आप सत्यके आश्रय है, सत्य-परायण हैं, स्वभावत सत्यरूप है, हम सब लोग आपकी शरणमे आये हैं । आप भगवान्का ही आश्रय लेनेवाले हम आपसे यह निवेदन करते हैं कि 'अब भोजराज कससे किसीको भय न होने पावे' ॥ २७ ॥

**अन्येऽवतारा इव भाव्ययं प्रभो ! माऽभूद् भवेत्पूर्णकलाप्रवेशितः ।**
**लीलाविहारे विहिते विचारिते स्यान्मुक्तिदायी स्मरतां, गता वयम् ।।**

'दूसरी प्रार्थना यह है कि प्रभो ! अन्य अवतारोकी भाँति आपका यह भावी अवतार आंशिक न हो। इसमे आपकी सपूर्ण कलाओका प्रवेश होना चाहिए। इसकेद्वारा लीला-विहार किये जाने पर जब उसका चिन्तन किया जाय तो वह चिन्तन-परायण भक्तोको मुक्ति-प्रदान करनेवाला होवे। अब हम लोग चले ।। २८ ।।

**तद्गर्भगं हरिमनश्वरमीश्वरं तं स्तुत्वा नभस्त इह धातृमुखाः सुरास्ते ।**
**जग्मुर्यथागतमथ प्रचुरां मुदं सा सार्धं शुभेन हरिणा दधती रराज ।।**

वे ब्रह्मा आदि देवता इस प्रकार आकाशसे ही उन गर्भ गत, अविनाशी ईश्वर श्री हरिकी स्तुति करके जैसे आये थे, वैसे ही अपने धामको चले गये। इधर देवकी कल्याण-स्वरुप श्री हरिके साथ ही अपने भीतर प्रचुर परमानन्द धारण करती हुई अतिशय शोभा पाने लगी ।। २९ ।।

( अनुष्टुप् )

**अभवच्छोभनं सर्वं नभः शान्तं धरा सुखी ।**
**चराचरात्मकं विश्वं प्रसन्नं भाविश्रेयसि ।।**

निकट भविष्यमे होनेवाले उस श्रेय ( हरि-प्रादुर्भाव ) के समय सब कुछ शोभन हो गया। आकाश शान्त और भूमण्डल सुखी हो गया। तथा चराचर विश्वमे प्रसन्नता छा गयी ।। ३० ।।

**पञ्चविंशमिते वर्षेऽवशिष्टे शतपूर्वके ।**
**द्वापरस्यान्तिमे भागे प्रादुरासीद्धरिस्ततः ।।**

जब द्वापर-युगका अन्तिम भाग व्यतीत होनेमे कुल एक सौ पचीस वर्ष शेष रह गये थे, तब श्रीहरिका प्रादुर्भाव हुआ था ।। ३१ ।।

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**व्यगमच्चाष्टमः सर्गो महाकाव्ये स्तवात्मके ।।**

कृष्णप्रसाद धिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे आठवाँ सर्ग पूरा हुआ ।। ३२ ।।



# नवमः सर्गः

[ भगवत आविर्भाव. । मातृपितृभ्या कृता तत्स्तुति । भगवता तयो कर्मनिर्देश । ताभ्या तथैवाचरणञ्च । ]

( वसन्ततिलकावृत्तम् )

कालः करोति सकलं बलवान् महान् सः सर्वं जगन्नयति यो विकरालगर्तम् ।
कर्तुं ह्यकर्तुमिह कर्तुमथा न्यथा च यः सर्वदा प्रभवतीशहरिः स एव ॥

काल ही सब कुछ करता है। वह महान् बलवान् है, वही सारे जगत्को विकराल गर्त ( प्रलय ) की ओर ले जाता है। वह सदा करने, न करने और अन्यथा करनेमे समर्थ है। वह काल ही सर्वेश्वर श्रीहरि है ॥ १ ॥

प्रादुर्भवन् स इह किं न भवेच्छुभेष्टं यः कोऽपि शक्तिसदृशं विकरोत्यभीष्टम् ।
पूर्णाः कला अविकलाः श्रयता ह्यनेन किं किं न साधितमहो ! धरणीं गतेन ? ॥

जब वे ही भगवान् यहाँ प्रकट हो रहे हो, तो कौन सा शुभ और अभीष्ट कार्य सिद्ध न होगा। कोई भी क्यो न हो, सभी अपनी शक्तिके अनुसार अभीष्ट वस्तुका सम्पादन करते हैं। अहो ! अपनी सम्पूर्ण अविकल कलाओका आश्रय लेकर भूतलपर अवतीर्ण हुए इन भगवान् श्री हरिने कौन-कौन-सा कार्य सिद्ध नही किया ? ॥ २ ॥

सर्वं सुभिक्षमभवद्धरिजन्मकाले त्रैलोक्यमेव सकलं सकलं बभूव ।
रामा रमा रमणकृष्णपदाब्जसङ्गं ह्याकाङ्क्षती जगति तुष्टमना अखेलत् ॥

भगवान्के अवतारके समय सब प्रकारसे जगत्मे सुभिक्ष ( सुकाल ) छा गया था। सारी त्रिलोकी ही सकल कलाओसे सम्पन्न हो गई। अपने प्रियतम श्रीकृष्णचन्द्रके चरणारविन्दका सङ्ग चाहती हुई प्रिया लक्ष्मी ससारमे सतुष्ट चित्त होकर क्रीडा करने लगी ॥ ३ ॥

सार्धं तयैव सरितश्च दिशश्च सर्वा देवी मही च निजशक्त्युपबृंहितास्ताः ।
तुष्टा मुदा मुमुदिरे भुवि भूत वर्गा देवाश्च ते दिवि तदा सुखिनो ह्यभूवन् ॥

लक्ष्मीके साथ ही सरिताये, सम्पूर्ण दिशाये तथा देवी वसुन्धरा भी अपनी बढी हुई शक्तिसे सम्पन्न हो गई। भूतलके भूत-समुदाय सन्तोष एव आनन्दका अनुभव करने लगे। स्वर्गलोकके देवता भी उस समय पूर्ण सुखी हो गये ॥ ४ ॥

तौर्यत्रिकं समुदभूदथ नाकलोके तं तुष्टुवुः सुमनसो मुनयश्च सिद्धाः ।
देवा ववर्षुरधिसिन्धु मुदा तदानीं देवस्त्रियः ससुखमप्सरसस्त्वनृत्यन् ॥

फिर तो स्वर्गलोकमे दिव्य वाद्य बजने लगे। देवता मुनि और सिद्धगण भगवान्‌की स्तुति करने लगे। पर्जन्य-देवता प्रसन्न हो सागरमे वर्षा करने लगे। उस समय देवाङ्गनाये और अप्सराये सानन्द नृत्य करने लगी ॥ ५ ॥

**कृष्णाष्टमी तिथिरभूद्धरिजन्मकाले भाद्रस्य चातिशुशुभे च निशीथवेला ।**
**तद्गर्भतोऽथ भगवान् हरिरीश्वरोऽसौ प्रादुर्बभूव निशि पूर्वदिशीव चन्द्रः ॥**

श्री हरिके जन्मके समय भाद्रपद मासकी कृष्णपक्षीया अष्टमी तिथि थी और अर्द्ध-रात्रिकी वेला अतिशय शोभा पा रही थी। जैसे रातमे पूर्व दिशामे चन्द्रोदय होता है, उसी प्रकार उस अर्द्धनिशामे जगदीश्वर भगवान् श्रीहरि देवकीके गर्भसे प्रकट हुये ॥ ६ ॥

**आसीद् भृशं कुसुमवृष्टिरितस्ततोऽत्र कारागृहेऽमरगणैर्विहिता नभस्तः ।**
**वायुः सुगन्धमसृजज्ज्वलनो मुनीनां जज्वाल धूमरहितः स्वत एव शान्त्या ॥**

उस कारागारमे आकाशसे देवताओ द्वारा की गई इधर-उधर भारी पुष्पवर्षा हुई। मन्द-मन्द वायु सुगन्धकी सृष्टि करने लगी और मुनियोके अग्निहोत्र-गृहमे धूमरहित अग्निदेव स्वय ही शान्ति पूर्वक प्रज्वलित हो उठे ॥ ७ ॥

**तद्रूपमुज्ज्वलमशोभत शान्तिदायि सच्चिन्मयं गुणमयं सकलार्थसारम् ।**
**आनन्दधाम शुभदं ह्यतिनीलवर्णं ज्ञानप्रदं नयनवर्धनमार्तिहारि ॥**

भगवानका वह शान्तिदायक उज्वल रूप बडी शोभा पाने लगा। वह सच्चिदानन्द-मय कल्याण गुणमय सर्वार्थसार, आनन्दनिकेतन, मङ्गलदायक, ज्ञानप्रद तथा अतिशय नीलवर्ण था। वह नयनोका आनन्द बढानेवाला और दु खको दूर कर देनेवाला था ॥ ८ ॥

**आपादमस्तकविभूषितमार्तिभाजां ध्येयं चतुर्भुजमवाच्यममेयमीदृक् ।**
**शान्तिप्रदं परिकरैः सहितं चिदंशैः पीताम्बरं सकलभूषणभूषिताङ्गम् ॥**

पैरसे लेकर मस्तकतक उसके सारे अग दिव्य आभूषणोसे विभूषित थे। पीडित जनोका चिन्तनीय वह रूप चार भुजाओसे युक्त अनिर्वचनीय और अप्रमेय था। जगत्‌को शान्ति-प्रदान करनेवाला तथा चिन्मय परिकरोसे सेवित था। उसके श्रीअङ्गोपर पीताम्बर शोभा पा रहा था और सब प्रकारके आभूषण उसके अङ्गोकी शोभा बढा रहे थे ॥ ९ ॥

**दृष्ट्वेदृशं स वसुदेव उदारभावो भूमिं गतेन शिरसानमदव्ययं तम् ।**
**सञ्जातविस्मय इहाऽद्य तु पुत्रतीर्थे दानं गवामयुतमस्मरदुन्नतोऽसौ ॥**

भगवानका ऐसा रूप देखकर उदार भाववाले वसुदेवने धरतीपर मस्तक टेककर उन अविनाशी प्रभुको प्रणाम किया। वे आश्चर्य चकित हो रहे थे। और इस पुत्र-तीर्थमे उस समय उन्होने उत्साहित होकर दस हजार गौओके दानका सकल्प किया ॥ १० ॥

अस्तौदमुं तव इतः प्रतिलब्धबोधो दृग्दीक्षयैव विनिवारितमूढवृत्तिः ।
सञ्जातगद्‌गदवचाः स उदारभावो जानन् परं पुरुषमात्ममयं विभुं तम् ॥

तदनन्तर भगवानसे ही उन्हे बोध प्राप्त हो गया। दृग्दीक्षा द्वारा ही उनकी मूढ वृत्तिका निवारण हो गया था। उदारचेता वसुदेव उन्हे सर्वव्यापी आत्मस्वरूप परम पुरुष जानकर गद्‌गद वाणीद्वारा उनकी स्तुति करने लगे ॥ ११ ॥

त्वं निर्गुणोऽपि सगुणः समभूः स्वभक्तान् संस्थापय स्वचरणे जय सद्गुणाढ्यः ।
ज्ञातोऽसि भक्तहृदयैश्च मयाऽन्तरात्मा साक्षी भवान् पुरुष आद्य इहाऽवतीर्णः ॥

प्रभो ! आप निर्गुण होकर भी सगुण हो गये। अब भक्तोको अपने चरणोकी छाया-मे स्थापित कीजिये। सद्‌गुणसम्पन्न परमेश्वर आपकी जय हो। जिनके हृदयमे भक्ति-भाव भरा है, उन भक्तोके साथ मैने भी यह जान लिया है कि आप सबके अन्तर्यामी आत्मा साक्षी और आदिपुरुष ही यहाँ इस रूपमे अवतीर्ण हुए हैं ॥ १२ ॥

सत्त्वं श्रयन् भवसि शुक्ल इहाऽव्ययस्त्वं विश्वस्य पालनविधौ विहितानुकम्पः ।
सृष्टौ रजः श्रयसि दुष्टविनाशरक्तः कृष्णीभवन् विजयसे यदसीह कृष्णः ॥

जब आप सत्त्वगुणका आश्रय लेते है, तब यहाँ शुक्लवर्णके हो जाते हैं। उस रूप-मे ही आप अविनाशी प्रभु विश्वके पालन-कार्यमे सलग्न होते हैं तथा सबके ऊपर कृपा बनाये रखते है। सृष्टि-कालमे रजो-गुणका आश्रय लेते है। और तब दुष्टोके विनाशमे सलग्न होनेपर गुणका आश्रय ले कृष्णवर्णके हो जाते हैं। इस समय यहाँ कृष्णरूपमे ही जो आप विजयी हो रहे हैं ॥ १३ ॥

संहर्तु मुग्रपुरुषान् क्षितिभारभूतान् मत्तो भवान् समुदभूत कृपयाऽत्र देव ! ।
श्रुत्वा स्वरक्षकजनैरधुना सशस्त्रो ह्यागत्य कंस इह नाशयिता दयस्व ॥

देव ! पृथ्वीके भारभूत दुष्ट-पुरुषोका सहार करनेके लिये आप कृपा-पूर्वक मुझसे उत्पन्न हुए है। इस समय इस समाचारको सुनकर कस अपने रक्षकोके साथ सशस्त्र आकर आपका कुछ अनिष्ट कर देगा। अत कुछ करनेकी कृपा कीजिये ॥ १४ ॥

दृष्ट्वा परं पुरुषमात्मसुतं तदानीं तुष्टाव गीर्भिरमलाभिरथाऽत्र हृष्टा ।
सा देवकी तदनु गद्‌गदवाक् सुभीता कंसाद्विशंसनपरादतिशुद्धचित्ता ॥

उधर देवकी भी परमपुरुष परमात्माको अपने पुत्रके रूपमे प्रकट हुआ देख हर्षसे उत्फुल्ल हो उठी और उस समय हत्यारे कससे अत्यन्त डरी हुई होनेके कारण अत्यन्त शुद्ध चित्त हो निर्मल वाणी द्वारा गद्‌गद होकर उनकी स्तुति करने लगी ॥ १५ ॥

विश्वं सृजन्नुभयरूपमिदं त्वमेव तद्ब्रह्म निर्गुणमपीश्वर ! लीलयैव ।
भूत्वा स्वयं सगुण ईदृशरूपधारी लीलां तनोषि बहुधा समयानुसारी ॥

प्रभो ! चर और अचर उभयरूपवाले इस विश्वकी आप लीलापूर्वक ही सृष्टि करते है। परमेश्वर ! आप ही वह निर्गुण ब्रह्म है और स्वय सगुण होकर ऐसा रूप धारण करके समयका अनुसरण करते हुए नाना प्रकारकी लीलाका विस्तार करते है ॥ १६ ॥

**शेषोऽसि शेष इह चाऽव्यय, ईशकालो यच्चेष्टया चलति विश्वमिदं सदैव ।**
**मृत्योर्भयाच्छरणमेत्य भवेश ! मर्त्यः शान्तिं समेति पदमाप्य विभो ! तवैव ॥**

हे ईश ! प्रलयकालमे आपही यहाँ शेष रह जाते है, इसलिये शेष कहे जाते हैं। आप ही अविनाशी काल हैं, जिसकी चेष्टासे यह विश्व सदा ही चलता रहता है। जगदीश्वर प्रभो ! मरणधर्मा मनुष्य मृत्युके भयसे आपके ही शरणमे आकर—आपकी ही चरणोका सहारा पाकर शान्तिलाभ करता है ॥ १७ ॥

**त्रस्ता वयं सततदुष्टहृदोऽत्र कंसात् त्रायस्व नाथ ! शरणागतरक्षकोऽसि ।**
**विद्यान्न ते जनुरपीश ! स गर्भतो मे कारागृहेऽभवदिति स्वजनाच्छ्रुतेऽपि ॥**

हमलोग यहाँ सदा ही दुष्टतापूर्ण हृदय रखनेवाले कससे डरे हुए हैं। नाथ ! आप शरणागतके रक्षक है। अत हमारी रक्षा कीजिये। ईश्वर ! 'मेरे गर्भसे उस कारागारमे आपका जन्म हुआ है', 'इस बातको वह स्वजनोके मुखसे सुनकर भी न जान सके ( ऐसी कृपा कीजिये ) ॥ १८ ॥

**प्राप्तं सुदर्शनमिदं भवतः स्वरूपं ह्यस्माभिरीश ! विबुधैर्मुनिभिश्च चिन्त्यम् ।**
**मायाश्रयं सकलजीवनिकायभूतं माऽभूत् प्रभो ! नयनगं जनिमृत्युभाजाम् ॥**

आपका यह सुन्दर दर्शनीयरूप जिसे हमने प्राप्त किया है, देवता और मुनियोके द्वारा भी चिन्तनीय है। मायाका आश्रय है और समस्त जीवोका निवासस्थान है। प्रभो ! यह जन्म-मरणवाले लोगोके नेत्रोका विषय न हो ॥ १९ ॥

**माताऽस्मि नाथ ! व्यवहारत एव तेऽहं द्रष्टुं स्पृहाऽस्ति पुनरीश ! शिशोश्च रूपम् ।**
**धृत्वा तदेतदुपसंहर भक्तचित्तं ह्याकर्षयेत्तदपि दर्शनतो विमुग्धम् ॥**

नाथ ! मै व्यवहारदृष्टिसे ही आपकी माता हूँ। ईश ! अब पुन मुझे आपके शिशुरूपको देखनेकी इच्छा हो रही है। अत वही रूप धारण करके इस रूपका उपसहार कीजिए। आपका वह शिशुरूप भी भक्तोके विमुग्ध चित्तको अपनी ओर खीच ले ॥ २० ॥

**श्रुत्वा गिरं सभयगद्गदकम्पमुक्तां दृष्ट्वा च दुर्गतिततिं भवगां स्वपित्रोः ।**
**कारुण्यपूर्णहृदयो भगवान् स विष्णुस्तावूच ईश्वरगतिं प्रथयन् स्वकीयाम् ॥**

सभय, गद्गदवाणी और कम्पनपूर्वक कही गई देवकीके इस बातको सुनकर और ससारमें अपने इन माता-पिताकी दुर्गति-परम्परा देखकर भगवान् विष्णुका हृदय करुणासे भर आया। वे अपनी ईश्वरीय-गतिको प्रकट करते हुए बोले—॥ २१ ॥

सत्ये युगे शृणुतमद्य युवां ममार्यावाराधनं ह्यकुरुतां विगतस्पृहौ द्वौ ।
पृश्निस्त्वमेष सुतपा इति वित्तनामौ चाऽऽस्तां तदा सुमनसामपि पूज्यपादौ ॥

'आप दोनो सुने ! । सत्ययुगमे आपलोग मेरे माता-पिता थे, और दोनो ने नि स्पृह-भावसे मेरी आराधना की थी । माँ ! आप तो पृश्नि कहलाती थी और ये पिताजी 'सुतपा' नामसे प्रसिद्ध थे । उस समय आप दोनोके युगलचरण, देवताओके लिए भी पूजनीय थे' ॥ २२ ॥

धृत्वा स्वरूपमिदमेव मया युवां द्वौ संप्रार्थितौ तत इतो वरयाचनाय ।
मत्तुल्यशक्तिगुणवत्सुतलब्धये वै जातस्पृहौ ह्यभवतां प्रभया विमुग्धौ ॥

'आपकी आराधनासे प्रसन्न हो, यही स्वरूप धारण करके मैंने आप दोनोसे वर माँगनेके लिए अनुरोध किया । तब आपने मेरी कान्तिसे विमुग्ध होकर मेरे समान ही शक्तिमान् और गुणवान् पुत्रकी प्राप्तिके लिये अपनी अभिलाषा प्रकट की' ॥ २३ ॥

तत्पूर्तयेऽहमपि चात्मसमं ह्यदृष्ट्वा तत्पृश्निगर्भ इति नामधरोऽत्र जातः ।
तद्वत्सुतोऽहमभवं पुनरन्यकालेऽदित्यां च वामन इतीश्वरकश्यपेन ॥

'आपकी इच्छापूर्तिके लिए मै भी अपने समान दूसरे किसीको न देखकर, पृश्नि-गर्भ नामधारी पुत्रके रूपमे आपके यहाँ उत्पन्न हुआ । इसी प्रकार दूसरे समयमे आप दोनो अदिति और कश्यप थे और मै वामननामसे प्रसिद्ध आपका पुत्र हुआ था' ॥ २४ ॥

तत्पश्यतां पुनरहो ! युवयोस्तृतीये जन्मन्यपीह विभुरूपमदः प्रगृह्य ।
जातोऽहमस्मि शृणुतं मम रूपमीदृग् द्रष्टुं न शक्यमितरैस्तु जनैर्विना वाम् ॥

'फिर देखिए, आप दोनोके इस तीसरे जन्ममे भी बड़ी विभु-रूप धारण करके आज आपके पुत्ररूपमे प्रकट हुआ हूँ । एक बात सुन लीजिए—'मेरे ऐसे रूपको आप दोनोके सिवा दूसरे कोई मनुष्य नही देख सकते' ॥ २५ ॥

आस्तां ! तदत्र करणीयमितो युवाभ्यां मुग्धे शिशौ मयि परां मुदमावहेथाम् ।
पश्चाद्विहाय सुतमोहमयीमवस्थां ब्राह्मीं गमिष्यथ मनोवचनान्तगां ताम् ॥

'अस्तु, अब यहाँ जो आपका कर्तव्य है, उसपर ध्यान दीजिए । जब मै मुग्ध शिशु-रूप धारण कर लूँ तो मेरे प्रति वात्सल्य रखते हुए आप परमानन्दका अनुभव करे । आगे चलकर पुत्रमोहमयी अवस्थाका त्याग करके आप दोनो अवाङ्मनसगोचर उस ब्राह्मी-स्थितिको प्राप्त कर लेगे ॥ २६ ॥

कंसाद्विभीत इह चेच्छिशुरूपिणं मां तद्गोकुलं नयतु सौम्य ! भवानितो द्राक् ।
यत्रास्ति नन्दगृहिणीतनयाऽद्य जाता तामानय त्वरित एत्य सुखं वस त्वम् ॥

'सौम्य पिताजी ! यदि आप कससे यहाँ डरे हुए है तो शिशुरूप धारण करनेपर मुझे यहाँसे जल्दी ही गोकुल पहुँचा दे । वहाँ नन्दपत्नी-यशोदाके गर्भसे आज ही एक पुत्री हुई है, उसे तुरन्त यहाँ ले आइये और आकर सुखपूर्वक यहाँ रहिये' ॥ २७ ॥

**संपश्यतोरथ तयोः स हरिस्तदुक्त्वा साधारणः शिशुरभून्निजयोगशक्त्या ।**
**नीलो मणिर्विलसति स्म लुठंस्तदग्रे सच्चिन्मयः स्वजनचित्तचकोरचन्द्रः ॥**

वसुदेव और देवकीके देखते-देखते वे श्रीहरि उपर्युक्त बात कहकर अपनी योग-शक्तिसे साधारण शिशुरूप हो गये । अपने भक्तोके चित्तरूपी चकोरको आल्हादित करनेवाले वे सच्चिदानन्दमय चन्द्रमा, माता-पिताके आगे इस प्रकार धरतीपर लोटने लगे मानो कोई नीलमणि सुशोभित हो रही हो ॥ २८ ॥

**श्रीपादपद्ममतिकान्ति बभौ शिशोस्तच्छ्रीवत्सचिन्हमधिवक्षसि शोभमानम् ।**
**विभ्राजते स्म मुखमप्यतिशायि चन्द्राच्छ्री†चक्रचन्द्रकविभूषितकुन्तलाढ्यम् ॥**

शिशुके सुन्दर चरणारविन्द अतिशय कान्तिसे उद्दीप्त हो रहे थे । वक्षःस्थलपर श्रीवत्स चिन्ह शोभा पा रहा था । चन्द्रमासे भी अधिक कान्तिमान् मुखश्री चक्रविलसित मोरपखसे विभूषित अलकावलियोसे अलकृत हो प्रकाशित हो रहा था ( मोरपखमे जो चक्राकार चिन्ह था, वह श्रीचक्रका प्रतीक था ) जिसे कुछ भावुकजन रासेश्वरी आद्याशक्ति श्रीराधाका भी प्रतीक मानते है ) ॥ २९ ॥

**शश्वत्स्फुरन्मकरकुण्डलक्षिप्तशोभं प्रेक्षावतां हृदयगह्वरगं ह्यमेयम् ।**
**रूपं बभौ रुचिरबालविलासयुक्तं सन्नूपुरं कनकमेखलयाङ्कितं तत् ॥**

निरन्तर जगमगाते हुए मकराकार कुण्डलकी छवि चारोओर छिटक रही थी । वह अप्रमेयरूप चिन्तनशील भावुकोकी हृदयगुफामे विराजमान था । चरणोमे सुन्दर नूपुर और कटिप्रदेशमे सोनेके मेखलासे अकित, वह रुचिर-बाल-विलासरूप युक्त हो बडी शोभा पा रहा था ॥ ३० ॥

**दृष्ट्वा स्वरूपमथ तस्य शिशोः स शौरिर्ध्यात्वा चिरं विगतविस्मय ईश्वरं तम् ।**
**उत्थाप्य हस्तयुगलेन बहिर्यदैव निर्गन्तुमैच्छदधुनाऽजनि तत्र माया ॥**

उस शिशुका ऐसा मनोहर रूप देखकर वसुदेवजी चिरकालतक ध्यानमग्न हो गये । फिर विस्मयरहित हो, उस बाल-रूपधारी ईश्वरको दोनो हाथोसे उठाकर उन्होने ज्यो ही बाहर निकलनेका विचार किया, त्यो ही वहाँ भगवान्की माया प्रकट हुई ॥ ३१ ॥

---

† पराम्बाया श्रीचक्रमेतद्भगवतः श्रीकृष्णचन्द्रस्य चूर्णकुन्तलेषु तत्तच्चक्रसन्निवेशरूपेणैवाविर्भूतम् । तत्र भगवत शङ्करस्य तु तेनैव निगमागमविदा प्रभुणा जटाजूटेषु विर्निमायैव विन्यसितमिति रहस्यम् ।

तस्या अतुल्यघटनाघटने समर्था लीलाऽप्यहो ! विजयते सुतराममेया ।
विश्व तु या निमिषतोऽद्य महाविमोहे संपातयन्त्यहह ! कर्मकरी बभूव ॥

अहो ! उस मायाकी लीला भी अनुपम घटना घटित करनेमे समर्थ है, अप्रमेय है और सर्वत्र विजयिनी है। जो पलक मारते-मारते समस्त ससारको महामोहमे डाल देती है। अहा हा ! वह यहाँ भगवान्‌की सेवा करनेवाली दासी हो जो गयी ॥ ३२ ॥

यां मोहरात्रिरिति तत्त्वविदो वदन्ति रात्रित्रयेऽतिविशदे सुखदेऽप्यपूर्वे ।
निर्माय तामिह जगज्जयिनीं तदानीं माया रराज हरिवक्षसि तौ विहाय ॥

तत्त्ववेत्ता पुरुष कालरात्रि, महारात्रि और मोहरात्रि इन तीन अतिविशद सुखद और अपूर्व रात्रियोमे-से जिसको मोहरात्रि कहते है उस जगज्जयिनी मोहरात्रिका निर्माण करके माया केवल वसुदेव और देवकीको छोडकर अन्य सबको मोह-मग्न बनाती हुई भगवान्‌के वक्ष स्थलपर विराजमान हुई ॥ ३३ ॥

वार्तैव का स्वपतिकंसनियुक्तरक्षिवृन्दस्य तत्र दृढमोहितशायितस्य ।
द्वारश्च वा निहितशृङ्खलकीलरुद्धा यत्राऽभवन् रविकरादिव पद्मकोशाः ॥

उस समय अपने स्वामी कससे नियुक्त रक्षक-समुदायको अत्यन्त मोहित करके मायाने अचेत सुला दिया। इसकी तो बात ही क्या है, जिन्हे साँकल लगाकर और कील ठोक कर बन्द कर दिया गया था, कारागारके वे दरवाजे भी वहाँ इस तरह खुल गये कि जैसे सूर्यकी किरणोके स्पर्शसे कमल-कोष खिल जाते हैं ॥ ३४ ॥

स्वान्तःस्थितं तदनु नीलमणिं शिशुं तं शान्तस्थितं बहिरपीह विधाय दोर्भ्याम् ।
निर्गच्छदग्र्यपुरुषो निगडाद्विमुक्तः संघुष्य सोऽथ जय ! शङ्कर ! शङ्करेति ॥

अपने अन्त करणमे विराजमान उस नीलमणि शिशुको बाहर भी दोनो हाथोसे उसे शान्त और सुस्थिर बनाकर श्रेष्ठ पुरुष वसुदेवजी बेडी-हथकडीसे मुक्त हो 'जय शकर, जय शकर' का उद्घोष करके वहाँसे निकले ॥ ३५ ॥

कारागृहाद्बहिरभूत् स यदैव देवास्तद्राजमार्गमभितो ववृषुस्तदानीम् ।
मन्दं जगर्जुरथ बालमुकुन्दभूतं तं ह्यस्तुवन्निगमवन्मुनयोऽन्तकाले ॥

वसुदेवजी ज्यो ही कारागारसे बाहर हुए ज्यो ही पर्जन्य देवता राजमार्गपर सब ओर मन्द-मन्द गर्जना और वर्षा करने लगे। फिर प्रलयकालमे जैसे वेद, उन बालमुकुन्दकी स्तुति करते हैं, उसी प्रकार मुनियोने वहाँ उनका स्तवन किया ॥ ३६ ॥

शेषोऽप्यशेषमिह वीक्ष्य जलार्द्रगात्रं तं सद्गतिं मतिमतां मतिभिश्च सेव्यम् ।
शेषत्वमात्मन इहापि च सेवकत्वं संदर्शयन्ननुययौ पिदधत् फणाभिः ॥

उस समय शेषने भी सज्जनोकी गति एव मतिमानोकी मतिसे भी सेव्य उन भगवानके सम्पूर्ण अङ्गोको वर्षाके जलसे जलार्द्र हुआ देख अपनी शेषता और सेवकताका प्रदर्शन करते हुए अपने फनोसे उन्हे ढँककर वे भी पीछे-पीछे चलने लगे ॥ ३७ ॥

**हृष्टेन्द्रियः स वसुदेव उदारभावो द्रागाससाद यमुनां परिवृद्धगात्राम् ।**
**ध्यायंस्तरेयमहमद्य कथं त्विमां हा ! भीमामगाधसलिलां भगिनीं यमस्य ॥**

हर्षोत्फुल्ल इन्द्रियोसे युक्त, उदारचेता वसुदेवजी शीघ्र ही उस यमुनाके तटपर पहुँच गये, जिसका कलेवर बाढके कारण बहुत बढ गया था। वे सोचने लगे—हाय ! मै अगाध जलराशिसे भरी हुई इस भयानक यमभगिनी यमुनाको अब कैसे पार कर सकूँगा ॥ ३८ ॥

**यः कोऽपि शिष्ट इह पश्यति चेत् स्वमान्यं शक्त्याश्रयं सुगुणवन्तमुदारचेष्टम् ।**
**स्वत्वं विहाय सकलं स गताभिमान स्तत्पाद एव लुठति क्रममीक्षमाणः ॥**

जो कोई भी शिष्ट-पुरुष यहाँ अपने लिए माननीय, शक्तिमान्, सद्गुणी तथा उदार-चेष्टावाले महानुभावको निकट आया हुआ देखता है, वही लोक-मर्यादाको देखते हुए अपना सारा स्वत्व छोडकर अभिमान रहित हो, उस महानुभावके पैरोपर ही लोट जाता है ॥ ३९ ॥

**दृष्ट्वा तदत्र शिशुरूपिणमागतं तं सा स्वागतं विदधती पदगा बभूव ।**
**तैलं यथा भवति वारिगतं तदेवं सद्योऽभवद्धरिपदाब्जगतेव लीना ॥**

इस नीतिके अनुसार यमुनाने अपने पास शिशुरूपी भगवान्‌को आया देख उनका स्वागत करते हुए उनके चरणोका स्पर्श किया। जैसे पानीमे डाला हुआ तेल उसीमे विलीन हो जाता है, उसी प्रकार यमुना तत्काल श्रीहरिके चरणारविन्दोमे लीन-सी हो गयी ( अर्थात् उनमे बहुत थोडा जल शेष रह गया ) ॥ ४० ॥

**आजानुवर्तिनि जले स्थलवद्व्रजन् स प्रापाऽन्यतीरमथ शौरिरमुं गृहीत्वा ।**
**पश्यन्नितस्तत उपोढमुदा हृदा तं नन्दालयं विगतभीः सुखमाससाद ॥**

यमुनाजीका जल घुटने तक ही रह गया था। वसुदेवजी बालकको लेकर उस जलमे स्थलकी ही भाँति चलते हुए दूसरे तटपर जा पहुँचे और इधर-उधर देखते हुए हर्ष-पूर्ण हृदयसे निर्भय हो अनायास ही नन्दभवनमे चले गये ॥ ४१ ॥

**देव्या विमोहितजगज्जनचित्तवृत्त्या संचोदितस्तदनु नन्दगृहान्तरेषु ।**
**शुश्राव बालरुदितं शनकैर्व्रजन् स दीपोत्करैः सकलवस्तुषु दीप्तिमत्सु ॥**

देवी योगमायाने जगत्‌के लोगोकी चित्तवृत्ति मोहित कर रखी थी। उसीसे प्रेरित हो वे उस नन्द-मन्दिरके अन्दर घुस गये। मन्दगतिसे चलते-फिरते उन्होने एक बालकका रोना सुना। उस घरकी सारी वस्तुएँ दीपमालासे उद्दीप्त हो रही थी। ॥ ४२ ॥

अन्तः प्रविश्य सभयोऽत्र विलोक्य सर्वं लक्ष्यं विधाय रुदितस्वनमेव यावत् ।
अग्रेऽगमत्सरणिमेकतमां गृहीत्वा तावद्ददर्श शयनस्थितकन्यकां ताम् ॥

डरते-डरते भीतर प्रवेश करके उन्होने सब ओर दृष्टिपात किया और रोनेकी आवाजको ही लक्ष्य बनाकर वे ज्यो ही एक मार्गपर आगे बढे त्यो ही उन्हे शय्यापर सोयी हुई एक बालिका दिखाई दी ॥ ४३ ॥

नन्दालये सकलसुप्तजने प्रकोष्ठे शान्ते तयैव बिहिते च विलुप्तवृत्तौ ।
बालां निरीक्ष्य निभृतं विशदे सुतल्पे बालं तयैव पुनरेष समं न्यधाच्च ।

नन्द-भवनके भीतर लोग सो गये थे । सारा प्रकोष्ठ शान्त था। योगमायाने ही सबकी चित्तवृत्ति विलुप्त कर रखी थी । उज्वल विस्तरपर सोयी उस बालिकाको भलीभाँति देखकर उन्होने अपने बालकको भी उसीके साथ सुला दिया ॥ ४४ ॥

युग्मं बभावथ तयोर्जगदीशयोस्तत् कृष्णार्जुनं विमलवर्णमयं प्रसन्नम् ।
सौन्दर्यधाम शिवशक्तिमयं ह्यमेयं दृष्ट्वा विचार्य स बभूव सुखाब्धिमग्नः ॥

जगदीश्वर और जगदीश्वरीकी वह श्याम-गौर युगल जोडी बडी शोभा पाने लगी । दोनो शिशु निर्मल कान्तिसे युक्त और प्रसन्न थे । सौन्दर्यके धामभूत उस शिव-शक्तिमय अमेय युगल(जोडी)को देखकर भलीभाँति विचार करके वसुदेवजी सुखके सागरमे विमग्न हो गये ॥ ४५ ॥

पादारविन्दयुगलं तत ईश्वयोस्तत् स्वान्ते निधाय कृतसन्नतिरत्र भक्त्या ।
प्रेम्णा गलद्धृदय उत्पुलकः प्रमोदाद्गोपाधिराजगृहिणीं च ननाम सुप्ताम् ॥

ईश्वर और ईश्वरीके युगलचरणारविन्दोको हृदयमे रखकर वसुदेवजीने उन्हे भक्ति-भावसे प्रणाम किया । उस समय प्रेमसे उनका हृदय द्रवित हो गया था । शरीरमे हर्षातिरेक-से रोमाञ्च हो आया था । फिर उन्होने सोयी हुई गोपराज-गृहिणी यशोदाको भी मस्तक झुकाया ॥ ४६ ॥

स्वाङ्गेन सुन्दरतरेण यशोदया तां मुक्तां सुतां जनमनोवचनातिगाऽन्ताम् ।
उत्थाप्य बाहुयुगलेन शनैः स शौरिः संस्थाप्य वक्षसि तथैव पुनर्निवृत्तः ॥

यशोदाने उस बालिकाको अपने शरीरसे अलग कर रखा था । वह यशोदा नन्दिनी अपने सुन्दरतर शरीरके कारण मनुष्यकी मन-वाणीकी पहुँचसे परे दिखाई देती थी । उसे अपने दोनो हाथोसे धीरे-धीरे उठाकर वसुदेवने अपने वक्ष स्थलपर रख लिया और पूर्ववत् वे वहाँसे लौट पड़े ॥ ४७ ॥

( उपजातिः )

देवी यशोदा विवशा कृता तथा यदा प्रसूताऽनिलवेगतस्तदा ।
तयैव पृथ्वीं गतया स्वकन्यया विमोहिता मोहविभावरीमिता ॥

देवी यशोदा जब प्रसूति-वायुके वेगसे विवश (बेहोश) हो गयी, तब भूतलपर अवतीर्ण हुई उसी अपनी कन्या-योगमायासे विमोहित होकर वे मोहरात्रिमे पहुँचायी गयी थी ॥४८॥

अतोऽविलोक्यैव गृहीतजन्मनो बालस्य लिङ्गं शिथिलेन्द्रिया सती ।
सुष्वाप निद्रावशमागता परं ह्यहं प्रसूतेति धृतात्मनिश्चया ॥

उनकी इन्द्रियाँ शिथिल हो रही थी, वे उत्पन्न हुए शिशुके चिन्हको न देखकर ही, अर्थात् वह पुत्र है कि कन्या ! इसकी पहचान किये विना ही निद्राके वशीभूत हो सो गयी। 'मैने प्रसव किया है' इतना ही वे निश्चितरूपसे जान सकी थी ॥ ४९ ॥

( अनुष्टुप् )

तां जगज्जननीं देवीं प्राणिनामात्मरूपिणीम् ।
संश्लिस्योरसि सद्भक्त्या वसुदेवस्ततो ययौ ॥

प्राणियोकी आत्मस्वरूपिणी जगज्जननी देवी योगमायाको शिशुरूपमे पाकर उसे भक्तिपूर्वक छातीसे लगाये वसुदेवजी वहाँसे चल दिये ॥ ५० ॥

स चाऽन्ते यमुनां प्राप्य नत्वा मूर्ध्ना तथास्थिताम् ।
मथुरामागमच्छीघ्रं शून्यशान्तजनावृताम् ॥

अन्तमे पूर्ववत् स्थितिमे स्थित हुई यमुनाजीके पास पहुँचकर उन्हे नमस्कारपूर्वक पार करके वे शान्त जनोसे युक्त सूनी मथुरापुरीमे शीघ्रतापूर्वक आ गये ॥ ५१ ॥

प्रविष्याऽत्राऽपि कारायां स्वाऽऽवासेऽन्तः पुरे शुभे ।
स ददर्श ततो देवीं देवकीं स्वागतोत्थिताम् ॥

वहाँ कारागारमे अर्थात् अपने निवासस्थानभूत शुभ अन्त पुरमे प्रवेश करके वसुदेवजीने देखा, देवी-देवकी स्वागतके लिए खडी हैं ॥ ५२ ॥

स्नेहसद्भावसम्पन्नां तां कन्यां रूपिणीं श्रियम् ।
देवक्यङ्के निधायाऽसौ ममार्जाऽङ्गानि भक्तितः ॥

स्नेह और सद्भावसे सम्पन्न उस मूर्तिमती लक्ष्मी-स्वरूप कन्याको देवकीकी गोदमे देकर वे भक्तिभावसे उसके अङ्गोपर हाथ फेरने लगे ॥ ५३ ॥

( उपजातिः )

विमृश्य कर्तव्यमतः परं निजं स्मृत्वा हरेर्वाक्यमसौ ततो द्रुतम् ।
पूर्वं यथा स्वं निगडैः पुरोद्गतैर्बद्धा स्थितः शान्तमनाः समं तया ॥

इसके बाद अपने कर्तव्यका विचार तथा श्रीहरिके वचनोका स्मरण करके देवकी वसुदेवजी शीघ्र ही पूर्ववत् बेडी-हथकडीसे बँधकर बैठ गए। उस समय उनके मनमे शान्ति विराज रही थी ॥ ५४ ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
व्यगमन्नवमः सर्गो महाकाव्ये स्तवात्मके ॥

कृष्णप्रसाद घिमिरेकी कृति श्रीकृष्णचरितामृत नामक स्तोत्रात्मक इस काव्यमे नवा सर्ग पूरा हुआ ॥ ५५ ॥



# दशमः सर्गः

[ कारागृहे कसागमनम् । बालिकाया शिलापृष्ठे पोथनम् । कराच्युतया तया स्वरूपनिर्दर्शनपूर्वक कसप्रतिबोधनम् । ]

( वंशस्थेन्द्रवंशयोरुपजातिवृत्तम् )

ततस्त्रिलोकीमभितो महाध्वनिर्बभ्राम तद्रोदनतो विनिर्गतः ।
रुरोद कन्या करपादमार्तितः समं क्षिपन्तीव विशेषतस्तदा ॥१॥

तदनन्तर, उस बालिकाके रोदनसे प्रकट हुई महाध्वनि सारी त्रिलोकीमे सब ओर फैल गयी । वह कन्या उस समय पीडासे एक साथ ही हाथ-पैर पटकती हुई जोर-जोरसे रो रही थी ॥ १ ॥

कारागृहद्वार इमाः पुरा यथा द्रागावृतास्तेन समं कृतस्वराः ।
तद्रक्षिवर्गा अथ मूढतामिता मायाविमुक्ताः सहसा समुत्थिताः ॥२॥

कारागारके दरवाजे तत्काल ही आवाज करते हुए एक साथ ही पूर्ववत् बन्द हो गये । तदनन्तर मोह-मग्न पहरेदार योगमायाके प्रभावसे मुक्त होनेपर सहसा उठ खडे हुए ॥ २ ॥

कर्णौ प्रदत्वाऽत्र निशम्य रोदनं तयोः शिशोर्जन्म विभाव्य रक्षकाः ।
आख्यातुमस्मै तदुदन्तमुत्सुकास्ततोऽगमन् कंसगृहं त्वरान्विताः ॥३॥

उन्होने कान देकर शिशुका रोदन सुना और वसुदेव-देवकीके पुत्रका जन्म हो गया, ऐसा निश्चय करके वे रक्षक वह समाचार स्वामीको बतानेके लिए बडी उतावलीके साथ कसके घर गये ॥ ३ ॥

प्रतीक्षमाणोऽत्र दिवानिशं त्वमुं श्रोतुं समुद्विग्नमनाः स भोजराट् ।
सन्त्यज्य शय्यां श्रवणादनन्तरं निशीथ एवाभिससार विह्वलः ॥४॥

भोजराज कस तो रात-दिन उसी समाचारको सुननेकी प्रतीक्षा कर रहा था । सुनते ही उसका मन उद्विग्न हो उठा और वह उस आधीरातमे ही शय्या छोडकर घबडाया हुआ सा चल पडा ॥ १४ ॥

स प्रस्खलन्मुक्तशिरोरुहो व्रजन् विचारयामास पथि प्ररुढभीः ।
जातोऽद्य मन्मृत्युरसौ तयोः शिशुर्यं हन्मि कारागृह एव साम्प्रतम् ॥५॥

चलते समय उसकी गति लडखडा रही थी। उसके बँधे हुए बाल खुल गए थे। उसके मनने भय छा गया था। वह मार्गमे विचार करने लगा। आज मेरी मृत्युका कारणभूत, वसुदेव और देवकीका वह शिशु जन्म ले चुका, जिसे इस समय मै कारागारमे ही मार डालूँगा ॥ ५ ॥

दृष्ट्वैव तं भ्रातरमुग्रतेजसं संश्लिष्य बालां हृदि देवकी तदा ।
उवाच मोहेन परिप्लुतात्मना कारुण्यपूर्णं वचनं गलत्स्वना ॥६॥

उग्रतेजवाले अपने भाई कसको देखते ही देवकीने उस बालिकाको छातीसे चिपका लिया। वह मोह-मग्न हृदय और लडखडाती हुई वाणीसे करूणापूर्ण वचन बोली—॥ ६ ॥

भ्रातस्त्वया मे बहवोऽनलोपमा निषूदितास्ते शिशवो निरन्तरम् ।
तदत्र कन्याऽजनि यत्र च त्वया स्निह्यामि दत्तेति दयस्व देहि मे ॥७॥

भैया ! आपने मेरे बहुत-से अग्निके समान तेजस्वी पुत्र मार डाले हैं और निरन्तर मारते चले आ रहे है। अब कि बार यहाँ कन्याने जन्म लिया है। जिसे मे तुम्हारी दी हुई पुत्री मानकर इसके प्रति स्नेहकर रही हूँ। दया करो, यह बालिका मुझे दे दो ॥ ७ ॥

अतो निराशाऽस्मि च गर्भसंभवे मन्येऽहमेषा चरमेति मे प्रजा ।
मनोविनोदार्थमपि त्विमां सुतां प्रदातुमर्हस्यसमोऽग्रजोऽसि मे ॥८॥

अब फिर गर्भ होगा—इसकी ओरसे मै निराश हूँ। समझती हूँ कि 'यह मेरी अन्तिम सन्तति है'। आप मेरे अनुपम तेजस्वी ज्येष्ठ भ्राता हैं। अत मेरे मन बहलावके लिये भी यह कन्या मुझे दे देनेकी कृपा करे ॥ ८ ॥

एवं ब्रुवन्तीं रुदतीमनिन्दितां भृशं विषण्णां शिशुमोहयन्त्रिताम् ।
दृढं विनिर्भर्त्स्य करादमुं शिशुं लघ्वाच्छिनद् दुष्टमनाः खलोऽथ हा !॥९॥

सती-साध्वी देवकी शिशुके मोहपाशमे बँधकर अत्यन्त विषादमे मग्न हो जब इस प्रकार रो गिडगिडा रही थी, हाय ! उस समय दुष्ट-चित्त खल कसने उसे जोर-जोरसे डॉट बतायी और उस बालिकाको उसके हाथसे छीन लिया ॥ ९ ॥

विगृह्य तस्याश्चरणौ ततस्त्विमां व्यपोथयद् द्राक् स तदा शिलातले ।
बुधोऽपि कंसोऽबुधवद्विमोहितः स्वार्थेन कालेन कृतोऽत्र निर्घृणः ॥१०॥

उस नन्ही-सी बालिकाके दोनो पैर पकडकर उसे कसने तत्काल ही पत्थरपर दे मारा। यद्यपि कस समझदार था, तथापि मूढकी भाँति मोहके वशीभूत हो गया था। स्वार्थ-वश कालने उसे निर्दय बना दिया था ॥ १० ॥

सैषा स्थितिर्यत्र जगद्गतौ जनाः परस्परं स्वार्थवशान्निरन्तरम् ।
स्निह्यन्ति निघ्नन्ति च कालमाश्रिता विधिर्निषेधश्च जहाति यानहो ! ॥११॥

इस जगत्का जो स्वरूप है, उसमे ऐसी ही स्थिति देखी जाती है। यहाँके लोग स्वार्थ-वश निरन्तर एक-दूसरेसे स्नेह भी करते है, परस्पर आघात-प्रत्याघात भी कर बैठते है। वे कालका आश्रय लेकर ऐसे हो जाते है कि शास्त्रोके विधि-निषेध वचन भी उन्हे छोड देते है अर्थात् उन विधि-निषेधोको भी लाँघ जाते हैं ॥ ११ ॥

ततो विचित्रं समभावि तत्क्षणे सा बालिका कंसकराच्युताऽन्तरा ।
तदैव मायात्मिकया तया धृतं स्वरूपमाकाशतले सुनिर्मलम् ॥१२॥

तत्पश्चात् उसी क्षण एक विचित्र घटना घटित हुई। वह बालिका बीचमे ही कसके हाथसे निकल गयी और उसी समय उस मायामयी देवीने आकाशमे अत्यन्त निर्मल रूप धारण कर लिया ॥ १२ ॥

मनोहरं श्रीपदनूपुराश्रितं रत्नैश्चितं मेखलयाङ्कितं कटौ ।
सहारवक्षःस्थलमुन्नतश्रिकं किरीटकेयूरविभूषितं ज्वलत् ॥१३॥

वह रूप बडा मनोहर था, उसके श्रीचरणोमे नूपुर शोभा पाता था। रत्नमय आभूषण उसके अङ्गोको अलकृत कर रहे थे। कटिप्रदेशमे मेखला चमक रही थी। वक्ष स्थलपर हार जगमगा रहे थे। किरीट और केयूर आदिसे विभषित उस तेजस्वी-रूपकी शोभा-सम्पत्ति बहुत बढी हुई थी ॥ १३ ॥

दिव्यस्रगाक्षौमममेयकान्तिमद्ध्यलौकिकं चाष्टमहाभुजावृतम् ।
तैरेव चक्रं जलजं धनुः शरं शूलं गदां चर्म च खड्गमादधत् ॥१४॥

दिव्य पुष्पोके गजरे तथा रेशमीवस्त्र सब ओरसे उस अलौकिक रूपकी छबि बढा रहे थे, उसकी कान्ति अपरिमेय थी। वह अलौकिक विग्रह आठ विशाल भुजाओसे सुशोभित था और उन्ही भुजाओमे चक्र, शख, धनुष, बाण, शूल, गदा, ढाल एव तलवार धारण किये शोभा पाता था ॥ १४ ॥

उपास्यमानं बहुभिः सुरादिभिर्नतोत्तमाङ्गैर्बलिभिर्विभूतिभिः ।
संस्तूयमानं बहुधात्मनो गुणैर्गन्धर्वसिद्धाऽप्सरसं गणैर्मुदा ॥१५॥

बहुत-से देवता आदि मस्तक झुकाकर वलि ( भेट-सामग्री ) और विभूतियो ( ऐश्वर्यसूचक द्रव्यो ) द्वारा देवीके उस स्वरूपकी उपासना कर रहे थे। गन्धर्वो, सिद्धो और अप्सराओके समुदाय उस दिव्य रूपके गुणोका बखान करते हुए अनेक प्रकारसे उसकी स्तुति कर रहे थे ॥ १५ ॥

**तया बभाषे निजरूपमीदृशं प्रदर्शयन्त्या ह्यवितर्क्यशीलया ।**
**निरीक्षमाणोऽत्र खलो विमूढधीः स भोजराड् विस्मयविह्वलेन्द्रियः ॥१६॥**

भोजराज कसकी बुद्धि मोहित हो रही थी, उसकी सारी इन्द्रियाँ विस्मयसे व्याकुल थी, वह चुपचाप देवीकी ओर देख रहा था। तब अपने पूर्वोक्त रूपका प्रदर्शन करनेवाली अवितर्क्यशीला देवी योगमायाने उससे इसप्रकार कहा—॥ १६ ॥

**श्रृणुष्व राजन्! हतया मयाऽपि हा! लाभोऽत्र कः किं कुशलं च लप्स्यसे ।**
**तवान्तकृज्जात इहाऽद्य हन्त! भो! मा मूर्ख! हिंसीः कृपणानिमान् वृथा ॥१७॥**

'ओ मूर्ख नरेश! सुनो, तुमने तो मुझे मार ही डाला था, किन्तु हाय! इससे तुम्हे क्या लाभ हुआ? अथवा ऐसा करनेसे कौन क्या कुशल-क्षेम प्राप्तकर सकेगा? खेदके साथ यह बताना पड रहा है कि तुम्हारा विनाश करनेवाला महापुरुष इस व्रजमे प्रकट हो गया। अब इन बेचारे दीन-दुर्बल बालकोका बध न करो॥ १७॥

**तमेव जानीहि समर्थमीश्वरं स्वं पूर्वशत्रुं बलवीर्यतोऽधिकम् ।**
**वधिष्यति त्वां तत एत्य सोऽव्ययश्चेदस्ति सामर्थ्यमुपायमाचर ॥१८॥**

'यह जान लो कि जो समर्थ ईश्वर है और पूर्वजन्मने भी जो तुम्हारे शत्रु थे, वे ही बल-पराक्रममे बढे चढे श्रीहरि ही तुम्हारी मृत्युके कारण बनेगे। वे अविनाशी परमात्मा यहाँ आकर तुम्हारा वध करेंगे। यदि शक्ति हो तो बचनेके लिए उपाय करो'॥ १८॥

**इति प्रभाष्यैव तमुग्रकारिणं निर्दिश्य तत्कर्म जगद्धितैषिणी ।**
**निलीय तत्रैव शिवा शिवं तदा विचारयामास शिवस्वरूपिणी ॥१९॥**

उस उग्र-कर्म करनेवाले कससे ऐसा कहकर और उसके कर्तव्यका निर्देश करके जगत्का हित चाहनेवाली शिवस्वरूपिणी शिवा वही अन्तर्धान हो गयी और इस शुभ बातका विचार करने लगी॥ १९॥

**स्वयं परं ब्रह्म यदत्र लीलयाऽवतीर्य भक्तश्रुतिसाधुरक्षणे ।**
**प्रवर्तते चेत्तदमुष्य सद्गतेर्मयापि कार्यं प्रियमेव सर्वथा ॥२०॥**

'साक्षात् परब्रह्म परमात्मा यदि भक्तो, श्रुतियो तथा साधुजनोके सरक्षणके लिए यहाँ अवतार लेकर कार्यरत है तो सज्जनोके आश्रयभूत उन परमेश्वरका मुझे भी सर्वथा प्रिय करना चाहिये'॥ २०॥

**कृष्णावतारेण तदत्र भाविना गृहीतचित्ताः परमर्षयः सुराः ।**
**ता गोपकन्याः श्रुतयश्च संगताः स्त्रीत्वं समास्थाय पुरैव यत्स्थिताः ॥२१॥**

'यहाँ भावी कृष्णावतारने जिनके चित्तको वशीभूत कर लिया है, वे महर्षि देवता तथा श्रुतियाँ भी एकत्र हो गोपकन्याओके रूपमे स्त्रीका रूप धारण करके पहलेसे ही व्रजमे स्थित है' ॥ २१ ॥

**तस्मादहं तद्वृषभानुगोदुहः क्षेत्रेऽमले कीर्त्यभिधेयकेऽधुना ।**
**तयोः सुतात्वेन पुरैव जन्म तत् गृह्णामि यत् स्यात् प्रियमस्य तुष्टिकृत् ॥२२॥**

'इसलिये मै वृषभानु-गोपकी कीर्ति नामवाली क्षेत्रभूता पत्नीके गर्भसे उन दोनोकी पुत्रीके रूपमे पहले जन्म ग्रहण करूँगी। यह कार्य उन श्रीहरिके लिए प्रिय तथा सतोष-कारक होगा' ॥ २२ ॥

**मामग्रजो विष्णुरुवाच यत्पुनस्त्वं देवि ! चित्ते वस देहिनामिति ।**
**सम्पाद्यमेतच्च मया धिया धृतं वसामि मूर्तौ हृदि चापि तद्ध्यहम् ॥२३॥**

'मेरे बडे भाई श्रीविष्णुने जो मुझसे कहा था कि 'हे देवि ! तुम समस्त देहधारियोके हृदय-मन्दिरमे निवास करो।' मैने इस बातको मनसे स्वीकार किया था, अत इसका सपादन मुझे करना है। अब मै स्थापित मूर्ति ( प्रतिमा ) मे तथा लोगोके हृदयमे भी निवास करूँगी' ॥ २३ ॥

**भजन्ति ये मां ह्यथवा शिवं हरिं चोपासते चेद्गणपं रविं तथा ।**
**वत्स्यामि तेषां हृदये च तेऽत्र मां चेत्स्थापयन्ति प्रतिमासु च क्षितौ ॥२४॥**

'जो मुझको अथवा शिव-विष्णुको भजते है या गणेश तथा सूर्यदेवकी उपासना करते हैं, उन सबके हृदयमे मै निवास करूँगी। यदि वे यहाँ (भूतल) पर मेरी प्रतिमा स्थापित करते है, तो उन प्रतिमाओमे भी मै वास करूँगी' ॥ २४ ॥

**विमृश्य चेत्थं गुणरूपशालिनी ह्यतर्क्यनानाघटनाविधायिनी ।**
**बभूव सा भक्तहितार्थसाधिनी स्वतोऽत्र नानाऽऽयतनाऽवलम्बिनी ॥२५॥**

ऐसा विचार कर दिव्य रूप और गुणोसे सुशोभित नाना प्रकारकी अतर्कणीय घटना घटित करनेवाली वह भक्तहितकारिणी देवी यहाँ नाना मन्दिरोका आश्रय लेकर रहने लगी ॥ २५ ॥

**तस्याः स्वरूपं वचनं च तादृशं दृष्ट्वा च संश्रुत्य स विस्मितस्त्वितः ।**
**प्रपूज्य तौ प्राग्गतलज्ज उन्मदो विमोचयामास तदैव बन्धनात् ॥२६॥**

देवी योगमायाका वैसा रूप देखकर और उनके पूर्वकथित वचन सुनकर कसको बडा आश्चर्य हुआ। वह निर्लज्ज और मदोन्मत्त तो था ही। उसने वसुदेव देवकीका पहले कुछ आदर करके फिर तत्काल उन्हे बन्धन मुक्तकर दिया ॥ २६ ॥

विगृह्य पादौ तत उद्धतोऽप्यसावुवाच तौ भाम ! भगिन्यहो ! मया ।
कृतं विगर्ह्यं युवयोः सुता वृथा विहिंसिता राक्षसवन्निरन्तरम् ॥२७॥

उद्दण्ड होनेपर भी उसने उस समय उन दोनोके पैर पकड लिये और कहा—'हे बहनोईजी। और हे बहिन! मैने बडा घृणित कर्म किया, जो राक्षसकी भाँति लगानार आप दोनोके अनेक पुत्र व्यर्थ मार डाले ॥ २७ ॥

सोऽहं मृतोऽन्ते प्रियवस्तुबान्धवान् विहाय गन्तास्मि भयानकं तमः ।
विभावयेतं समये जना यथा वक्ति स्म दैवं ह्यमदीदृशं वचः ॥२८॥

'इसका परिणाम यह होगा कि मै मरनेके पश्चात् समस्त बन्धु-बान्धवोको छोडकर भयानक नरकमे जाऊँगा। आप ही लोग विचार करे, उस समय साधारण लोगोकी भाँति दैवने भी कैसा असत्य वचन कहा था' ॥ २८ ॥

तत्प्रत्ययेनैव हता मयापि ते माऽशोचतं भो ! स्वकृतं भुजो हि तान् ।
संसारिणो दैववशं गता भृशं भ्रमन्ति लोके जनिमृत्युभोगिनः ॥२९॥

'उसीपर विश्वास करके मैने भी आपके पुत्र मार डाले। अत आप लोग अपने कर्मका ही फल भोगनेवाले उन बालकोके लिए शोक न करे। ससारी मनुष्य दैवके वशमे होकर जन्म-मृत्युका क्लेश भोगते हुए जगत्मे भटकते रहते हैं' ॥ २९ ॥

भौमानि भूतानि यथा निरन्तरं नरं समायान्त्यपयान्त्ययत्नतः ।
तथैव जीवा अपि देहमाश्रिता मिलन्ति देहिष्वथवा वियुञ्जते ॥३०॥

जैसे भूतलके प्राणी विना यत्नके ही निरन्तर मनुष्यके पास आते-जाते रहते है उसी प्रकार देहके आश्रित जीव भी देहधारियोसे स्वत मिलते और बिछुडते हैं ॥ ३० ॥

सिद्धान्त एवैष निभाल्य सद्धिया तथ्यं च निर्धार्यतां दृढं हृदा ।
निःसार्यतां भेद इहेदृशोऽस्ति यो ह्यहंममोत्थो भयकृद्विचार्यताम् ॥३१॥

यही सिद्धान्त है। सद्बुद्धिसे इसपर विचार करके आपलोग अपने मनमे दृढता-पूर्वक तथ्यका निश्चय करे। अहता–ममतासे उत्पन्न जो ऐसा भेद है, इसे अपने मनसे निकाल दे और विचार ले कि यह भेद भयकारक है ॥ ३१ ॥

विमृग्यतां स्वात्मपरात्मनोरिदं तत्त्वं यतो विश्वनिवृत्तिराप्यते ।
हतोऽस्मि हन्ताऽस्मि च मन्यतेऽत्र यः प्रबाध्यतेऽसावभिमान्यहो ! नरः ॥३२॥

आत्मा और परमात्माका तत्त्वत ऐक्य है. इसे विचार ले। इससे संसार-बन्धनकी निवृत्ति होती है। जो यहाँ अपनेको मारा गया और मारनेवाला समझता है, वह अभिमानी मानव अवश्य मोहबाधित होता है ॥ ३२ ॥

**तस्मात् क्षमेथामहमस्मि दुष्टधीर्महापराधं च मया कृतं ह्यपि ।**
**स्यातां भवन्तौ सुखिनौ निरन्तरं तत्कामयेऽहं च विमूढधीरपि ॥३३॥**

अत आप मुझे क्षमा करे । मै दुष्ट बुद्धि हूँ । मैने आपका महान् अपराध किया है । आप दोनो निरन्तर सुखी रहे । यद्यपि मै मूर्ख हूँ, तो भी आपके सुखी रहनेकी कामना करता हूँ ॥ ३३ ॥

**इत्थं ब्रुवन् सोऽथ तयोः पदाब्जयोर्लुठन् शुचा साश्रु विलोचनद्वयः ।**
**प्रदर्शयन् सौहृदमात्मनो हितौ तावानयामास बहिस्तदालयात् ॥३४॥**

ऐसा कहकर शोकके कारण दोनो नेत्रोसे आँसू बहाता हुआ कस वसुदेव-देवकीके चरणारविन्दोमे लोटने लगा । वह उन दोनोके प्रति अपना सौहार्द दिखाते हुए उन्हे उस कारागार से बाहर ले आया ॥ ३४ ॥

**स्वैरेव कर्मनिबर्हैरनुतप्तचित्तं स्वं भ्रातरं करुणभाषिणमश्रुपूर्णम् ।**
**दृष्ट्वा ह्युदारहृदया सुदती सती सा क्षान्त्वा तदा व्यसृजदात्महितं ततस्तम् ॥३५॥**

कसका चित्त अपने ही कुकर्मोसे सतप्त था । अपने भाईको इस प्रकार आँसू बहाते और करुणा जनक बाते सुनाते देख उदारहृदया सुदर दातोवाली सती देवकीने उसे क्षमा कर दिया और अपने उस हितैषी बन्धुको वहाँसे विदा किया ॥ ३५ ॥

**पत्न्यग्रजं तं वसुदेव आत्मवाञ्जगाद किञ्चित्स्मितशोभिताननः ।**
**तत्त्वं समुद्घाट्य भवान् वदत्यहो ! तत्थ्यं महत्तत् सुखदायि चात्मनः ॥३६॥**

तब अपने मनको वशमे रखनेवाले वसुदेवजी अपने मुखसे मन्द मुसकानकी छटा बिखेरते हुए अपनी पत्नीके बडे भाई कससे बोले—'अहो ! आप तो तत्त्वका उद्घाटन करके बोल रहे है । आपका यह कथन महान् सत्य और अपनेको सुख देनेवाला है ॥ ३६ ॥

**जीवान् भ्रमो भ्रामयतीह यत्नतो विभाव्यमानोऽपि बुधैर्भवादृशैः ।**
**हन्ताऽहमस्म्यत्र म्रियेऽहमित्यपि प्ररूढभावो भ्रमतीह यन्नरः ॥३७॥**

'आप जैसे विद्वानो द्वारा यत्न पूर्वक बार-बार विचार किये जानेपर भी यह भ्रम यहाँ जीवोको सदा घुमाता या भरमाता रहता है । 'मै मारनेवाला हूँ' 'मै यहाँ मर रहा हूँ' इस प्रकार अहभाव बढ जानेसे ही मनुष्य इस भव-चक्रमे भटकता रहता है ॥ ३७ ॥

**यदत्र भ्रम एवायं स्वःपरश्चेति भेदकृत् ।**
**आब्रह्मकीटपर्यन्तविश्वभ्रमणकारणम् ॥३८॥**

'अत यहाँ यह भ्रम ही अपने-पराये भेदकी सृष्टि करनेवाला है । यही ब्रह्मासे लेकर कीट पर्यन्त समस्त विश्वको भवचक्रमे घुमानेका कारण है ॥ ३८ ॥

हर्षैस्तर्षैरनेकैर्विषयविषमदैर्लोभमोहैश्च सेर्ष्यैः
कामैः क्रोधैः श्रितैस्तैरहमहमिति ये ह्यत्र कुर्वन्ति नित्यम् ।
तेषां वार्तैव का वाऽनवरतमिह हा ! क्लिश्यमानाः स्वयं तै—
र्नीयन्तेऽन्धंतमस्ते तदनुसरणतो ज्ञानिनोऽपि व्यथन्ति ॥३९॥

'हर्ष, तर्ष ( अभिलाषा ), विषय-विष-सेवन-जनित मद, लोभ, मोह, ईर्ष्या तथा अपने भीतर बैठे हुए काम–क्रोध आदिके कारण जो लोग यहाँ प्रतिदिन अहभाव व्यक्त किया करते है, उनकी बात क्या कही जाय ? वे यहाँ स्वयं निरन्तर क्लेश उठाते है और उक्त काम क्रोधादिके द्वारा घोर अन्धतम ( नरक ) मे ले जाये जाते हैं। उनका अनुसरण करनेके कारण ज्ञानी जन भी व्यथित होते है ॥ ३९ ॥

जायापतिभ्यामथ तुष्टचेतसा विशुद्धमेवं कथितः खलाग्रणीः ।
तयोरनुज्ञां प्रतिगृह्य शान्तिदां गृहं ययौ, तावपि जग्मतुस्ततः ॥४०॥

उन पति-पत्नी वसुदेव-देवकीके द्वारा सतुष्ट चित्तसे इसप्रकार विशुद्ध भावयुक्त बात कही जानेपर वह दुष्टोका अगुआ कंस उन दोनोकी शान्तिदायिनी आज्ञा पाकर अपने घरको चला गया और वे दोनो दम्पति भी वहांसे चले गये ॥ ४० ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
व्यगमद्दशमः सर्गो महाकाव्ये स्तवात्मके ॥४१॥

कृष्णप्रसाद घिमिरेकी कृति इस श्रीकृष्णचरितामृत नामक स्तोत्रात्मक महाकाव्यमे दसवां सर्ग पूरा हुआ ॥ ४१ ॥

# एकादशः सर्गः

[ सभागृहे कंसस्य सुहृद्भिः परामर्शः । बालानां विप्रादीनाञ्च विहिंसननिर्देशनम् ]

( भुजङ्गप्रयातम् )

प्रभातेऽथ कंसो विनिद्रो रजन्यां स्मरंस्तद्गिरः स्वप्नवन्मन्यमानः ।
समाहूय तान् मन्त्रिणः स्वप्रकोष्ठे सभां कारयामास विभ्रान्त एषः ॥१॥

प्रातःकाल आनेपर जब कंसकी निद्रा टूटी तब रातमें देवी योगमायाके द्वारा कहे गये वचनोंको वह स्वप्नवत् मानने लगा। फिर भी अपने दरबारमें मन्त्रियोंको बुलाकर उस विभ्रान्त नरेशने एक सभा आयोजित की ॥ १ ॥

समाश्रित्य भव्यं पदं क्षिप्रमस्यां बभाषेऽखिलं तद्वचो माययोक्तम् ।
स एवाऽत्र तान्नोदयामास भूयः स्वकर्तव्यमादेष्टुकामो वरेण्यम् ॥२॥

वहाँ अध्यक्षके भव्य सिंहासनपर शीघ्र ही बैठकर उसने योगमायाकी कही हुयी सारी बातें दुहराईं। फिर उसीने उन सबको अपने लिये उत्तम कर्तव्य बतानेकी प्रेरणा दी ॥ २ ॥

ततस्ते नृशंसाः सदस्याः सभायां तमूचुर्मुखापेक्षिणो मूढचित्ताः ।
विमूढाः स्वतो धर्मकामार्थवृत्तौ सुरान् सद्गुणान् द्वेषिणस्तन्निशम्य ॥३॥

वे समस्त सभासद बड़े ही क्रूर, मूढचित्त और कंसकी मुँहदेखी कहनेवाले थे। स्वयं तो धर्म, काम और अर्थके विषयमें कोई निर्णय देनेमें मूर्ख थे और देवताओं तथा सद्गुणोंसे द्वेष रखनेवाले थे। कंसकी बात सुनकर वे उससे बोले—॥ ३ ॥

तथा चेन्महाराज ! शीघ्रं व्रजामो वयं कामरूपं समास्थाय चेतः ।
भ्रमामो धरां ताञ्छिशून् येऽत्र सन्ति निहन्मः सदन्तानदन्तांश्च सर्वान् ॥४॥

महाराज! यदि ऐसी बात है, तो हमलोग इच्छानुसार रूप धारण करके शीघ्र ही यहाँसे जाते हैं। हम भूतलपर भ्रमण करेंगे और जहाँ भी ऐसे बालक मिलेंगे जिनके दाँत अभी अभी निकले हैं या जिनके दाँत ही नहीं निकले हैं, वहाँ उन सबको मार डालेंगे ॥ ४ ॥

भयं नास्ति किञ्चित् सुरेभ्यो वयं हि विशिष्टास्ततो वीर्यशक्त्यादिभिश्च ।
रणे दुद्रुवुस्ते त्वया ताड्यमाना विगृह्यैव देहं निजं शस्त्रविद्धम् ॥५॥

'हमें देवताओंसे तनिक भी भय नहीं है, क्योंकि हम पराक्रम और शक्ति आदिमें उनसे बहुत बढ़े-चढ़े हैं। देवता वे ही तो हैं, जो युद्धस्थलमें आपके बाणोंकी मार खाकर अपने शस्त्र-विद्ध शरीरको लिये हुए भाग गये थे ॥ ५ ॥

अशक्तास्तु केचिद्भवन्तं तदैव समाराधयन्ति स्म भीताः सुरास्ते ।
किरीटं पुरो न्यस्य केचित्तथैव शरण्यं भवन्तं ब्रुवन्त्येव देव ! ॥६॥

'देव ! कितने ही असमर्थ देवता उसी समय भयभीत हो आपकी समाराधनामे लग गये थे । कईने तो आपके सामने अपने मस्तकका किरीट उतारकर रख दिया था और वे आपको 'शरणागतवत्सल' कहकर पुकारने लगे थे ॥ ६ ॥

भवानेव धीमानहो ! वीर्यवांश्च विमुक्तान् करोतीह तांस्त्रासतोऽपि ।
अतो धन्यवादार्ह एवं वराकाः सुरा किं करिष्यन्ति नो दीनचित्ताः ॥७॥

'आप ही बुद्धिमान् हैं, आप ही बलपराक्रमसे सम्पन्न हैं, क्योकि आप उन्हे त्राससे मुक्त कर देते है, अतएव आप ही धन्यवादके पात्र हैं, ऐसे वे बेचारे दीन-चित्त देवता हमारा क्या कर लेगे ॥ ७ ॥

सुरेन्द्रोऽल्पवीर्यो भवत्सन्निधौ कः स वृद्धो विधिः पालयेत् सृष्टिजातम् ।
शिवोऽरण्यमूढो भजेद्भावगम्यं हरिर्भक्तवृन्दं विलोकेत केऽन्ये ? ॥८॥

अल्प बल-पराक्रम वाला देवराज इन्द्र आपके समीप क्या हस्ती रखता है ? वह बूढा विधाता तो सृष्टि-समूहके पालनमे ही लगा रहता है । वनमे विचरनेवाले शिव भी तो किसी भावगम्य-वस्तुके भजनमे ही मस्त रहते हैं और विष्णु भगवान्की दृष्टि तो अपने भक्त-समूहकी ओर लगी रहती है, इनके सिवा दूसरे देवताओकी क्या बिसात है ? ॥ ८ ॥

तथापीह देवा न नो वैरिणो ये ह्युपेक्ष्यास्तदित्थं त्वमस्मान्नियुङ्क्ष्व ।
करिष्याम उन्मूलनं सर्व एव सुराणां सतां सज्जनानां श्रुतीनाम् ॥९॥

'तथापि यहाँ देवता हमारे वैरी हैं, इसलिए उपेक्षाके योग्य नही हैं । इस अवस्थामें आप हमे देवताओके दमनमे नियुक्त कीजिए । हम सभी मिलकर देवताओ, सतो, सत्पुरुषो तथा श्रुतियोका उन्मूलन ( सहार ) कर डालेगे ॥ ९ ॥

भवान् व्याहरत्पूर्वजन्मान्तरेऽपि प्रसिद्धोऽभवं कालनेमिर्बलिष्ठः ।
हतः किन्तु तेनेति, तस्मात् स विष्णुर्ह्यवश्यं वधार्हस्तदत्राऽस्त्युपायः ॥१०॥

'आपने कहा था कि 'पूर्व जन्ममे मै अत्यन्त बलवान् कालनेमि नामसे प्रसिद्ध दैत्य था, किन्तु उस विष्णुने मेरा वधकर डाला था ।' इसलिए वह विष्णु अवश्य ही वधके योग्य है । परन्तु इसके लिए यही एक उपाय है ॥ १० ॥

शरीरं विशेषेण तस्यास्ति धर्मः सदाचार एवं श्रुतिर्यज्ञ एव ।
इमानेव चाश्रित्य गा ब्राह्मणांश्च स पुष्णाति तस्मात्त एवाऽत्र वध्याः ॥११॥

'विष्णुका शरीर विशेपत धर्म, सदाचार, श्रुति एव यज्ञ ही है, इन्ही आश्रय लेकर वे गौओ तथा ब्राह्मणोका पोषण करते है, अत ये ही यहाँ हमारे वध्य है ॥ ११ ॥

यदा भूतलस्था द्विजा गाव इत्थं तितिक्षां दयां सत्यमादाय राजन् ! ।
समूलं गमिष्यन्ति नाशं तदैव मृतः स्यात् स विष्णुर्गुहास्थोऽप्यरूपः ॥१२॥

'राजन् ! इस प्रकार भूतलपर विद्यमान ब्राह्मण और गोसमुदाय तितिक्षा ( क्षमा ) दया और सत्यको साथ लिए समूल नष्ट हो जायँगे तब सबकी हृदय-गुफामे रहनेवाला रूपहीन विष्णु भी अवश्य मर जायगा ॥ १२ ॥

शक्त्या विरहिते विष्णौ तन्मूला देवता अपि ।
नष्टप्रायाः भविष्यन्ति तदादिश प्रभो ! हि नः ॥१३॥

'प्रभो ! जब विष्णु शक्तिहीन हो जायगा तो वही जिनका मूल है, वे देवता भी नष्टप्राय हो जायँगे, अत आप हमे इस कार्यके लिए आदेश दीजिये ॥ १३ ॥

नष्टेऽस्मिन् कीचके वंशे वंशीनिर्माणमूलके ।
निर्मिता केन सा वंशी वाद्यते मृत्युदाऽपि भोः ! ॥१४॥

महाराज ! जो वशीके निर्माणका मूल है, वह कीचक-वश ही यदि नष्ट हो जाय तो मृत्युका निवारण करनेवाली होनेपर भी वह बाँसुरी किससे निर्मित होकर बजेगी ( न रहेगा बाँस, न बजेगी बाँसुरी, न विष्णु रहेगे, न देवता ) ॥ १४ ॥

तद्वधोपाय एवं स्यात् किन्तु प्रारब्धकर्म तत् ।
सर्वथा विवशाञ्जीवान् भ्रामयत्यत्र नित्यशः ॥१५॥

'इसप्रकार विष्णुके वधका उपाय हो सकता है । किन्तु वह प्रारब्ध-कर्म सर्वथा विवश हुए जीवोको नित्य घुमाता रहता है—कर्मफलका भोग करवाता रहता है' ॥ १५ ॥

इत्थं स दुर्मन्त्रिभिरेवमद्धा संमन्त्र्य दुष्टो विगतज्ज्वरोऽभूत् ।
समर्थ्य सर्वं स्वहितं विभाव्य तानादिदेशाऽत्र तथैव कर्तुम् ॥१६॥

अपने दुष्ट मन्त्रियोके साथ इसप्रकार मन्त्रणा करके वह दुष्ट चिन्ताज्वरसे मुक्त हो गया । उनकी सलाहमे अपना हित जानकर उसका समर्थन करके कसने उन्हे वैसा ही करनेकी आज्ञा दे दी ॥ १६ ॥

ततस्तेऽगमन् दिक्षु सर्वासु तूर्णं समाश्रित्य रूपं तमःशक्तिपूर्णम् ।
विभूतिं श्रिता आसुरीं चैव मायां प्रचक्रुर्विनाशं यथोक्तं समायाम् ॥१७॥

तब वे तमोगुणकी शक्तिसे परिपूर्ण मनमाना रूप धारण करके तत्काल सम्पूर्ण दिशाओमे चल दिए। जैसा कि उन्होने कसकी सभामे कहा था, तदनुसार वे आसुरी सम्पत्ति और मायाका आश्रय ले विनाशकारी कार्यमे लग गए ॥ १७ ॥

**स्वस्वामिनोऽन्तकविसृष्टकुबुद्धिनष्ट - सत्कर्मणः प्रतिगृहीतकुबुद्धयस्ते ।**
**आसन्नमृत्युपथिकाः स इवाऽत्र भूत्वा चक्रुर्भृशं कदनमात्मविदां सतां च ॥१८॥**

मृत्युकी भेजी हुई कुबुद्धिसे उन दैत्योके स्वामी कसके सत्कर्म नष्ट हो गये थे। उसीसे उन असुरोने भी कुबुद्धि-ग्रहण की थी। वे कसकी ही भाँति निकट आयी हुई मृत्युके मार्गपर चल रहे थे, अत उन्होने आत्मवेत्ता महात्माओ सतोका अत्यन्त सहार आरम्भ कर दिया॥ १८॥

**द्रुह्यन्ति येऽत्र कुधियो गुणवत्सु सत्सु शान्त्याश्रयेषु सुमहत्सु हरिप्रियेषु ।**
**तेषां कथं भवति शं ? ह्यभवच्च कस्य न ज्ञायते, नयति तानध एव कर्म ॥१९॥**

इस जगत्मे जो भी कुत्सित बुद्धिवाले मानव गुणवान् सतो तथा शान्तिके आश्रयभूत भगवत्प्रिय महात्माओके प्रति द्रोह रखते है, उनका कैसे कल्याण हो सकता है ? और किसका हुआ है ? यह ज्ञात नही है। वह द्रोह कर्म उन भक्तद्रोहियोको नीचे ही ले जाता है—नरकमे ही गिराता है ॥ १९ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**गत एकादशः सर्गो महाकाव्ये स्तवात्मके ॥२०॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे यह ग्यारहवाँ सर्ग समाप्त हुआ ॥ २० ॥



# द्वादशः सर्गः

[ गोकुले भगवतो जन्मोत्सवादिवर्णनम् ]

( वंशस्थेन्द्रवंशयोरुपजातिवृत्तम् )

इतो व्रजो बालकहस्तचेष्टया व्युत्थापिता नन्दमहिष्यतः परम् ।
ससंभ्रमं संस्मृतपूर्वगीरसौ विबोध्य सुप्तं स्वपतिं जगाविदम् ॥१॥

इधर व्रजमे बालकके हाथकी चेष्टाने नन्दरानी यशोदाको जगा दिया । अत पहलेकी "मै प्रसूता हुई थी" इस बातको याद करके वे हडबडाकर उठ गयी और अपने सोये पति नन्दबाबाको जगाकर इस प्रकार कहने लगी—॥ १ ॥

अहं प्रसूता व्रजराज ! बालकं पश्याव आवां सहितौ किमस्ति तत् ।
सुतः सुता वा निभृतं निरूप्य यन्निर्धारयावो निजकृत्यमञ्जसा ॥२॥

'व्रजराज ! मैने एक बालकको जन्म दिया है, हम देखे,—'वह क्या है ? पुत्र है या पुत्री ?' इसको अच्छीतरह जानकर हम अपने कर्तव्यका अनायास निश्चय करे' ॥ २ ॥

नन्दः समुत्थाय निशम्य तत्स्वनं ह्युपाविशत्तत्र यशोदया समम् ।
क्षौमेण पीतेन शिशुं तदैव तावापादशीर्षं पिहितं व्यपश्यताम् ॥३॥

नन्दजी उठकर और बालकके रोनेका शब्द सुनकर यशोदाके साथ उसके पास जो बैठे । उसी समय उन्होने देखा, वह शिशु पैरसे लेकर सिरतक रेशमी पीताम्बरसे ढका हुआ है ॥ ३ ॥

निःसार्य वस्त्रं चरणौ शिशोः शुभौ निरीक्षमाणौ शनकैरुभावपि ।
ध्वजाङ्कुशैर्वज्रसरोरुहादिभिर्दृष्ट्वाङ्कितौ प्रापतुरव्ययं सुखम् ॥४॥

उन दोनोने धीरेसे वस्त्र हटाकर बालकके सुन्दर युगलचरण देखे । वे ध्वज, अङ्कुश, वज्र और कमल आदि शुभ चिह्नोसे अङ्कित थे । यह देखकर उन्हे अक्षय-सुख प्राप्त हुआ ॥ ४ ॥

पुंल्लिङ्गताव्यञ्जकवस्तुमात्रकं प्राग्द्राग्विलोक्याऽर्भकवक्षसि स्थितम् ।
तद्भार्गवं चिह्नमवेक्ष्य सत्वरावपश्यतां श्रीश्रितचन्द्रकं शिरः ॥५॥

पहले पुरुषत्व-सूचक वस्तुपर तत्काल दृष्टिपात करके उन्होने बालकके वक्ष स्थलपर भृगुका चरण-चिह्न देखा, फिर उतावलीसे मस्तकका अवलोकन किया, जिसपर शोभा-युक्त मोरपखका मुकुट था ॥ ५ ॥

सुलक्षणैरेभिरमुं यथार्थतो विभाव्य साक्षात् परमेश्वरं यथा ।
संस्पृष्टवन्तौ दृढमोहितात्मना तदङ्गमेकैकमनुत्तमं तदा ॥६॥

इन सुन्दर लक्षणोसे उस शिशुको यथार्थंत साक्षात् परमेश्वर मानकर वे अत्यन्त मुग्ध हो गये और उस समय उसके एक-एक परम उत्तम अङ्गपर हाथ फेरने लगे ॥ ६ ॥

गते सुदीर्घे वयसीह दैवतो जातोऽद्य नौ पुत्र इदं वचो यदा ।
तयोरखेलद्धृदये सुनिर्भरं संलक्ष्य तद्भावमसौ स्मितस्तदा ॥७॥

'इतनी बडी आयु व्यतीत हो जानेपर दैववश आज हम दोनोके पुत्र हुआ है'—यह बात जब उनके हृदयमे खेलने लगी, तब उनका भाव देखकर वह शिशु मुसकरा उठा ॥ ७ ॥

स्मितेन तेनाऽक्षयबाललीलया निरीक्षणेनाऽपि मनो जिहीर्षुणा ।
तन्नीलकान्त्या च मुखश्रिया धिया विमोहितौ तौ सुतरां विरेजतुः ॥८॥

उस मुसकानसे, अक्षय बाल-लीलासे, मनको हर लेनेकी इच्छावाली चञ्चल चितवनसे, शिशुकी श्याम-कान्तिसे, मुखकी शोभासे तथा उसकी सद्बुद्धिसे मोहित हुए वे दोनो दम्पति ( नन्द और यशोदा ) बडी शोभा पाने लगे ॥ ८ ॥

अमेयकान्तिप्रचुरं सुदर्शनं सवारिमेघप्रतिमं मनोरमम् ।
अलौकिकं रूपमुभौ निरीक्ष्य तच्चित्रस्थमूर्तिप्रतिमौ बभूवतुः ॥९॥

जहाँ अप्रमेय कान्तिका प्राचुर्य था, जिसका दर्शन बडा सुहावना था, जिसकी आभा सजल जलधरके समान श्याम थी तथा जो मनको बरबस अपनी ओर खीच लेनेवाला था, शिशुके उस अलौकिक रूपको देखकर वे दोनो नन्द-यशोदा चित्रलिखित मूर्तिसे प्रतीत होने लगे ॥ ९ ॥

चिरेण कर्तव्यमतः परं निजं संस्मृत्य नन्दो व्रजराज उत्थितः ।
अपश्यदुद्घाट्य गवाक्षमुच्छिरा नीलं महो व्याप्तनभस्तलं ततः ॥१०॥

दीर्घकालके बाद अपने कर्तव्यका स्मरण करके व्रजराज नन्द उठकर खड़े हो गये। उन्होने घरकी खिडकी खोलकर सिर ऊपर उठा सारे आकाशमे व्याप्त हुई उस नील ज्योतिको देखा ॥ १० ॥

चन्द्रं समाश्लिष्य नवोदितं प्रियं साऽऽह्लादिता तस्य करैरितस्तदा ।
प्राची दिगासीन्मुदिता भृशं तयोः सानन्दचैतन्यमयी सुधीरिव ॥११॥

इसी समय नवोदित प्रियतम चन्द्रका आलिङ्गन करके उसकी इधर-उधर प्रसृत किरणोसे आह्लादित हुई प्राची दिशा नन्द और यशोदाकी चिन्मयी उत्तम बुद्धिकी भाँति आमोद-मग्न हो गयी ॥ ११ ॥

ततोऽम्बरेऽसौ शशिनं निरीक्ष्य तं निर्वर्ण्य कोष्ठस्थितबालकं पुनः ।
भृशं निरूप्याऽपि च किञ्चिदन्तरं तयोर्न लेभे व्रजराज उन्मनाः ॥१२॥

तदनन्तर व्रजराज नन्दने आकाशमे चन्द्रमाको देखा और भवनके भीतर विराजमान अपने उस बालकपर भी दृष्टिपात किया। भलीभाँति देखनेपर भी वे उन्मना होकर उन दोनो चन्द्रोमे किञ्चिन्मात्र भी अन्तर नही देख सके ॥ १२ ॥

स चिन्तयामास गवाक्षमाश्रितः सच्चिन्मयोऽयं पुरुषः पुरातनः ।
किं वाऽवतीर्णोऽत्र ? ममेष्टदेवता श्रेयो विदद्ध्याज्जयताच्च सर्वथा ॥१३॥

वे खिडकीका सहारा ले खड़े हो मन ही मन सोचने लगे—'क्या ये सच्चिदानन्दमय पुरातन पुरुष मेरे इष्टदेव ही यहाँ इस रूपमे अवतीर्ण हुए हैं ? यदि ऐसी बात है तो इनकी जय हो ! और ये मेरा कल्याण करे ॥ १३ ॥

द्वारं समुद्घाट्य ततः स सत्वरो भृत्यान् समाहूय शनैरुपस्थितान् ।
पूज्यान् द्विजाञ्जातककर्मकोविदान् गोपान् समाकारयितुं नियुक्तवान् ॥१४॥

तदनन्तर उन्होने बडी उतावलीके साथ दरवाजा खोलकर सेवकोको धीरेसे बुलाया और जब वे उपस्थित हुए तो उन्हे जातकर्मके ज्ञाता पूजनीय ब्राह्मणो तथा गोपोको बुला ले आनेकी आज्ञा दी ॥ १४ ॥

प्रियाः विधेया व्रजराजसेवका बुद्ध्वा तदाज्ञां सम्मुदो यथार्थतः ।
नृत्यन्त औत्सुक्यवशान्निरन्तरं ततो ययुस्ते नतमस्तका द्रुतम् ॥१५॥

व्रजराजके प्रिय आज्ञाकारी वे सेवक उनकी आज्ञाको यथार्थतः समझकर प्रसन्नतासे खिल उठे और निरन्तर बढती हुई उत्कण्ठाके वशीभूत हो सिर झुकाकर नाचते-कूदते हुए तुरन्त वहाँसे चल दिये ॥ १५ ॥

यथानिदेशं प्रथमं समन्ततो गत्वा भ्रमित्वा प्रतिसद्म तान् द्विजान् ।
मुनींश्च पूर्वोक्तगुणैरलङ्कृतान् विज्ञापयामासुरमी तथास्थितान् ॥१६॥

पहले स्वामीकी आज्ञाके अनुसार चारो ओर पहुँचकर घर-घर घूमकर पूर्वोक्त गुणोसे अलंकृत द्विजो तथा मुनिजनोको उन्होने उक्त सूचना दी ॥ १६ ॥

संमन्त्र्य कार्यं रुचिरं करिष्णवस्ते प्राविशन् वाद्यगृहं ततोऽञ्जसा ।
आदाय तस्मात् पटहं सुविस्तृतं मुदं वहन्तो व्रजमध्यमाययुः ॥१७॥

फिर आपसमे सलाह करके रुचिर कार्य करनेके इच्छुक वे सेवक वाद्यगृहमे गये और वहाँसे अनायास ही नगाडे लेकर प्रसन्नता पूर्वक व्रजमण्डलके बीच आये ॥ १७ ॥

**प्रवादयन्तस्तु तमानकं भृशं संघुष्य ते नन्दगिरः स्फुटं तदा।**
**जातोऽद्य बालो व्रजराजसद्मनि सर्वे समागच्छत जातकर्मणि ॥१८॥**

वे उस नगाडेको जोर-जोर बजाते हुए नन्दजीका संदेश उच्चस्वरसे सुनाने लगे—'गोपगण! आज व्रजराज नन्दजीके घर बालक उत्पन्न हुआ है, उसका जातकर्म-संस्कार होने जा रहा है, उसमे आप सब लोग पधारे॥ १८॥

**नादेन तेनाऽऽहतनादरूपिणा व्युत्थापितास्ते व्रजवासिनस्ततः।**
**आकर्षितास्तद्वचसैव सोत्सुका अथाऽऽययू राजगृहं समन्ततः॥१९॥**

उस आहतनादरूपी नादसे समस्त व्रजवासी शयनसे उठा दिये गए। वे उक्त घोषणासे आकर्षित और उत्सुक हो चारोओरसे राजगृह ( नन्द-भवन ) की ओर आने लगे॥ १९॥

**द्विजाशिषं तां प्रतिगृह्य सर्वतो नतोत्तमाङ्गो व्रजराज उत्सुकः।**
**निवेद्य तेभ्यः सुतजन्मकर्म तत्सम्पादनार्थं चरणेऽक्षिपद्गिरः॥२०॥**

द्विजोके दर्शनके लिए उत्कण्ठित व्रजराजने उनके आनेपर मस्तक झुकाकर प्रणाम किया और उनका आशीर्वाद लेकर उनसे पुत्रके जातकर्मके विषयमे निवेदन किया। फिर उस कर्मके संपादनके लिए उनके श्रीचरणोमे अपनी बात रक्खी॥ २०॥

**ततो द्विजा मन्त्रविदः सुमङ्गलाः सुमङ्गलं मङ्गलकर्मणीदृशि।**
**तत्पुत्रतीर्थे विधिवन्मुदान्विताः संस्नापयामासुरमुं सचैलकम्॥२१॥**

तब मन्त्रज्ञ तथा परम मङ्गलरूप उन ब्राह्मणोने ऐसे मङ्गल कर्मके उपस्थित होनेपर बडी प्रसन्नता प्रकट की और उस उत्तम पुत्रतीर्थमे वस्त्र सहित नन्दराजको विधिपूर्वक माङ्गलिक स्नान कराया॥ २१॥

**प्रोद्घुष्य ते स्वस्त्ययनं सुमङ्गलं कृत्वा विधेयं विधिवत्सुरार्चनम्।**
**नान्द्यादिसच्छ्राद्धमपीह यत्नतः सम्पादयामासुरमुष्य शान्तिदम्॥२२॥**

फिर उन्होने सुमङ्गलमय स्वस्तिवाचन करके कर्तव्य देवपूजनको विधिवत् पूर्ण किया और यजमानके लिए शान्तिदायक कर्म, नान्दी आदि श्राद्धका यत्नपूर्वक सम्पादन कराया॥ २२॥

**महामनाः सोऽपि महार्हवस्तुभिः सम्पादयामास समस्तकर्म तत्।**
**सम्प्राप्य तीर्थं क उदारमानसो ददाति पात्रेभ्य इहेप्सितं न किम्!॥२३॥**

महामनस्वी नन्दने भी बहुमूल्य वस्तुओंद्वारा वह समस्त कर्म सम्पन्न किया। क्यो न करे, कौन ऐसा उदारहृदय पुरुष होगा जो तीर्थ प्राप्त होनेपर सत्पात्रोको दान न देगा तथा उन्हे कौन-सी अभीष्ट वस्तु नही दे डालेगा॥ २३॥

**आनन्दतो नन्द उदारतावशाद् ददौ द्विजेभ्यो विविधं धनं बहु ।**
**गवां शुभे द्वे नियुते अलङ्कृते ददे सवत्से ससुखं सुपूजिते ॥२४॥**

उदारतावश नन्दने बडे आनन्दसे द्विजोको नाना प्रकारका बहुत धन अर्पित किया । इतना ही नही उन्होने वस्त्राभूषणोसे विभूषित तथा सुपूजित दो लाख गौएँ भी सुखपूर्वक दान की ॥ २४ ॥

**संस्थाप्य सप्ताद्रिसमान् हरिप्रियान् तिलोच्चयान् रत्नसुवर्णभूषितान् ।**
**महार्हवस्त्रैः पिहितान् विधाय तान् नारायणायेति ददौ विशेषतः ॥२५॥**

सात पर्वतोके समान तिलके सात ढेर, जो भगवान् श्रीहरिको बहुत प्रिय है, स्थापित करके उन्हे रत्न एव सुवर्णसे भूषित किया और बहुमूल्य वस्त्रोसे ढककर वे सबके सब विशेषत 'नारायणाय समर्पयामि' ऐसा कहते हुए नन्दजीने ब्राह्मणोको दान कर दिये ॥ २५ ॥

**विशुद्ध्यते कालवशाद्धरादिकं शौचाच्छरीरं वसनं प्रमार्जनैः ।**
**हृषीकवृन्दं तपसेज्यया द्विजा गर्भादि संस्कारत एव संस्कृतम् ॥२६॥**

पृथ्वी तथा पार्थिव आदि वस्तुएँ विशेषत कालसे विशुद्ध होती है । शरीर स्नानसे, वस्त्र धोनेसे, इन्द्रिय समूह तपसे, द्विज यज्ञ-यागसे तथा गर्भ आदि सस्कारसे सस्कृत होकर शुद्ध होते हैं ॥ २६ ॥

**तुष्ट्या मनो रत्न-धनादि भौतिकं संशुद्ध्यते वस्त्वखिलं तु दानतः ।**
**स्वात्मा तु सच्छास्त्रगुरूपशिक्षितां विद्यामृते नैव विचिन्त्यतां बुधाः ! ॥२७॥**

मनकी शुद्धि सतोषसे होती है, रत्न-धन आदि समस्त भौतिक पदार्थकी शुद्धि दानसे होती है, परन्तु विद्वज्जनो ! आत्माकी शुद्धि सत्-शास्त्र तथा गुरुजनोसे सीखी हुई विद्याके विना नही होती है—इस बातको सदा स्मरण रक्खे ॥ २७ ॥

**विगृह्य सद्बुद्धिमिमां व्रजेश्वरः स्वजीवनं सत्प्रथितं कृतार्थयन् ।**
**द्रव्योपयोगश्च निदर्शयन् क्षितौ चकार तत्-सत् ! सुतजन्मतीर्थके ॥२८॥**

व्रजेश्वर नन्दजोने इस सद्बुद्धिको अपनाकर सत्पुरुषोमे प्रसिद्ध अपने जीवनको कृतार्थ करते हुए और भूतलपर द्रव्यका सदुपयोग कैसे करना चाहिये—यह दृष्टान्त सामने रखते हुए उस पुत्र-जन्मरूप तीर्थमे 'ॐ तत् सत्' बोलकर धनका दान किया ॥ २८ ॥

**समाप्य सर्वान्नियमानितस्ततः सत्याशिषस्ते मुनयो गुरुद्विजाः ।**
**तूर्णं ह्यरिष्टं न्यविशन् व्रजेश्वरं सार्धं प्रगृह्यैव शिशुं दिदृक्षवः ॥२९॥**

तत्पश्चात् इधर सारे नियमोको पूरा करके वे सत्य एव शुभ आशीर्वाद देनेवाले मुनि, गुरु तथा ब्राह्मण नवजात-शिशुको देखनेके लिए व्रजेश्वरको साथ लेकर तुरन्त सूतिकागारमे प्रविष्ट हुए ॥ २९ ॥

इतः प्रियां स्वां प्रकृतिस्वरूपिणीं ह्युषां पुरस्कृत्य करैर्मृजन् रविः ।
समागतो बालकमम्बुजोपमं कर्तुं प्रफुल्लं स्वहितं विभाव्य तम् ॥३०॥

उधर अपनी प्रकृति स्वरूपिणी प्रिया उषाको आगे करके उसपर अपने कर ( किरण या हाथ ) फेरते हुए सूर्यदेव उस कमलोपम-बालकको अपना हित समझकर उसे प्रफुल्ल करनेके लिये उदित हुए ॥ ३० ॥

पौरास्ततो गोकुलमण्डलं श्रिता उदन्तमाकर्ण्य बहिः समागताः ।
अन्योन्यमामन्त्र्य व्रजं झटित्यहो ! प्रामार्जयन् सर्वत एव संगताः ॥३१॥

तब गोकुलवासी नागरिक वह समाचार सुनकर नन्द-भवनके बाहरी भागमे आ पहुँचे और एक दूसरेको बुलाकर शीघ्रतापूर्वक मिल-जुलकर सब ओरसे व्रजको साफ-सुथरा करने लगे ॥ ३१ ॥

प्रागापुरद्वारगृहाङ्गणादिकं तैः शोधनीभिः परिमार्जितं द्रुतम् ।
सुगन्धवारि प्रतिगृह्य सर्वतस्तेष्वेषु संसिक्तमतन्द्रितैस्ततः ॥३२॥

पहले उन्होने झाड़ू लेकर पुर-द्वारसे घरके आङ्गन आदि तक सारा व्रजमण्डल शीघ्रतापूर्वक झाड-बुहार दिया, फिर सुगन्धित जल लेकर आलस्यरहित हो उन बाहर-भीतर के सभी स्थानोपर छिडकाव किया ॥ ३२ ॥

ध्वजैर्विचित्रैर्नवपल्लवाङ्कुरै-र्माल्यैः पताकाभिरतुल्यकान्तिभिः ।
चैलैश्च चित्रैर्मिलितैर्व्रजस्थितैस्तैर्भूषितं द्राक् परितो व्रजं तदा ॥३३॥

विचित्र-ध्वज स्थापित कर, नूतन पल्लवाङ्कुर ( वदनवारे ) सुदूर तक लगाकर, उनमे फूलोके हार लटकाकर, अनुपम कान्तिवाली बहुत-सी पताकाएँ फहराकर तथा विचित्र रगोके वस्त्र तानकर सघटित व्रजवासियोने पहले बडी शीघ्रताके साथ व्रजको चारो ओरसे सुसज्जित कर दिया ॥ ३३ ॥

प्राभातिकीः स्वाः नियमादिकाः क्रियाः समाप्य सर्वे व्रजवासिनो जनाः ।
मुदान्विता गा वृष-वत्सकैः समं प्रक्षिप्य शष्पं रुचिरं ह्यभूषयन् ॥३४॥

समस्त व्रजवासी जनोने प्रात कालिक नियम आदि पुण्य-कर्म समाप्त करके आनन्दमग्न हो गौओ, साडो और बछडोके आगे घास डाल दिया और उन सबको सुन्दर ढगसे विभूषित किया ॥ ३४ ॥

स्नानेन संशोध्य शरीरमेकशस्तैलैर्हरिद्रादिविमिश्रितैः शुभैः ।
वस्त्रैर्महार्हैश्च सुगन्धिवस्तुभिस्ते भूषिता रेजुरहो ! भृशं पुनः ॥३५॥

स्नान करानेके द्वारा एक बार उनके शरीरकी शुद्धि करके हल्दी मिश्रित सुन्दर तैलसे, बहुमूल्य वस्त्राभूषणोसे और सुगन्धित वस्तुओसे उन्हे विभूषित किया। फिर तो उनकी अत्यन्त अद्भुत शोभा होने लगी ॥ ३५ ॥

ततः स्वयं ते व्रजभूपतेः शिशोर्जन्मोत्सवे सम्मिलितुं समुत्सुकाः।
आत्मानमेवाऽतुलतो व्यभूषयन् स्नानादिना प्राग्गतकल्मषा मुदा ॥३६॥

तदनन्तर वे व्रजवासी व्रजराज-शिशुके जन्मोत्सवमे सम्मिलित होनेके लिए उत्सुक हो प्रसन्नतापूर्वक स्नान करके साफ सुथरे हो अपने आपको ही अनुपम ढगसे विभूषित करने लगे ॥ ३६ ॥

महार्हवस्त्राभरणैः सुसज्जिताः द्रव्यैः सुगन्धीभिरितः सुवासिता:।
आबालवृद्धास्तरुणाश्च सङ्घशः प्रत्युद्गता नन्दगृहं त्वरान्विताः ॥३७॥

अधिक मूल्यवान वस्त्राभूषणोसे सुसज्जित तथा सुगन्धित द्रव्योसे सुवासित हो बालक, बृद्ध और तरुण गोप बडी उतावलीके साथ यूथबद्ध होकर नन्दके घर आये ॥ ३७ ॥

इतो व्रजस्था गुणरूपशीलतो बृद्धाः स्वतो मातर उत्सुकास्तदा।
गोपालबालाः प्रमदाः सबालिका आत्मानमद्धा बहुधा व्यभूषयन् ॥३८॥

इधर व्रजमे रहनेवाली गुण, रूप एव शीलमे बढी चढी माताएँ, गोप बालाएँ व्रज युवतियाँ तथा बालिकाएँ भी स्वत उत्सुक हो अपने आपको अनेक प्रकारसे सँवारने और विभूषित करने लगी ॥ ३८ ॥

ता देवबाला मुनियोषितस्तथा गोपाङ्गनास्ताः श्रुतिसंहितादिकाः।
चतुर्विधाः स्वप्रियदर्शने प्रियाः स्वं भूषयाञ्चक्रुरहो! तदुद्भवे ॥३९॥

गोपियाँ चार प्रकारकी थी—देवाङ्गनास्वरूपा, मुनिरूपा, गोपाङ्गनास्वरूपा तथा श्रुतिसहितादिरूपा। ये चारो तरहकी हरि वल्लभाएँ अपने प्रियतम नन्द-नन्दनका दर्शन करनेके निमित्त उनके जन्मोत्सवपर अपनेको विभूषित करने या सँवारने लगी ॥ ३९ ॥

द्रव्यैरनेकैरनुलेप्य सुन्दरं महार्हवस्त्रैः सुविभूषितं पुनः।
रत्नोज्ज्वलत्कुण्डलहारशोभितं प्राक् ता अपश्यन्मुकुरे स्वविग्रहम् ॥४०॥

अनेक अङ्गरागोचित द्रव्योसे अपने सुन्दर अगोमे अनुलेप लगाकर उन्होने बहुमूल्य वस्त्र और आभूषण धारण किये। कानोमे रत्ननिर्मित झलमलाते कुण्डल पहने और कण्ठमे हार धारण किया। इस प्रकार शोभा सम्पन्न हुए और सुन्दर शरीरको उन्होने दर्पणमे देखा ॥ ४० ॥

निवेश्य नेत्रेऽञ्जनमुज्ज्वलं मुखं सम्पाद्य किञ्चिन्नवकुङ्कुमारुणम् ।
निक्षिप्य माल्यं च शिखाष्वनुत्तमं प्रसाधयामासुरमुं दिदृक्षया ॥४१॥

आँखोमे अजन लगाकर उन्होने मुखको सुगन्ध चूर्णसे उज्ज्वल किया, उसमे कुङ्कुम लगाकर कुछ अरुण आभा ला दी और जूडेमे परम सुन्दर पुष्पहार गूँथकर प्रियदर्शनकी इच्छासे उन गोपियोन अपना शृङ्गार किया ॥ ४१ ॥

सम्पाद्य सर्वं गृहकृत्यमञ्जसा प्रतीक्षमाणाः समयं समन्ततः ।
द्रष्टुं प्रियं तं व्रजराजबालकं सरित्पतिं नद्य इवाऽऽपतंस्ततः ॥४२॥

उन्होने घरका सारा काम अनायास ही समाप्त कर डाला और अपने प्रिय व्रजराज बालकको देखनेके लिए वे सब ओरसे समयकी प्रतीक्षा करने लगी । जैसे नदियाँ समुद्रकी ओर दौडती हैं, उसी तरह वे नन्द-नन्दनको लक्ष्य करके जहाँ तहाँसे तीव्र गतिसे वहाँ आने लगी ॥ ४२ ॥

सुखेन सर्वा व्यगमन् समुत्सुका नन्दालयं विश्वजनाश्रयालयम् ।
चन्द्रं चकोर्यः श्रुतयः परं यथा प्रभा रविं द्रष्टुमिवाऽऽययुस्तदा ॥४३॥

जैसे चकोरियाँ चन्द्रमाको, श्रुतियाँ परब्रह्मको, प्रभा सूर्यको पाना चाहती हैं, उसी प्रकार वे सब गोपियाँ नन्द-नन्दनको देखनेके लिए उत्सुक हो सुखपूर्वक उस नन्दभवनमे आ पहुँची, जो समस्त विश्वके आश्रयभूत भगवान्का भी निवासगृह बना हुआ था ॥ ४३ ॥

उद्यन्तमादित्यनिभं शिशुं हरिं स्तुवन्त उच्चैः स्वगिरा कृतच्छलाः ।
तत्राऽऽययुर्द्राग् व्रजमण्डलं श्रिता द्रष्टुं महं तं पशुपक्षिणोऽप्यमी ॥४४॥

उगते हुए सूर्यके समान तेजस्वी शिशुरूप श्रीहरिकी अपनी बोली या कलरवके बहाने उच्च स्वरसे स्तुति करते हुए व्रजमण्डल निवासी वे पशु-पक्षी भी नन्दकुमारके उस जन्म-महोत्सवको देखनेके लिए वहाँ आ गये थे ॥ ४४ ॥

कालेऽथ तस्मिन्मुनयो द्विजा बुधास्तत्राऽऽगमन् प्राग् जय ! जीव ! वादिनः ।
स्वैः स्वैर्गुणैर्दिव्यकलादिभिश्च तस्याराधनार्थं शुभमस्तु भाषिणः ॥४५॥

उस समय मुनि, द्विज, विद्वान् अपने-अपने गुणो और दिव्य-कला आदिके द्वारा उस नन्द शिशुकी समाराधना करनेके लिए वहाँ पहले आये । वे अपने मुखसे 'जय हो, बाल-गोपाल चिरजीवी हो, शुभ हो ( मगल हो )' इत्यादि बोल रहे थे ॥ ४५ ॥

अथाऽऽययुर्मागधसूतवन्दिनः पौराणिका वंशनुतिप्रभाषिणः ।
आकर्षितास्तच्छिशुतेजसा भृशं तदीयसत्कीर्तिकथाभिमानिनः ॥४६॥

तदनन्तर वशकी स्तुति गानेवाले मागध, सूत, बन्दी और पौराणिक उस शिशुके तेजसे अत्यन्त आकर्षित हो उसकी सत्कीर्ति–कथाके गानका अभिमान लिए वहाँ आये ॥ ४६ ॥

**ततोऽगमन् नृत्यसुगीतवाद्यकैस्तं तोषयन्तोऽत्र विशारदा जनाः ।**
**नृत्यन्त उल्लासवशान्निरन्तरं गायन्त उच्चैरमुमेव सत्स्वनाः ॥४७॥**

तत्पश्चात् वहाँ प्रवीण-जन नृत्य, सुन्दर-गीत और वाद्योसे उसको सतुष्ट करनेके लिए वहाँ आ पहुँचे। निरन्तर वे उल्लसित होकर नाचते और उच्चस्वरसे उस बालकका ही यशोगान करते थे ॥ ४७ ॥

**तौर्यत्रिके गुञ्जति दिव्यरूपतस्तद्राजमार्गे मिलिता स्वयूथशः ।**
**ते ताश्च जग्मुर्व्रजराजसद्मनि प्रदर्शयन्तः स्वगुणान् कलाश्च ताः ॥४८॥**

वहाँके राज मार्गपर दिव्य रूपसे विविध प्रकारके वाद्यरव गूँज रहे थे और झुडके झुड मिलकर पूर्वोक्त कलाकार स्त्री-पुरुष अपने गुणो तथा कलाओका प्रदर्शन करते हुए व्रजराज-सदनमे आये ॥ ४८ ॥

**विबोधिताः प्राक् शिशुजन्मवार्तया विभूषिता वारविलासिनीजनाः ।**
**आकर्षितास्तन्महजात् कुतूहलात् तत्राऽऽगमन् द्राक् कृतदिव्यगायनाः ॥४९॥**

पहले नन्दशिशु जन्मकी वार्ताका प्रसारण होनेसे जो जाग उठी थी, वे वाराङ्गनाएँ सज-धजकर उक्त महोत्सव जनित कौतूहलसे आकर्षित हो वहाँ शीघ्रता पूर्वक आयी। वे सब दिव्य-गीत गा रही थी ॥ ४९ ॥

**इत्थं गताः पौरजनाः स्वयूथशः शिशुं तमालोकमितुं नवोदितम् ।**
**सुसज्जितं तत्क्षण एव भूषितं नन्दालयं शान्तिसुखैः सुपूरितम् ॥५०॥**

इस प्रकार पुरवासी जन उस नवोदित नन्द-शिशुका अवलोकन करनेके लिए वहाँ यूथके यूथ आने लगे। नन्द-भवन तत्काल ही भूषित और सुसज्जित किया गया था। वह शान्ति-सुखसे भरा पूरा था। वहाँ वे सब लोग उपस्थित हो गये ॥ ५० ॥

**उपायनं स्वप्रियवस्तुबाहुभिर्विगृह्य तत्राऽर्पयितुं गता इमे ।**
**प्रत्यूष एवाऽत्र समागतास्ततो नन्दालयस्याऽजिरमप्यभूषयन् ॥५१॥**

हाथोमे अपनी प्रिय वस्तुको उपायनके रूपमे देनेके लिए लेकर ये सब स्त्री-पुरुष प्रात काल ही नन्दभवनमे आ गये और उसके प्राङ्गण-भागको विभूषित करने लगे ॥ ५१ ॥

इतो यशोदाङ्कविसुप्तमर्भकं समाप्तशौचादिविधिं सुखं स्थितम् ।
द्विजाः सनन्दा अभिसस्रुरुत्सुकाः शुभाशिषं दातुममेयशक्तयः ॥५२॥

इधर शौच-स्नानादि विधिको समाप्त करके यशोदाजीके अकमे सुखपूर्वक सोये हुए उस बालकको नन्दसहित अमेयशक्ति-सम्पन्न ब्राह्मण उत्सुक हो शुभाशीर्वाद देनेके लिए आये ॥ ५२ ॥

विप्रैः कृतस्वस्त्ययनं ततस्त्वमुं प्रेम्णा विमाताऽस्य विगृह्य रोहिणी ।
विप्रान् पुरस्कृत्य प्रसूतिकागृहाद्व्रज नन्दालयदेहलीं श्रिता ॥५३॥

जब ब्राह्मणोने स्वस्तिवाचन कर लिया तब उसकी विमाता-रोहिणी देवी उन विप्रोको पुरस्कृत करके प्रेमपूर्वक उस बालकको गोदमे ले नन्द-नन्दनकी द्वार-देहलीपर आ खडी हुईं ॥ ५३ ॥

स्वहस्तपद्मस्थममुं ततस्तया न्यदर्शि तेभ्यो बहुधा ज्वलच्छ्रिया ।
ते तास्तमीन्दीवरनीलमद्भुतं स्वपद्मनेत्रैर्ददृशुः समन्ततः ॥५४॥

रोहिणीजी उद्दीप्त कान्तिसे अत्यन्त उद्भासित होती थी, उन्होने अपने करकमलोमे स्थित वह बालक वहाँ आये हुए समस्त नर-नारियोको दिखाया। वे पुरुष और वे स्त्रियाँ भी उस नीलकमलके समान श्यामसुन्दर अद्भुत बालकको सब ओरसे अपने प्रफुल्ल पद्मोपम नेत्रोद्वारा देखने लगी ॥ ५४ ॥

पूर्णाः कलाः स्वा परिगृह्य चन्द्रमाः प्राच्यां समुद्भूत इवाऽभवत्तदा ।
तज्ज्योतिषा व्याप्तममेयकान्तिमत् सौरं महोऽप्यत्र बभूव शीतवत् ॥५५॥

उस समय ऐसा जान पडा, मानो अपनी सम्पूर्ण कलाओको लेकर चन्द्रदेव पूर्व-दिशामे प्रकट हो गये हो। उस शिशुकी ज्योतिसे व्याप्त अमेयकान्तिमान सौरमण्डलका तेज भी शीतल-सा हो गया था ॥ ५५ ॥

विशिष्टतेजःप्रचुरं सुखावहं सानन्दमाह्लादकसद्गुणाश्रयम् ।
तद्रोहिणीबाहुसजरोसंस्थितं सच्चिन्मयं नीलमणिं व्यलोकयन् ॥५६॥

रोहिणीजीके कर-कमलमे विराजमान उस नीलमणि बालकमे विशिष्ट तेजका आधिक्य था। वह परम सुखद एव आनन्दपुञ्ज जान पडता था। आह्लादकारी सद्गुणोका अधिष्ठान प्रतीत होता था। उस सच्चिदानन्दमय शिशुको सब लोगोने जी भरकर देखा ॥ ५६ ॥

कोलाहलोऽभूज्जय ! जीव ! वादिनां शुभाशिषं संवदतां समूहतः ।
आह्लादितानां गुणवृत्तिशालिनां सर्वेन्द्रियाऽऽकर्षणशीलबालतः ॥५७॥

सामूहिक रूपसे 'जय हो, बालक चिरजीवी हो' इत्यादि शुभाशीर्वाद बोलते हुए गुण-वृत्तिशाली लोगोका कोलाहल वहाँ व्याप्त हो गया। वह बालक स्वभावसे ही इन्द्रियोको अपनी ओर खीच रहा था। उसके दर्शनसे सब लोग आह्लादित थे ॥ ५७ ॥

नेत्रैः पिबन्तो नयनाभिनन्दिनं तं नन्दिनं स्फारितनेत्रपंक्तयः।
सर्वेऽप्यमी रूपनिरीक्षणोत्सवाद्बभूवुरेकेन्द्रियवृत्तिगामिनः ॥५८॥

नयनोको आनन्द प्रदान करनेवाले उस आनन्दी शिशुको आँखे फाड-फाडकर देखते और नेत्रपुटोसे उसके रूप-रसका पान करते हुए ये सब दर्शक इस रूपदर्शन-जनित उत्सवके कारण एकमात्र नेत्रेन्द्रियकी वृत्तिमे पहुँच गये थे ॥ ५८ ॥

आनन्दसच्चिद्गुणजालमालिना बालेन तेनाऽपि च शान्तिशालिना।
दृष्ट्या श्रियाऽतुल्यधिया स्वया तदा ह्यहारि तेषां मन एव सर्वथा ॥५९॥

आनन्द सच्चिन्मय गुणोंके जालकी मालासे अलकृत उस शान्तिशाली बालकने अपनी दृष्टि-कान्ति तथा अनुपम बुद्धिसे उस समय उन सबके मनको सर्वथा हर लिया ॥ ५९ ॥

शक्त्या प्रभावेण गुणेन वीर्यतः सामर्थ्यवन्तोऽत्र विचक्षणा जनाः।
सिद्धं स्वतो व्यक्तिमनोऽनुसारिणा ज्ञानेन कुर्वन्ति वशं जनाञ्जनाः ॥६०॥

ऐसा क्यो न हो, इस जगत्मे जो सामर्थ्यशाली और विचक्षणजन है, वे अपनी शक्ति, प्रभाव, गुण और पराक्रमसे तथा व्यक्तिके मनका अनुसरण करनेवाले ज्ञानसे लोगोको अपने वशमे कर लेते हैं। यह बात स्वत सिद्ध है ॥ ६० ॥

तस्मादनेनाऽतुलशक्तिशालिना विज्ञानिना तद्धृदयाऽग्रवर्तिना।
निरीक्षणेनैव सुखाब्धिगामिना विमोहितास्ते गुणतो विनोदिना ॥६१॥

फिर यह बालक तो अतुल शक्तिसे सुशोभित था ही। विज्ञानवान् तथा सत्त्वादि गुणोसे विनोद करनेवाला था। अत उसने हृदयतकका स्पर्श करनेवाली, सुख-सिन्धुगामिनी अपनी चञ्चल चितवनसे उन सब लोगोका मन मोह लिया ॥ ६१ ॥

स्वहस्तपद्मस्थमुपायनादिकं सद्वस्तु सर्वं परितो गलत्करम्।
विकीर्य भूमावजिरे ततस्त्विमे तद्वस्तुवद्रेजुरहो गतेन्द्रियाः ॥६२॥

समागत सज्जन अपने करकमलोमे स्थित उपायन आदिकी उत्तम वस्तुओको नन्द-भवनके आँगनकी भूमिपर सब ओर विखेर कर रिक्तहस्त हो गये और उन वस्तुओके समान ही मानो गतेन्द्रिय होकर शोभा पाने लगे ॥ ६२ ॥

अदर्शि कैश्चिच्छिशुनेत्रपद्मयोर्नीलं महो तैर्यदुपासितं रहः ।
कैश्चित्तु दौर्गं गुणरूपतो ज्ज्वलत्सौरं परैर्गाणपतं च शाम्भवम् ॥६३॥

अहो ! कुछ लोगोने नन्दशिशुके नयनकमलमे वह नील तेज देखा, जिसकी उन्होने एकान्तमे उपासना की थी। किन्हीने उसमे दुर्गाजीका तेज देखा। कितने ही लोगोने गुण और रूपसे जाज्वल्यमान सूर्यका प्रभापुञ्ज देखा और कितने ही लोगोको उसमे गणपति तथा भगवान् शिवके तेजका दर्शन हुआ ॥ ६३ ॥

तेजस्विनस्तं ददृशुः सुतेजसं महाबला उग्रबलं महौजसम् ।
महागुणं तं गुणिनः सुरूपिणं सुरूपिणो निर्गुणिन च निर्गुणाः ॥६४॥

तेजस्वी जनोकी दृष्टिमे वह अत्यन्त तेजस्वी जान पडा। महाबली पुरुषोने उसे उग्रबलसे सम्पन्न एव महान् ओजसे युक्त देखा। गुणियोको वह महान् गुणशाली, रूपवानोको अधिक सुरूपवान् तथा निर्गुण-उपासकोको निर्गुण दिखायी दिया ॥ ६४ ॥

नन्दादिभिः पूज्यजनैर्वयोऽधिकैर्गोपैरमुं स्नेहविमुग्धकारिणम् ।
निभाल्य सम्यग् हृदयेऽवधारितं प्राप्तं शिवाऽनुग्रहतोऽत्र सौभगम् ॥६५॥

अधिक अवस्थावाले नन्द आदि सम्माननीय गोपोने स्नेहसे मुग्ध कर देनेवाले उस बालकको अच्छी तरह देखकर अपने हृदयमे यह निश्चित किया कि यह हमे भगवान् शिवके अनुग्रहसे मूर्तिमान् सौभाग्य प्राप्त हुआ है ॥ ६५ ॥

ता मातरस्तं स्वसुताऽधिकप्रियं न्यमंसत स्वात्मसुखप्रदं सुतम् ।
गोप्यस्त्वपश्यन् भगिनीनिभा अमुं स्वभ्रातृवत्तेन विमोहिता भृशम् ॥६६॥

मातृभावना रखनेवाली गोपाङ्गनाओने उस आत्मसुखदायी शिशुको अपने पुत्रोसे भी अधिक प्रिय माना। बहिनकी-सी भावनावाली गोप-किशोरियोने अत्यन्त मोहित हो उसे अपने सगे भाईके रूपमे देखा ॥ ६६ ॥

सेवाप्रकारं सकलं समुज्झता ह्यतीन्द्रिये स्वात्मसुखे वितिष्ठता ।
महाजनौघेन सुखं समाधिजं भुक्तं हि तस्मिन् हृदयान्तरे गते ॥६७॥

सम्पूर्ण सेवा प्रकारको त्याग कर इन्द्रियातीत आत्मसुखमे प्रतिष्ठित हुए इस महान् जन-समुदायने उस बालकको अपने हृदय-मन्दिरमे पाकर समाधि-जनित सुखका अनुभव किया ॥ ६७ ॥

अस्यां स्थितौ शान्तिरभूद्यदाऽमुना स्वयोगशक्त्याऽत्र विमोहिता जनाः ।
वत्सा वृषा गाव इतः सबन्धना आकर्षितास्तत्र कृता विबन्धनाः ॥६८॥

इस अवस्थामे वहाँ पूरी शान्ति छा गयी। उस बालकने अपनी योगशक्तिसे जब सब लोगोको मोहत कर दिया तब वहाँके बँधे हुए बछडे, गाय और बैल भी उससे आकर्षित हो बन्धन-रहित हो गये ॥ ६८ ॥

**दृष्ट्वा स्वयूथं परितो विबन्धनं निरूप्य शून्यं व्रजमण्डलं च तत्।**
**वत्सान् पुरस्कृत्य वृषानुगामिनी गोसंहतिर्नन्दगृहं तदाऽऽययौ ॥६९॥**

अपने यूथको सब ओरसे बन्धन-रहित और व्रजमण्डलको सूना हुआ देख बछडोको आगे और बैलोको पीछे करके गायोका समुदाय पङ्क्ति-बद्ध होकर नन्द-भवनके द्वारपर आया ॥ ६९ ॥

**सा रोहिणी हस्तसरोजसंस्थितं ह्यानन्दसच्चिन्मयमव्ययं महः।**
**शिशुस्वरूपं हृदयाभिनन्दनं मुमोह दृष्ट्वैव भृशं स्रवत्पयाः ॥७०॥**

गौओकी वह पङ्क्ति रोहिणी देवीके कर-कमलमे विराजमान उस आनन्द सच्चिन्मय अविनाशी शिशुस्वरूप तेजको, जो हृदयमे आनन्दकी राशि उडेल रहा था, देखते ही मोहित हो गयी। उसके स्तनोसे दूध झरने लगा ॥ ७० ॥

**खगा इतो येऽम्बरमध्यमागता दृष्ट्वा स्थितिं तां गुणतो विमोहिताः।**
**आत्मानमापात्य सुगाङ्गनादिभिः समं जगुस्तद्गुणगौरवाण्यहो! ॥७१॥**

इधर जो खग ( आकाशचारी पक्षी अथवा सिद्ध गन्धर्व आदि ) आकाश मध्यमे आये, वे उस स्थितिको देखकर बालकके गुणोसे मोहित हो अपनेको नीचे गिरा सुन्दर गान करनेवाली अपनी अङ्गनाओ ( मैना अथवा अप्सरा आदि ) के साथ उसके गुण गौरवको गाने लगे। यह एक अद्भुत बात हुई ॥ ७१ ॥

**अव्यक्तवाक्या अपि ते कुतूहलाद् यद्यप्यगायन् मधुरं तथापि तत्।**
**ज्ञातं स्फुटं गीतमयत्नतोऽनया करस्थबालप्रतिबुद्धया धिया ॥७२॥**

यद्यपि उनकी वाणी अव्यक्त थी, तथापि वे कौतूहलवश जो मधुर गीत गा रहे थे, उसको रोहिणी देवी अपने करस्थ-बालकके प्रभावसे प्रतिबुद्ध हुई बुद्धिके द्वारा सुस्पष्ट समझ लेती थी ॥ ७२ ॥

**तदेव गीतं प्रतिसृत्य सत्वरं तयाऽपि गीतं बहुधा शुभाकृति।**
**मन्त्रैर्विमुग्धेव सुतं विगृह्य या रराज गायन्त्यद एव तद्गतिः ॥७३॥**

नन्दशिशु ही जिनका आश्रय था उन सुन्दर आकृतिवाली रोहिणी देवीने भी मन्त्रमुग्ध-सी होकर खगो द्वारा गाये गये उसी गीतका तत्काल अनुसरण करके उसे अनेक प्रकारसे गाया। वे उस शिशुको गोदमे लिए वही गीत गाती हुई बड़ी शोभा पा रही थी ॥ ७३ ॥

जयति गोकुलं जन्मतोऽत्र ते यदभवद्विभो ! श्रीनिकेतनम् ।
प्रमुदिताः स्वतो विश्वदेहिनः कुरु कृपां पदे प्रापयस्व नः ॥७४॥

'प्रभो ! आपके जन्मसे इस गोकुलकी जय हो रही है, इसका उत्कर्ष सर्वोपरि हो गया है। क्योंकि यह लक्ष्मीका लीला-निकेतन बन गया। समस्त देहधारी जीव स्वत आनन्दमग्न हो गये हैं। कृपा कीजिए और हम सबको अपने चरणोकी शरणमे ले लीजिये' ॥ ७४ ॥

अनाहतेनाऽऽत्मविभाव्यरूपिणा नादेन पूर्वं जगतां मनो हृतम् ।
पश्चाच्छ्रितेनाऽऽहतरूपमुच्चकैर्ब्रह्माण्डमालोडितमेकधाऽमुना ॥७५॥

अपने-आपमे ही जिसका रूप अभिव्यक्त हुआ था, उस अनाहत नादने पहले जगत्के लोगोका मन हर लिया। फिर उच्च स्वरसे आहतनादका रूप लेनेवाले उक्त गीत-रवने एक ही बार सम्पूर्ण ब्रह्माण्डको मथ डाला ॥ ७५ ॥

तदत्र चाऽऽब्रह्मपिपीलिकादिषु विज्ञानिनो व्याप्य जगत् स्थितास्तदा ।
श्रुत्वैव गीतं ह्यसमं समागता दृष्ट्वा स्थितिं तां मुमुहुर्गतव्यथाः ॥७६॥

यहाँ ब्रह्मासे लेकर चीटीतक जगत्मे स्थित जितने भी विशिष्ट ज्ञानवान् चेतन प्राणी थे, वे उस समय इस अनुपम गीतको सुनते ही वहाँ आ गये और व्यथा-पीडासे रहित हो मोहित हो गये ॥ ७६ ॥

तदेव गायन्त इहोपसंगताः संस्तभ्य धृत्या हृदयं सभक्ति ते ।
नन्दाऽजिरे व्यस्तमुपायनादि तत् संगृह्य तस्यैव पदे समार्पयन् ॥७७॥

फिर धैर्यसे किसी प्रकार अपने हृदयको सँभालकर यहाँ एकत्र हुए उन सब प्राणियोने उसी गीतको गाना आरम्भ किया। नन्द-प्राङ्गणमे बिखरी हुई उपहार-सामग्रीको उठा-उठाकर वे उस नन्द-शिशुके ही चरणोमे समर्पित करने लगे ॥ ७७ ॥

अमुं प्रगृह्याऽवसरं मनोमयं देवी रमा तच्छिशुपादमास्थिता ।
तद्धस्तवस्तून्यभिलाषमात्रतश्चकार वृद्धानि निरन्तरं तदा ॥७८॥

इस मनोरम अवसरको पाकर उस शिशुके चरणोकी सेवामे उपस्थित रहनेवाली देवी रमाने अपने सकल्पमात्रसे उन लोगोके हाथोमे स्थित उन उपहार-वस्तुओको निरन्तर वृद्धिशील ( अक्षय ) बना दिया ॥ ७८ ॥

सद्वस्तुभिस्तैर्ज्ज्वलनोज्ज्वलैः शुभैः स्वर्णैर्महार्हैर्मणिभिः समर्पितैः ।
नन्दालयस्याऽजिरमेव तन्नहि व्यापूरि सर्वं व्रजमण्डलं च हि ॥७९॥

प्रज्वलित अग्निके समान उज्ज्वल उन सुन्दर समर्पित उपहार वस्तुओ, बहुमूल्य सुवर्णो तथा मणि-रत्नोसे न केवल वह नन्द-भवनका आँगन, अपि तु सारा व्रजमण्डल ही उस समय भर गया ॥ ७९ ॥

**समाप्य कृत्यं बहुधा सुविस्मिता वदन्त इत्थं जय ! जीव ! शाश्वतम् ।**
**अन्तर्हितास्तेऽम्बरचारिणो यदा तदैव बुद्धाः क्षितिचारिणोऽप्यमी ॥८०॥**

वे सब आकाशचारी अत्यन्त विस्मित हो 'जय ! शाश्वत जीव' इत्यादि रूपसे शुभाशीर्वाद देते हुए अपने नाना प्रकारके कृत्य समाप्त करके जब अन्तर्धान हो गये, तभी ये भूतलचारी मानवादि प्राणी भी जागे ॥ ८० ॥

**स्वान्तः प्रविष्टेन गुहाग्रवर्तिना रवेण तद्गीतमयेन चारुणा ।**
**संस्मारिता वासनया च नोदितास्तदेव तेऽप्यत्र जगुर्मनोहरम् ॥८१॥**

अपने अन्तर्हृदयमे प्रविष्ट, दहराकाशवर्ती उस मनोहर गीतकी ध्वनिसे जिन्हे अपने गेयका स्मरण हो आया था तथा जो अपनी अन्तर्वासनासे भी प्रेरित थे, वे समस्त स्त्री-पुरुष उसी हृदयहारी गीतका गान करने लगे ॥ ८१ ॥

**तौर्यत्रिके गुञ्जति तन्मनोहरे गाने समुज्जृम्भति भव्यरूपतः ।**
**पुनश्च सैव स्थितिरापतद् भृशं जडोऽजडोऽभूदजडो जडस्ततः ॥८२॥**

सत्पुरुषोके मनको मोह लेनेवाले नृत्य, गीत और वाद्यका शब्द गूँज उठा। उस गीतकी मोहक ध्वनि भव्य-रूपसे सब ओर फैलने लगी। फिर तो बडे वेगसे ऐसी स्थिति आ गयी कि जड चेतन हो गये और चेतन जड ॥ ८२ ॥

**चिरेण पूर्वस्थितिमागते ततो महाजनौघे परितो विसर्पिणि ।**
**निष्क्रम्य कोष्ठाच्छनकैर्व्रजेश्वरश्चकार सर्वान् समुदः प्रणम्य तान् ॥८३॥**

तदनन्तर बहुत समयतक वह जनसमूह पूर्वोक्त स्थितिमे आकर सब ओर विभ्रान्त सा डोलता रहा। इसी समय व्रजेश्वर नन्दजी धीरे-धीरे अपने प्रकोष्ठसे बाहर निकले और उन सबको प्रणाम करके उन्होने सब लोगोको आनन्दित किया ॥ ८३ ॥

**सुपूजितास्तेन महात्मना तदा प्रदाय सद्वस्तु तदेव विस्तृतम् ।**
**यथाक्रमं भूषणवस्त्रभूषिताः सर्वेऽत्र ते रेजुरहो ! ततः परम् ॥८४॥**

उन महात्माने वहाँ फैली हुई उसी उत्तम उपहार-सामग्रीको उन्हे देकर उन सबका आदर-सत्कार किया, फिर क्रमश उनके दिये हुए भूषण और वस्त्रोसे विभूषित हो वे सभी वहाँ अतिशय शोभा पाने लगे ॥ ८४ ॥

**परस्परं फुल्लसरोजसुन्दरं निरीक्ष्य वक्त्रं परमोज्ज्वलं मुदा ।**
**कर्तव्यमूढाः परितः श्रिता इमे तमेव पूज्यं विनयादपूजयन् ॥८५॥**

एक दूसरेके प्रफुल्ल कमलके समान परम उज्ज्वल मुखको देखकर वे सबके सब आनन्दमग्न हो किंकर्तव्य विमूढ-से हो गये । फिर चारो ओर उज्ज्वल बैठे हुए इन सब लोगोने बडी विनयके साथ पूजनीय-नन्दरायजीका ही पूजन ( आदर-सत्कार ) आरम्भ कर दिया ॥ ८५ ॥

**उत्थाप्य भाण्डं दधिदुग्धपूरितं स्थितं प्रतिद्वारमपां महाघटम् ।**
**ते स्नापयन्ति स्म तदा परस्परं प्रक्षिप्य सर्वेऽत्र मुदा विनोदिनः ॥८६॥**

वहाँ प्रत्येक द्वारपर दही-दूधसे भरा मटका रक्खा था और जलके बडे-बडे कलश स्थापित किये गए थे । वे विनोद-परायण गोप उसी पात्र और कलशको उठा-उठाकर उसके द्वारा एक-दूसरेको नहलाने लगे । वे परस्पर दही-दूध-माखन फेककर बडे आनन्दित होते थे ॥ ८६ ॥

**ततो हरिद्रादिभिरुत्तमोत्तमैर्द्रव्यैरनेकैरनुलेप्य विग्रहम् ।**
**परस्परं भूषणभूषिता मुदा हैयङ्गवीनं च विचिक्षिपुर्मुखे ॥८७॥**

तदनन्तर हल्दी आदि अनेक उत्तमोत्तम द्रव्योका अपने शरीरपर अनुलेपन धारण करके वस्त्राभूषणोसे विभूषित हो वे गोप एक दूसरेके मुखपर ताजा माखन फेकने लगे ॥ ८७ ॥

**तदेव गानं रुचिरं मनोहरं गायन्त उच्चैर्बहुधा कृतत्वरम् ।**
**मुग्धा अनेकैर्विषयैस्तदीक्षणैरानन्दमग्ना व्यचरंस्तदाऽत्र ते ॥८८॥**

बडी उतावलीके साथ उसी रुचिर मनोहर गीतको भाँति-भाँतिसे उच्च स्वरमे गाते हुए वे गोप अनेक विषयो और उनके अवलोकनसे मुग्ध एव आनन्दमग्न हो उस समय वहाँ विचर रहे थे ॥ ८८ ॥

**समाप्य कृत्यं विधिवत्समागतास्तथा गतास्तेऽत्र यथा पुराऽऽगताः ।**
**इत्थं हरेर्जन्ममहोत्सवोऽभवल्लोकातिगो जीवसुखावहः क्षितौ ॥८९॥**

विधिपूर्वक वह मङ्गलकृत्य समाप्त करके वहाँ आये हुए सब लोग जैसे आये थे, उसी प्रकार लौट गये । इस प्रकार वह हरिजन्म-महोत्सव इस पृथ्वीपर अलौकिक रीतिसे सम्पन्न हुआ, जो समस्त जीवोके लिए सुखदायक था ॥ ८९ ॥

**इतो महारत्नसुवर्णभूषिता सा रोहिणी गोपवृषैः सुपूजिता ।**
**अलौकिकं नीलमणिं समुज्ज्वलं विगृह्य पश्चात् ससुखं गताऽन्तरम् ॥९०॥**

इधर महारत्न जटित सुवर्णमय भूषणोसे विभूषित वे रोहिणी-देवी श्रेष्ठ गोपो द्वारा भली-भाँति पूजित हुईं। पश्चात् वे उस तेजस्वी तथा अलौकिक नीलमणि-शिशुको गोदमे लिए सुखपूर्वक भवनके भीतर चली गयी ॥ ९० ॥

**प्रदाय मात्रे तदनन्तरं सुतं रराज सा जन्ममहोत्सवे भृशम् ।**
**ततो यशोदापि विगृह्य तं शिशुं व्यपाययत्स्तन्यमथाऽमृतं यथा ॥९१॥**

तदनन्तर उस शिशुको माता यशोदाकी गोदमे देकर वे उस जन्ममहोत्सवमे अत्यन्त सुशोभित हुईं। उधर यशोदाजी शिशुको लेकर उसे अपना अमृतमय स्तन्य ( दूध ) पान कराने लगी ॥ ९१ ॥

**तदापि तस्या मुखगह्वरादहो! विनिःसृतं गानमदः परात्मगम् ।**
**महात्मभिर्गीतमनेकशस्तदा चैतर्हि गायेम मुदा वयं तथा ॥९२॥**

उस समय भी उनके मुखरन्ध्रसे वही परमात्माकी ओर ले जानेवाला गान निकल रहा था। महात्मा-पुरुषोने भी उस गीतको इस अवसरपर अनेक बार गाया था। अब इस समय हमलोग भी उन्हीके ठीक प्रसन्नतापूर्वक वही गीत गाये ॥ ९२ ॥

**जयति गोकुलं जन्मतोऽत्र ते यदभवद्विभो! श्रीनिकेतनम् ।**
**प्रमुदिताः स्वतो विश्वदेहिनः कुरु कृपां पदे प्रापयस्व नः ॥९३॥**

( इसका अर्थ श्लोक नम्बर ७४ मे आ चुका है। वही देखे )

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**सर्गो द्वादशो चैषोऽगान्महाकाव्ये स्तवात्मके ॥९४॥**

कृष्ण प्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे यह बारहवाँ सर्ग पूरा हुआ ॥ ९४ ॥



# त्रयोदशः सर्गः

[ व्रजस्थितिनिर्देशनम् । व्रजराजस्य मथुरागमनम् । तत्रैव वसुदेवनन्दयो सम्मेलनसम्भाषणे च । ]

( शालिनीछन्दः )

इत्थं लक्ष्मी विष्णुपादाब्जसङ्गात्तत्राऽतिष्ठच्चञ्चलत्वं विहाय ।
यः कोऽप्यस्मिन् स्वप्रियार्थस्य हेतौ तुष्टो मग्नो जायते वर्धते च ॥१॥

इस प्रकार भगवान् विष्णु ( श्रीकृष्ण ) के चरणारविन्दोका सग प्राप्त होनेसे लक्ष्मी देवी अपनी चञ्चलता छोड़कर उस व्रजमण्डलमे विराजमान हो गयी। इस ससारमे कोई भी क्यो न हो, अपनी प्रिय-वस्तुकी प्राप्ति होनेपर वह सतुष्ट हो उसीमे मग्न हो जाता है और हर्षसे बढता रहता है ॥ १ ॥

तस्या दृष्ट्याऽऽपूरिते गोकुलेऽस्मिन् ह्यासीत्सर्वं पूर्णमेवाऽभिरामम् ।
ऐश्वर्यं तद्भौतिकं वस्तुजातं सम्पन्नं सच्छोभते स्माऽत्र नित्यम् ॥२॥

लक्ष्मीजीकी दृष्टिसे परिपूरित इस गोकुलमे सारी वस्तुएँ पूर्णताको प्राप्त हो अत्यन्त अभिराम प्रतीत होने लगी। अणिमादि अष्टविध ऐश्वर्य तथा भौतिक वस्तु-समुदाय सब वहाँ पूर्णत सम्पन्न होकर नित्य सुशोभित होने लगे ॥ २ ॥

आसन् सर्वे सुप्रसन्नास्तदानीं तत्रत्यास्ते प्राणिनो भव्यरूपाः ।
गेहे गेहे दिव्यसद्भाववन्तः श्रीशाभ्यां सम्प्रेक्षितास्ते यदाऽत्र ॥३॥

घर-घरमे दिव्य सद्भावसे युक्त व्रजवासियोपर जब लक्ष्मी और नारायणकी शुभ दृष्टि पडी, तब वे सब लोग तथा वहाँके सम्पूर्ण प्राणी उस समय अत्यन्त प्रसन्न और भव्य स्वरूप हो गये ॥ ३ ॥

गावो वत्सास्ते वृषाश्चैव हृष्टाः प्रेष्ठा जाताः प्राणिनां हृद्यरूपाः ।
तांस्तान् दिव्यैः स्वैर्गुणैस्तोषयन्तस्तद्वद्रेजुस्तत्पशुत्वं विहाय ॥४॥

गाये, बछडे और वृषभ सबके सब मनोरम रूपवाले होकर सभी प्राणियोके प्रियतम बन गये। वे अपना पशुत्व छोडकर अपने-अपने दिव्य सद्गुणो द्वारा व्रजवासियोंको सतोष देते हुए बडी शोभा पाने लगे ॥ ४ ॥

इत्थं पूर्णं गोकुलं सर्वमेव तैस्तैर्दिव्यैः सद्गुणैर्वस्तुभिश्च ।
द्रव्यै रत्नैरुत्तमैः शष्पधान्यैः श्रीशाभ्यां तैर्वीक्षितैः प्राणिभिश्च ॥५॥

इस प्रकार मारा ही गोकुल उन-उन दिव्य गुणो और वस्तुओसे परिपूर्ण हो गया, लक्ष्मी तथा नारायण द्वारा देखे गये उत्तमोत्तम द्रव्यो, रत्नो, शष्य-धान्यो और प्राणियोसे भी सम्पन्न हो गया ॥ ५ ॥

**श्रीशोऽखेलत् तत्र लक्ष्म्या सुलक्ष्म्या हृष्टा रामा सापि वामा च रेमे ।**
**तत्राऽखेलन् प्राणिनस्तेऽपि ताभ्यां हृष्टास्तुष्टाः स्मारिता ब्रह्म याभ्याम् ।६॥**

लक्ष्मीपति श्रीकृष्ण वहाँ सुन्दर शोभामयी लक्ष्मीके साथ क्रीडा करने लगे। रमण-शीला सुन्दरी रमा भी वहाँ उनके साथ लीलारत रहने लगी। उन दोनोकी दृष्टि पडनेसे वहाँके समस्त प्राणी भी हर्षातिरेकसे युक्त हो इस प्रकार खेलने लगे, मानो उन दोनो ( लक्ष्मी नारायण ) ने उनको ब्रह्मानन्दका अनुभव करा दिया हो ॥ ६ ॥

**कालो यातोऽसौ सुखेनैव शीघ्रं मग्नाः सर्वे दिव्यतायां यदाऽत्र ।**
**तेनैवाऽत्र प्रेरितो गोकुलेशो नन्दोऽध्यायद्राजकार्यं निगूढम् ॥७॥**

जब वहाँके सब लोग परमानन्दमय दिव्य-भावमे निमग्न हो गये, तब वह सारा समय सुखसे ही शीघ्रतापूर्वक बीत गया। तत्पश्चात् कालसे प्रेरित हो गोकुलेश्वर नन्दने निगूढ राजकार्यपर ध्यान दिया ॥ ७ ॥

**तुष्टः कंसोऽस्माकमिच्छानुसारी रुष्टः कर्ताऽनर्थमेवाऽभिचारी ।**
**सामन्ताः स्मो मानयामोऽत्र तं ये दद्मो देयं भागधेयं यदस्मै ॥८॥**

उन्होने सोचा, 'राजा कस सतुष्ट होनेपर हमारी इच्छा के अनुसार चलता है, परन्तु यदि रूष्ट हो जाय तो अभिचार तत्पर हो हमारा अनर्थकर सकता है, हम कसके सामन्त हैं, अत उसका समान करते है अत जो राजाका देयभाग है वह हम उसे अवश्य देगे" ॥ ८ ॥

**तस्मात् कृत्वा राजकार्यं सुगुप्तं सर्वं न्याय्यं युक्तिमद्धर्मतोऽहम् ।**
**यास्ये दातुं भागधेयं प्रगृह्य गोदुग्धादि प्रीतिमद्वस्तु तस्मै ॥९॥**

इसलिए समस्त न्यायोचित राजकार्यको गुप्त रूपसे युक्ति-युक्त पद्धतिसे सम्पादित करके धर्मत. राजाका भाग उसे अर्पित करनेके लिए दूध-दही आदि प्रीतिकारक वस्तु लेकर मै मथुरा जाऊँगा ॥ ९ ॥

**ध्यायन्नित्यं गोकुलेशः स नन्दः सन्नन्दादींस्तत्र संस्थाप्य कार्ये ।**
**प्रीतोऽगच्छन् माथुरं तं प्रदेशं स्निग्धैर्मित्रैर्गोपवीरैश्च सार्धम् ॥१०॥**

ऐसा विचार करके गोकुलेश्वर नन्द वहाँका कार्यभार सनन्द आदिको सौपकर अपने स्नेही मित्र गोप-वीरोके साथ प्रसन्नतापूर्वक मथुराको गए ॥ १० ॥

**दत्त्वा देयं सोपहारादि तत्र राज्ञे सर्वं भावुकं चाऽन्वबोचत् ।**
**प्रीतः कंसस्तेन पश्चात् प्रबृद्धो नन्दोऽप्यागात् स्वं निवासं सह स्वैः ॥११॥**

वहाँ उपहार आदि देय वस्तुएँ राजाको देकर उन्होने उससे अपने यहाँका सारा माङ्गलिक समाचार कह सुनाया। कसने प्रसन्नता प्रकट की। तत्पश्चात् बूढे नन्दजी स्वजनोके साथ अपने डेरेपर चले गये ॥ ११ ॥

**अस्यां रात्रौ श्रीहरेर्जन्मभूम्यां तस्यां पुर्यामेव नन्दोऽवसत् स्वैः ।**
**भृत्या युक्तास्तैरनोभिर्वृषैश्च भुक्त्वा पीत्वा चाऽवसन् तेऽपि साकम् ॥१२॥**

उस रातमे नन्दजी अपने परिजनोके साथ श्रीहरिकी जन्मभूमि-स्वरूपा उस मथुरा-पुरीमे ही ठहर गये। छकडो तथा बैलो सहित उनके सेवक भी खा-पीकर उनके साथ ही वहाँ रहे ॥ १२ ॥

**श्रुत्वा वैश्यो मातुलेयोऽग्रजोऽसौ नन्दो राजा तत्र चायात इत्थम् ।**
**पुत्रस्नेहक्लिन्नचेताः स शौरिर्वासस्थानं तस्य गुप्तं जगाम ॥१३॥**

'मेरे ममेरे बडे भाई वैश्य जातीय नन्द मथुरामे आये हैं' यह समाचार सुनकर वसुदेवजी पुत्रस्नेहसे आर्द्रचित्त हो गुप्तरूपसे तत्काल ही उनके ठहरनेके स्थान पर गये ॥ १३ ॥

**दृष्ट्वाऽकस्मादागतं भ्रातरं तं स्नेहान्नन्दश्चोत्थितः स्वागतार्थम् ।**
**किञ्चिद् गत्वा सस्वजेऽथ प्रगाढं प्राणाविष्टः शावदेहो यथाभूत् ॥१४॥**

अपने ( फुफेरे ) भाई वसुदेवजीको अकस्मात् आया देख नन्दरायजी स्नेहाधिक्यके कारण उनके स्वागतके लिए उठ खडे हुए। कुछ आगे जाकर उन्होने अपने भाईका प्रगाढ आलिङ्गन किया ( उन्हे हृदयसे लगा लिया )। वे इतने हर्षोत्फुल्ल थे, जैसे मृतकके शरीरमे प्राण आ गया हो ॥ १४ ॥

**तं सद्भावैः पूजयित्वा प्रसन्नो नन्दः स्पृष्ट्वाऽनामयं प्राक् प्रसन्नम् ।**
**शौरिं प्रेम्णा स्थापयामास पश्चात्तेषां प्रीत्याऽनामयं चाप्यपृच्छत् ॥१५॥**

प्रसन्नतासे भरे नन्दने सद्भावसे उनका पूजन ( आदर-सत्कार ) करके पहले हर्षित हुए वसुदेवसे उनकी कुशलता पूछी, फिर बडे प्रेमसे उन शूरनन्दनको अपने पास बिठाया और उनके मथुरावासी परिवारका कुशल-मङ्गल पूछा ॥ १५ ॥

**पुत्रस्नेहात् क्लिन्नचेताः स शौरिस्तं प्रत्यूचे स्वागतेनाऽभिनन्द्य ।**
**श्रीमन् ! भ्रातः ! श्रीमतां पुण्यदेहः कश्चित्स्वस्थः स्वस्तिदो विद्यते किम् ॥१६॥**

पुत्रके प्रति प्रेमके कारण जिनका हृदय द्रवीभूत हो रहा था, उन वसुदेवने स्वागत-पूर्वक नन्दका अभिनन्दन करके उनसे कहा—'श्रीमन् ! बन्धुवर ! आपका पुण्यमय शरीर स्वस्थ और कल्याणप्रद तो है न ? ॥ १६ ॥

कश्चिच्छान्तं नीरुजं तत्पशव्यं वृन्दारण्यं गोकुलं चैव भव्यम् ? ।
गोपाः प्रेम्णा यत्र गाश्चारयन्ति शष्पाम्बुभ्यां सौम्यमत्युत्तमं तत् ? ॥१७॥

'पशुओके लिए हितकर वृन्दावन तथा भव्य-गोकुल शान्त और आरोग्यमय है न ? जहाँ गोपगण प्रेमसे गौएँ चराते है। वह स्थान घास और पानीकी सुविधासे सम्पन्न तथा अत्यन्त उत्तम है॥ १७॥

सौभाग्यं तच्चोत्तमं ह्यस्मदीयं निःसन्तानो निर्गताशः प्रजासु ।
बार्धक्ये यत्प्राप पुत्रं भवान् तज्जातं भव्यं ह्युद्धरिस्यत्यसौ नः ॥१८॥

'यह हमारे लिए परम उत्तम सौभाग्यकी बात है कि आपको इस वृद्धावस्थामे पुत्रकी प्राप्ति हुई। अन्यथा आप सतान-हीन तो थे ही सन्तान प्राप्तिकी ओरसे निराश भी हो चुके थे। आपके यहाँ पुत्रका जन्म परम कल्याण-प्रद है। अब वही बालक हम सबका उद्धार करेगा॥ १८॥

संसारेऽस्मिन् वर्तमाना वयं हा! भ्रष्टा मृष्टाः कालवेगेन तात! ।
काले काले मेलनं प्राप्नुयामस्तत्सौभाग्यं प्राक्तनं नोऽत्र मन्ये ॥१९॥

'तात! इस ससारमे वर्तमान हमलोग कालवेगसे भ्रष्ट हुए—विछुड गये—यह कितने खेदकी बात है ? फिर उसी कालवेगसे प्रेरित हो आज शुद्ध-भावसे मिल गये यह सतोषकी बात है। हम इसी प्रकार समय-समयपर मिलते रहे तो मै समझता हूँ कि यह हमारे पूर्व जन्मके पुण्यका फलस्वरूप महान् सौभाग्य होगा॥ १९॥

नानारूपाः प्राणिनः कर्मलोके बम्भ्रम्यन्ते कर्मभिः स्वैरनेकैः ।
का वा तेषां शाश्वती शान्तिरत्र त्यक्त्वा शैवीं सत्स्थितिं ध्यानगम्याम् ॥२०॥

'इस कर्म-लोकमे नाना रूपवाले प्राणी अपने-अपने कर्मोद्वारा बारबार घुमाये जाते हैं। ध्यानसे प्राप्त होनेवाली जो भगवान् शङ्करकी सच्चिदानन्दमयी स्थिति है, उसको छोड-कर उनके लिये सनातन शान्तिका उपाय ही क्या है ?॥ २०॥

नीचैरुच्चैः कालवेगान्नदीषु वस्तून्याहो प्लाव्यमानान्युतौघात् ।
संगच्छन्तेऽन्योन्यमासाद्य तद्वत् संलीयन्ते प्राणिनोऽपि प्रभोऽत्र! ॥२१॥

'प्रभो! जैसे नदियोमे जलप्रवाह द्वारा ऊपर-नीचे बहायी जानेवाली तृण आदि वस्तुएँ कभी-कभी एक दूसरीके पास पहुँचकर मिल जाती हैं, उसी प्रकार ससारके प्राणी भी काल-वेगसे कभी परस्पर मिलते और विछुडते रहते हैं॥ २१॥

प्राप्ताऽऽवाभ्यां तज्जनिर्या द्वितीया वक्तुं शक्या श्रीमता पुत्रलब्ध्या ।
दीर्घे काले श्रीमतां दर्शनेन स्वालापैर्वा दुर्लभैस्तन्मयाऽपि ॥२२॥

'हम दोनो ने ही दूसरा जन्म पा लिया। आपने तो पुत्रकी प्राप्ति द्वारा द्वितीय जन्म पाया—ऐसा कहा जा सकता है। और मैंने भी दीर्घकालके पश्चात् आपका दर्शन और आपके साथ सुन्दर वार्तालापका सुदुर्लभ अवसर पाकर दूसरा नया जन्म पा लिया ॥ २२ ॥

**कश्चिच्छ्रीमन्! रौहिणेयः सुतो मे मात्रा सार्धं गोकुले स्वस्थगात्रः।**
**मन्वानो वां जन्महेतू युवाभ्यां पुष्टो हृष्टो जायते वर्धते च? ॥२३॥**

'श्रीमन्! क्या मेरा पुत्र रोहिणी-कुमार अपनी माताके साथ गोकुलमे स्वस्थ है? वह तो आप ही दोनोको अपना जन्मदाता माता-पिता मानता है और आप ही दोनो द्वारा उसका पालन-पोषण होता है। क्या वह वहाँ सानन्द बढ रहा है? ॥ २३ ॥

**किं श्रैमत्कोऽक्लिष्टकर्मा स्वरूपैर्दिव्यैर्भावैः कृष्टलोकप्रबोधः।**
**शान्तेर्दाता जन्मतो भव्यगात्रः पुत्रः शान्तो वर्धते दीर्घजीवी ॥२४॥**

'जिसके कर्म सिद्ध है, जो अपने दिव्य-स्वरूपो ओर भावोमे समस्त लोकोका ज्ञान अपनी ओर खीच लेता है, जिसका शरीर जन्मसे ही भव्य है और जो शान्तिदाता है, वह आपका शान्त एव दीर्घजीवी पुत्र वहाँ सकुशल वृद्धिको प्राप्त हो रहा है? ॥ २४ ॥

**धर्मः कामश्चाऽर्थ एते नराणां स्वेष्टा हृद्याः संभवन्तीह सौम्य!।**
**नित्य चैषां पालनं संविधाय यैर्धार्यन्ते भ्रातृपुत्रादयस्ते ॥२५॥**

'सौम्य! धर्म, अर्थ और काम—ये त्रिवर्ग इस लोकमे मनुष्योको अभीष्ट और प्रिय होते हैं। प्रतिदिन इन तीनोका सम्यक् पालन एव सवर्धन करके लोग इनके द्वारा अपने भाई-पुत्र आदिका धारण-पोषण करते हैं ॥ २५ ॥

**सन्नन्दाद्या भ्रातरस्तेऽष्ट सौम्या दारास्तेषां सत्सुता बालिकाश्च।**
**लाल्यन्ते यच्छ्रीमता नित्यमेव दासैर्दासीभिश्च साकं समानम् ॥२६॥**

'भैया! सन्नन्द आदि जो आपके आठ भाई है, वे, उनकी स्त्रियाँ, उनके पुत्र और पुत्रियाँ सभी सौम्य-शान्त है न? आप प्रतिदिन अपने दास-दासियोके द्वारा समान-भावसे उन सबका लालन-पालन करते है ॥ २६ ॥

**क्लिष्टास्ते चेच्छास्त्रवृद्धादिभिर्यस्त्रैवर्गोऽर्थोऽनुष्ठितस्तद्विधैः सः।**
**व्यर्थो जातो घुष्यते स्वात्मवृत्तौ पुष्टोऽमोघोऽथापि दुष्टोऽविशेषम् ॥२७॥**

'वैसे लोगो द्वारा भली-भाँति सपादित वह त्रिवर्ग-सबन्धी पुरुषार्थ अपने लिए व्यक्तिगत रूपसे पुष्ट और अमोघ होनेपर भी शास्त्रो तथा बडे वूढोद्वारा उसे व्यर्थ और दूषित ही घोषित किया जाता है' ॥ २७ ॥

श्रुत्वा वाक्यं स्नेहपूर्णं तदीयं हृष्टो नन्दस्तं बभाषेऽथ भूयः।
सत्यं चैतद्! भ्रात एवं ब्रवीषि प्रेम्णैव त्वं लोकतत्वे प्रवीणः ॥२८॥

वसुदेवजीका वह स्नेहपूर्ण वचन सुनकर हर्षसे भरे हुए नन्दजीने उनसे फिर कहा—'भाई! तुम प्रेमभावसे यह सब सच ही कह रहे हो, क्योकि तुम लोकतत्वमे प्रवीण हो ॥ २८ ॥

देवक्यां ते जातमात्राः सुपुत्राः कंसेनेत्थं घातिताः सौनिकेन।
छागा यद्वत् कन्यकैकाऽवशिष्टा स्वर्गं याता सापि निन्द्यः स राजा ॥२९॥

'देखो न, देवकीके गर्भसे जन्म लेते ही तुम्हारे सुन्दर-पुत्रोको कसने इस प्रकार मार डाला, जैसे कसाई बकरोका बध करता है। बेचारी एक कन्या बच गयी थी, वह भी स्वर्गको चली गयी। वह राजा कस अपने इस पाप कृत्योसे सदा ही निन्दनीय है ॥ २९ ॥

नूनं भ्रातः! काल एवाऽत्र मुख्यो विश्वव्यापी कथ्यते यो ह्यदृष्टः।
तेनैवाऽस्मिन् प्रेरितो जीवलोको रक्तः सक्तश्चात्मघातं करोति ॥३०॥

'भ्रात! निश्चय, इस विषयमे वह काल ही मुख्य है, जो विश्व व्यापी तथा अदृष्ट कहा जाता है। इस ससारमे उसीसे प्रेरित होकर जीव-समुदाय अनुरक्त और आसक्त हो आत्मघात करता है ॥ ३० ॥

कालो ह्यात्मा शुद्धरूपश्चिदंशोऽदृष्टं तत्त्वं यं ब्रुवन्तीह तज्ज्ञाः।
इत्थं ज्ञात्वा तद्गतिं प्राप्नुवन्ति ये तन्निष्ठा दृष्टतोऽदृष्टरूपाम् ॥३१॥

'अपना आत्मा ही काल है। वह चैतन्याशसे परिपूर्ण तथा विशुद्धरूप है। जिसको उसे जाननेवाले ज्ञानी पुरुष 'अदृष्ट तत्व' कहते हैं। जो लोग ऐसा जानकर उसमे निष्ठा करते हैं, वे दृष्ट-प्रपञ्चसे ऊपर उठकर आत्माकी अदृष्ट स्वरूपा गतिको प्राप्त कर लेते हैं' ॥ ३१ ॥

वाक्यं चैतत् स्वात्मबोधप्रपूर्णं श्रुत्वा शौरिः शान्तचित्तो बभूव।
पश्चाद्भूयस्तं बभाषे स भीतो धीरो वीरः प्राप्तनन्दप्रबोधः ॥३२॥

नन्दजीका आत्मज्ञानसे परिपूर्ण यह वचन सुनकर वसुदेवजीका चित्त शान्त हो गया। तत्पश्चात् जिन्हे नन्दजीसे प्रकृष्ट बोध प्राप्त हुआ था, वे धीर-वीर वसुदेव कुछ भीत-से होकर फिर उनसे बोले—॥ ३२ ॥

युक्तं चैतल्लब्धबोधोऽहमस्मि वाक्यैरेभिः श्रीमता पोषितो यः।
संस्थाप्याऽङ्के दत्तमिष्ठान्नतृप्तः स्वेष्टं तत्तच्चिन्तये प्राप्तकालम् ॥३३॥

'तात ! आपने जो कुछ कहा, वह ठीक है। इन वचनोसे मुझे आत्मबोध प्राप्त हुआ है। आपने अपनी गोदमे बिठाकर मेरा पोषण किया है। मिठाइयाँ दे-देकर मुझे परितृप्त किया है। अब मै यथावसर आपके कथनानुसार अपने इष्टका चिन्तन करूँगा ॥ ३३ ॥

**आस्तां तावद् गम्यतां गोकुलं तद् यत्राऽऽसाते स्वात्मरूपौ शिशू तौ ।**
**नाना विघ्नास्तत्र रूपैरनेकैर्बाधन्तेऽस्माँल्लब्धलक्ष्याः समन्तात् ॥३४॥**

अच्छा अब इन बातोको छोडिये। और जहाँ आपके आत्मस्वरूप वे दोनो शिशु विद्यमान है, उस गोकुलको जाइये। क्योकि नाना प्रकारके विघ्न वहाँ अनेक रूप धारण करके आते है और हमे अपना लक्ष्य बनाकर सब ओरसे बाधा पहुँचाते हैं ॥ ३४ ॥

**दत्तो राज्ञे वार्षिकोभागधेयो दृष्टाः स्निग्धा भ्रातरो गोपराज ! ।**
**तद्गन्तव्यं श्रीमता शीघ्रमेव नात्र स्थेयं दीर्घकालं सुखाप्त्यै ॥३५॥**

'गोपराज ! आपने राजाको वार्षिक कर चुका दिया। आपके जो इष्ट-मित्र और भाई है, उन सबसे भेट कर ली। अब आपको शीघ्र ही यहाँसे चला जाना चाहिए। सुख पानेकी इच्छा हो, तो यहाँ दीर्घकालतक ठहरना ठीक नही है' ॥ ३५ ॥

**इत्थं सम्यक् शौरिणा बोधितोऽसौ नन्दो भीतो भाविविघ्नैरनिष्टैः ।**
**युक्तं ह्युक्तं स्निह्यता त्वयाऽहं शीघ्रं गच्छामीत एतज्जगौ सः ॥३६॥**

इसप्रकार वसुदेवजीके अच्छी तरह समझानेपर नन्दजीने भावी अनिष्टकारी विघ्नोसे डरकर कहा—तुमने स्नेहपूर्वक जो बात कही है, वह ठीक है। अब मै शीघ्र ही यहाँसे जा रहा हूँ ॥ ३६ ॥

**तौ भ्रातरौ तत उभौ मुदितौ प्रकामं ह्यामन्त्र्य जग्मतुरभीष्टतमं प्रदेशम् ।**
**एको ययौ व्रजमखण्डितधीरथाऽन्यो दिव्यं प्रियाभवनमीश्वरदत्तचित्तः ॥३७॥**

इसके बाद वे दोनो भाई परस्पर मिलकर प्रसन्न हो, एक दूसरेसे बिदा ले, इच्छानुसार अपने अभीष्टतम स्थानको चले गये। एक अर्थात् नन्दजी, जिनकी बुद्धि अखण्डित थी, व्रजको चले गये और दूसरे वसुदेवजी ईश्वरका चिन्तन करते हुए प्रिया देवकीके दिव्य-भवनको चल दिये ॥ ३७ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**त्रयोदशोऽगमत् सर्गो महाकाव्ये स्तवात्मके ॥३८॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे यह तेरहवाँ सर्ग पूरा हुआ ॥ ३८ ॥

# चतुर्दशः सर्गः

[ पूतनाऽऽगमनम् । तद्वधलीलावर्णनम् । बालादीनामरिष्टादिभ्यो दैशिकरक्षाविधिप्रदर्शनम् । ]

( वसन्ततिलकावृत्तम् )

आपाततोऽखिलजगन्नियमादिलोपे दक्षाऽविशुद्धगतिरुग्रमतौ प्ररूढा ।
संहारिणी जगत ईश्वरशक्तिवादेऽदक्षाऽऽसुरी जयति शक्तिरियं कदाचित् ॥१॥

जो आरम्भमे सम्पूर्ण जगत्के नियम आदिका लोप करनेमे दक्ष है, जिसकी गति विशुद्ध नही है, जो उग्र विचारमे बढी-चढी है, जगत्के सहारमे सलग्न रहती है, तथा ईश्वर-शक्तिवादमे कभी दक्षता नही प्राप्त करती है, ऐसी यह आसुरी शक्ति कभी-कभी विजयिनी होती है—सर्वोपरि हो जाती है ॥ १ ॥

आश्रित्य तामविहतां स्वमनोऽनुकूलां दुर्धर्षदुष्टनृपनोदितपुष्टवृत्तिः ।
सा पूतनाऽखिलजगच्छिशुनाशहेतुर्निघ्नन्त्यहो ! शिशुगणान् व्रजमाससाद ॥२॥

उस अप्रतिहत तथा अपने मनके अनुकूल प्रतीत होनेवाली आसुरी शक्तिका आश्रय ले पूतना व्रजमे आई । दुर्जय तथा दुष्ट राजा कससे प्रेरित होकर उसकी हिसा-वृत्तिसे परिपुष्ट हुई थी, वह सारे जगत्के शिशुओके विनाशमे हेतु बनी थी । आश्चर्य है कि शिशुसमूहोका सहार करती हुई वह राक्षसी व्रजमे भी आ पहुँची ॥ २ ॥

ग्रामेष्वनेकनगरेषु च ये जनानां ह्यासन् हृदम्बुजनिभाः शिशवः शुभाङ्गाः ।
तान्नाशयन्त्यसमबुद्धिबलैरुपायैर्बालग्रहैश्च विरराज निशाचरी सा ॥३॥

गावो तथा अनेकानेक नगरोमे लोगोके प्रफुल्ल हृदय-कमलके सदृश जो सुन्दर शिशु थे, उन सबका विषमबुद्धि और बलसे युक्त उपायो तथा बाल ग्रहोद्वारा विनाश करती हुई वह निशाचरी अपने समाजमे शोभा पाती थी ॥ ३ ॥

तर्कैरनेकशिशुनाशवितर्कमूलैर्ध्यायन्त्यसौ व्रजसुसीमनि दीर्घकालम् ।
आत्मानमेव सहसा कुविचारगर्ते ह्यापातयन्त्यसमधीः समुवाह हर्षम् ॥४॥

अनेकानेक शिशुओके विनाश सम्बन्धी ऊहापोह मूलक तर्कोद्वारा व्रजकी सुन्दर सीमामे दीर्घकालतक अपने कर्तव्यके विषयमे सोचती-विचारती हुई उस विषम बुद्धिवाली पूतनाने सहसा अपनेको ही कुविचारके गड्ढेमे गिराकर मन ही मन हर्षसे उत्फुल्ल हो उठी ॥ ४ ॥

लक्ष्म्याभयं सततसुन्दरमब्जनेत्रं लोलत्कपोलयुगकुण्डलमुन्नसं स्वम् ।
सम्पाद्य शक्तिनिवहैः परितः समेता तद्गोकुलस्थितशिशूनपि नाशयामि ॥५॥

उसने सोचा—मै अपने रूपको शोभाका निकेतन, सतत सौन्दर्य-राशिसे पूर्ण, कमल-नयनोसे सुशोभित, कपोलोपर झिलमिलाते हुए युगल कुण्डलोसे मण्डित तथा ऊँची नासिकासे युक्त बनाकर शक्ति-समूहसे समावृत हो, गोकुलवासी शिशुओका भी नाश कर डालूँगी ॥ ५ ॥

**इत्थं विचिन्त्य रमणीमणिवच्छुभाङ्गी स्वेच्छानुरूपविहितोज्ज्वलरम्यरूपा ।**
**सा पूतना कुटिलधीः शिशुनाशशीला नन्दालयं विषकुचा द्रुतमाविवेश ॥६॥**

ऐसा विचारकर उस पूतनाने अपनी इच्छाके अनुरूप उज्ज्वल एव रमणीयरूप धारण कर लिया। उसके सभी अङ्ग सुन्दर शोभा-राशिसे सम्पन्न हो गये। वह रमणी मणि-सी प्रतीत होने लगी। उसकी बुद्धि बडी कुटिल थी। शिशुओका विनाश उसके लिए खेल-सा था। उसने अपने स्तनोपर विषका लेप कर दिया और शीघ्रतापूर्वक नन्दभवनमे प्रवेश किया ॥ ६ ॥

**यस्मिन् समस्तजगतां ग्रसने समर्थः कालोऽपि कीटमपि नाशयितुं न शक्तः ।**
**तस्मिन् व्रजे शिशुगणांस्तदपि प्रकृष्टान् हन्तुं गताऽहहह ! सा भवितेह किन्नु ? ॥७॥**

जिस व्रजमे समस्त लोकोको अपना ग्रास बना लेनेमे समर्थ काल भी ( ईश्वर इच्छाके विना ) एक कीटका भी नाश नही कर सकता। उसी व्रजमे वह शिशु-समूहोको उनमे भी अत्यन्त उत्कृष्टकोटिके बालकोको मारनेके लिये चली गयी। हाय ! हाय ! पता नही उसका क्या होगा ? ॥ ७ ॥

**अन्तः पुरे व्रजपतेः सकले विशाले तल्पे सुवर्णमणिमण्डितकान्तिजाले ।**
**सुप्तं तमर्भकमसौ सहसा ददर्श स्त्रीभिर्वृतं कृतदयं स्वजनेषु शश्वत् ॥८॥**

व्रजराज नन्दके विशाल अन्त पुरमे, जो सकल कलाओसे सुशोभित था, सुवर्ण-रत्नोसे मण्डित कान्तिराशिसे कमनीय शय्यापर सोये हुए उस बालकपर सहसा पूतनाकी दृष्टि पडी। वह शिशु स्त्रियोसे घिरा था और स्वजनोपर निरन्तर दयाकी वर्षा करता था ॥ ८ ॥

**दृष्ट्वैवताममितकान्तिसमृद्धरूपां तत्रत्यशान्तिसुखमग्नविशुद्धवृत्तिः ।**
**नारीजनोऽप्यसमतत्प्रभयावधूतो घूर्णो बभूव सुखपूर्ण इवावधूतः ॥९॥**

पूतनाका रूप अपरिमित कान्तिराशिसे समृद्ध था, उसे देखते ही वहाँके शान्ति-सुखमे निमग्न विशुद्ध वृत्तिवाला नारीवर्ग उसकी समतारहित प्रभासे तिरस्कृत हो आनन्द-पूर्ण अवधूतकी भाँति झूलने लगा ॥ ९ ॥

**तस्या अतुल्यगुणलक्ष्मयुतं वरेण्यं रूपं निरीक्ष्य कबरीस्थितमाल्यशोभम् ।**
**उच्चस्तनं सुकटिलम्बितकाञ्चिभारं मुग्धं बभूव वनितामन एकवारम् ॥१०॥**

उसका वरेण्यरूप अनुपम गुणो और लक्षणोसे युक्त था। वेणीमे लगे हुए पुष्पहार उसकी शोभा बढाते थे। स्तनयुगल उन्नत और पीन थे। उसके सुन्दर कटि-प्रदेशमे कर्धनी लटक रही थी। उसको देखकर एक बार वहाँकी नारियोका मन मुग्ध हो गया ॥ १० ॥

**सौम्यैः स्मितै रुचिरभावमयैर्विलासै रत्नोज्ज्वलद्वलयकुण्डलकान्तिभिश्च ।**
**तत्रस्थवृद्धमहिलाशिशुवर्गचित्तं चौरी यथाऽहरदसावपि वस्तुवित्तम् ॥११॥**

उसकी मुसकानसे सौम्यभाव टपक रहा था, उसके विलास रुचिर भावसे विभूषित थे। कगन और कुण्डलोकी कान्ति रत्नोकी प्रभासे जगमगा रही थी। इन सब विशेषताओसे पूतनाने वहाँकी वृद्धा-महिलाओ तथा शिशुओके चित्तको उसी तरह चुरा लिया, जैसे कोई चोरनी घरकी वस्तुओ तथा धनको चुरा लेती हो ॥ ११ ॥

**तस्मात्स्थितेऽत्र सकले जन एकवृत्त्या तत्राऽऽगतां श्रियमिव प्रियवीक्षिताङ्गीम् ।**
**सम्यङ्निरूप्य सकलाः स्त्रिय उच्चभावास्तस्थुर्भृशं तदनुरक्तधियो विमूढाः ॥१२॥**

इस कारण वहाँ सब लोग एकमात्र उसीमे चित्त-वृत्ति लगाकर ठगे-से खडे रह गये। जिसके सुन्दर अङ्गोपर प्रियतमकी दृष्टि पड़ रही हो उस लक्ष्मीकी भाँति वहाँ आयी हुई पूतनाको अच्छी तरह देखकर उच्चभाववाली सारी स्त्रियोका मन उसीमे अनुरक्त हो गया और वे अत्यन्त मूढ-सी होकर जहाँकी तहाँ स्थित रही ॥ १२ ॥

**किञ्चित्पदानि सुविलासमयानि गत्वा सा पूतना तत उपेन्द्रसमीपमेत्य ।**
**पर्यङ्कसुप्तशिशुरूपमिहोग्रकालव्यालं समाश्लिषदहो जननीव बालम् ॥१३॥**

अत्यन्त विलासपूर्ण गतिसे दो चार पग चलकर वह पूतना पलग पर सोये हुए शिशुरूप उपेन्द्र ( श्रीकृष्ण )के पास पहुँच गयी और जैसे माता अपने बच्चेको छातीसे चिपका लेती है उसी प्रकार उसने भी उसे गोदमे ले लिया। परन्तु वह शिशु उसके लिए काला-साँप-सा सिद्ध हुआ ॥ १३ ॥

**तत्रस्थसज्जनहृदैव विभाव्यमानो ज्ञानेन योगजनितेन च सेव्यमानः ।**
**स्पर्शेन तेन विषमेण विबोध्यमानो बालोऽप्यसावतिबभौ परिचिन्त्यमानः ॥१४॥**

वहाँके सज्जन जिसका अपने हृदयसे चिन्तन करते थे, योगजनित ज्ञानसे ही जिसका सेवन होता था, वह सबके ध्यानका विषय बना हुआ बालक पूतनाके विषम-स्पर्शसे जाग उठा और उसकी गोदमे अतिशय शोभा पाने लगा॥ १४ ॥

**तस्याश्छलेन परिशोभितपद्मनेत्रे कृत्वा स्वनेत्रकमलं स्थिरमेकवारम् ।**
**यद्दृष्टवाञ्छिशुरसौ तत एव तेन दुष्टाऽऽसुरीयमिति बुद्धमलौकिकेन ॥१५॥**

पूतनाके छलसे सुशोभित होनेवाले नेत्र-कमलमे एक बार अपनी पद्मोपम-दृष्टि स्थिर करके उस अलौकिक बालकने ज्योही देखा, त्योही उसने ताड लिया कि यह तो दुष्टा राक्षसी है ।। १५ ।।

**मातेव मामियमहो विषपूर्णदेहा दुग्धं तु पाययितुमिच्छति चात्मनैव ।**
**यो मामुपाश्रयति येन पथा तथैव तं चाऽऽभजाम्यहमिति व्रतमास्थितं मे ॥१६॥**

उसने सोचा 'इसका शरीर ( स्तन ) विषसे भरा है, तथापि यह स्वय ही माताकी भाँति मुझे दूध पिलाना चाहती है । जो जिस मार्गसे मेरा आश्रय लेता है, मै भी उसी मार्गसे उसको अपना लेता हूँ—यह मेरा स्वीकृत व्रत है' ।। १६ ।।

**इत्थं विचिन्त्य नयने विनिमीलितेऽस्मिन् मातेव सुस्थिरतरा शयनेऽवसत् सा ।**
**भष्मावलुप्तहुतभुक्सदृशं शिशुं तं स्वाङ्के समुन्नततरे निदधे ततो हा ! ॥१७॥**

ऐसा विचार करके नन्द-शिशुने जब अपने नेत्र बदकर लिये, तब वह माताकी भाँति सुस्थिरभावसे उसकी शय्यापर बैठ गयी और खेदकी बात है कि राखमे छिपी हुई आगके समान उस शिशुको उसने अपने ऊँचे स्तनवाले अकमे सभालकर रख लिया ।। १७ ।।

**चोलाश्चलाद्रुचिरचूचुकमेकमीषन्निष्कास्य चोग्रविषमस्य मुखे निधाय ।**
**साऽपाययत्तमहिता कृतकृत्यभीता सोऽचूचुषत् करगृहीतकुचः कृतज्ञः ॥१८॥**

फिर चोलीसे अपने एक सुन्दर स्तनका थोडा-सा भाग, जिसमे भयानक विष लगा हुआ था, निकालकर उसके मुँहमे दे दिया । पूतना उसका अहित करने आयी थी और अपने द्वारा किये गये कुकृत्यसे भयभीत भी थी, तथापि उस शिशुको स्तन-पान कराने लगी । उसके कृत्यको जाननेवाला वह शिशु भी दोनो हाथोसे उसके स्तनको पकडकर चूसने लगा ।। १८ ।।

**भो ! मुश्च मुश्च ! कुचमित्यभिभाषमाणा स्विन्नाङ्गयष्टिरधिमर्म निपीडिता सा ।**
**नेत्रे विवृत्य चरणौ स्वभुजावजस्रं स्वार्त्या क्षिपन्त्यहह ! तत्र भृशं रुरोद ॥१९॥**

उस समय पूतनाके मर्मस्थानमे अत्यन्त पीडा होने लगी । उसकी सारी अङ्गयष्टि शिथिल हो गयी और वह 'अरे रे ! हाय ! हाय ! छोड दे छोड़ दे मेरा स्तन' इस प्रकार चिल्लाती तथा वेदनासे आँखे फाडकर निरन्तर हाथ-पैर पटकती हुई बडे जोरसे रोदन-कर उठी ।। १९ ।।

**स्त्रीणां हि मर्म कुचयुग्ममतुल्यमेकं गाढं तदेव परिपीड्य भृशं कराभ्याम् ।**
**यत्पीतवाञ्छिशुरसौ सविषं पयस्तत् प्राणा गतास्तत इयं च मृता तदैव ॥२०॥**

स्त्रियोका दोनो स्तन ही मर्म-स्थान है, उनमेसे एक अनुपम-स्तनको दोनो हाथो द्वारा बडे जोरसे दबाकर जो उस शिशुने उसका विषयुक्त दूध पिया उससे उसके प्राणपखेरू उड गये और वह तत्काल मृत्युको प्राप्त हो गयी ।। २० ।।

**संयोग आपतित ईदृश ऐक्यमाप्य स्थानान्तरे निपतितौ तत एव चोभौ ।**
**देहे मृतेऽपसरतः स्थितनामरूपे दूरं यथा विहितवेगवशात्तथैव ॥२१॥**

ऐसा सयोग आ पडा कि वे दोनो ( पूतना और शिशु ) एकताको प्राप्त होकर दूसरे स्थानमे जा गिरे । जैसे शरीरके मृत हो जानेपर अपनेसे उत्पन्न वेगके कारण नाम और रूप दूर हट जाते हैं ॥ २१ ॥

**गोष्ठाद् बहिः सुवितते रमणीयदेशे सार्धैकयोजनमिते न्यपतत् स देहः ।**
**तद्वृक्षपंक्तिरपि हा ! पततोऽस्य सङ्गाद् भग्ना पपात बहुधा कृतचण्डनादा ॥२२॥**

गोष्ठसे बाहर छ कोस विस्तृत रमणीय प्रदेशमे पूतनाका वह शरीर धराशायी हो गया । हाय ! उस गिरते हुए शवके धक्केसे वहाँके वृक्ष-समुदाय भी नाना प्रकारके प्रचण्ड शब्द करते हुए पृथ्वीपर गिर पडे ॥ २२ ॥

**तस्याः स्वनेन पतनेन धरान्तरिक्षे व्याप्तेन विश्वमखिलं ध्वनितं प्रकामम् ।**
**द्यौः सग्रहा गिरियुता क्षितिरब्धयोऽपि चेलुर्दिशश्च विकटं ध्वनिताः क्षणेन ॥२३॥**

उसके गिरनेसे धमाकेकी आवाजसे पृथ्वी और आकाश भर गये । सारा विश्व जोरसे गूँज उठा । ग्रहो सहित अन्तरिक्ष, पर्वतो सहित पृथ्वी, सम्पूर्ण दिशाएँ तथा समुद्र भी क्षण-भरमे भयकर शब्दसे व्याप्त हो गये ॥ २३ ॥

**वज्राहतः सुररिपुर्विषमो महात्मा वृत्रो यथाऽपतदिहाऽसमशैलगात्रः ।**
**सा पूतनापि शिशुशक्तिहता द्वितीया स्वं पातयन्त्यसमरूपवती रराज ॥२४॥**

जैसे देवशत्रु महाकाय वृत्रासुर वज्रसे आहत हो अनुपम पर्वतके समान आकारमे इस पृथ्वीपर गिरा था, उसी प्रकार दूसरी यह पूतना थी, जो शिशुकी शक्तिसे मारी जाकर अपनेको गिराते समय तुलना रहित विशाल शरीरसे सुशोभित हुई ॥ २४ ॥

**मातृत्वमाप्य सविषस्तनपानजन्यं चात्मा गतो विलयमत्र परात्मरूपे ।**
**हिंसामयी प्रकृतिरुग्रतराऽऽसुरी तु तस्यास्तदैव विकटा प्रकटीबभूव ॥२५॥**

विषयुक्त स्तनपान करानेके कारण मातृभावको प्राप्त हुई उस पूतनाका जीवात्मा वहाँ परमात्मस्वरूपमे विलीन हो गया । और उसकी हिंसामयी जा उग्रतरा आसुरी-प्रकृति थी वही उस समय मर कर विकट आकार मे प्रकट हुई थी ॥ २५ ॥

**दंष्ट्राद्वयं तदनु लाङ्गलदण्डकल्पं तस्याः समुन्नततरं मुखमप्यशोभि ।**
**तन्नासिकाविवरयुग्ममहो ! विशालं हैमालयं विवरवत्सुमहद्रराज ॥२६॥**

उसकी दोनो दाढे दो हलदण्डके समान जान पडती थी। उनके कारण उसका ऊँचा मुख अद्भुत शोभा पा रहा था। अहो! उसकी नासिकाके दोनो छेद हिमालयकी दो बड़ी बडी कन्दराओके समान सुशोभित होते थे॥ २६॥

**वृक्षाऽऽवलीसमविकीर्णसुताम्रकेशं शैलस्तनं शिखरचूचुकमार्तिदायि।**
**तद्राक्षसीवपुरहो! शुशुभे निकामं गाढान्धकारनयनं गहनं प्रकामम्॥२७॥**

उसके ताम्रवर्णके केश वृक्षावलियोके समान बिखरे थे। दोनो स्तन पर्वतके सदृश तथा उनके पर-पीडादायक चूचुक (स्तनाग्रभाग) शिखरके समान जान पडते थे। अहा! वह राक्षसीका अत्यन्त गहन शव, जिसके नेत्र गाढ अन्धकार-राशिके समान प्रतीत होते थे, अद्भुत शोभा धारण कर रहा था॥ २७॥

**नाभिह्रदं मलयुतं परिहीणतोयं बाहुद्वयं विततवर्ष्मपयोधिकूलम्।**
**आरोहणे कठिनमुच्चनितम्बबिम्बं रोमाऽऽवलीविलसितं जघनं च गर्ह्यम्॥२८॥**

उसका नाभि-कुण्ड मलयुक्त तथा जलसे शून्य था, दोनो बाहे उसके शरीररूपी विस्तृत समुद्रके दोनो तटोके समान दिखायी देती थी। नितम्ब-मण्डल इतना ऊँचा था कि उसपर किसीके लिए भी चढना कठिन था। रोमावलियोसे आच्छादित जघनस्थल घृणास्पद प्रतीत होता था॥ २८॥

**तद्रूपमीदृशमनर्थकरं करालं संप्रेक्ष्य गोपवनिता व्रजमण्डलस्थाः।**
**तत्राऽऽगताः सभयमर्भकवृद्धसङ्घैर्युक्तास्तदद्भुतरवेण भृशं विमूढाः॥२९॥**

पूतनाका ऐसा अनर्थकारी विकराल रूप देखकर डरती-डरती वहाँ आयी हुई व्रजमण्डलकी गोपवनिताएँ, जिनके साथ बालक और वृद्ध-जन भी उपस्थित थे, उसके अद्भुत आर्तनादसे अत्यन्त विमूढ (अचेत) हो गयी॥ २९॥

**दृष्ट्वा शिशुं शशिनिभं हृदयाग्रभागे क्रीडन्तमप्रतिभयं मणिवच्छुभाङ्गम्।**
**गत्वा द्रुतं सभयमीश्वरचित्तनैस्ता गोप्योऽप्यमुं जगृहुरार्तियुताः क्षणेन॥३०॥**

उस राक्षसीके वक्ष स्थलपर वह चन्द्रमा जैसा सुन्दर और नीलमणि-जैसा श्यामोज्ज्वल अङ्गवाला शिशु निर्भय होकर खेल रहा था। गोपियाँ भयभीत हो भगवान्का स्मरण करती हुई तुरन्त वहाँ गयी और व्यथितचित्त हो क्षणभरमे उसे उठा लाईं॥ ३०॥

**मात्रे प्रदाय शुभनीलमणिं ततस्ता गत्वा द्रुतं कपिशगावमुपाहरंश्च।**
**पुच्छं प्रगृह्य सजल भ्रमणैः समन्त्रं रक्षां शिशोर्विदधिरे स्वकुलानुरूपम्॥३१॥**

सुन्दर लीलमणिको माता यशोदाकी गोदमे देकर वे तुरन्त जाकर एक कपिला गौ वहाँ ले आयी और जलसहित उसकी पूँछ पकडकर मन्त्रपाठ पूर्वक उसे घुमाती हुई उन्होने अपने कुलकी प्रथाके अनुसार उस शिशुका सरक्षण विधान किया॥ ३१॥

ता रोहिणीं व्रजपतेर्महिषीं विगृह्य मूत्रेण गोः शिशुममुं त्वभिषिच्य पूर्वम् ।
संस्नाप्य धेनुशकृता हरिनामबीजैर्विन्यस्य चाङ्गकरयोर्विजगुः प्रगेयम् ॥३२॥

उन गोपियोने रोहिणी तथा व्रजराज नन्दकी रानी यशोदाको साथ लेकर पहले गोमूत्रसे उस शिशुका अभिषेक किया । फिर गोवर-मिश्रित जलसे नहलाकर भगवन्नाम सबन्धी बीजमन्त्रोसे अङ्गन्यास-करके वे इस गाने योग्य रक्षा-कवचको गान करने लगी ।३२।

( उपजातिः )

नैषा सुरक्षा शुभदा शिशूनामेवाऽस्ति चाऽस्माकमपीह दिव्या ।
शीघ्रं यया सेवितया भवाब्धेः पारं प्रयामो वयमस्ति सेत्थम् ॥३३॥

यह सुरक्षा केवल शिशुओके लिए ही शुभदायिनी हो, ऐसी बात नही है, यह हमारे लिये भी यहाँ दिव्य सुरक्षा सिद्ध होगी । इसका सेवन करनेसे हम शीघ्र ही भवसागरसे पार हो जायँगे । ऐसी महत्त्वशालिनी है यह सुरक्षा ॥३३॥

( भुजङ्गप्रयातम् )

अजोऽङ्घ्रिं शिशोस्तेऽवतात्सर्वकालं तथा जान्वसावाणिमान् विश्वरूपः ।
क्रमेणैव यज्ञोऽच्युतोऽसौ त्वदूरू कटिं सोदरं चैव पायाद्धयास्यः ॥३४॥

'वत्स ! तेरे पैरकी रक्षा सदा ही भगवान् अज करे । घुटनेकी रक्षा विश्वरूप अभिमान् करे । क्रमश तेरे ऊरुओ और कठिप्रदेशकी रक्षा भगवान् यज्ञ और अच्युत करे तथा भगवान् हयग्रीव उदरका सरक्षण करे ॥ ३४ ॥

सहृत् केशवो वक्ष ईशोऽवतात्ते त्विनः कण्ठदेश भुजौ विष्णुरीशः ।
मुखं विश्वरूपैकपादो महात्मा शिरः पातु नित्यं शिशोरीश्वरस्ते ॥३५॥

'तेरे हृदयकी केशव और वक्ष स्थलकी ईश रक्षा करे । कण्ठदेशकी इन ( सूर्यदेव ) और भुजाओकी भगवान् विष्णु रक्षा करे । विश्वरूप जिनका एक पैर है, वे महाकाय विराट् तेरे मुखकी और ईश्वर तुझ शिशुकी नित्य रक्षा करे ॥ ३५ ॥

स चक्री हरिः स्वां गदां भ्रामयित्वा शिशोस्तेऽग्रतः पातु पश्चाच्च नित्यम् ।
असिं कार्मुकं चैव बाह्वोर्दधानो मधुघ्नोऽजनश्चाऽवतात्त्वां कृपार्द्रः ॥३६॥

'वे चक्रधारी श्रीहरि अपनी गदा घुमाकर तुझ शिशुकी सदा आगे और पीछेसे रक्षा करे । दो भुजाओमे तलवार और धनुष धारण करनेवाले कृपालु अजन्मा मधुसूदन सदा तेरा सरक्षण करे ॥ ३६ ॥

चतुर्दिक्षु कोणेषु शङ्खं गृहीत्वा हरिः संहरेत्तेऽशुभं पद्महस्तः ।
अधस्तार्क्ष्यदेवस्तथैवोर्ध्वभागे ह्युपेन्द्रोऽवतु त्वां हली वै समन्तात् ॥३७॥

'हाथमे कमल धारण करनेवाले श्रीहरि शङ्ख लेकर चारो दिशाओ तथा कोणोमे तेरे अशुभका सहार करे। तार्क्ष्यदेव ( भगवान् गरुड ) नीचेसे तेरी रक्षा करें, उपेन्द्र ऊपर से रक्षा करे और भगवान् हलधर चारोओरसे तेरा सरक्षण करे ॥ ३७ ॥

**सदा पातु ते त्विन्द्रियाणीन्द्रियेशो जगद्धेतुनारायणः प्राणवर्गम् ।**
**तथा श्वेतद्वीपेश ईशोऽपि चित्तं मनश्चाऽवतात्ते स योगेश्वरोऽपि ॥३८॥**

'हृषीकेश सदा तेरी इन्द्रियोकी रक्षा करे। जगत्कारण भगवान् नारायण प्राणवर्गका पोषण करे। भगवान् श्वेतद्वीपपति तेरे चित्तकी और योगेश्वर तेरे मनकी रक्षा करे ॥ ३८ ॥

**शिशोस्तेऽवतात् पृश्निगर्भः सुबुद्धिं परः श्रीश आत्मानमव्याकृतोऽसौ ।**
**गवामीश्वरः पातु क्रीडन्तमेव शयानं शिशुं त्वाऽवतान्माधवस्तु ॥३९॥**

'भगवान् पृश्निगर्भ तुझ शिशुकी सुबुद्धिका और अव्याकृत परमात्मा श्रीपति तेरे आत्माका सरक्षण करे। गौओके स्वामी खेलते समय तथा भगवान् माधव सोते समय तेरी रक्षा करे ॥ ३९ ॥

**व्रजन्तं तथा पातु वैकुण्ठ ईशः सुराणां गुरुश्च तिष्ठन्तमित्थम् ।**
**शिशोर्व्याधिरूपग्रहत्रासदाता मखात्मा हरिर्भोजने चाऽवतात्त्वाम् ॥४०॥**

'चलते समय भगवान् वैकुण्ठ और खडा होते समय सुरगुरु तेरी रक्षा करे। व्याधिरूप ग्रहोको त्रास देनेवाले यज्ञात्मा श्रीहरि भोजन कालमे तुझ बालकका सरक्षण करे ॥ ४० ॥

**शिशूनां ग्रहा यातुधानादयस्ते पिशाचास्तथा प्रेतभूताश्च यक्षाः ।**
**समं डाकिनीशाकिनीभिर्विनाश गताः सन्तु रक्षोगणैः सार्धमेव ॥४१॥**

'बालग्रह, यातुधान आदि, पिशाच, भूत, प्रेत, डाकिनी, शाकिनी तथा राक्षसगण भगवन्नामके प्रभावसे एक साथ ही नष्ट हो जायँ ॥ ४१ ॥

( शालिनी )

**तेऽपस्मारा कोटरा रेवती च ज्येष्ठा श्रेष्ठा दुष्टतायां प्रसिद्धा ।**
**उन्मादास्ते बालदेहेन्द्रियादीन् ये द्रुह्यन्ति स्युर्विनष्टाः सदा ते ॥४२॥**

'अपस्मार, कोटरा, रेवती तथा ज्येष्ठा जो दुष्टतामे प्रसिद्ध और बढी-चढी हैं और जो उन्मादरोग बालकोके शरीर इन्द्रिय आदिसे द्रोह करनेवाले है, वे सब सदाके लिये विनष्ट हो जाँय ॥ ४२ ॥

**स्वप्ने दृष्टा वृद्धबालग्रहाश्च ह्युत्पातास्ते सूचका विघ्नरूपाः ।**
**सर्वे शीघ्रं शान्तिमायान्तु नष्टा विष्णोर्दिव्यैर्नामभिः संगृहीताः ॥४३॥**

'स्वप्नमे देखे गये जो वृद्ध और बाल-ग्रह हैं, जो सूचक विघ्नरूप उत्पात हैं, वे सब भगवान् विष्णुके दिव्य नामोसे सगृहीत होकर शीघ्र ही नष्ट एव शान्त हो जाँय ।। ४३ ।।

( वसन्ततिलकावृत्तम् )

**इत्थं परात्मनि हरौ सुखदावतारे स्नेहेन बद्धहृदया गुणतो विमुग्धाः ।**
**गोप्यः स्वदेशिककुलाचरणानुरूपां रक्षां विचक्रुरखिलां शुभदां शिशोस्ताम् ।।४४।।**

इस प्रकार सुखद अवतारधारी परमात्मा श्रीहरिके प्रति जिनके हृदय स्नेहसे बँधे हुए थे, जो उनके गुणोपर मुग्ध थी, वे गोपियोने अपने गुरुकी आज्ञा तथा कुलाचारके अनुसार उस शिशुके लिए सपूर्ण शुभदायिनी रक्षाका विधान किया ।। ४४ ।।

( उपजाति )

**माता यशोदा शिशुमीश्वरं हरिं स्वोत्सङ्ग आधाय कुचामृतं निजम् ।**
**आपाययन्ती शरणं श्रिता शिवां तं शाययामास शनैःशनैस्ततः ।।४५।।**

ईश्वर श्रीहरि-स्वरूप शिशुको गोदमे लेकर माता यशोदा अपने स्तनका अमृत पान कराती हुई भगवती शिवाकी शरणमे गयी । फिर धीरे धीरे उसे सुलाया ।। ४५ ।।

**तदापि तस्या मुखपङ्कजादहो ! विनिःसृतं गीतमिदं परात्मगम् ।**
**दयस्व शम्भो ! भवताऽऽशुतोषिणा दत्तः सुतोऽयं भवतैव रक्ष्यते ।।४६।।**

उस समय भी यशोदाके मुखारविन्दसे यह परमात्म-सबन्धी गीत निकल रहा था । 'हे भगवन् शङ्कर ! दया कीजिये । आप आशुतोष हैं, आपने ही यह पुत्र प्रदान किया है और आपके ही द्वारा इसकी रक्षा हो रही है' ।। ४६ ।।

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**गतश्चतुर्दशः सर्गो महाकाव्ये स्तवात्मके ।।४७।।**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे चौदहवाँ सर्ग पूरा हुआ ।। ४७ ।।



## पञ्चदशः सर्गः

[ पूतनासस्कारः । भगवत कृपानिदर्शनम् । नास्तिकाना प्रबोधनञ्च ]

( वंशस्थेन्द्रवंशयोरुपजातिवृत्तम् )

**अथाऽऽगतास्ते व्रजराजसंयुता गोपा वरेण्या मथुराप्रदेशतः ।**
**व्यलोकयन् ये पथि पूतनावपुः सुविस्तृतं कज्जलशैलवत् स्थितम् ॥१॥**

तदनन्तर मथुरा प्रदेशसे व्रजराज नन्द सहित वे सभी गोप व्रजमे आये। उन्होने मार्गमे पूतनाके सुविस्तृत शवको देखा, जो काजलके पर्वतके समान पडा था ॥ १ ॥

**सम्यङ् निरीक्ष्याऽत्र भृशं विभाव्य तत् ह्याश्चर्यमापुर्नितरां गतव्यथाः ।**
**अन्योन्यमालोक्य चिरं व्रजेश्वरः स्मृत्वा हरिं चेत्थमुवाच तांस्तदा ॥२॥**

उसको यहाँ भलीभाँति देखकर तथा उसके विषयमे बहुत सोच-विचारकर एक दूसरेकी ओर देखते हुए वे सब लोग व्यथारहित हो आश्चर्यमे डूब गये। कुछ देरके बाद व्रजेश्वर नन्दने श्रीनारायणका स्मरण करके अपने साथी गोपोसे उस समय इस प्रकार कहा ॥ २ ॥

**मान्या भवन्तो व्रजवासिनः प्रियाः शृणुध्वमस्मद्वचनं महत्तमम् ।**
**यद्राजधान्यां वसुदेव आह नस्तदेव दृष्टं भयदं ह्यरिष्टकम् ॥३॥**

'आप समस्त मान्य व्रजवासी गण मेरे लिये बहुत प्रिय हैं, अतः मेरी महत्त्वपूर्ण बात सुने—राजधानी मथुरामे वसुदेवने जिसकी ओर सकेत किया था, वही यह भयदायक अरिष्ट हमे दिखायी दिया है ॥ ३ ॥

**मन्त्रान् स्थितिं पश्यति शान्तिमानृषिर्यथेह तद्वत् स बभूव सत्यदृक् ।**
**अहं तु मन्ये श्रितबन्धनालयोऽभ्यासेन योगस्य स जात ईदृशः ॥४॥**

'जैसे कोई शान्त महर्षि यहाँ मन्त्रो और परिस्थितिको प्रत्यक्ष देख लेता है, उसी प्रकार वसुदेव भी सत्य-द्रष्टा हो गये है। मै तो समझता हूँ, कारागारमे रह कर योगाभ्यास करनेसे वे ऐसे शक्तिसम्पन्न हो गये हैं' ॥ ४ ॥

**आमन्त्र्य पश्चात् परिबुद्धतत्स्थितिराज्ञापयामास च तान् व्रजेश्वरः ।**
**संदाहयामास च राक्षसीवपुर्जनङ्गमैः स्वैर्व्रजवासिभिः प्रियैः ॥५॥**

तत्पश्चात् परस्पर बातचीत करके उस परिस्थितिको जानकर व्रजेश्वरने लोगोके शवदाहके लिये आदेश दिया और अपने व्रजमे निवास करनेवाले प्रिय चाण्डालो द्वारा उस राक्षसीके शरीरका दाह करवाया ॥ ५ ॥

परश्वधैस्तद्वपुषं कृतश्रमाः प्रत्यङ्गमाच्छिद्य गतव्यथा इमे ।
दूरेऽनयंस्तत्र च काष्ठसंभृतां चितां समारोप्य मुदाऽदहन्नहो ! ॥६॥

उन सबने श्रम करके फरसों द्वारा पूतनाके प्रत्येक अङ्गके टुकडे-टुकडे करके व्यथा रहित हो दूर ले जाकर रक्खा और काष्ठ-निर्मित चितापर चढाकर प्रसन्नता पूर्वक उसका दाह कर दिया। वह अद्भुत दृश्य था ॥ ६ ॥

पापाऽऽसुरी सा प्रथिता महत्तमा घोरा शिशूनां भयदाऽन्तकारिणी ।
जिघांसया यद्धरये ददौ स्तनं लब्धं तयैतन्मरणोत्तरं धनम् ॥७॥

उस विशाल आकारवाली पापाचारिणी घोर राक्षसीने, जो शिशुओके लिये भय-दायिनी तथा उनका विनाश करनेवाली थी, मार डालनेकी नीयतसे श्रीहरिके मुखमे स्तन दिया था, परन्तु मरनेके बाद उसे यही ( भगवान् ही ) धन मिला ॥ ७ ॥

माताऽथवा धात्र्यपि यां शुभां गतिं प्राप्नोत्यहो ! स्वोदरजातबालतः ।
तामेव सा प्राप दयालुमीदृशं त्यक्त्वा कमन्यं शरणं व्रजेम भोः ! ॥८॥

अहो ! अपने पेटसे पैदा हुए बालकसे जैसे माता अथवा धायको शुभ गति प्राप्त होती है, उसीको पूतनाने भी श्रीकृष्णसे पा लिया। सज्जनो ! दयालु हरिको छोडकर हम लोग दूसरे किसकी शरणमे जाँय ? ॥ ८ ॥

ख्यातिं गतास्ते बहवो मनस्विनो विद्वांस एवं गुणिनस्तपस्विनः ।
यत्कृष्णतत्त्वं शरणं श्रिताः सुखं गताः परं तत्सदिति प्रभाषिणः ॥९॥

बहुतसे मनस्वी, विद्वान्, गुणी और तपस्वी लोग भी, जो जगत्मे विख्यात हो चुके हैं, उस श्रीकृष्ण-तत्त्वकी ही शरण लेकर 'वही परम सत् तत्त्व है' ऐसा कहते हुए सुखसे उस परम तत्त्वको प्राप्त हो गये ॥ ९ ॥

संसारिणो नित्यमनीश्वरब्रुवास्तथा कदाचाररता नृशंसकाः ।
अपीह चाऽन्ते गतिरस्तु मे हरिर्ब्रुवन्त्यहो ! चाऽऽधुनिकब्रुवा अपि ॥१०॥

आश्चर्य तो यह है कि जो सदा ही ईश्वरकी सत्ताको अस्वीकार करते, कुत्सित आचरणमे लगे रहते, नृशंसता पूर्ण बर्तावमे लगे रहते तथा अपनेको आधुनिक विचारवाला कहते हैं, ऐसे ससारी लोग भी अन्तिम अवस्था आनेपर मुँहसे यही बोलते हैं कि 'भगवान् मेरी गति हो' ॥ १० ॥

को हेतुरत्राऽस्ति विविच्यतां स्वतः पाश्चात्यविद्वांस इमे ब्रुवन्तु तान् ।
योगेन शक्त्या च बलिष्ठया धिया साध्नोति कः किं न भवे ब्रुवन्तु नः ? ॥११॥

इसमे क्या कारण है ? इसका स्वत विवेचन किया जाय ? ये पाश्चात्य विद्वान् भी उन लोगोको उत्तर दे। योग-शक्तिसे वलिष्ठ हुई बुद्धिके द्वारा ससारमे कौन क्या नही साध सकता है ? यह हमे बताये ॥ ११ ॥

**या कर्मभूमिः प्रथिता जगत्त्रये देवाश्च गायन्ति यदीयसद्गुणान् ।**
**तामाश्रिता भो ! विबुधा गतह्रियो व्यर्थं किमस्मान् हरिगान् विगर्हथ ! ॥१२॥**

जो तीनो लोकोमे 'कर्म-भूमि' के नामसे प्रसिद्ध है, देवता भी जिसके गुणोका गान करते है, आधुनिक विचारवाले विद्वानो ! उसी भूमिमे रहकर आप लोग लज्जाको तिलाञ्जलि दे क्यो हम भगवद्-गुणगान करनेवालोकी निन्दा करते हैं ? ॥ १२ ॥

**तत्पश्यत व्यापकरूपको ह्यसौ विभाति चाऽस्मिन् सचराचरे स्वतः ।**
**चिदात्मशक्त्याऽऽत्मविभाव्यरूपत आब्रह्मकीटेषु हृदि व्यवस्थितः ॥१३॥**

अत आप देखे, वे भगवान् श्रीहरि सर्वव्यापी-रूपसे इस चराचर जगत्मे स्वत प्रकाशमान हैं। चैतन्यात्मशक्तिसे युक्त तथा आत्मानुभवैकगम्य-रूपसे वे ब्रह्माजीसे लेकर कीट-पर्यन्त सपूर्ण प्राणियोके हृदयमे स्थित हैं ॥ १३ ॥

**तदत्र यूयं हृदयाग्रवर्तिनं तमेव नित्यं स्मरताऽव्ययं हितम् ।**
**यस्तादृशीं हन्त ! निशाचरीमपि धामाऽनयद्धात्र्युचितं महत्तमम् ॥१४॥**

इसलिये इस ससारमे आप लोग सबके हृदयाग्रभागमे विद्यमान उन्ही सर्वहितैषी अविनाशी श्रीहरिका नित्य स्मरण-चिन्तन करे। कितनी अच्छी बात है कि उन्होने वैसी निशाचरी पूतनाको भी अपना वह महत्तम धाम दे दिया, जो माता अथवा धायके ही पाने योग्य है ॥ १४ ॥

**विद्वद्भिराप्तैर्ऋषिभिर्महात्मभिः शास्त्रैः पुराणैश्च बुधैरहर्निशम् ।**
**यत्कथ्यते ब्रह्म चिदात्मरूपकं तत्किं ? किमात्माऽपि न विद्यतेऽत्र भोः ! ॥१५॥**

विद्वानो, आप्तजनो, ऋषि-मुनियो महात्माओ शास्त्रो, पुराणो तथा उनके ज्ञाताओने जिसे अहर्निश चिदात्मरूप ब्रह्म कहा है, वह क्या है ? क्या वह आत्मारूपसे भी यहाँ विद्यमान नही है ॥ १५ ॥

**अभ्यस्य सम्यग्घृदयेऽतिनिर्मले ब्रह्मैव तद् ध्यायत योगचक्षुषा ।**
**यद्व्याप्य विश्वं परितश्चकास्ति तां कार्ष्णीं गतिं लप्स्यथ चान्तिमेऽञ्जसा ॥१६॥**

अत अत्यन्त निर्मल हृदयमे अच्छी तरह अभ्यास करके योगदृष्टिसे उस ब्रह्मतत्त्वका ही ध्यान कीजिये, जो सम्पूर्ण विश्वको व्याप्त करके उसके चारो ओर प्रकाशित हो रहा है। इस ध्यानकी अन्तिम परिणति यह हो कि आपको अनायास श्रीकृष्ण-स्वरूपकी उपलब्धि हो जायगी ॥ १६ ॥

**कृष्णाय तस्मै गुणगृध्नवे सतां ददाति सद्वस्तु यदीह कोऽप्यसौ।**
**किमत्र वाच्यं लभते तदात्मतां तथापि मुह्यन्ति निसर्गतो हि ते ॥१७॥**

भगवान् श्रीकृष्ण सज्जनोके केवल गुण-ग्रहण करनेके इच्छुक हैं। जो कोई भी उन्हे यहाँ कोई सद् वस्तु अर्पित करता हैं, वह उनका तादात्म्य प्राप्तकर लेता है, इसके विषयमे तो कहना ही क्या है? तथापि लोग उनके विषयमे स्वभावत मोहित हो रहे हैं ॥ १७ ॥

**तदस्तु, दाहाद्वपुषः समुत्थितो रराज धूमोऽपि धरां दिवं श्रितः।**
**परन्तु तद्गन्ध उपेन्द्रसङ्गमात् सुगन्धभूर्जात इतस्ततो गतः ॥१८॥**

अस्तु, पूतनाके शरीरके दाहसे उठा हुआ धुआ भी पृथ्वी और आकाशमे व्याप्त होकर शोभा पाने लगा। परन्तु इधर-उधर फैला हुआ वह धूम उपेन्द्र ( श्रीकृष्ण ) के अगोका पूतनाके शरीरसे सम्पर्क होनेके कारण सुगन्धका जन्मस्थान बन गया। उस धूमसे मोहक सुगन्ध उठने लगी ॥ १८ ॥

**तदस्य सौरभ्यमतुल्यतृप्तिदं घ्राणैः पिबन्तोऽत्र समागता जनाः।**
**मिथो वदन्तः किमिदं कुतो न्विदं सुगन्ध आयात इहेदृशः कथम्? ॥१९॥**

अनुपम तृप्ति प्रदान करनेवाले उस धूम-सौरभको अपनी घ्राणेन्द्रियो द्वारा पान करते हुए वहाँ तत्काल आए लोग परस्पर कहने लगे—'यह क्या है? कहाँसे आया है और ऐसी सुगन्ध यहाँ कैसे प्रकट हो गयी?॥ १९ ॥

**पृच्छन्त औत्सुक्यवशात्परस्परं तत्रत्यगोपैः कथिताः कथा इमे।**
**श्रुत्वैव मुग्धाः कुशलं शिशोस्तदा दृष्ट्वा च संस्मृत्य हरिं शुचि स्मिताः ॥२०॥**

उत्कण्ठावश परस्पर पूछते हुए ये लोग जब निकट आये और वहाँके गोपोकी कही हुई सारी कथा सुनी तो सबके सब मुग्ध हो गए। नन्दशिशुको सकुशल देख श्रीहरिका स्मरण करते हुए वे सब लोग मुसकरा उठे ॥ २० ॥

**स्वान्तः पुरेऽथ वितते व्रजराजनन्दो गत्वा निरीक्ष्य सुखमर्भकमत्र सुप्तम्।**
**आघ्राय मूर्ध्नि शिवचिन्तनतत्परोऽभूच्छम्भो! दयस्व भगवन्निति भाषमाणः ॥२१॥**

तदनन्तर व्रजराजनन्दने अपने विशाल अन्त पुरमे जाकर जब बालकको सुखसे सोया हुआ देखा तो उसका मस्तक सूँघकर वे शिवके चिन्तनमे तत्पर हो गये ओर बोले—भगवन् शम्भो! दया कीजिये ॥ २१ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते।**
**गतः पञ्चदशः सर्गो महाकाव्ये स्तवात्मके ॥२२॥**

कृष्णप्रसाद घिमिरेकी कृत्ति 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे पन्द्रहवाँ सर्ग पूरा हुआ ॥ २२ ॥

# षोडशः सर्गः

[ शकटासुरवधलीलानिर्देशनम् ]

( भुजङ्गप्रयातम् )

**ततोऽस्मिन्महे तच्छिशोर्भव्यरूपे त्रिमासे शुभे जन्मनक्षत्रयुक्ते ।**
**यशोदा सुतं पार्श्वसुप्तं विधातुं चकाराऽत्र तद्दैशिकं कार्यजातम् ॥१॥**

तदनन्तर जब नन्द-नन्दन तीन महीनेका हो गया और उसका त्रैमासिक शुभ जन्म-नक्षत्र आया तो उस दिन भव्य-उत्सवका आयोजन हुआ। उस उत्सवमे यशोदा अपने लालाको करवट बदलकर सुलानेवाली थी, अत उसके लिए देशाचारके अनुसार सारा माङ्गलिक कार्य उन्होने सम्पादित किया ॥ १ ॥

**तदानीं व्रजस्थावयोज्ञानवृद्धा विशेषेण चाऽऽमन्त्रिता आगतास्ते ।**
**सभामण्डपं शोभयामासुरुच्चैः शिशोर्दीर्घजीवित्वमाकाङ्क्षमाणाः ॥२॥**

उस समय ज्ञानवृद्ध, वयोवृद्ध व्रजवासी विशेषरूपसे आमन्त्रित होकर आये थे। वे उस शिशुके दीर्घ जीवनकी कामना करते हुए सभामण्डप अधिक सुशोभित करते थे ॥ २ ॥

**तथैवाऽऽगता योषितः सर्वतस्ताः स्फुरद्दिव्यवर्णाः सबाला युवत्यः ।**
**सदाचारवृद्धाः शुभा मातृकल्पा व्रजाधीश्वरं हर्षयन्त्योऽत्र रेजुः ॥३॥**

इसी प्रकार बालको सहित युवती स्त्रियाँ भी सब ओरसे वहाँ आयी, जिनकी दिव्य-कान्ति प्रकाशित होती थी। सदाचारमे बढी चढी माता—सदृश शुभा प्रौढा स्त्रियाँ भी व्रजेश्वर नन्दका हर्ष बढाती हुई वहाँ शोभा पा रही थी ॥ ३ ॥

**पुरस्कृत्य बालं यशोदा तदानीं गृहप्राङ्गणे संनिवेश्याङ्क एव ।**
**विधिज्ञैर्द्विजैर्मन्त्रविद्भिः समन्त्रं सुत स्नापयामास तत्राऽभिषिच्य ॥४॥**

उस समय नन्दरानी यशोदाने बालकको आगे करके घरके आँगनमे अपने अङ्कमे लिए हुए ही बिठाया और शास्त्रीय विधिके ज्ञाता मन्त्रवेत्ता ब्राह्मणो द्वारा मन्त्रपाठ पूर्वक अभिषेक करवा कर नहलाया ॥ ४ ॥

**ततः सा ज्ज्वलन्नीलकान्तिं प्रसन्नं स्फुरत्पीतवस्त्रं शुभाङ्गं सुभूषम् ।**
**गुणैर्लोभयन्तं स्वतोऽभ्यागतांस्तान् समं तैर्जयाशीर्भिरेवाऽऽववर्ष ॥५॥**

तत्पश्चात् व्रजेश्वरी जाज्वल्यमान नील कान्तिवाले, सुन्दर, प्रसन्न तथा चमकीले पीले वस्त्रसे सुभूषित एव अपने गुणोसे समागत जनोको स्वत लुभा लेनेवाले उस बालकपर उन सब लोगोके साथ 'जय' जीव' इत्यादि बोलती हुई आशीर्वादकी वर्षा करने लगी ॥ ५ ॥

प्रजेशं हरिं पूजयामासुरस्मिन् दिने सद्विधिज्ञा द्विजास्तेऽपि पश्चात् ।
तया पूजिताः स्वन्नवस्त्राद्यभीष्ट - सुवर्णैर्धनैर्दानमानादिभिश्च ॥६॥

उत्तम विधिके ज्ञाता ब्राह्मणोने उस दिन प्रजापति श्री हरिका पूजन करवाया तत्पश्चात् व्रजरानीने उन ब्राह्मणोका भी उत्तम अन्न-वस्त्र आदि अभीष्ट वस्तु, सुवर्ण, धन एव मान आदिके द्वारा सत्कार किया ॥ ६ ॥

ततोऽभ्यागतान् स्वांश्च दृष्ट्वा क्षुधाभिस्तथा तृड्भिरभ्यर्दितान् साऽकृतज्ञा ।
सुतं वाहनाऽनोऽध एवाऽतिनिद्रं सुखं शाययित्वा जगामेयमन्तः ॥७॥

तदनन्तर आये हुए अतिथियो और स्वजनोको भी भूख-प्याससे पीडित देख कृतज्ञ यशोदा अपने बालकको, जो अत्यन्त निद्रित था, सवारीके छकडेके नीचे सुखपूर्वक सुलाकर भीतर चली गयी ॥ ७ ॥

तदस्मिन् सुभूषाभिरेवाऽभिरामे वृते बालकैर्भव्यरूपैः समन्तात् ।
गवां सद्रसैः पूरितान्युत्तमानि मणीनां च भाण्डानि सन्ति स्म चाऽन्तः ॥८॥

वह छकडा सुन्दर अलकरणोसे सुसज्जित होनेके कारण अत्यन्त मनोभिराम दिखाई देता था। बहुतसे भव्य-रूपवाले बालक उसे चारो ओरसे घेरे हुए थे। उसके भीतर गोरसोसे भरे हुए उत्तमोत्तम मणिमय भाण्ड लदे थे ॥ ८ ॥

इतो बालकोऽसौ क्षुधापीडितोऽभूत्तदैवाऽऽविशत् कामगो दैत्य एकः ।
अरूपः सुखेनैव तस्मिञ्छिशुं तं निहन्तुं नृपप्रेरितो वायुरूपः ॥९॥

इधर वह बालक भूखसे पीडित हो गया। उसी समय राजा कसका भेजा हुआ एक वायुरूपधारी दैत्यने, जो इच्छानुसार कही भी आ जा सकता था और जिसका रूप किसीको दिखाई नही देता था, उन नन्द-शिशुको मार डालनेके लिए सुखपूर्वक उसी छकडेमे प्रवेश किया ॥ ९ ॥

ततो ज्ञातदैत्यस्वभावोऽर्भको यं स्वमातुस्तनं पातुमेनं निहन्तुम् ।
चिकीर्षुर्द्वयं कार्यजातं सहैव चकाराऽत्र बुद्धिं शुभां योगगम्याम् ॥१०॥

तब दैत्योके स्वभावको जाननेवाले इस बालकने अपनी माताका स्तन-पान और उस दैत्यका वध, ये दोनो कार्य एक साथ ही करनेकी इच्छासे वहाँ योगगम्य शुभ निश्चय किया ॥ १० ॥

रुदन् पूर्वजानां शिशूनां समक्षं शुभौ कोमलाङ्घ्री नभस्यक्षिपत् सः ।
ततः स्पर्शमात्रेण तेनाऽत्र दैत्यो ममार द्रुतं तद्घ्यनश्चाऽप्यभाङ्क्षि ॥११॥

अपनेसे पहले उत्पन्न हुए बालकोंके समक्ष वह अपने सुन्दर कोमल चरणोंको आकाशकी ओर फेंकने लगा। उन चरणोंके स्पर्शमात्रसे वहाँ वह दैत्य काल-कवलित हो गया और छकड़ा भी तत्काल ही टूट गया ॥ ११॥

**इतो वायुरूपोऽप्यरूपः स दैत्यो य आसीद् भृशं कामरूपस्तदानीम् ।**
**तथैवाऽभवत्सर्वगो वायुरूपो यदिच्छा विनष्टा प्रभोः स्पर्शमात्रात् ॥१२॥**

इधर इच्छानुसार रूपधारण करनेवाला वह वायुरूपधारी अदृश्य-रूपी दैत्य उस समय मरनेके बाद उसी प्रकार सर्वव्यापी वायुरूप हो गया ( उसने मुक्ति लाभ कर लिया ) प्रभुके स्पर्शमात्रसे उसकी इच्छा विनष्ट हो गई ॥ १२ ॥

**तदन्तःस्थिते वस्तुमात्रे विनष्टे छलेनैव रोरूयमाणे शिशौ तु ।**
**स्थितिं दृष्टवन्तोऽर्भका ज्ञाततत्त्वा अकुर्वन् भयादेव कोलाहलं ते ॥१३॥**

उस छकड़ेके अन्दर रखी हुई सारी वस्तुएँ जब नष्ट हो गई और वह बालक छलसे ही जोर-जोरसे रोने लगा। तब इस स्थितिको देखनेवाले बालक सारा इस रहस्यको जानकर भयसे ही कोलाहल करने लगे ॥ १३ ॥

**निशम्येदृशं तत् स्त्रियोऽभ्यागताश्च व्रजेशादयो गोपवर्याश्च तेऽपि ।**
**समागम्य तूर्णं विलोक्याऽत्र चेत्थं बभूवुर्भृशं विस्मयोत्फुल्लदेहाः ॥१४॥**

ऐसी घटना सुनकर वे सब स्त्रियाँ वहाँ दौड़ी हुई आ पहुँची। वे व्रजेश्वर आदि श्रेष्ठ गोप-जन भी तुरन्त वहाँ आ गये। आकर उन्होने जब ऐसा काण्ड घटित हुआ देखा तो उनके शरीरमे अत्यन्त विस्मयके कारण रोमाञ्च हो आया ॥ १४ ॥

**तदा ते ह्यकुर्वन्ननेकान् वितर्कान् स्वतोऽभाञ्जि चैतत्कथं जातमीदृक् ? ।**
**शिशोरङ्घ्रिणा स्पृष्टमेतद्ध्यनः किं विनष्टं कृपा वा हरेर्हेतुरत्र ? ॥१५॥**

तब वे सब लोग अनेक प्रकारके तर्क-वितर्क करने लगे। 'यह छकड़ा स्वय कैसे टूट गया ? ऐसी अनहोनी बात कैसे सभव हुई ? क्या बालकके चरणसे छू जाने मात्रसे यह छकडा नष्ट हो गया ? अथवा इसमे श्रीहरिकी कृपा ही कारण है' ॥ १५ ॥

**ततो गोपमान्याः स्त्रियो मातृकल्पा अभाषन्त तत्रत्यबालैः सहैतैः ।**
**अनेनैव नीलेन बालेन भग्नं ह्यदश्चालितं पादयुग्मं यदैव ॥१६॥**

उस समय गोपगणोकी माननीया मातृ-कल्पा स्त्रिया वहाँके बालकोंके साथ कहने लगी 'इस नीलमणि शिशुने ही जब अपने दोनो पैर उछाले हैं तब यह छकडा टूटा है ॥ १६ ॥

**शिशोस्तादृशीं योगगम्यां स्थितिं तां ह्यरिष्टस्य दैत्यस्य दिव्यां गतिं ताम् ।**
**विबोद्धुं समर्थो भवेत् कोऽत्र विद्वान् यदीहाऽस्ति चेत् सैष ईशो न एव ॥१७॥**

इस शिशुकी वैसी योगगम्या स्थितिको तथा अरिष्ट-स्वरूप दैत्यकी उस सद्गतिको ठीक-ठीक समझ लेनेमे यहाँ कौन समर्थ है ? यदि कोई समर्थ है तो वह हम सबका ईश्वर ही है ॥ १७ ॥

**अतः केऽत्र ते बोद्धुमीदृक् प्रभावं शिशोरस्य चानन्तशक्तेरपारम् ।**
**वचो बालकैः सत्यमुक्तं तथापि न तैः श्रद्धयाऽग्राह्यसारं विभाव्य ॥१८॥**

अत इस अनन्त-शक्तिशाली बालकके ऐसे अपार प्रभावको जाननेमे यहाँ कौन सक्षम हैं ? यद्यपि वहाँ बालकोने ठीक ही कहा था तथापि उनके उस कथनको सार-हीन समझकर उन गोप लोगोने उसे स्वीकार नही किया ॥ १८ ॥

**यशोदा ततो भ्रान्तचित्ता भयेन समागम्य जग्राह बालं कराभ्याम् ।**
**स्तनं पातुकामं करौ स्वौ शुभाङ्घ्री मुहुः क्षिप्तवन्तं रुदन्तं शिशुं तम् ॥१९॥**

तदनन्तर भयसे भ्रान्तचित्त हुई यशोदाने वहाँ आकर बालकको दोनो हाथसे उठा लिया । वह उस समय स्तनपान करनेके लिए अपने दोनो हाथो और सुन्दर चरणोको बार-बार फेंकता हुआ रो रहा था ॥ १९ ॥

**विधिज्ञा द्विजाः संगता अत्र भूयः शिशोश्चक्रुरव्याहतां स्वस्ति-शान्तिम् ।**
**गवां पद्रजोभिर्ललाटेऽस्य चिह्नं प्रदायैव रक्षामकुर्वन् समन्त्राम् ॥२०॥**

फिर वहाँ शान्ति-विधिके ज्ञाता ब्राह्मण एकत्र हुए । उन्होने उस नन्द-शिशुके लिए अव्याहत स्वस्तिवाचन कर्म तथा शान्तिका विधान किया । पहले गौओकी पद-धूलिसे शिशुके ललाटमे तिलक लगाकर ही उन्होने समन्त्र रक्षा विधान सम्पादित किया ॥ २० ॥

**इतो योगमाया पुनर्गोकुलेऽस्मिन् रराजैव विन्यस्य तान् मोहगर्ते ।**
**यदाऽभ्यागताः संगताः प्राङ्गणेऽत्र शिशुं तं निरीक्ष्यैव मुग्धा बभूवुः ॥२१॥**

इधर भगवती योगमाया फिर इस गोकुलमे वहाँके सब लोगोको मोहगर्तमे निमग्न करके विराजमान हुई । जब वहाँ आये हुए सब लोग आँगनमे एकत्र हुए तो नन्द-शिशुको देखते ही मुग्ध हो गये ॥ २१ ॥

**शुभैर्वेदमन्त्रैर्द्विजैः शास्त्रदृष्ट्या निरस्तग्रहं नन्दपत्न्याग्रहेण ।**
**स्तनं पाययामास सा मेघकृष्णं शिशुं प्रेमतो मुग्धभावा तदैव ॥२२॥**

जब द्विजोने शास्त्रीय दृष्टिसे शुभ वेदमन्त्रो द्वारा ग्रहबाधाका निवारणकर दिया तब नन्दरानीने आग्रह पूर्वक उन घनश्याम शिशुको स्तन पिलाना आरम्भ किया। उस समय पुत्रके प्रति प्रेमके कारण उनका हृदय मुग्ध था ॥ २२ ॥

**पिबन् दुग्धमस्या सुधामिष्टमित्थं स सस्मार पीतं विषाक्तं स्तनं च।**
**तयोः पाययन्त्योः समं स्वस्तनीयमवाप्तो मया वस्तुभेदो न किञ्चित् ॥२३॥**

इस प्रकार माता यशोदाका अमृतके समान मधुर दूध पीते हुए नन्द-नन्दनने पूतनाके पीये हुए विषाक्त स्तनका स्मरण किया 'ये दोनो ( पूतना और मैया यशोदा ) अपने-अपने स्तनका दूध समान रूपसे मुझसे पिलाती रही है, किन्तु मैने इनके दुग्ध या विषरूप वस्तुमे किञ्चित् मात्र भी भेद नही पाया ॥ २३ ॥

**यशोदाऽत्र मे पुष्टिहेतोः शुभाङ्गी कुरूपा त्वसौ द्वेषिणी विग्रहस्य।**
**तयोर्भाव एव प्रभिन्नः प्रदाने न मे भेददृष्टिस्तयोः स्तन्यपाने ॥२४॥**

शुभाङ्गी यशोदा मेरी पुष्टिके लिए स्तन पिलाती हैं, किन्तु वह कुरुपा राक्षसी मेरे इस शरीरसे द्वेष रखकर दूध पिलाती थी। दुग्ध-प्रदान करते समय इन दोनोंके भावमे ही भेद रहा है, किन्तु इन दोनोके स्तन्यपानमे मैने कभी भेद दृष्टि नही की ॥ २४ ॥

**गृहीतं मया यस्य यद्वस्तुवित्तं कृतज्ञेन दातव्यमस्मै तदर्हम्।**
**धनं कस्यचिन्मागृधः स्वार्थहेतोर्मयोक्तं स्मराम्येव, माताऽस्त्वतः सा ॥२५॥**

मैने जिसका जो वस्तु-वैभव ग्रहण किया है, मुझे कृतज्ञ होकर उस—उसके योग्य प्रतिदान देना है। 'स्वार्थके लिए किसीका धन न लेनेकी इच्छा करो'। यह मैने ही श्रुतिमे कहा है, जो मुझे स्मरण है, अत वह पूतना भी मेरी माताके ही स्थानपर प्रतिष्ठित हो ॥२५॥

**जगद्बालसंहारिणी पूतना सा हरौ चिन्तयत्येवमित्थं क्षणेन।**
**जगामैव गोलोकधाम्न्यत्र कृष्णे मिलन्ती स्वरूपेण सिद्धा सुखेन ॥२६॥**

जगत्के बालकोका सहार करनेवाली पूतना श्री हरिके इस प्रकार चिन्तन करते ही क्षणभरमे गोलोक धाम जा पहुँची और स्वरूपत श्रीकृष्णमे मिलकर अनायास ही सिद्ध ( मुक्त ) हो गयी ॥ २६ ॥

**पुनस्तद्ध्यनः स्थापितं पूर्ववत्तैर्व्रजस्थैर्यतोऽसौ शिशुः शायितोऽधः।**
**ततः खिन्नचेता व्रजेशो द्विजैस्तैः क्रियाः कारितः शान्तिभद्रादिरूपाः ॥२७॥**

व्रजवासियोने फिर उस छकडेको पूर्ववत् खडाकर दिया। उसके नीचे बालक सुलाया गया था तो अनिष्ट हुआ, अत खिन्नचित्त हुए व्रजेश्वर नन्दने उस स्थानपर शान्ति–भद्रादि क्रियाएँ करवाई ॥ २७ ॥

**गृहीता च तस्मात् कृतज्ञात्सुपूजा स्वतो मुग्धभावेन दानं गृहीतम् ।**
**गवां वृन्दमानायितं सद्म वासो धनैः स्वर्णमुख्यैः प्रपूर्णैरभावि ॥२८॥**

कृतज्ञ-नन्दसे ब्राह्मणोने उत्तम पूजा ग्रहण की। स्वय ही मुग्ध हृदय होकर दान स्वीकार किया। गौओके समुदायको गोष्ठमे पहुँचाया गया और नन्दभवनमे वस्त्र, धन और सुवर्ण आदि रत्न भरे पूरे हो गये ॥ २८ ॥

**चिरं पात्वमुं केशवोऽनन्तजीवी ह्यसावस्तु नित्यं सुखं नो वितन्वन् ।**
**ब्रुवन्तस्त आशीर्वचः सद्म जग्मुः समाप्ता क्रिया चाऽथ कृष्णो रराज ॥२९॥**

'भगवान् केशव सुदीर्घ कालतक इस शिशुकी रक्षा करते रहे'। यह हम लोगोके सुखका विस्तार करता हुआ अनन्तकाल तक जीवित रहे' ऐसा आशीर्वाद देते हुए ब्राह्मण लोग अपने घर गये। शान्तिकर्म समाप्त हुआ और श्रीकृष्ण पूर्ववत् शोभा पाने लगे ॥ २९ ॥

**आत्मा परात्मा च मिथो विभिन्नौ सत्तत्त्वदृष्ट्या तु समस्वरूपौ ।**
**सत्यावतो दत्त इमौ तु यस्मै यत् तद् भवत्येव तथैव सत्यम् ॥३०॥**

आत्मा और परमात्मा यद्यपि परस्पर भिन्न प्रतीत होते है तथापि सत्तत्त्व–दृष्टिसे देखें तो समरूप ( अभिन्न ) है, अतएव सत्य भी हैं। इसलिए वे दोनो जिसे जो कुछ देते हैं, वह भी उन्हीकी भाँति अवश्य सत्य ही होता है ॥ ३० ॥

**तस्माद्भवन्तोऽपि च पूज्यपादा महत्तमाः साधव एकचित्ताः ।**
**यच्छन्तु मह्यं च शुभाशिषं भो! स्यामत्र कृत्ये त्वनया प्रपूर्णः ॥३१॥**

अत हे पूज्यपाद महात्माओ! साधु–सन्तो! आप लोग भी एक चित्त होकर मुझे शुभाशीर्वाद दें और उस आशीर्वादसे मै अपने इस कृत्य (काव्यरचना) मे पूर्णत सफल होऊँ ॥ ३१ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**व्यगमत् षोडशः सर्गो महाकाव्ये स्तवात्मके ॥३२॥**

कृष्ण प्रसाद घिमिरेकी कृति इस 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे सोलहवाँ सर्ग पूरा हुआ ॥ ३२ ॥



# सप्तदशः सर्गः

[ तृणावर्तनिष्पेषलीलावर्णनम् ]

( वंशस्थेन्द्रवंशयोरुपजातिवृत्तम् )

**अथैकदाऽऽकाशतले विहारिणि श्रीसूर्यबिम्बे सति तीव्रतेजसि ।**
**क्लिन्ने शिशौ तत्प्रभया मनागितश्चचाल वायुर्हरिसेवनोत्सुकः ॥१॥**

एक दिन आकाशविहारी सूर्यदेवका मण्डल जब तीव्र-तेजसे तपने लगा और नन्द-शिशु उसकी प्रचण्ड धूपसे पसीना-पसीना हो गया तब श्रीहरिकी सेवाके लिए उत्सुक रहनेवाली वायु वहाँ शीतल मदगतिसे चलने लगी ॥ १ ॥

**स्रग्भिर्ध्वजैश्चित्रविचित्रिते तदा नन्दालये प्राङ्गण एव संगताः ।**
**गोप्यश्च गोपाश्च तदीयसत्कथाः कृत्वा विलोक्याऽर्भकमत्र संस्थिताः ॥२॥**

पुष्पहारो तथा ध्वजोद्वारा चित्र-विचित्र प्रकारसे सुसज्जित नन्दभवनके आँगनमे उस समय एकत्र हुए गोप और गोपियाँ उस बालककी ही कथा-वार्ता करती तथा नन्द-शिशुकी ही शोभा निहारती हुई वहाँ देर तक बैठी रही ॥ २ ॥

**चिरं स्थितेनाऽत्र शरीरपीडनादुत्काः समुत्थाय शनैः शनैस्ततः ।**
**जग्मुर्यदा ते जननी व्रजेश्वरी स्नेहाद्गृहीत्वाऽङ्क इमं न्यधादितः ॥३॥**

देर तक बैठे रहनेसे शरीरमें पीडा होने लगी, अतः वहाँसे चलनेके लिये उत्सुक हो सब लोग जब धीरे-धीरे उठकर चले गये तब शिशुकी माता यशोदाने स्नेहवश उसे अपनी गोदमे उठा लिया ॥ ३ ॥

**नैसर्गिकीं स्वां गतिमन्ययां त्यजन् वृद्धो बभौ वायुरसौ तदन्तरे ।**
**दैत्यस्तृणावर्त उपागतो व्रजे स्वात्मानमावेशयदत्र तत्क्षणात् ॥४॥**

पाठकगण ! इसी बीचमे अपनी विकारहीन स्वाभाविक गतिको छोड़ वायु बढकर प्रचण्ड वेगसे बहने लगी । इसका कारण यह था कि उस समय व्रजमे तृणावर्त नामक दैत्य आ गया था और उसने वहाँ वायुमे ही अपने आपको आवेशित कर दिया था ॥ ४ ॥

**शिशुं विलोक्यैव शशिप्रभं शनैर्निरूप्य चिन्हैः सकलेष्वनुत्तमम् ।**
**वात्यास्वरूपेण जिहीर्षुरुद्धतो मनो दधेऽसौ नृपकंसनोदितः ॥५॥**

वह राजा कससे प्रेरित होकर आया था । उसने चन्द्रमाके समान कान्तिमान् उस नन्द-शिशुको देखते ही लक्षणोसे उसे सर्वोत्तम समझकर बवडरके रूपमे उसे हर ले जानेका विचार किया ॥ ५ ॥

शक्तिं समाश्रित्य स आसुरीं श्वसन् दुर्दर्शरूपो ह्यसदग्रणीः शठः ।
तमत्र पस्पर्श यदा खरस्वरं ज्ञातस्तदैवाऽक्षयबोधतोऽमुना ॥६॥

वह दुष्टोका अगुआ और शठ था। उसके रूपको देखना अत्यन्त कठिन था। उसने आसुरी-शक्तिका आश्रय ले जोर-जोरसे श्वास खीचते हुए ज्योही यहाँ उस बालकका स्पर्श किया, त्योही उसने अपनी अक्षय बोध-शक्तिसे उसको पहचान लिया ॥ ६ ॥

ततो जनन्याः स्तनयोर्लुठन्नसौ स्वयोगशक्त्या विरराज तत्क्षणे ।
श्रितः परं पार्थिवतत्त्वमञ्जसा मेरुर्यथा भारभृदात्मना बभौ ॥७॥

तब माताके स्तनोपर लोटता हुआ वह बालक उसी क्षण अपनी योग-शक्तिसे सुशोभित हो उठा। वह अनायास ही परम पार्थिवतत्त्व ( भूमिगत-भूरिभार ) को अपनाकर अपने शरीरसे मेरु-पर्वतके समान बड़ा भारी हो गया ॥ ७ ॥

तदस्य शक्त्याश्रयिणः शरीरगं भारं समुद्वोढुमपारयन्त्यसौ ।
विन्यस्य भूमौ तनयं हृदि स्थितं सस्मार नारायणमात्मनः प्रियम् ॥८॥

योगशक्तिके आश्रयभूत उस बालकके इस भारी भारको ढोनेमे असमर्थ हो, माता यशोदाने अकमे स्थित उस पुत्रको भूमिपर रख दिया और अपने प्रिय देवता भगवान् नारायणका स्मरण किया ॥ ८ ॥

कुतः सुतो मे गिरिसारभारभृत् सञ्जात ईदृक् किमिदं कथं न्विदम् ।
सुविस्मिता सेत्थमचिन्त्यमीश्वरं जगाम भक्त्या शरणं विशङ्किता ॥९॥

मेरा पुत्र इस प्रकार पर्वतके समान भारी क्यो हो गया, यह क्या है ? ऐसा कैसे सम्भव हो गया, इस प्रकार आश्चर्यपूर्वक सोचती हुई माता यशोदा सशक हो उठी। और भक्ति-भावसे अचिन्त्य ईश्वरकी शरणमे गई ॥ ९ ॥

इतस्तदा वायुरभूत् स्थिरो मनाक् दुष्टाऽसुरावेशविबुद्धतन्मतिः ।
मन्दं ववौ शान्त इव स्वयं हृदि विलज्जमानोऽसुरसङ्गदोषतः ॥१०॥

इधर उसी समय उस दुष्ट असुरके आवेशसे उसके विचारको जानकर वायुदेव कुछ स्थिर हो गये और असुरके सगदोषसे मानो मन ही मन लज्जित हो, स्वयं शान्तसे होकर मन्द-मन्द बहने लगे ॥ १० ॥

क्षणं विमृश्याऽथ जगद्धितैषिणा बालेन लीलाश्रयिणा विनोदिना ।
युक्त्या कृतं कार्यमहो ! द्वयं समं सा प्रेषिताऽन्तोऽत्र विवर्धितोऽनिलः ॥११॥

लीलाका आश्रय ले उस जगत् हितैषी विनोदी बालकने क्षणभर विचारकर युक्तिसे दो कार्य एक साथ ही किये। एक तो उसने माताको घरके भीतर भेज दिया और दूसरे वायुके वेगको बढ़ा दिया ॥ ११ ॥

**पुनर्ववौ वायुरसौ प्रवर्धितः प्रेम्णा प्रकुर्वन् प्रियमस्य सेवनम् ।**
**शनैः शनैर्वृद्धरयः खरस्वरो गां कम्पयन् आनभ उन्नतो भृशम् ॥१२॥**

अब वायुदेव बडे प्रेमसे भगवान्की यह प्रिय-सेवा करते हुए पुन बढकर प्रचण्ड वेगसे बहने लगे। इनका वेग धीरे-धीरे बढा। फिर भी प्रखर-स्वरसे पृथ्वीको कम्पित करते हुए आकाशतक अत्यन्त ऊँचे उठ गये ॥ १२ ॥

**व्रजं दृषद्भिश्च रजःकणैः क्षणादुन्मूलितैर्वृक्षगणैः समन्ततः ।**
**प्रच्छाद्य तूर्णं दृढचक्ररूपया गत्या प्रचण्डो विरराज सोऽनिलः ॥१३॥**

वह वायुरूप दैत्य भी धूलि-कणो, कङ्कण-पत्थरो और उखाडे हुए वृक्ष समूहो द्वारा तुरन्त व्रजको चारो ओरसे आच्छादित करके सुदृढ बवडरकी गतिसे प्रचण्ड होकर शोभा पाने लगा ॥ १३ ॥

**मुहूर्तमीदृक् रजसाऽऽवृतं ह्यभूत् गाढान्धकारं व्रजमण्डलं तदा ।**
**अन्यं तथाऽऽत्मानमपीह कोऽप्यसौ न वेद हा ! तेन विमोहिताऽऽत्मना ॥१४॥**

दो घडीतक सारा व्रजमण्डल इसी तरह धूलिसे आच्छादित हो प्रगाढ अन्धकारमे निमग्न रहा। उस समय उस ( तृणावर्त ) से मोहित होनेके कारण कोई अपने और परायेको भी नही जान सका ॥ १४ ॥

**अमुं प्रगृह्याऽवसरं मनोमयं तदाश्रयी दैत्यवरोऽपि हर्षितः ।**
**आसीनमत्रैव शुभाङ्गमुज्ज्वलं जहार बालं स्वबलाधिकं ततः ॥१५॥**

उस मनोनुकूल अवसरको पाकर वायुका आश्रय लेनेवाला वह दैत्य भी हर्षसे उल्लसित हो उठा। उसने वहाँ आँगनमे बैठे हुए उस सुन्दर तेजस्वी बालकको, जो बलमे उससे बहुत बढा-चढा था, हर लिया ॥ १५ ॥

**सदागतेस्तां गतिमुत्कटामितो निरूप्य माताऽस्य समागताप्यथ ।**
**निधाय तं यत्र पुरा गताऽन्तरं तत्राऽनिरीक्ष्याऽमुमहोऽपतत् स्वतः ॥१६॥**

इधर वायुकी ऐसी उत्कट गति देखकर माता यशोदा दौडी आयी और जहाँ पहले अपने शिशुको रखकर भीतर गयी थी, वहाँ उसे न पाकर आश्चर्यचकित एव अचेत हो स्वय धरतीपर गिर पडी ॥ १६ ॥

**चिरेण संज्ञामधिगम्य कृच्छ्रतो भृशं यशोदा रुदती भयाकुला ।**
**इतस्ततोऽन्विष्य समं सखीजनैश्चुक्रोश देहीति सुतं ! हरिं तदा ॥१७॥**

बहुत देरके बडी कठिनाईसे होशमे आकर अत्यन्त रोदन करती हुई यशोदा भयसे व्याकुल हो उठी। सखीजनोके साथ इधर-उधर खोजकर निराश हो 'हे भगवन् मेरे बेटेको दे दो' ऐसा कहकर चीखने-चिल्लाने लगी ॥ १७ ॥

श्रुत्वा स्वमातू रवमार्तिसंयुतं दृष्ट्वा च तां दुर्ग्रहपूरितामिव।
अभूत्कृपार्द्रोऽसुरसंधृतोऽप्यसौ धृतोऽनया यद्धृदि यत्नतो दृढम् ॥१८॥

अपनी माताका वह आर्तनाद सुनकर तथा उसे किसी दुष्ट-ग्रहसे आविष्ट हुई-सी देखकर श्रीकृष्ण करुणासे आर्द्र हो गये। यद्यपि वे असुरकी पकडमे आ गये थे, तथापि माताने बडी दृढताके साथ उन्हे यत्नपूर्वक हृदयमे धारणकर रक्खा था ॥ १८ ॥

कोलाहलोऽभूदथ चैकभावतः स्त्रियो रुदत्योऽत्र समाययुर्यदा।
दैत्यस्तृणावर्त उपांशुगर्जितो निष्कास्य षष्ठ्या बलमद्भुतं त्वितः ॥१८॥

जब व्रजकी दूसरी स्त्रियाँ भी रोती हुई वहाँ आ गयी तब उनके तुमुलनादसे भारी कोलाहल मच गया। दैत्य तृणावर्त छठीका अद्भुत बल प्रकट करके धीरे-धीरे गर्जने लगा ॥ १९ ॥

व्रजेश्वरी पुत्रवियोगजन्यया स्वार्त्या तयाऽतप्यत मूर्च्छिता पुनः।
कृतोपचारा च सखीभिरावृता संप्राप्तसंज्ञा विलपन्त्यसौ स्थिता ॥२०॥

व्रजेश्वरी यशोदा पुत्र-वियोग जनित पीडासे ऐसी सतप्त हुई कि उन्हे पुन मूर्छा आ गई। सखियोके उपचारसे चेतना प्राप्त होनेपर वे उनसे घिरी हुई वही बैठे-बैठे विलाप करने लगी ॥ २० ॥

अन्वर्थनामा तृणवृक्षधूलिभिः प्रच्छन्नगात्रोऽनिलचक्रमध्यतः।
स्वाङ्के स्थितं तं स नृशंसया धिया निरीक्ष्य हन्तुं च मनो दधे ततः ॥२१॥

तृणावर्तका जैसे नाम था वैसा ही अर्थ। तृण-वृक्ष एव धूलिसे उसका सारा शरीर ढँका हुआ था और वह वायु चक्रके मध्यभागमे स्थित था। उसने अपनी गोदमे विद्यमान उस शिशुकी ओर देखकर अपनी क्रूर बुद्धिके द्वारा उसे मार डालनेका विचार किया ॥२१॥

तं लौहसारं गिरिभारमद्भुतं बालं निहन्तुं न शशाक किन्तु सः।
अमन्यताऽमुं तु दृषद्यथा दृढं मया प्रमादापहृतं मुधेति च ॥२२॥

परन्तु वह अद्भुत बालक लोहेके समान सारवान् और पर्वतके समान भारी था। अतः तृणावर्त उसे मारनेमे सफल न हो सका। उसे उसने सुदृढ पत्थरके समान माना और सोचने लगा—'मैने प्रमाद-वश व्यर्थ ही इसका अपहरण किया ॥ २२ ॥

अहो ! शिशोरस्य शरीरमद्भुतं संदृश्यते कोमलमीदृशं मया ।
परन्तु शैलाग्रनिभं सशक्तिकं स्थिरं महासारमयं न हन्यते ॥२३॥

'अहो ! इस शिशुका शरीर मुझे अद्भुत दिखाई देता है। छूने पर यह ऐसा कोमल है किन्तु शैल-शिखरके समान सशक्त जान पडता है। यह सुस्थिर एवं अत्यन्त सारमय है। इस लिए मारा नही जा रहा है ॥ २३ ॥

भाव्यं तथापीह मयाऽनुजीविना कंसप्रियार्थे तु गतासुनाऽपि भोः ! ।
वितर्क्य चात्मन्यधिकं विमृश्य स बालस्य कण्ठे निदधे करावहो ! ॥२४॥

'तथापि मै राजा कसका अनुजीवी हूँ। अत उसका प्रिय करनेके लिए आवश्यकता हो तो मुझे अपने प्राण भी दे देने चाहिये'। इसप्रकार वितर्क करके मन ही मन बहुत सोच विचार करनेके बाद आश्चर्य है कि उसने बालकके कण्ठमे अपने हाथ लगा दिये ॥ २४ ॥

दृढप्रयत्नोऽपि तदाऽन्तरिक्षगो दैत्योत्तमोऽसौ बहुधा कृतक्रियः ।
उपेक्ष्यमाणं गलदत्तसद्भुजं तं नाऽशकद्धन्तुमहो ! स्वशक्तितः ॥२५॥

वह आकाशचारी महान् दैत्यने सुदृढ प्रयत्न करके भी अनेक प्रकारके कृत्य किये परन्तु जिसके गलेमे उसके दोनो हाथ पडे थे उस बालकको निकट देखकर भी वह अपनी शक्ति द्वारा उसे मार न सका। यह कैसा आश्चर्य है ? ॥२५॥

यथा गृहीतं बलिनं भुजङ्गमं स्वं मोचनार्थं यतमानमुद्धतम् ।
क्रीडन्नुपेक्ष्यैव मुकुन्दवाहनो निहन्ति पश्चात् स हतोऽमुना तथा ॥२६॥

जैसे कोई बलवान् सर्प पकड लिया गया हो और अपनेको छुडानेके लिए प्रयत्नकर रहा हो, उस उद्धत सर्पकी उपेक्षा करके ही मुकुन्दवाहन गरुड पहले उसके साथ खेलते हैं और फिर उसे मार डालते हैं। उसी प्रकार वह भी श्रीकृष्णके द्वारा मारा गया ॥२६॥

कण्ठग्रहं तं हतवान् विहायसि बालोऽप्यबालो गुणवीर्यतो ज्ज्वलन् ।
दृढं कृतज्ञोऽत्र दयालुरूर्जितस्तस्मै ददौ सङ्गवशाच्छुभाङ्गतिम् ॥२७॥

वह तेजस्वी बालक अवस्थामे छोटा होनेपर भी गुण और पराक्रमकी दृष्टिसे बालक नही था। उसने आकाशमे ही तृणावर्तका गला घोटकर उसे मार डाला। परन्तु वह बडा ही कृतज्ञ, ओजस्वी तथा दयालु है। अत उसने अपने सम्पर्कमे आनेके कारण उस दैत्यको शुभ-गति प्रदान की ॥२७॥

यथा प्रमादादपि देहधारिणः स्पृशन्ति चेदग्निमनीश्वरभ्रुवाः ! ।
किं शीतलोऽसौ भवति त्यजन् गुणान् ? किं निह्नुते वौषधिरेव सद्गुणान् ? ॥२८॥

ईश्वरको न माननेवाले देहधारी भी यदि भूलसे भी अग्निका स्पर्श कर ले तो क्या वह उनके लिए अपने दाहक-गुणोको त्यागकर शीतल हो जाती है ? अथवा क्या औषधि भूलसे भी खा लेने पर अपने सद्गुणोको छिपा लेती है ? ॥२८॥

क्षणं विमर्श्येत्थमयत्नतोऽपि भो ! कृष्णं भजध्वं हृदयाग्रवर्तिनम् ।
स एव युष्मान् गुरुरूपमास्थितः प्रदर्शयत्येव पथः स्वशर्मदान् ॥२९॥

सज्जनो ! इस प्रकार क्षणभर विचार करके बिना किसी प्रयत्नके भी हृदयाग्रवर्ती भगवान् श्रीकृष्णका भजन करो । वे ही गुरुरूप धारण करके तुम्हे अपने कल्याणदायी मार्गोको प्रदर्शित करेगे ॥२९॥

तदस्तु, पूर्वं ह्यसुरस्य कायतो विनिर्गतं नेत्रयुगं प्रभारुणम् ।
रराज पश्चाद्बहुधा भयङ्करं मृतं शरीरं गिरिवत् तदा दिवि ॥३०॥

अस्तु, पहले उस असुरके शरीरसे अरुण कान्तिवाले दो नेत्र निकले । तत्पश्चात् नाना प्रकारसे भय उत्पन्न करनेवाला उसका प्राण-हीन शरीर आकाशमे पर्वतके समान सुशोभित हुआ ॥३०॥

शब्दायमानो नितरां ततो व्रजे तेनैव सार्धं न्यपतद् गृहाङ्गणे ।
तदाऽस्य कायः पतितोऽपि भूतले बभौ भृशं तत्र शिलासु चूर्णितः ॥३१॥

फिर वह व्रजमे बडे जोरसे शब्द करता हुआ उस बालकके साथ ही घरके आँगनमे गिरा । उस समय भूतलपर गिरकर भी वहाँकी शिलाओपर चूर-चूर होकर बिखर गया और इस रूपमे अधिक शोभा पाने लगा ॥३१॥

तथा हतेऽरिष्टतरेऽसुरोत्तमे सर्वत्र शान्तं विगतं महाभयम् ।
क्रीडन्तमस्योपरि पूर्ववच्छिशुं तं ताः समेता ददृशुः पुरःस्थितम् ॥३२॥

अत्यन्त अरिष्टस्वरूप उस श्रेष्ठ असुरके इस प्रकार मारे जानेपर सर्वत्र शान्ति छा गई और वहाँका महान् भय दूर हो गया । वहाँ एकत्र हुई स्त्रियोने देखा—वह शिशु उनके सामने ही उस दैत्यके शरीरपर पूर्ववत् खेल रहा है ॥३२॥

ससंभ्रमं तत्र गता व्रजस्त्रियस्तद्देहतोऽमुं प्रतिगृह्य विस्मिताः ।
प्रदाय मात्रे प्रणयेन तत्कथा मिथोऽभ्यगृह्णन् स्मृतशम्भ्वनुग्रहाः ॥३३॥

तब व्रजाङ्गनाये बडी घबडाहटके साथ वहाँ गईं और आश्चर्य चकित हो, उस दैत्यके देहसे बालकको लेकर उसकी माताकी गोदमे दे भगवान् शङ्करके कृपाका स्मरण करती हुई परस्पर प्रेमपूर्वक उस बालककी ही कथा वार्ता कहने लगी ॥३३॥

( प्रहर्षिणी )

आर्ये ! त्वं कृतकुशलाऽसि यत्सुतोऽसावायातोऽसुरवरमृत्युवक्त्रतोऽपि ।
सक्षेमस्तदपि शुभे ! सुखं वितन्वन् सर्वाङ्गैरपि कुशली स्वयं गुणाढ्यः ॥३४॥

वे बोली—'आर्ये यशोदे ! तुमने बड़ा पुण्यकर्म किया है, जिससे तुम्हारा बेटा उस महान् असुरके मृत्युरूप मुखसे भी सकुशल बचकर निकल आया। शुभे ! उस पर भी विशेषता यह है कि हमारे सुखका विस्तार करनेवाला यह गुण-सागर शिशु स्वयं अपने सम्पूर्ण अङ्गोसे स्वस्थ है—इसे कोई क्षति नही पहुँची है ॥३४॥

अस्माकं हृदयधनः सुखैकमूर्तिः साह्लादो विधुरिव लोकशान्तिदोऽयम् ।
अस्माभिः कृतकुशलैः पुरा शुभेच्छैः संप्राप्तः फलमिषतो मखादिकृद्भिः ॥३५॥

'यह हमारा हृदय-धन है, सुखकी एकमात्र मूर्ति है, चन्द्रमाके समान आह्लादजनक है और सब लोगोको शान्ति देनेवाला है। हमलोगोने भी पूर्व जन्मने शुभ सकल्प लेकर पुण्यकर्म और यज्ञादिके अनुष्ठान किये थे जिसके फलके बहाने यह बालक हमे प्राप्त हुआ है ॥३५॥

हिंस्रोऽयं स्वकृतकुकर्मदोषतोऽद्य संप्राप्तो यमसदनं विधेर्नियोगात् ।
सत्येयं सुमुखि ! जनश्रुतिः प्रसिद्धा स्वैः कृत्यैर्विगतभया हि साधवो ये ॥३६॥

'यह हिंसक दैत्य अपने किये हुए कुकर्मके दोषसे आज विधातासे प्रेरित हो, यम-लोकको चला गया। सुमुखि ! यह प्रसिद्ध किम्वदन्ती सत्य है कि 'साधु-पुरुष अपने शुभकर्मो-से ही भय रहित होते हैं' ॥३६॥

धन्या त्वं शिवचरणे रता सुभक्त्या या नित्यं नुदसि च नः शिवैकभक्त्याम् ।
तस्यैवं सुफलमभून्मृतोऽपि बालः संप्राप्तः पुनरपि देवि ! यत्तवाऽङ्के ॥३७॥

'तुम धन्य हो ! उत्तम भक्ति-भावसे भगवान् शिवके चरणोकी आराधनामे लगी रहती हो और नित्य हमे भी एकमात्र शिवकी भक्तिके लिए प्रेरणा देती रहती हो। देवि ! यह उसी पुण्य कर्मका फल है कि तुम्हारा मरा हुआ बालक भी फिर तुम्हारी गोदमे आ पहुँचा' ॥३७॥

गोप्यस्ता निगदितवत्य इत्थमस्यै गोपास्ते धृतसुकृता व्रजेशमाहुः ।
धन्यस्त्वं कृतसुकृतः सुतोऽपि यस्य संजातो जनकनिभो महागुणाब्धिः ॥३८॥

इस प्रकार गोपाङ्गनाओने यशोदासे कहा। इधर पुण्यात्मा गोप व्रजराज नन्दसे बोले—'गोपराज ! तुम धन्य हो ! तुमने अवश्य सत्कर्म किये हैं। जिसका पुत्र भी पिताके समान ही महान् गुणसागर हुआ है' ॥३८॥

( मालिनीच्छन्दः )

निगदितवति चेत्थं संगते तज्जनौघे व्रजपतिरधिचित्तं तर्कयामास भूयः ।
अधिगतसकलार्थः शौरिरस्मान् यदाह तदखिलमिह जातं ब्रह्मवाक्यं यथा सत् ॥३९॥

उस समागत जन-समुदायके इस प्रकार कहनेपर व्रजराज नन्द पुन मन ही मन इस प्रकार तर्क करने लगे। अहो! सम्पूर्ण अर्थोके ज्ञाता वसुदेवने हमसे जो कहा था वह सब उसी प्रकार सत्य निकला, जैसे ब्रह्मवाक्य सत्य होता है ॥३९॥

गृहीत्वाऽङ्के सुतं शान्तं यशोदान्तः पुरं गता ।
तया सार्धं गतोऽहश्च येऽन्ये तेऽपि गृहान् गताः ॥४०॥

यशोदा अपने पुत्रको गोदमे लेकर अन्त पुरमे चली गईं। उनके साथ मैं (कवि) भी वही पहुँच गया तथा जो दूसरे लोग वहाँ आये थे वे अपने-अपने घरोको चले गये ॥४०॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
गतः सप्तदशः सर्गो महाकाव्ये स्तवात्मके ॥४१॥

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे यह सत्रहवाँ सर्ग पूरा हुआ ॥४१॥



## अष्टादशः सर्गः

[ श्रीहरेर्दुग्धपानवर्णनम् । यशोदाय भगवता विश्वरूपनिदर्शनञ्च । ]

( स्रग्विणीछन्दः )

एकदा स्वाङ्क आदाय वात्सल्यतस्तं सती पाययामास दुग्धामृतम् ।
श्रीहरेः पादतो निःसृता स्वर्धुनी पाययन्ती जगन्तीव नीरामृतम् ॥१॥

जैसे श्रीहरिके चरणसे निकली हुई गङ्गा जगत्को अपना नीरामृत पिलाती है, उसी प्रकार एक दिन सती यशोदा अपने लालाको गोदमे लेकर वात्सल्य भावसे उसको अपना दुग्धामृत पिलाने लगी ॥ १ ॥

शैलतो निर्झराः कन्दरादौ यथा स्यन्दमानाः स्रवन्तीह धारोद्गमैः ।
नन्दपत्न्याः स्तनाभोगतो निःसृता दुग्धधारास्तथाऽऽप्लावयंस्तं तदा ॥२॥

जैसे पर्वतसे झरनेवाले झरने धाराके उद्गमो द्वारा कन्दरा आदिमे गिरते हैं, उसी प्रकार नन्दरानीके स्तनमण्डलसे निकली दुग्धधारायें उस समय उस बालकको आप्लावित करने लगी ॥ २ ॥

तत्पयोभिः सुधासन्निभैः सोऽर्भकः पूरितो ह्यागलं मातुरङ्के ततः ।
क्रीडति स्माऽव्ययस्तत्स्तनौ संस्पृशन् योगिभिर्हृत्तटे स्थापितो यत्नतः ॥३॥

माताके अङ्कमे विद्यमान वह बालक उसके अमृत समान मधुर दुग्धसे आकण्ठ तृप्त हो गया। अब वह अविनाशी बालक, जिसे योगियोने बडे यत्नसे अपने हृदयके भीतर स्थापित कर रक्खा है, मैयाके उन स्तनोको पकडकर खेलने लगा ॥ ३ ॥

सुन्दरं कोमलं रत्नवत्प्रोज्ज्वलं तन्मुखं नन्दपत्नी स्पृशन्ती तदा ।
पूरिताऽऽह्लादतः स्नेहवात्सल्यतः सा निरीक्ष्यैव तं तत्र मुग्धा बभौ ॥४॥

उस बालकका मुँह सुन्दर, कोमल तथा रत्नके समान प्रकाशमान था। नन्दपत्नी उस समय उसपर हाथ फेरती हुई आह्लादसे पूरित हो गयी और स्नेह-वात्सल्यसे उसे निहारती हुई मुग्ध हो उठी ॥ ४ ॥

सोऽपि लीलाविनोदी जगत्कौतुकी नन्दपत्न्या मुखं सन्निरीक्ष्यैव तत् ।
दर्शयामास तां स्वे मुखे विस्तृतं विश्वमन्तर्हितं दृश्यमेतद्विधम् ॥५॥

यह सारा जगत् ही जिसकी कौतुक है, वह लीलाविनोदी बालक नन्दपत्नीके मुखकी ओर एकटक देखने लगा। देखते ही देखते उसने यशोदाको अपने मुखके भीतर स्थित इस विशाल जगत्का दर्शन कराया ॥ ५ ॥

पञ्चतत्त्वानि तानीन्द्रियाणीश्वरं तन्मनो वस्तु तत्प्राकृतं वैकृतम् ।
तद्गुणान् स्वस्वरूपे स्थितान् सुन्दरं सा ददर्शाऽखिलांस्तन्मुखे प्रस्तुतान् ॥६॥

पांचोतत्त्व वे इन्द्रियवर्ग, उनके प्रेरक मन, प्राकृत वैकृत, उनके गुण, जो बालक के अपने स्वरूपमे स्थित एव प्रस्तुत थे, उन सबको यशोदाने सुन्दर ढङ्गसे देखा ॥ ६ ॥

सूर्यचन्द्रौ तथा वह्निवायू क्षितिं द्यां जलं ज्योतिराशा ग्रहाणां स्थितिम् ।
पर्वतांस्ता नदीरम्बुधीन् काननं सर्वमेतत्तयाऽदर्शि वक्त्रे शिशोः ॥७॥

सूर्य, चन्द्रमा, अग्नि, वायु, पृथ्वी, आकाश, जल, ज्योतिर्मय नक्षत्रमण्डल, दिशा ग्रहोकी स्थिति, पर्वत, नदियाँ, सागर, और वन—ये सारी वस्तुये नन्दरानीने अपने बालकके मुखमे देखी ॥ ७ ॥

( वियोगिनीच्छन्दः )

अवलोक्य शिशाविदं सती हरिणीशावकनेत्रयुग्मतः ।
उपजातशरीरवेपथुश्चकिता शान्तिमिता स्वरूपतः ॥८॥

हरिणीके वच्चोके समान अपनी युगल चच्चल नेत्रोसे शिशुके भीतर यह सब देखकर सती यशोदाके शरीरमे कँपकँपी छा गयी। वे चकित हो, स्वरूपसे होनेवाली शान्तिको प्राप्त हुई ॥ ८ ॥

नयने विनिमील्य सा क्षणं हृदि विन्यस्तममुं विचिन्त्य च ।
सुखमाप सती महत् पुनर्गतकामैर्मुनिभिश्च दुर्लभम् ॥९॥

सती यशोदाने क्षणभरके लिये दोनो नेत्र बन्दकर लिये। और अपने हृदयमे स्थापित उस बालकका चिन्तन करके उन्हे वह महान् सुख प्राप्त हुआ, जो निष्काम मुनियोके लिए भी दुर्लभ है ॥ ९ ॥

( वसन्ततिलकाछन्दः )

शम्भो ! गुरो ! कृतकुकर्मविपाकदोषैः संरुद्धसद्गतिरहं स्थितिमाप्तुमेनाम् ।
तस्माद्दयस्व भगवञ्छरणागतोऽस्मि तत्रैव मां नयतु, पश्यतु सा कृपा माम् ॥१०॥

( अब कवि अपने इष्टदेव शम्भुका स्मरण करके कहता है ) हे शम्भो ? हे गुरुदेव ? अपने द्वारा किए गये कुकर्मोके परिणाम दोषसे ऐसी स्थिति प्राप्त करनेमे मेरी सद्गति अवरुद्ध हो गई है। अत हे भगवन् मुझपर दया कीजिए। मैं आपकी शरणमे आया हूँ। मुझे उसी स्थितिमे पहुँचाइये। आपकी वह उदार कृपा-दृष्टि मुझपर पडे ॥ १० ॥

रक्षस्व मामज जगद्विदितं भवन्तं व्याप्तं भवेऽत्र सकलेषु सदा स्फुरन्तम् ।
दृष्ट्वैवमाशु सुखदं ह्यधुना भजन्तं हाहेत्यनीश्वरजनैरुपहास्यमानम् ॥११॥

अजन्मा प्रभो ! आप सम्पूर्ण विश्वमे विदित हैं, व्यापक हैं। समस्त पदार्थोंमे सदा आपकी ही स्फूर्ति हो रही है। आप शीघ्र ही सुख देनेवाले हैं। आपकी ऐसी महिमा देखकर मै इस समय आपका भजन करता हूँ। किन्तु अनीश्वरवादी लोग 'आहा हा हा' ! इस प्रकार हँसकर मेरा उपहास करते हैं। अत. आप मेरी रक्षा कीजिये ॥ ११ ॥

**क्रोशन्ति दुष्टपुरुषाः किल तेऽत्र काका ये मां हृदिस्थितमपीह भृशं क्षिपन्ति।**
**तेषां सुकृत्यमिदमेव तवेदमस्माद् भूया विलग्न इह, किं भगवन् ! तथास्तु ! ॥१२॥**

भगवन् ! आपने क्या कहा कि ससारमे वे दुष्ट-पुरुष निश्चय ही कौओके समान होते हैं, जो दूसरोको कोसते हैं। औरोकी तो बात हो क्या है, वे अपने ही हृदयमे विराजमान मुझ परमेश्वरपर भी अधिक आक्षेप करते हैं। उनका सुकृत्य या कुकृत्य यही है और तुम्हारा कृत्य है यह काव्य निर्माण। अत तुम उसीमे लगे रहो।' अच्छा, प्रभो ! आपकी आज्ञा शिरोधार्य है। अब ऐसा ही होगा ॥ १२ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते।**
**गतो ह्यष्टादशः सर्गो महाकाव्ये स्तवात्मके ॥१३॥**

कृष्णप्रसाद घिमिरेकी कृति इस 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे अट्ठारहवाँ सर्ग पूरा हुआ ॥ १३ ॥



# ऊनविंशः सर्गः

[ महर्षेर्गर्गस्याऽऽगमनम् । रामकृष्णयोर्नामकरणादिवर्णनञ्च । ]

( प्रहर्षिणीवृत्तम् )

धन्यास्ते विधिकुशलाः पुरोहिताद्या ये नित्यं स्थिरमतयो भवन्ति शान्ताः ।
निर्लोभा विगतमदाः परोपकारे संलग्नाः कुलपुरुषान् भजन्ति भव्यान् ॥१॥

शास्त्रीय विधिके अनुसार कर्म करने और करानेमे कुशल वे पुरोहित लोग धन्य हैं, जो नित्य सुस्थिर-बुद्धि और शान्त रहते हैं। निर्लोभ और मद-रहित होकर परोपकारमे सलग्न होते हैं और भव्य-भाववाले कुलीन पुरुषोको अपनाये रखते हैं ॥१॥

तन्मध्ये हरिगुणगानलुब्ध एको ब्रह्मर्षिर्विधिनियमादिसंस्कृतान्तः ।
गर्गोसावमितगुणैर्महातपोभिः संपन्नो रविरिव लोकचक्षुरासीत् ॥२॥

ऐसे ही पुरोहितोमे एक गर्गाचार्य थे, जो हरिगुण-गानपर लुभाये रहते थे। विधि और नियम आदिके पालनसे उनका अन्त करण शुद्ध हो गया था। वे ब्रह्मर्षि अपरिमित गुण और महान् तपोबलसे सम्पन्न थे और सूर्यदेवकी भाँति लोगोके लिए नेत्रका काम करते थे ॥२॥

येनाऽस्मिञ्जगति हरेः स्वरूपमेतद्यज्ज्योतिर्मयममलं ह्युशन्ति तज्ज्ञाः ।
ज्ञातं सत् परिलसति स्वतो ह्यबाधं ध्रौव्यैस्तैर्ग्रहगणितैश्च सौरशास्त्रैः ॥३॥

उन गर्गाचार्यसे ही इस जगत्मे श्रीहरिका स्वरूपभूत यह निर्मल ज्योतिष-शास्त्र निर्मित हुआ, जिसे विद्वान् पुरुष जाननेकी इच्छा करते हैं। वह परिज्ञात होकर ध्रुव सम्बन्धी ग्रह-गणितो तथा सौर-शास्त्रोसे बाधा रहित हो, सब ओर स्वत सुशोभित होता है ॥३॥

तज्ज्ञोऽसावतुलगुणः सुखैकधाम ज्योतिर्विद् प्रथितपुरोहितो यदूनाम् ।
सानन्दे परसुखदे शिवे सुखाब्धौ संलग्नो विहितसमाधितः प्रबुद्धः ॥४॥

वे गर्गजी उस ज्योतिषशास्त्रके ज्ञाता थे। उनके गुणोकी कही तुलना नही थी। वे सुखके एकमात्र धाम थे। ज्योतिर्विद गर्गजी यदुवशियोके विख्यात पुरोहित थे। वे आनन्दमय, परम सुखद, सौख्य-सिन्धु, शिवमे सलग्न हो, समाधिस्थ रहते थे। उस दिन वे अपनी विहित समाधिसे जाग उठे ॥४॥

ज्ञानेनाऽक्षतगतिना महर्षिणा तज्ज्ञातं यद्यदुकुल एव शौरिवीर्यात् ।
संजातो हरिरिह गोकुले वसन् स्वां सल्लीलां श्रुतिसुखदां करोति चेति ॥५॥

उन महर्षिने अप्रतिहत-गति वाले ज्ञानसे यह जान लिया कि इस समय भगवान् श्रीहरि वसुदेवके वीर्यसे यदुकुलमे ही अवतीर्ण हुए है और गोकुलमे रहते हुये अपनी श्रवण-सुखद सुन्दर लीलाका विस्तार करते हैं ॥५॥

**द्रष्टुं ताः परशुभदो मुनिर्महात्मा संभ्रान्तो द्रुतमभियाय शौरिवेश्म ।**
**दृष्ट्वैवं मुनिममलं समागतं तं पाद्यार्घ्यं समुदमुपाहरत् स शौरिः ॥६॥**

भगवान्की उन लीलाओको देखनेके लिए वे परम शुभदायक सम्भ्रान्त महात्मा मुनि द्रुतगतिसे वसुदेवके घर गये । उन निर्मल मुनिको इस प्रकार आया देख वसुदेवने बडी प्रशसाके साथ उनके लिये पाद्य-अर्घ्य आदि भेट किये ॥६॥

**साष्टाङ्गं प्रणतिततीः समर्प्य पादे स्वं वृत्तं परिणयतो निवेद्य तस्मै ।**
**तद्दुःखं ह्यपि सुतजन्मपुण्यतीर्थे सद्दानाकरणभवं समाचचक्षे ॥७॥**

तदनन्तर उनके चरणोमे बारम्बार साष्टाङ्ग-प्रणाम अर्पित करके विवाहकालसे लेकर अबतकका अपना सारा वृत्तान्त उनसे कह सुनाया साथ ही यह भी बताया कि पुत्र-जन्मरूपी पुण्यतीर्थमे मै जो उत्तमोत्तम वस्तुओका दान न कर सका, इसके लिए मुझे बडा दु ख है ॥ ७ ॥

**अश्र्वक्षस्तदनु मुनिं सभार्य ऊचे संस्कारान् प्रियसुतयोस्तदैव कर्तुम् ।**
**गन्तुं स द्रुतमथ चाऽर्थयाम्बभूव ह्यासाते प्रियतनयावुभौ च यत्र ॥८॥**

इसके बाद पत्नी सहित वसुदेवने नेत्रोमे आँसू भरकर मुनिसे अपने पुत्रोका तत्काल सस्कार करानेके लिए कहा और इस समय उनके दोनो प्रिय पुत्र जहाँ रहते थे, वहाँ शीघ्र जानेके लिए उनसे प्रार्थना की ॥ ८ ॥

**श्रुत्वैतन्मुदितमना महर्षिरेवं प्रत्यूचे तमथ चिकीर्षितं विधित्सुः ।**
**एवं स्यात्तव सुतयोः प्रियार्थमङ्ग ! ह्येषोऽहं चलित इतो व्रजेशवेश्म ॥९॥**

उनकी यह प्रार्थना सुनकर महर्षि गर्ग मन-ही-मन मुदित हो उठे । उन्होने उत्तर दिया मै तुम्हारा अभीष्ट कार्य करनेका विचार कर चुका हूँ । ऐसा ही हो । तुम्हारे पुत्रोका प्रिय करनेके लिए यह मै यहाँसे व्रजेश्वर-नन्दके भवनको चला ॥ ९ ॥

**तत्पश्चाद्विधिकुशलो हरेः प्रियोऽसौ ब्रह्मर्षिर्व्रजमगमच्च शान्तिकामः ।**
**संस्कर्तुं प्रथितगुणौ तयोः सुपुत्रौ यावास्तां हृदयगतौ समाधिकाले ॥१०॥**

तत्पश्चात् सस्कार-विधिके कार्यमे कुशल श्रीहरिके प्रिय शान्तिकामी ब्रह्मर्षि गर्ग वसुदेव-देवकीके विख्यात गुणशाली उन सुन्दर पुत्रोका जो समाधिकालमे उनकी हृदयगुफामे विराजमान थे, सस्कार करनेके लिए व्रजमे गये ॥ १० ॥

शान्तात्मा गुणनिधिरव्ययो महात्मा योगेन स्फुरितगतिः स वायुगत्या ।
संप्राप्तो द्रुतमभिपत्य नन्दसद्म यत्राऽऽस्तां पिहितगुणौ सुतौ तदीयौ ॥११॥

उनका चित्त शान्त था । गुणोकी तो वे निधि ही थे । निर्विकार महात्मा थे । उनकी गति योगशक्तिसे स्फुरित होती थी । वे वायुकी गतिसे तुरन्त जाकर उस नन्द-भवनमे पहुँच गये, जहाँ छिपे हुए गुणोवाले वसुदेवके दोनो पुत्र रहते थे ॥ ११ ॥

दृष्ट्वा तं मुनिममलं गुणैर्ज्वलन्तं सद्भाग्योदयमिव कर्मतः फलन्तम् ।
साह्लादो व्रजपतिरुद्ययौ विनम्रः `पाद्यार्घ्यैर्विहितसुपूज ऊच इत्थम् ॥१२॥

कर्मसे फलीभूत हुए सौभाग्योदयके समान गुणोंसे प्रकाशमान् उन अमलात्मा मुनिको आया देख व्रजराज नन्दको बडी प्रसन्नता हुई । उन्होने मुनिकी अगवानी की और विनम्र हो पाद्य, अर्घ्य आदिके द्वारा उनकी भलीभाँति पूजा करके उनसे इस प्रकार कहा—॥ १२ ॥

मद्भाग्योदयमभवन्मुने ! भवान् यत्संप्राप्तो भवनमहो ! मदीयमेवत् ।
जीवानां भवति यदा शुभोदयोऽत्र श्रीमन्तो ददति तदा स्वदर्शनं हि ॥१३॥

'अहो मुने ! आप जो मेरे इस भवनमे पधारे यह मेरे लिए महान् भाग्योदय हुआ । इस लोकमे जब जीवोके शुभका उदय होता है, तब आप जैसे महात्मा, अपना दर्शन देते हैं ॥ १३ ॥

तज्ज्योतिर्भगवत आश्रयोपनद्धं यच्छास्त्रं ग्रहग्रणितं बुधा भणन्ति ।
निर्मायाऽनघ ! भवता तदेव भूमौ सर्वेषामुपकृतमित्थमीश्वरेण ॥१४॥

'निष्पाप मुने ! भगवान्‌के आश्रयसे सम्बद्ध जो ज्योतिषशास्त्र है, जिसे विद्वान् ग्रहगणित कहते हैं, इस भूतलपर उसीका निर्माण करके आप ईश्वर-कोटिके महात्माने इस रूपमे समस्त प्राणियोका महान् उपकार किया ॥ १४ ॥

ब्रह्मज्ञा बुधविबुधा यदत्र सन्ति तेभ्यस्त्वं गुणगणतो महान् वरिष्ठः ।
पूर्णस्त्वं पुनरिह पूर्णकाम एकः किं कुर्यामहमुचितां भवत्सुसेवाम् ? ॥१५॥

'इस जगत्मे ब्रह्मतत्त्वके ज्ञाता जो विद्वान् और देवता हैं, आप अपने गुण-समूहसे उन सबकी अपेक्षा महान् वरिष्ठ है । यही नही यहाँ आप एकमात्र पूर्ण तथा पूर्णकाम है । मै आपकी क्या योग्य सेवा करूँ ? ॥ १५ ॥

श्रीमन्तं तदपि विभो ! निवेदयेऽहं संस्कर्तुं रुचिरतरावुभौ सुतौ मे ।
श्रेष्ठस्त्वं किल भगवन् ! गुरुर्जनानां जात्यैव स्फुरितमतिर्ददासि शिक्षाम् ॥१६॥

'प्रभो ! तथापि मैं श्रीमान्से यह निवेदन करता हूँ कि आप मेरे इन दो सुन्दरतर पुत्रोंका संस्कार कराइये। 'भगवन् ! आप जातिसे ही सब वर्णोंके लोगोंके श्रेष्ठ गुरु हैं। आपकी बुद्धि निर्मल एवं प्रकाशपूर्ण है। आप सबको उत्तम शिक्षा देते हैं' ॥ १६ ॥

**इत्युक्त्वा व्रजपतिरीश्वरं मुनिं तं क्लिन्नाक्षश्चरणगतो रुरोद भक्त्या ।**
**शान्तात्मा मुनिरपि चोन्नमय्य पश्चात्तं चोचे मुदितमनाः प्रसन्नमित्थम् ॥१७॥**

उन ईश्वर-कोटिके मुनिसे ऐसा कहकर व्रजराज नन्द उनके चरणोंमें गिर पड़े। उनके नेत्रोंसे प्रेमके आँसू प्रवाहित होने लगे और वे भक्तिके आवेशसे रो पड़े। तब उन शान्तचेता मुनिने भी उन्हें उठाकर मुदितमना हो, उन प्रसन्न नन्दसे इस प्रकार कहा—॥ १७ ॥

**सत्यं तद् व्रजजनराज ! यद् ब्रवीषि विप्राः स्मो भुवनजना समाः समा नः ।**
**किन्त्वेतत्कथय पुरोहितो यदूनां कुर्यां वा कथमिह वैश्यनामकर्म ? ॥१८॥**

'व्रजजनराज ! तुम जो कहते हो, वह सब सत्य है। हम ब्राह्मण हैं। हमारे लिए इस जगत्के सभी मनुष्य समान हैं किन्तु यह तो बताओ मैं यदुवंशियोंका पुरोहित होकर यहाँ किस प्रकार वैश्यका नामकरण संस्कार कराऊँ ॥ १८ ॥

**कुर्यांश्चेत्तदपि च संस्कृतौ त्वदीयौ तौ बालौ नृपविदितोऽहमेव तत्र ।**
**दण्ड्यः स्यां तव च भवेदनर्थ इत्थं देवक्या उदरभुवावुभौ स्मरेत् सः ॥१९॥**

'यदि मैं कराता हूँ भी तो मेरे द्वारा संस्कारयुक्त हुये तुम्हारे इन बालकोंको राजा कंस देवकीके उदरसे उत्पन्न हुआ समझेगा। वह मुझे भी अच्छी तरह जानता ही है। 'मैंने संस्कार कराया है' यह समझकर वह मुझे तो दण्ड देगा ही, ऐसा होनेपर तुम्हारा भी अनर्थ होगा' ॥ १९ ॥

**गुप्तेऽस्मिन् व्रजपरिधौ गृहान्त एव संच्छन्नो द्विजविधिना स्वशास्त्रदृष्ट्या ।**
**कर्मैतत् कुरु मुनिराज ! शान्तिदायि ह्यत्रत्यैरपि च जनैरलक्षितस्त्वम् ॥२०॥**

तब नन्दने कहा—'मुनिराज ! इस व्रज मण्डलमें जो सब ओरसे सुरक्षित रहेगा, एक घरके भीतर छिपकर आप द्विजोचित विधिसे अपनी शास्त्रीय दृष्टिके अनुसार यह शान्तिदायक कर्म कीजिये। ऐसा करते समय यहाँके निवासी भी आपको नहीं देख सकेंगे' ॥ २० ॥

**तेनोक्तं प्रियवचनं निशम्य चेत्थं संस्कर्तुं मुनिरभवन्मुदा प्रवृत्तः ।**
**सर्वज्ञो विधिकुशलः सुमन्त्रदर्शी संस्कारान् द्विजविधितस्तयोश्चकार ॥२१॥**

नन्दके कहे हुए इस प्रिय वचनको सुनकर मुनि प्रसन्नता पूर्वक संस्कार-कर्ममें प्रवृत्त हुए। वे सर्वज्ञ और विधिकुशल तो थे ही उत्तम मन्त्रोंके द्रष्टा भी थे। उन्होंने द्विजोचित-विधिसे उन बालकोंके संस्कार-कर्म सम्पन्न किये ॥ २१ ॥

तत्पश्चाद् ग्रहगणितं विलोक्य सम्यग् ज्योतिर्विन्मुनिवर एष आह भूयः ।
दम्पत्योः प्रियसुतयोस्तयोः समक्षं सर्वज्ञश्चकित उभौ निधाय चाऽङ्के ॥२२॥

तत्पश्चात् उन ज्योतिष-शास्त्रके ज्ञाता सर्वज्ञ मुनिवर गर्गने ग्रहगणितका सम्यक् अवलोकन करके चकित हो दोनो बालकोको अपनी गोदमे विठाकर उन नन्द-दम्पतिके समक्ष जिन्हे अपने पुत्र बहुत प्रिय थे, इस प्रकार कहा—॥ २२ ॥

गौराङ्गःशिशुरतुलो हि रौहिणेयो रामोऽयं रमयति सद्गुणैर्गुणज्ञान् ।
सद्भावैः प्रियसुहृदश्च योगिनोऽपि प्रेम्णाऽस्मिन् विशदगतौ शिशौ रमन्ते ॥२३॥

'व्रजराज ! जिस बालकका अग गौरवर्णका है और जिसकी कही तुलना नही है, ऐसा यह रोहिणीकुमार अपने सद्गुणोसे गुणज्ञोका मन अपनेमे रमाता रहेगा, इसलिये इसका नाम 'राम' होगा। इस उज्वल स्वरूपवाले शिशुमे प्रिय सुहृद्जन और योगीजन भी सद्भाव तथा प्रेमसे रमण करते हैं ॥ २३ ॥

बालेऽस्मिन् बलमपि विद्यते ह्यतुल्यं तेनाऽसौ बल इति नाम कर्मणैति ।
जात्याऽयं यदुकुलवीरसाम्यमाप्य तत्संकर्षणमभिधानमेति भूयः ॥२४॥

'इस बालकमे बल भी ऐसा है, जिसकी कही समता नही है। अतः यह अपने बल-साध्य कर्मके कारण लोकमे 'बल' नामसे भी विख्यात होगा। यह जातिसे यदुकुल वीरोकी समताको प्राप्त होकर पुन' 'सकर्षण' नाम धारण करेगा ॥ २४ ॥

सर्वज्ञो मुनिवर एष उच्चभावोऽगोपायद्बलमिह सद्गुणैरनन्तम् ।
मायायास्तदनु हरेश्च भावबोधान्मन्वानः प्रियहितमद्य तावतैव ॥२५॥

भूत, भविष्य और वर्तमान तीनो कालोके ज्ञाता, सर्वज्ञ तथा उच्चभाव वाले मुनिवर गर्गने आज इतना ही फलादेश करके इसीसे नन्द-दम्पतिका प्रिय और हित मानकर सद्गुणोकी दृष्टिसे जो अनन्त हैं, उन बलरामजीके विषयमे शेष बातें छिपा ली। साथ ही नन्दके यहाँ मायाका प्राकट्य तथा उसके बाद श्रीहरिके आविर्भाव वाली बात भी उन्होने गुप्त ही रक्खी ॥ २५ ॥

बालोऽयं नवजलपूर्णमेघकृष्णः स्वां कीर्तिं प्रथयति नन्द ! कृष्णनाम्ना ।
लोकेऽस्मिन् प्रथितगुणो दयादिभिः स्वान् सानन्दान्मुदितहृदः करोत्यभीक्ष्णम् ॥२६॥

तदनन्तर वे फिर बोले—'नन्द ! यह जो नूतन जलधरके समान श्यामसुन्दर बालक है, 'कृष्ण' नामसे अपनी कीर्तिका विस्तार करेगा। इसके गुण प्रख्यात होगे तथा इस लोकमे अपने दया आदि सद्गुणो द्वारा स्वजनोको सदा आनन्दमग्न एव प्रमुदित-चित्त करता रहेगा ॥ २६ ॥

त्रैवर्ण्यं त्वनुयुगमादितः प्रगृह्य ह्याश्चर्यं प्रथितबलेन येन भूयः ।
वैवर्ण्यं ह्यवगमिताः प्रजा व्रजेश ! स्वेधाम्नि प्रचुरगुणेन कर्मणैव ॥२७॥

'व्रजेश्वर ! इस विख्यात बलशाली बालकने सृष्टिके प्रारम्भसे ही प्रत्येक युग ( सत्य, त्रेता और द्वापर ) मे क्रमश श्वेत, पीत और कृष्ण—ये तीन वर्ण धारण किये, तथापि आश्चर्य है कि इसने प्रचुर गुण और कर्मके द्वारा अपने परमधाममे ले जायी गयी समस्त प्रजाको वैवर्ण्य ( वर्णहीनता ) की प्राप्ति करायी है ॥ २७ ॥

रक्तोऽभूदिह गुणतो ह्यसङ्ख्यवारं नैर्गुण्ये कृतरतिरप्यसौ विनोदी ।
पीतत्त्वं बहुवपुषां त्वयं सशुक्लं धृत्वाऽहो ! शुभमकरोच्च सज्जनानाम् ॥२८॥

'अहो ! निर्गुणतामे अनुराग रखनेवाला यह विनोदी बालक इस ससारमे गुणसे असख्य बार रक्त-वर्ण ( रजोगुणी ) हो चुका है। बहुत-से शरीरोमे इसने शुक्लवर्णता ( सत्त्वगुणता ) स्वीकार की है तथा अनेक देहोमे पीतवर्णता ( मिश्रित-वर्णता ) धारण करके इसने सज्जनोका कल्याण किया है ॥ २८ ॥

सोऽयं भो ! खलमतिभिः कुकर्मिभिश्च पिष्टान् स्वाञ्छ्रुतिसुहृदश्च पातुमिच्छन् ।
कृष्णोऽभूदथ बहुधा प्रियं विधित्सुः स्वैः स्वामिर्हृतहृदयोऽधुनाऽत्र तेषाम् ॥२९॥

'हे व्रजराज ! वही यह बालक दुष्ट-बुद्धिवाले कुकर्मी जनो द्वारा पीसे गये अपने भक्तजनो तथा वेदानुरागी महापुरुषोका सरक्षण करनेकी इच्छासे उन सबका बहुधा प्रिय करनेके लिए उद्यत हो कृष्णवर्णका हो गया है। इस समय इसके प्रिय सुहृदो तथा प्रिय-जनोने इसके मनको हर लिया है ॥ २९ ॥

प्राक् शौरेर्गुणगणतः प्रसन्न एष पुत्रोऽभूद् व्रजजनराज ! देवकीतः ।
तस्माद् द्राक् प्रथितगुणं जना वदन्ति तन्नाम्ना विदितममुं च वासुदेवम् ॥३०॥

'व्रजराज ! पहले कभी यह वसुदेवके गुण-समुदायसे प्रसन्न होकर वसुदेव देवकीका पुत्र हुआ था, अत लोग इस विख्यात गुणशाली कुमारको उन्हीके नामसे प्रसिद्ध करते हुए 'वासुदेव' कहने लगे ॥ ३० ॥

यन्नाम्नां धृतगुणकर्मणां बहुत्वाच्चाऽऽनन्त्यादिह मनुजैरगण्यमस्ति ।
दैवज्ञोऽहमपि यथार्थतस्तान् संख्यातुं विफल इमे जनास्तु केऽत्र ? ॥३१॥

'धारण किये गये गुण और कर्मोसे युक्त इसके नाम इतने अधिक या अनन्त हैं कि मनुष्य उनकी गणना नही कर सकते हैं। यद्यपि मै दैवज्ञ ( ज्योतिषी ) हूँ तथापि मै भी उन नामोकी यथार्थ गणनामे सफल नही हो सकता। फिर इन साधारण लोगोकी क्या बिसात है, जो इसके नामोकी गणना कर सके ॥ ३१ ॥

एतेनाऽसमगुणिना त्वराजकेऽस्मिन् क्रूरास्ते श्रुतिबुधनाशमीहमानाः ।
दुर्वृत्ताः कुपथगदस्यवो नृशंसा विध्वस्ता ह्यनुयुगमन्तकेन यद्वत् ॥३२॥

'इस अनुपम गुणशाली नन्द-कुमारने अराजक-कालमे वेदो और विद्वानोका नाश चाहनेवाले क्रूर, दुराचारी और कुमार्गगामी नृशंस दस्युओको प्रत्येक युगमे इस प्रकार नष्ट किया है, जैसे यमराजने ही उन सबका नाश कर दिया हो ॥ ३२ ॥

गोगोपान् पुनरिह गोपिकाः समग्रास्तान् सर्वान् स्वपदरतांश्च जीवमात्रान् ।
स्वप्रेम्णाऽनवरतमव्ययोऽर्भकोऽयं ह्युद्धर्ताऽतुलविषमेऽपि कष्टकाले ॥३३॥

'यह अविनाशी बालक अनुपम विषम सकट-कालमे भी गौओ, गोपो, समस्त गोपियो तथा अपने चरणानुरागी सम्पूर्ण जीवोका भी निरन्तर प्रेमसे ही उद्धार करता रहेगा ॥ ३३ ॥

( वसन्ततिलकावृत्तम् )

तस्माद् व्रजेश ! गुणकर्मबलैः सुबुद्ध्या नारायणांशममुमुच्चतरं जगत्याम् ।
रक्षेस्त्वमत्र सततं प्रियमात्महेतुं नानाविधाभिरुपयुक्तसुयुक्तिभिश्च ॥३४॥

'इसलिए व्रजेश्वर ! अपने गुण, कर्म, बल और उत्तम बुद्धिसे भगवान् नारायणके अशभूत इस उच्चतर एव प्रिय बालककी, जो स्वय ही अथवा तुम्हारे अपने अभ्युदयका हेतु है, नाना प्रकारकी उपयुक्त एव उत्तम युक्तियोसे यहाँ सदा रक्षा करो' ॥ ३४ ॥

सम्पाद्य नामकरणादि समस्तकर्म निर्दिश्य सद्गुणममुष्य शिशुद्वयस्य ।
संस्थाप्य तौ व्रजपतेर्वितते शुभाऽङ्के गर्गो जगाम निजधाम विलोकयंस्तौ ॥३५॥

इस प्रकार गर्गाचार्यने उन दोनो शिशुओके नामकरणादि समस्त सस्कार-कर्मका सम्पादन करके उनके गुणोको भी बताकर व्रजराजके विस्तृत शुभ अङ्कमे उन दोनोको बिठा दिया और स्वयम् उन दोनोपर दृष्टिपात करके अपने घरको चले गये ॥ ३५ ॥

गोष्ठाद्बहिः स मुनिराज उपागतोऽपि संस्मृत्य कृष्णशिशुकर्म तथा गुणादि ।
आह्लादितोऽभवदथाऽस्य शरीरसङ्गात् जातश्च सोत्पुलक आत्मविलीनवृत्तिः ॥३६॥

गोष्ठ ( व्रज ) से बाहर आनेपर भी मुनिराज गर्ग उस कृष्ण-वर्ण वाले शिशुके कर्म तथा गुण आदिका स्मरण करके आह्लादित हो उठे और उसके शरीरका सग प्राप्त हुआ था। इसलिए उनके अङ्गोमे रोमाञ्च हो आया था, उनकी वृत्ति आत्मामे विलीन हो गयी थी ॥ ३६ ॥

तत्रैव मग्न ऋषिराज उदारभावात्तं ध्यानमार्गमवलम्ब्य विधाय हृत्स्थम् ।
योगं समाविशदनेन गृहीतचेताः संध्यायमान उदरस्थितविश्वलीलम् ॥३७॥

उसी शिशुकी यादमे डूबे हुए ऋषिराजने उदार-भावसे ध्यानमार्गका आश्रय ले उसे अपने हृदय-मन्दिरमे बिठा लिया। उसने उनके चित्तको अपने वशमे कर लिया था, सम्पूर्ण विश्व-लीला उस शिशुके उदरमे विद्यमान थी, उसका सम्यग् ध्यान करते हुए वे समाधिस्थ हो गये ॥ ३७ ॥

**त्रैकालिकीं गतिममुष्य शिशोर्विभाव्य विज्ञाय तत्र सकले सकलां यथेष्टम् ।**
**उत्थाय कालकलया स समाधितोऽपि तद्वीक्षणे पुनरहो ! मन आदधिष्ट ॥३८॥**

उसी सबीज समाधिमे उस शिशुकी त्रिकाल-व्यापिनी गतिका चिन्तन करके सब कुछ यथेष्ट रूपसे जानकर कुछ कालमे वे उस समाधिसे भी जाग उठे और पुन उनके मनमे उस शिशुके दर्शनका विचार उठा ॥ ३८ ॥

**वक्ष्यन्ति किं व्रजजनाः पुनरीक्षणे मां नन्दस्य चाऽस्य च भवेदशुभं ह्यनेन ।**
**इत्थं विचिन्त्य जय कृष्ण ! विभो ! ब्रुवंस्तं शान्तो जगाम मुनिराज उपात्तधैर्यः ।३९।**

परन्तु उन्होने सोचा, 'यदि मै पुनर्दर्शनके लिए जाऊँ तो व्रजके लोग मुझे क्या कहेंगे ? ऐसा करनेसे नन्दका तथा उनके उस शिशुका भी अहित होगा'। ऐसा विचार कर वे शान्तचित्त वाले मुनिराज धैर्य धारण करके 'जय कृष्ण ! विभो' ! इत्यादि रूपसे नाम-कीर्तन करते हुए वहाँसे चले गये ॥ ३९ ॥

**अद्यैव मे जनुरभूत्सफलं धरायां जातं तपः कुलमदोऽध्ययनं च धन्यम् ।**
**आचार्यता यदुकुलस्य भृशं प्रपूर्णा चैतद्विचार्य मुनिना विहितः समाधिः ॥४०॥**

'आज ही भूतलपर मेरा जन्म सफल हुआ, मेरी तपस्या, मेरा कुल और मेरा अध्ययन—सब धन्य हो गये। आज यदुकुलकी मेरी आचार्यता परिपूर्ण हो गयी'। ऐसा विचार करते हुए मुनिने समाधि लगा ली ॥ ४० ॥

**ब्रह्मकल्पान्मुनेरित्थं भविष्यं पुत्रयोर्द्वयोः ।**
**श्रुत्वा व्रजेश्वरो मेने ह्यात्मनः सफलं जनुः ॥४१॥**

साक्षात् ब्रह्माजीके समान ज्ञानी गर्ग-मुनिसे इस प्रकार अपने पुत्रोका भविष्य फल सुनकर व्रजराज नन्दने अपना जन्म सफल माना ॥ ४१ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**सर्गोऽयमूनविंशोऽगान् महाकाव्ये स्तवात्मके ॥४२॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे यह उन्नीसवाँ सर्ग पूरा हुआ ॥ ४२ ॥

# विंशः सर्गः

[ अदृष्टतत्त्वस्य महत्त्वनिर्देशनम् । भगवतो जानुधृष्ट्या क्रीडनादि । ]

( वंशस्थेन्द्रवंशयोरुपजातिवृत्तम् )

**अदृष्टतत्त्वं भवनामरूपतो भिन्नं सदाऽदृष्टपरं महत्तरम् ।**
**न वेद यत् कश्चिदपीह वस्तुतो यो वेत्ति तथ्येन भवत्यसौ हि तत् ॥१॥**

अदृष्टतत्त्व ( ब्रह्म ) अदृष्ट ( प्रारब्ध ) से परे हैं तथा ससारके नाम और रूपसे सर्वथा भिन्न है। वह महान्से भी महान् है। उसे यहाँ यथार्थरूपसे कोई नही जानता है। जो तत्त्वत उसे जान लेता है, वह वही हो जाता है ॥ १ ॥

**कालात्मनाऽनेन कृतं सुदुष्करं विश्रूयते ध्यानपथाऽनुभूयते ।**
**जगत् सदैवाऽमिततेजसाऽमुना विपाच्यते हन्त ! जनैश्च दृश्यते ॥२॥**

कालरूपसे उसके द्वारा जो दुष्कर कर्म किया गया है, उसे केवल सुना जाता है या ध्यानमार्गसे अनुभवमे लाया जाता है। आश्चर्य है कि उस अमित तेजस्वी अदृष्ट या कालके द्वारा यह जगत् सदा ही पकाया जाता है और लोगोको यह तथ्य दिखायी देता है ॥ २ ॥

**तदेव चेशो हि विगीयते बुधैर्यत् कृष्ण आसीदधुना व्रजक्षितौ ।**
**आत्मानमेवाऽत्र विपाचयन्नसौ स्वानां पुरः संववृधे तदा गृहे ॥३॥**

विद्वान् लोग उसीको 'सर्वेश्वर' कहते है। वही इस समय व्रजभूमिमे 'कृष्ण' रूपसे प्रकट हुआ है। यहाँ अपने आपको ही परिपाकका विषय बनाता हुआ वह ईश्वर उस समय नन्दभवनमे स्वजनोंके समक्ष प्रतिदिन बढने लगा ॥ ३ ॥

**विन्यस्य भूमावतिशोभनौ भुजौ विघृष्य रम्यं निजजानुनी उभे ।**
**विलोक्य पश्चात्सदयं शनैः शनैः प्रलोभयन् स्वान् विजहार माधवः ॥४॥**

माधव श्रीकृष्ण भूतलपर अपने दोनो सुन्दर हाथोको रखकर दोनो घुटनोको रगडते हुए पीछेकी ओर सदय दृष्टिसे देख-देखकर स्वजनोका मन लुभाते हुए धीरे-धीरे चलने लगे ॥ ४ ॥

**रत्नोज्ज्वलैर्भूषणभूषितैः शुभैः स्वाङ्गैःस्फुरद्भिः परितोऽवभासयन् ।**
**व्रजे स बभ्राम बलान्वितो जनैः प्रशस्यमानो गुणरूपतो ज्ज्वलन् ॥५॥**

उनके सुन्दर अङ्ग भूषणोसे भूषित थे तथा रत्नोकी उज्ज्वल प्रभासे जगमगा रहे थे। उनके द्वारा चारो ओर प्रकाश बिखेरते हुए वे बलराम सहित गोष्ठभूमिमे विचरने लगे। वे अपने गुण तथा रूपसे प्रकाशमान थे और वहांके लोग उनकी भूरि-भूरि प्रशंसा करते थे ॥ ५ ॥

यदैव काञ्च्यङ्गदनूपुरादयो त्यजन्ति कर्णप्रियशिञ्जितस्वनम् ।
तमेव विश्रुत्य भृशं मनोहरं बभौ स बालश्चकितः स्वयं तदा ॥६॥

जब करधनी, बाजूबन्द और नूपुर आदि आभूषण कानोको प्रिय लगनेवाली झनकार फैलाते थे तब उस अत्यन्त मनोहर ध्वनिको सुनकर वह बालक उस समय स्वय चकित हो उठता था ॥ ६ ॥

आश्रित्य मार्गं स्वगृहोपसङ्गतं जनेषु गच्छत्स्वभितः प्रतिक्षणम् ।
निरीक्ष्य तान् मुग्धमना मनागसौ स्वजानुघृष्ट्याऽनुसरन् द्रुतं ययौ ॥७॥

उसके अपने घरसे सटे हुए मार्गका अवलम्बन करके लोग जब प्रतिक्षण इधर-उधर आते-जाते थे तो उनकी ओर देखकर कुछ मुग्ध-चित्त हुआ वह बालक अपने घुटनोके बल-पर तत्काल उनके पीछे पीछे जाने लगता था ॥ ७ ॥

ते यात्रिणः श्यामलकान्तिमद्भुतं बालं निरीक्ष्याऽनुसरन्तमात्मनः ।
यदा जिघृक्षन्ति तदीयगौरवात्तदा निवृत्तोऽपि स भीतवद्बभौ ॥८॥

वे यात्री उस श्यामल-कान्ति वाले अद्भुत बालकको जब अपने पीछे-पीछे आते देखते और उसके गौरवसे आकृष्ट हो उसे पकड कर गोदमे उठा लेनेकी इच्छा करते तब वह उनसे डरा हुआ-सा पीछेकी ओर लौट पडता था। इस प्रकार उसकी बडी शोभा होती थी ॥ ८ ॥

उपेक्षिता इत्थमनेन यात्रिणो ह्युपेक्षितस्तैः स पुरा भृशं यतः ।
विचार्य चैतद्विबुधाः स्वया धिया तत् कृष्णतत्त्वं भजताऽत्र नित्यशः ॥९॥

इस प्रकार वह उन यात्रियोकी उपेक्षा कर देता था जब कि यात्रियो द्वारा स्वय भी उपेक्षित हो चुका था। विज्ञ जनो! इस प्रकार अपनी बुद्धिसे चिन्तन करते हुए आप लोग नित्य प्रति उस श्रीकृष्ण तत्त्वका भजन करे ॥ ९ ॥

सैषा प्रतिज्ञाऽस्ति तदस्य मां जना यथा भजन्तीह तथाऽहमप्यमून् ।
भजामि, गीतासु विगीयतेऽमुना स्मरध्वमन्तेऽत्र च लप्स्यथेप्सितम् ॥१०॥

उसकी यह प्रतिज्ञा है—'जो जिस प्रकारसे मेरा भजन करते हैं, उनका उसी प्रकारसे मै भी भजन करता हूँ'। उसकी की हुई प्रतिज्ञा आज भी गीतामे गायी जाती है। अत.

सदा यहाँ उसका स्मरण-चिन्तन करे। अन्तमे तुम्हे अपना अभीष्ट मनोरथ प्राप्त हो जायगा ॥ १० ॥

**ततो निवृत्तेन तथैव गच्छता बालेन विज्ञानवताऽमुना सता ।**
**गतं तदाऽहो ! व्रजकर्दमादिषु पश्यत्सु चात्मीयजनेषु सस्पृहम् ॥११॥**

अहो ! उसी प्रकार लौटता और किसीके पीछे जाता हुआ वह सत्स्वरूप विज्ञानवान् बालक व्रजकी कीचड आदिमे भी चला जाता था, उस समय आत्मीयजन बडी स्पृहासे उसकी ओर देखते रहते थे ॥ ११ ॥

**तौ श्यामरामौ विशदस्मितौ सदा प्रशस्यमानौ स्वजनैः समन्ततः ।**
**अगच्छतां हन्त ! विनोदिनौ भृशं गोमूत्रपूर्णेऽपि लघौ ह्रदे ततः ॥१२॥**

उज्ज्वल हासकी छटा विखेरते हुए उन राम और श्याम दोनो बालकोकी सब ओर विद्यमान आत्मीय जन बडी प्रशसा करते थे। खेद है कि वे दोनो विनोदी बालक एक दिन गोमूत्रसे लबालब भरे हुए एक छोटे-से गड्ढेके पास चले गये ॥ १२ ॥

**दृष्ट्वैव तौ दुष्करकर्मकारिणौ तन्मातरौ ज्ञावपि भीतया धिया ।**
**तत्रोपसृत्यैव चलत्कुचौ द्रुतं संस्थापयामासतुरङ्क आदरात् ॥१३॥**

वहाँ जाते हुए उन दुष्कर कर्म करनेवाले दोनो बालकोको देखते ही उनकी दोनो माताएँ भयभीत हो हिलते स्तनोके साथ दौडकर उनके पास पहुँच गयी और उनको बड़े आदरसे अपनी गोदमे ले लिया ॥ १३ ॥

**स्नानेन पश्चाद्विमलौ विधाय तौ नीले सुपीते परिधाप्य वाससी ।**
**प्रोज्ज्वल्य भालं तिलकक्रियादिभिरलङ्कृतौ मातृभिरेव रेजतुः ॥१४॥**

फिर नहला धुलाकर स्वच्छ करके उन्हे क्रमशः नीले और पीले दो-दो सुन्दर वस्त्र पहनाये और तिलक आदि करनेके द्वारा उनके ललाटको उद्भासित करके माताओने उन्हे आभूषण धारण कराये। फिर उन दोनोकी बड़ी शोभा होने लगी ॥ १४ ॥

**संस्थाप्य चाऽङ्के तत उत्सुकावुभौ ते मातरौ स्वीयसुधासमं पयः ।**
**व्यपाययेतां च तयोः समुज्ज्वलं मुखं निरीक्ष्यैव मणिप्रभे मुदा ॥१५॥**

तदनन्तर स्तनपानके लिए उत्सुक उन दोनो बालकोको अकमे लेकर दोनो माताये अपना सुधाके समान मधुर दूध पिलाने लगी। उन दोनोके मुख मणिके समान प्रकाशमान थे। उन्हे देखकर माताओको बडी प्रसन्नता होती थी ॥ १५ ॥

**तदैव ताभ्यां शिशुवक्त्रयोस्तयोर्व्यदर्शि शोभा रदनैः समुज्ज्वला ।**
**उद्दीप्तचन्द्रे नभसि ग्रहावलीर्विशोभमाना शरदीव निर्मला ॥१६॥**

उसी समय उन्होने उन शिशुओके मुखोमे दाँतोसे प्रकाशमान शोभा देखी। मानो शरद्कालमे उद्दीप्त चन्द्रमण्डलसे युक्त आकाशमे निर्मल ग्रहपंक्ति सुशोभित हो रही हो ॥ १६ ॥

संस्थाप्य भूमौ बहुधाऽऽगलं पयः पीत्वा सुतृप्तौ स्वसुतावुभौ ततः।
न्यसीदतां तत्र गृहान्तरे पुनः समागताभिर्महिलाभिरन्वितौ ॥१७॥

वे दोनो बच्चे बहुधा दूध पीकर आकण्ठ तृप्त हो गये। तब उन दोनोको धरतीपर बिठाकर दोनो मातायें घरके भीतर आई हुई महिलाओके साथ बैठ गईं ॥ १७ ॥

तदन्तरं प्राप्य मनोहराः कथाः कृत्वा विमुग्धासु सतीषु तास्वथ।
बालावितस्तौ परदृष्टिवञ्चकौ बहिर्गताबाशु विघृष्य जानुनी ॥१८॥

यह अवसर पाकर जब वे सती-साध्वी महिलायें उन बालकोके मनोहर कथा कह-सुनकर मुग्ध हो गईं, उसी समय इधर वे दोनो बालक दूसरोकी दृष्टि बचाकर अपने घुटने घिसते हुए तत्काल बाहर निकल गये ॥ १८ ॥

गृहाङ्गणे स्वे परितः समुज्ज्वले शरीरपातं कृतखेलनक्रियम्।
दृष्ट्वैव गोवत्सगणं तदाऽप्यहो! बभूवतुस्तौ मुदिताननौ भृशम् ॥१९॥

सब ओरसे साफ-सुथरे अपने घरके आँगनमे उन्होने देखा—गायोके बछडे खेलते हुए दौड लगा रहे हैं। यहाँतक कि वे गिर-गिर पडते हैं। उस समय यह सब देखते ही वे दोनो शिशु अत्यन्त प्रसन्न होते थे और उनके मुखोपर हास्यकी छटा छिटक जाती थी ॥ १९ ॥

ततस्त्विमौ विश्वविमुग्धकारिणौ ब्रह्मेश्वरौ श्यामलगौरवर्णिनौ।
उपेत्य पश्चात् प्रियवत्सयोर्द्वयोर्गृहीतवन्तौ सममेव बालधी ॥२०॥

तदनन्तर विश्वको विमोहित करनेवाले ब्रह्म और ईश्वररूप इन दोनो श्याम-गौर बालकोने पीछे-पीछे जाकर दो प्यारे बछडेकी पूँछे एक साथ ही पकड ली ॥ २० ॥

इतः स्वपुच्छग्रहणेन विस्मितौ स्पर्शेन लोकाभयदेन बोधितौ।
वत्सौ ततस्तावपि बालकाविमौ प्रगृह्य सार्धं ययतुर्द्रुतं प्लुतम् ॥२१॥

इधर अपनी पूँछ पकडे जानेसे चकित हुए बछडे उन दोनोके लोकाभयदायी स्पर्शसे सुखका अनुभव करते हुए वे इन बालकोको साथ लिए दिए द्रुतगतिसे छलाग लगाने लगे ॥ २१ ॥

आश्चर्यमासीन्नितरां कृतच्छलौ बालौ यदा तत्यजतुर्न पुच्छके।
वेगाद्भ्रमन्तौ मृदुवत्सकावपि व्यतिष्ठतां नैव यदा तदाऽङ्गणे ॥२२॥

उस समय बडे आश्चर्यकी बात यह हुई कि वे छलसे शिशुरूपधारी बालक उस अवस्थामे भी उन बछडोकी पूँछे छोड न सके। और वेगसे घूमते हुए वे कोमल बछडे भी वहाँ आँगनमे कही खडे नही हुए ॥ २२ ॥

**अव्यक्तरावौ कृतलीलया शिशू स्नेहात्तयोश्चुक्रुशतुर्मिथस्वतः ।**
**वत्सौ शिशुस्नेहभरार्दितावितश्चक्रन्दतुर्भो ! त्यजतामिति स्वतः ॥२३॥**

लीलासे शिशु बने हुए वे बालक उन बछड़ोके स्नेहसे परस्पर अव्यक्त शब्दमे चिल्लाने लगे। मानो कह रहे हो–बछडो ! ठहर जाओ। इधर उन शिशुओके प्रति स्नेहके भारसे पीडित हुए वे बछडे भी अव्यक्त बोलीमे क्रन्दन करने लगे। मानो कहते हो—बालको ! तुम हमे छोड दो ॥ २३ ॥

**अन्योन्यलीलामयखेलनेऽप्यहो ! सञ्जात उच्चैः स्वन उत्थितस्तदा ।**
**श्रुत्वा तमत्र स्त्रिय आगतास्तयोर्लीलामपश्यन् स्वत आतया दृशा ॥२४॥**

परस्पर किए गये लीलापूर्वक उस खेलमे बडे जोरसे कोलाहल प्रकट हुआ। उसे सुनकर घरकी स्त्रियाँ वहाँ आ गईं और आर्त-दृष्टिसे उन बालकोके खेल देखने लगी ॥ २४ ॥

**द्रुतं प्रगृह्यैव शुभा व्रजस्त्रियः संस्थापयामासुरिमौ सुखं पुनः ।**
**तौ पाययामासतुरङ्क आदराद्विन्यस्य पश्चाच्छिशुमातरौ पयः ॥२५॥**

फिर सुन्दरी व्रजाङ्गनाओने बडे वेगसे दौडकर इन दोनो बछडोको सुख-पूर्वक खडा किया। तत्पश्चात् शिशुओकी माताएँ उन्हे आदरपूर्वक अङ्कमे लेकर अपना दूध पिलाने लगी ॥ २५ ॥

**मुखश्रिया दीप्तमुखो मणिप्रभः कृष्णोऽर्भकोऽसौ विरराज तत्क्षणे ।**
**कर्पूरगौरोऽपि शिशुः स्वमातृभिर्निरीक्षितः सञ्छुशुभेऽमुना सह ॥२६॥**

उस समय नीलमणिके समान कान्तिमान् और उज्वल मुखवाला वह साँवला बालक अपने मुँहकी शोभासे अत्यन्त उद्भासित हो रहा था। उसके साथ ही कपूरके समान गोरे रगवाला वह शिशु भी अपनी माताओ द्वारा देखा जाता हुआ बडी शोभा पा रहा था ॥ २६ ॥

**नन्दालये तादृशमद्भुतस्वनं श्रुत्वा स्त्रियोऽप्यन्यगृहात् समागताः ।**
**समुत्सुकास्तौ ददृशुः सुखं स्थितौ मनोहरन्तौ प्रियबालचेष्टया ॥२७॥**

नन्दके घरमे वैसा अद्भुत कोलाहल सुनकर अन्य घरोसे भी स्त्रियाँ उत्सुक हो वहाँ आ पहुँची। आकर उन्होने देखा कि अपनी प्यारी-प्यारी बाल-चेष्टाओसे सबका मन हर लेनेवाले वे दोनो बालक वहाँ सुखसे विराजमान हैं ॥ २७ ॥

तनश्च चक्रुर्विमलाः कथाः स्त्रियः स्वोत्सङ्ग आधाय शिशू क्रमेण तौ ।
मुदा निरीक्षयन्त्य इमौ सुखावहौ प्रलोभमानौ गुणगौरवैश्च ताः ॥२८॥

तब सभी स्त्रियाँ क्रमश उन दोनो शिशुओको गोदमे ले-लेकर निर्मल कथा-वार्ता कहने सुनने लगी। अपने गुण-गौरवसे सबको लुभा लेनेवाले इन दोनो सुखदायी बालकोको वे बडे हर्षसे निहारती थी ॥ २८ ॥

इत्थं कालात्मनाऽनेन जगत्पाचयता सदा ।
अपाचि स्वयमात्माऽहो ! स्वानाकर्षयता गुणैः ॥२९॥

इस प्रकार कालरूपसे सदा जगत्को पचानेवाले और अपने गुणो द्वारा स्वजनोके चित्तको आकर्षित करनेवाले इस बालकने अपने आपको ही पका लिया—शिशुरूपमे परिणत कर लिया। यह कैसे आश्चर्यकी बात है ? ॥ २९ ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
व्यगमद्विंशसर्गोऽयं महाकाव्ये स्तवात्मके ॥३०॥

कृष्णप्रसाद घिमिरेकी कृति इस 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे यह बीसवां सर्ग पूरा हुआ ॥ ३० ॥



# एकविंशः सर्गः

[ भगवतोऽग्निजलश्रृङ्गिदंष्ट्रिमि साकं विविधक्रीडावर्णनम् । ]

इत पर "श्रृङ्गयग्निदंष्ट्रयसिजलद्विजकण्टकेभ्य" इत्यादिना भागवते सूत्रस्वरूपेण भगवता कृष्णेन निर्दशिता भगवल्लीला सम्प्राप्ततत्सद्बोधेन मयापि कृष्णेन भाष्यरूपेणैव विवर्ण्यन्ते—।

( भुजङ्गप्रयातम् )

ततश्चैकदा विम्बमात्रावशिष्टे विधौ हंसतुल्ये जराजीर्णगात्रे ।
प्रबुद्धावुभौ बालकौ श्यामरामौ मिथोऽपश्यतां शून्यकोष्ठे स्वतल्पात् ॥१॥

तदनन्तर एक दिन प्रात काल जब चन्द्रमाका विम्बमात्र शेष रह गया था, चॉदनी लुप्त हो गई थी और वह जरा-जीर्णगात्र हसतुल्य प्रतीत हो रहा था, तब दोनो बालक श्याम और राम नीदसे जाग उठे और सूने घरमे अपनी-अपनी शय्यासे उन्होने एक दूसरेको देखा ॥ १ ॥

विनोदी कृतज्ञोऽर्भको मेघकृष्णः शिशुं स्वाग्रजं गौरवर्णं निरीक्ष्य ।
उवाचेङ्गितेनैव चाऽऽवां जनन्यौ करिष्याव उत्केऽद्य कृत्यैर्भयार्थैः ॥२॥

तब मेघके समान श्यामवर्ण वाला विनोदी एवं कृतज्ञ बालक अपने गोरे रंगवाले शिशुरूप ज्येष्ठ भ्राताकी ओर देखकर सकेतसे ही बोला—हम दोनो आज भयोत्पादक कार्योद्वारा अपनी माताओको उन्मनी बना दे—घबराहटमे डाल दे ॥ २ ॥

ततस्तस्य चित्तस्य भावं बिबुध्य तथैवाऽस्त्वहं स्वीकरिष्येऽनुसृत्य ।
ब्रुवत्यग्रजे चेष्टयैवं मुकुन्दो रुरोदाऽसमं देहपातं तदैव ॥३॥

तदनन्तर उसके हृदयका अभिप्राय समझकर अग्रज बालकने चेष्टाद्वारा ही बताया कि मैं भी तुम्हारा अनुसरण करके वैसा ही करूँगा। तब मुकुन्द ( कृष्ण ) अपने हाथ-पैर पटक-पटककर तत्काल उस प्रकार रोने लगे जिसकी कोई समता नही है ॥ ३ ॥

यशोदासुतस्याऽद्भुतं रोदनं तन्निशम्याऽथ भीताऽऽजगामाऽऽशु कोष्ठे ।
कराभ्यां समुत्थाप्य विन्यस्य चाऽङ्के पयः पाययामास कृष्णार्भकं तम् ॥४॥

अपने पुत्रका अद्भुत रोदन सुनकर डरी हुई यशोदा तुरन्त उस कमरेमे आई और दोनो हाथोसे उठाकर गोदमे बिठाकर उस श्याम बालकको दूध पिलाने लगी ॥ ४ ॥

तदैवाऽऽगता रोहिणी चापि भीता ददर्शाऽत्र रोरूयमाणं शिशुं स्वम् ।
निधायाऽङ्क एवाऽऽगताभिः सखीभिः समं सान्त्वयामास तं लोकगीतैः ॥५॥

इसी समय माता रोहिणी भी भयभीत हो वहाँ आ पहुँची। उन्होने अपने बालकको भी वहाँ जोर-जोरसे रोते देखा। फिर अंकमे लेकर वहाँ आई हुई सखियोके साथ उन्होने लोकगीत ( लोरी आदि ) गाकर उस बालकको शान्त किया॥ ५॥

ततस्तौ प्रसन्नौ पयः पानमात्रात् तदङ्कात् सुतृप्तौ गतौ भूमिभागम्।
विमोह्यैव सर्वाः स्त्रियो हावभावैर्मिषेणाऽग्निधान्याः समीपं गतौ द्राक्॥६॥

इसके बाद दूध पीने मात्रसे तृप्त और प्रसन्न हुए वे दोनो बालक माताओके गोदसे उतर कर पृथ्वी पर बैठ गये। और अपने हाव-भावोसे सब स्त्रियोको मोहित करके किसी बहाने शीघ्र ही अँगीठीके पास जा पहुँचे॥ ६॥

उभावग्निधान्याः स्फुलिङ्गान् कराभ्यां ज्ज्वलद्रक्तरत्नान् यथा संप्रगृह्य।
अनुद्विग्नचित्तेन चिक्रीडतुः स्म ह्यमूषां पुरस्तात् कथासून्मुखीनाम्॥७॥

वे दोनो चमकते हुए लालमणिके समान अँगीठीके अङ्गार कणोको दोनो हाथोंसे ले लेकर उद्वेग रहित शान्त-चित्तसे उन स्त्रियोके सामने ही खेलने लगे। वे स्त्रियाँ उन्ही दोनोकी कथाओमे उन्मुख ( दत्तचित्त ) थी॥ ७॥

ततस्ता भृशोद्विग्नचित्ताः समन्ताद्धसन्ताविमौ जगृहुस्तत्र गत्वा।
करेभ्यस्तयोस्तान् स्फुलिङ्गान् निरस्य जलैः प्रोञ्छ्य बाहू न्यसीदन् सुखेन॥८॥

तदनन्तर वे सबकी सब अत्यन्त उद्विग्नचित्त हो उठी और चारोओरसे वहाँ पहुँचकर इन हँसते हुए दोनो बालकोको पकड लिया। फिर उनके हाथोसे अङ्गार-कणोको हटाकर दोनोके हाथ धो-पोछकर वे चैनसे बैठ सकी॥ ८॥

प्रवृद्धाः कथास्तासु वृद्धासु भूयो जनन्योः पयस्तौ पिबन्तौ समीक्ष्य।
अयं मेघकृष्णोऽर्भको भो यशोदे! विचित्रोऽस्ति धृष्टोऽभयश्चञ्चलश्च॥९॥

अब उन बालकोको माताओके स्तन पीते देख वहाँकी बडी बूढी स्त्रियोमे उन दोनोकी ही चर्चा बढ-चढकर होने लगी। एक बोली—'यशोदाजी! यह तुम्हारा घनश्याम बालक विचित्र है, बडा ही ढीठ, निडर और चपल है'॥ ९॥

त्वदीयः सुतो गौरवर्णो ह्यसौ तु वरीवर्ति शान्तस्तथाऽभ्रान्तचित्तः।
परं कृष्णवर्णस्य चाऽस्यैव सङ्गादभूदीदृशो रोहिणी! भ्रान्त उत्कः॥१०॥

दूसरीने कहा—'रोहिणीजी! आपका यह जो गौर-कान्तिवाला बालक है, यह स्वभावत शान्त तथा निर्भ्रान्त चित्तवाला है। परन्तु इस साँवले बालकके ही सगसे यह भी ऐसा भ्रान्त और चञ्चल हो गया है'॥ १०॥

इतस्तासु चेत्थं कथासून्मुखीषु मिथोऽपश्यतां तावुभौ भ्रातरौ च।
ततः पूर्ववद्धीङ्गितेनैव भावं विबुध्याऽऽगतौ प्राङ्गणे जानुघृष्ट्या ॥११॥

इधर वे स्त्रियाँ ऐसी बातचीतकी ओर उन्मुख थी और उधर उन दोनो भाइयोने एक दूसरेकी ओर देखा। फिर पूर्ववत् सकेतसे ही पारस्परिक-भाव समझकर वे घुटने घीसते हुए आँगनमे निकल गये ॥ ११ ॥

तदाऽऽसीद्ध्रदः कश्चिदाजानुदघ्नो गवां मूत्रपूर्णो ह्यगम्योऽर्भकैस्तु।
सरीसृप्यमाणावमुस्मिन् निमज्य कपेर्झम्पिकावत् सुखं क्रीडतः स्म ॥१२॥

उस समय पास ही गो-मूत्रसे भरा हुआ एक गड्ढा था जिसकी गहराई घुटने तककी थी। वह बालकोके लिए अगम्य था। वे दोनो बालक सरकते हुए उसमे गिर पड़े और बानरकी झम्पिकाके समान उसीमे सुखपूर्वक खेलने लगे ॥ १२ ॥

इतस्तावदृष्ट्वा समेताः स्त्रियस्ताः समाजग्मुरुत्काः क्षणात्प्राङ्गणेऽस्मिन्।
यशोदा सती रोहिणी चैव मूढा मुमूर्च्छाऽत्र दृष्ट्वा तथावस्थितौ तौ ॥१३॥

इधर उन दोनोको न देखकर वहाँ एकत्र हुई सारी स्त्रियाँ उन्मनी हो, क्षणभरमे आँगनमे आ गई। सती यशोदा और रोहिणी उन दोनो बालकोको उस अवस्थामे देखकर मोहवश मूर्छित हो गई ॥ १३ ॥

उपागम्य तूर्णं कराभ्यामुभौ तौ विनिष्कास्य यत्नात् क्षणेनैव भूयः।
स्त्रियोऽभ्यागमन् प्राङ्गणे यत्र नन्दः सभां कारयित्वैव तिष्ठत्यमुष्याम् ॥१४॥

फिर अन्य स्त्रियाँ तुरन्त दौडी गई और दोनो हाथोसे उन्हे यत्नपूर्वक निकालकर क्षणभरमे पुन आँगनमे लौट आई। जहाँ नन्दजी गोप-सभा एकत्र करके बैठा करते थे ॥ १४ ॥

ततस्तासु निक्षिप्य दृष्टिं स्वकीयां जगन्मोहिनीं मोहयित्वा स्त्रियस्ताः।
गतोऽयं विनोदी शिशुः कृष्णवर्णः कराभ्यां समुत्प्लुत्य मातुः समीपम् ॥१५॥

तब अपनी विश्व विमोहिनी दृष्टि डालकर उन स्त्रियोको मोहित करके वह साँवला विनोदी शिशु दोनो हाथोसे उछलता हुआ माताके समीप आ गया ॥ १५ ॥

सुतस्याऽस्य शक्तेरतुल्यस्य साम्ये विवृद्धेन मोहेन वात्सल्यत. सा।
तदाऽऽसीन्मृतेवाऽत्र गत्वाऽधिवक्षो ममार्जैष वक्त्रं तदस्या विशोभम् ॥१६॥

शक्तिसे समता करने पर जिसकी कही तुलना नही थी, उस पुत्रके लिए बढे हुए मोह और वात्सल्यके कारण यशोदाजी वहाँ मरी-सी अचेत पडो थी। बालक उनकी छाती-पर चढकर उनके शोभारहित मुखपर हाथ फेरने लगा ॥ १६ ॥

तदाऽभूद्विचित्रं करैरुष्णरश्मेर्यथा स्पृष्टमम्भोजमुत्फुल्लतीह ।
तथैवाऽस्य मातुर्मुखं तत्प्रफुल्लं यदा स्पृष्टमेतेन जातं ससंज्ञम् ॥१७॥

उस समय एक विचित्र बात हुई। जैसे सूर्यकी किरणोके स्पर्शसे कमल खिल उठता है, उसी प्रकार जब उस बालकने स्पर्श किया, तब उसकी माताका मुख उत्फुल्ल एव सचेत हो उठा ॥ १७ ॥

जगत्यां महान्तो बुधा ध्यानतोऽपि यमाप्तुं तथाभूतमभ्यासतोऽपि ।
न शक्ता अहो ! ब्रह्मरूपोऽर्भकोऽसौ हृदि क्रीडति स्माऽव्ययो नन्दपत्न्याः ॥१८॥

अहो ! भूतल पर बडे-बडे विद्वान् या ज्ञानी ध्यानके अभ्याससे भी जिस बालकको पानेमे समर्थ नही हो सके, वही ब्रह्मरूप अविनाशी बालक नन्दपत्नीके वक्षस्थलपर क्रीडा कर रहा है ॥ १८ ॥

प्रफुल्ले उभे पद्मनेत्रे स्वमातुर्निरीक्ष्याऽत्र संत्यज्य तामेष भूयः ।
तथाऽवस्थितां रोहिणीं प्रेक्ष्य तूर्णं सुखं दातुमस्यै गतो जानुघृष्ट्या ॥१९॥

अपनी माताके दोनो कमलोपम नयनोको उत्फुल्ल देख वहाँ उन्हे छोडकर उसने उसी तरह अचेत पडी हुई रोहिणीजीकी ओर देखा और तुरन्त उन्हे सुख देनेके लिए घुटनोके बलसे चलता हुआ उनके पास जा पहुँचा ॥ १९ ॥

विसंज्ञामिमां मातरं प्राङ्गणस्थां कृपापूर्णदृष्ट्या विलोक्याऽत्र गत्वा ।
ससंज्ञां तदैवाऽकरोत् स्पर्शमात्रात् कृतज्ञो कृपालुर्जगद्व्यापकोऽयम् ॥२०॥

आँगनमे अचेत पडी हुई इन माता रोहिणीके निकट जा उन्हे कृपापूर्ण दृष्टिसे देखकर उस कृतज्ञ कृपालु एव विश्वव्यापी बालकने स्पर्शमात्रसे तत्काल सचेत कर दिया ॥ २० ॥

ततस्ताः समेताः पुनः प्राङ्गणेऽस्मिन् प्रसन्नाननौ लालयित्वाऽर्भकौ तौ ।
कथां चक्रुरुच्चैस्तयोस्तद्विचित्रं महत्वं गुरुत्वं च संलक्ष्य बुद्ध्या ॥२१॥

तब वे सब स्त्रियाँ पुन. प्राङ्गणमे आ गईं और दोनो प्रसन्न मुख बालकोको लाड लडाकर उन दोनोके विचित्र महत्त्व एव गुरुत्वको बुद्धिके द्वारा लक्षित करके उच्चस्वरसे उन्हीकी बाते करने लगी ॥ २१ ॥

यशोदे ! तवाऽयं सुतो वासुदेवो महाशक्तिशाली दरीदृश्यतेऽत्र ।
अनेनैव नीताऽऽसुरी पूतना सा पुरीं सूर्यपुत्रस्य पानात्स्तनस्य ॥२२॥

एक बोली—'यशोदे ! तुम्हारा यह पुत्र वासुदेव यहाँ महान् शक्तिशाली दिखाई देता है। इसीने स्तनपान करके उस राक्षसी पूतनाको यमलोक भेज दिया' ॥ २२ ॥

कथासूत्सुकास्वत्र वृद्धासु चेत्थं समायात एतां सभां भूषयन् सः ।
व्रजेशो व्रजस्थैः प्रियैर्गोपवृन्दैः समं स्नानदानादि नद्यां समाप्य ॥२३॥

जब बडी-बूढी स्त्रियाँ इस प्रकार श्रीकृष्ण-कथा कथन-श्रवणमे उत्सुकतापूर्वक सलग्न थी, उसी समय इस सभाको विभूषित करते हुए व्रजराज नन्द व्रजवासी प्रिय गोप समूहके साथ यमुनाजीमे स्नान-दानादि कर्म पूर्ण करके वहाँ आ गये ॥ २३ ॥

उवाचैष हृष्टस्तथाऽवस्थितास्ता विलोक्यैव पुत्रौ च दुग्धं पिबन्तौ ।
भवत्यः सभायां स्थिताः सुप्रसन्नाः कथं त्वद्य मह्यं ब्रुवन्त्वत्र चार्याः ! ॥२४॥

वे प्रसन्न होकर दोनो पुत्रोको दूध पीते देख वहाँ बैठी हुई स्त्रियोसे बोले—'आर्याओ ! आपलोग इस सभामे अत्यन्त प्रसन्न होकर कैसे बैठी हैं ? कोई विशेष बात हो तो आज मुझे बताइये' ॥ २४ ॥

ततस्ता अवोचञ्छिशू तौ प्रदर्श्य ह्युभाभ्यां कृतं तद्विचित्रं सुकर्म ।
निशम्येदृशीं सत्कथां पुत्रयोस्तां बभूवाऽथ नन्दोऽपि मग्नः सुखाब्धौ ॥२५॥

तब उन्होने उन दोनो बालकोको दिखाकर कहा—'आज इन दोनोने विचित्र सुकर्म किया है।' पुत्रोकी ऐसी सत्कथा सुनकर नन्दजी भी सुखके समुद्रमे मग्न हो गये ॥ २५ ॥

पुनस्तेषु मग्नेषु वात्सल्यसिन्धौ तयोर्मायया ब्रह्म संस्मारितेषु ।
मुखस्थं स्वमातुस्तनाग्रं विहाय गतः प्राङ्गणे पूर्ववत् कृष्ण एषः ॥२६॥

तदनन्तर पुन वे सबलोग उन दोनोके वात्सल्य-सिन्धुमे जब मग्न हो गये, और उन दोनोकी मायासे जब उन्हे ब्रह्मानन्दकी स्मृति हो आई, तब यह श्याम बालक अपने मुखमे पडे हुए माताके स्तनाग्रभागको निकाल कर पूर्ववत् दूसरे प्राङ्गणमे चला गया ॥ २६ ॥

तदाऽऽसन् समेताः शिशोःस्नेहबन्धोन्मृगा वर्हिणश्चाऽमुनाऽऽकृष्टचित्ताः ।
महात्मान एते पुरोक्तं यथा ते प्रगृह्यैव रूपं स्थिताः स्वानुकूलम् ॥२७॥

उस समय उस शिशुके स्नेह-बन्धनसे बँधकर हरिण और मोर एकत्र हो गये। उस बालकने उनके चित्तको आकर्षित कर लिया था। जैसाकि पहले कहा गया है—ये सबके सब महात्मा थे और अपने अनुकूल-रूप धारण करके वहाँ रह रहे थे ॥ २७ ॥

ततस्तत्र पश्यत्सु चैतेषु सोऽयं मुकुन्दोऽगमच्चाऽत्र तेषां समीपम् ।
तदैव प्रसन्नाः खगास्तं विलोक्य चतुष्पाद्भिरेतैः समं दंष्ट्रिभिश्च ॥२८॥

उन सबके देखते-देखते मुकुन्द वहाँ उनके समीप गये । उसी समय पक्षी उन्हे देखकर प्रसन्न हो उठे । साथ ही ये चौपाये ( पशु ) तथा द्रष्ट्रावाले ( श्वापद ) भी बडे हर्षसे वहाँ आ गये ॥ २८ ॥

सुखेन स्थितं ध्यानमग्नं शुभाङ्गं विचित्रं खगं बर्हिणं चैकमेत्य ।
स धृत्वा धरां बाहुनैकेन चैकं समुत्थाप्य तेनैव जग्राह पुच्छम् ॥२९॥

वहाँ सुन्दर अङ्गवाला एक विचित्र पक्षी मयूर ध्यान मग्न हो सुखसे विराजमान था । उस श्याम-बालकने उसके पास जाकर अपना एक हाथ तो धरतीपर टिका दिया और एक हाथ ऊपर उठाकर उसीसे उसकी पूँछ पकड ली ॥ २९ ॥

समुन्मील्य नेत्रे ततो बर्हिणाऽपि परावृत्य मुग्धेन चित्तेन दृष्टः ।
अतर्क्येण चाऽनेन शक्त्या मयूरो मुदा चक्रवन्नर्तितो हन्त ! तत्र ॥३०॥

तब मोरने भी आँखें खोल पीछेकी ओर घूमकर मुग्धचित्तसे उसे देखा । उस अतर्क्य शक्तिशाली बालकने उस मयूरको वहाँ चक्रकी भाँति सानन्द नचाना आरम्भ किया ॥ ३० ॥

न तत्याज पुच्छं यदा चैष बालो विनोदेन तुष्टस्तदा पक्षिणाऽपि ।
भृशं भ्रामितो ह्यन्तरिक्षे च सार्धं व्रजस्थे जने प्राङ्गणे वीक्षमाणे ॥३१॥

जब बालकने पूँछ नही छोडी, उसके साथ विनोद करके वह सन्तोषका अनुभव करने लगा, तब इस पक्षीने भी उसे साथ लेकर अन्तरिक्षमे बहुत घुमाया । उस समय व्रजवासी गोप नन्द-प्राङ्गणमे खडे होकर यह दृश्य देख रहे थे ॥ ३१ ॥

यथौत्तानपादिर्महात्माऽन्तरिक्षे ग्रहाणां चये शोभते प्रोज्ज्वलेऽस्मिन् ।
तथाऽशोभताऽसौ मयूरस्य पुच्छे विचित्रे भ्रमेऽप्यत्र तैर्वीक्षमाणः ॥३२॥

जैसे राजा उत्तानपादके पुत्र महात्मा ध्रुव तेजसे उद्दीप्त ग्रह-समूह ( पुच्छल ताराओ ) के बीच शोभा पाते हैं, उसी प्रकार उस विचित्र मोर-पुच्छपर भ्रमण कालमे भी वह बालक सुशोभित होता था । व्रजवासी एकटक होकर उसको देख रहे थे ॥ ३२ ॥

शिशोर्मायया मूढवत्कारितेषु प्रपश्यत्सु शान्त्या भृशं मोहितेषु ।
मयूरस्त्वितोऽसौ चिरं नर्तितत्वात् पपाताऽचलायां हृदि स्थाप्य चामुम् ॥३३॥

उस शिशुकी मायासे जब मूढवत् बनाये गये सब लोग अत्यन्त मोहित हो शान्त भावसे उसकी ओर देख रहे थे, उस समय वह मोर देरतक नचाये जानेके कारण थक कर उस बालकको छातीसे लगाये धरतीपर गिर पड़ा ॥ ३३ ॥

**दयार्द्रां सुदृष्टिं विमुच्यैव तस्मिंस्ततोऽभ्यागमज्जानुघृष्ट्यैव चैषः ।**
**समीपस्थमेकं जराजीर्णगात्रं स्पृशन् खञ्जनं पक्षिणं श्वानपार्श्वम् ॥३४॥**

उस मोरपर दयार्द्र दृष्टि डालकर घुटनोके बलपर चलता हुआ यह शिशु पास ही खडे हुए एक जराजीर्ण अङ्गवाले खजन पक्षीको छूता हुआ एक कुत्तेके निकट आ गया ॥ ३४ ॥

**तदा दंष्ट्रिणं तं विशालं करालं निरीक्ष्याऽस्य लीलां विलीनं सुखाब्धौ ।**
**प्रगृह्यैव शीर्षे भुजाभ्यामुभाभ्यां कपिर्वृक्षशाखां यथाऽधूनयत् सः ॥३५॥**

वह दाढवाला विकराल एवं विशाल कुत्ता उस शिशुकी लीला देखकर सुखके सागरमे डूब गया । तब दोनो हाथोसे उसका सिर पकडकर वह शिशु उसे इस प्रकार हिलाने लगा, जैसे बानर किसी वृक्षकी डालको हिलाता या कँपाता है ॥ ३५ ॥

**ततश्चापि तिष्ठन्तमेनं कृपालुं समुन्मील्य नेत्रे ह्यपश्यच्चिराय ।**
**समं शान्तिदेनाऽमुना क्रीडितुं च तदैवैच्छदव्यग्र एषोऽपि शिष्टः ॥३६॥**

तब वह कुत्ता भी वहाँ खडे हुए उन कृपालु प्रभुको आँखें खोलकर देरतक देखता रहा । फिर उसने तत्काल ही शान्त तथा शिष्ट होकर उन शान्तिदाता प्रभुके साथ खेलनेकी इच्छा की ॥ ३६ ॥

**अमुं त्यक्तशीर्षे कृपां वर्षयन्तं स्वदन्तैर्विघृष्यैव भक्त्या प्रणम्य ।**
**रवैर्भुक्भुकैः स्तोत्ररूपैः स्वकीयैः प्रसन्नं चकाराऽथ तं पातयन् सः ॥३७॥**

बालकने उसका शिर छोड़ दिया और उसपर कृपाकी वर्षा करने लगा । तब उस कुत्तेने भक्ति-भावसे उसको प्रणाम किया और अपने स्तोत्ररूप 'भुक ! भुक !!' शब्दसे बोलते हुए अपने दाँतोसे रगड़कर नन्द-शिशुको पृथ्वीपर गिरा दिया । अपनी इस चेष्टाद्वारा उसने उस शिशुको प्रसन्नकर लिया ॥ ३७ ॥

**चिरं तेन साकं विहृत्यैव तत्र स्थितं शृङ्गिणं कृष्णसारं बलिष्ठम् ।**
**विगृह्यैव शृङ्गे विनोदी स भूयश्चकाराऽध एवोत्तमाङ्गं निपात्य ॥३८॥**

देरतक उस कुत्तेके साथ खेलकर उस विनोदी शिशुने फिर वहाँ खड़े हुए बडे-बडे सीगवाले बलिष्ठ कृष्णसार मृगका सीग पकड लिया और उसके मस्तकको गिराकर अपने नीचे कर दिया ॥ ३८ ॥

**स्वदेहं समर्प्याऽऽत्मना साकमस्मै जगत्पालकं तं तदैव प्रणम्य ।**
**न्यधादेष उच्चैर्विषाणाग्रभागे समुत्थाप्य यत्नात् सुखं भक्तितोऽमुम् ॥३९॥**

उस मृगने अपनी आत्माके साथ शरीरको भी नन्द-शिशुके हाथमे सौप दिया । और तत्काल उन जगत्पालक प्रभुको प्रणाम करके भक्तिभावसे यत्नपूर्वक उन्हे सुखसे उठाते हुए अपने ऊँचे सीगके अग्रभागपर रख लिया ॥ ३९ ॥

स आसीन्मुनिः कोऽपि दिव्यो महात्मा शिशोरस्य सच्चिन्मयीं भव्यलीलाम् ।
दिदृक्षुः समायात इत्थं स्वरूपं प्रगृह्याऽद्भुतं तत्र तत्सेवनार्थम् ॥४०॥

वह मृग कोई दिव्य महात्मा मुनि था। जो उस नन्द शिशुकी सच्चिन्मयी भव्य-लीलाका दर्शनके लिए ऐसा अद्भुत स्वरूप धारण करके वहाँ आया था। वह श्रीकृष्णकी सेवा करना चाहता था॥ ४० ॥

त आह्लादितास्तेन लीलां निरीक्ष्य भृशं धूतशीर्ष्णा न्यसीदन् व्रजस्थाः ।
मृगेणाऽमुना सोत्सुकः खेलनेऽयं पुनर्भ्रामितो ह्यऽन्तरिक्षेऽथ चेतः ॥४१॥

उसकी की हुई इस लीलाको देखकर अत्यन्त आह्लादित हुए व्रजवासी जोर-जोरसे शिर हिलाते हुए बैठे रहे। उस मृगके साथ खेलनेमे उत्सुकता पूर्वक लगे हुए उस बालकको उसने पुन अन्तरिक्षमे घुमाना आरम्भ किया॥ ४१ ॥

नमामीश्वरं शम्भुमेतद्विधं त्वां विभुं शङ्करं भक्तभक्त्या प्रसन्नम् ।
ब्रुवन्नित्थमात्मन्यसौ भक्तिपूर्णो न्यधात्तं समीपस्थसिंहस्य शीर्ष्णि ॥४२॥

वह मन ही मन ऐसा कह रहा था कि प्रभो! आप इस रूपमे साक्षात् ईश्वर हैं, शम्भु हैं, सर्वव्यापी शकर है तथा भक्तकी भक्तिसे प्रसन्न होनेवाले हैं। मै आपको प्रणाम करता हूँ। ऐसा कहते हुए भक्तिभावसे भरपूर उस मृगने पास ही खडे हुए एक सिंहके मस्तकपर उस बालकको बिठा दिया॥ ४२ ॥

मृगेन्द्रस्तदा तं शिरस्थं सटाभिः समाच्छाद्य पूर्वं स्वपुण्योपपन्नम् ।
समर्प्य स्वमस्मै लुठन् पादपीठे स्वयं तेन सार्धं चकाराऽथ लीलाम् ॥४३॥

तब मृगराज सिंहने अपनी पूर्वकृत पुण्यसे प्राप्त एव मस्तकपर आरूढ उस बालकको अयालोसे ढँककर अपने आपको उसकी सेवामे समर्पित कर दिया। और स्वय उसकी पाद-पीठमे लोटता हुआ उसके साथ खेल करने लगा॥ ४३ ॥

सतामाश्रयेणाऽमुना चिन्मयेन समं क्रीडमानः स शुद्धात्मकेन ।
ददर्शाऽस्य नीले शुभाङ्गे स्फुरन्तं तदात्मानमेव प्रकृत्यां विलीनम् ॥४४॥

वह बालक सत्पुरुषोका आश्रय, चिन्मय और शुद्ध-बुद्ध परमात्मस्वरूप था। उसके साथ क्रीडा करते हुए उस सिंहने उसके नील सुन्दर अंगमे अपने आपको ही प्रकाशमान एवं प्रकृतिमे विलीन देखा॥ ४४ ॥

जगर्जाऽत्र सञ्जातबोधस्ततोऽसौ पुरःस्थं प्रगृह्यैव दंष्ट्राभिरेनम् ।
विभो! बिभ्यतोऽस्मान् स्वकीयैः कुकृत्यैर्नयेतः परं धाम सत्यात्मकं तत् ॥४५॥

तदनन्तर बोधको प्राप्त होकर उस सिंहने अपने सामने खड़े हुए उस बालकको अपनी दाढ़ोंसे पकड़कर गर्जना की और अव्यक्त शब्दमें कहा—'प्रभो ! हम अपने ही कुकृत्योंसे डरे हुए हैं। आप हमें यहांसे अपने सत्यस्वरूप परम धाममें ले चलें' ॥ ४५ ॥

**ब्रुवन् केसरी स्वात्मनादैरनादैरिदं पूर्णमार्त्या समाधिस्थ आसीत्।**
**इतो बालकोऽयं तदानीन्तर्नो तां स्वलीलां समाप्य स्थितः प्राङ्गणेऽस्मिन् ॥४६॥**

वह केसरी जिस भाषामें बोल रहा था, वह उसका सिंहनाद नहीं, आत्मनाद था—आत्माकी आवाज थी। सांसारिक पीड़ासे परिपूर्ण ऐसा नाद करके वह समाधिस्थ हो गया। इधर यह बालक भी अपनी तात्कालिक लीला समाप्त करके नन्द-प्राङ्गणमें खड़ा हो गया ॥ ४६ ॥

**महाशक्तिरेषा जयत्यत्र नित्यं विनष्टा भवत्येव लघ्वी तदग्रे।**
**भवन्तोऽपि वैज्ञानिका! नित्यसिद्धं वचोऽप्यत्र किं नाऽऽद्रियन्ते वदन्तु ? ॥४७॥**

इस संसारमें भगवान्‌की यह महाशक्ति ही विजयिनी हो रही है। उसके सामने दूसरी छोटी शक्तियां विनष्ट हो जाती हैं। वैज्ञानिकों ! बताइए तो सही, आपलोग भी इस नित्य शुद्ध वचनका क्या यहां आदर नहीं करेंगे ? ॥ ४७ ॥

**जगत्यत्र कर्तुं ह्यकर्तुं ततोऽन्यद्विकर्तुं समर्थोऽस्ति सोऽयं परात्मा।**
**यतः प्राप्य शक्तिं स्थिरौ चन्द्रसूर्यौ विभातः सदैवाऽत्र वायुः प्रवाति ॥४८॥**

इस संसारमें यह परमात्मा करने, न करने और अन्यथा करनेमें समर्थ है। उसीसे शक्ति पाकर चन्द्रमा और सूर्य स्थिरतापूर्वक प्रकाशित होते हैं और उसीके शक्तिसे यहाँ वायु सदैव प्रवाहित होती है॥ ४८ ॥

**ततो मायया ते विसृष्टा व्रजस्थाः पुरावच्छिशुं तं पुरःस्थं ह्यपश्यन्।**
**न तत्याज तांस्तत्स्मृतिस्त्वात्मभित्तौ स्थिता चित्रवत् कर्मजा स्नेहवृद्धा ॥४९॥**

तदनन्तर मायाके प्रभावसे छूटे हुए व्रजवासी उस शिशुको पूर्ववत् अपने सामने खड़ा हुआ देखने लगे। परन्तु उनके अन्तःकरणकी भित्तिपर चित्रकी भाँति अंकित तथा स्नेहसे बढ़ी हुई उस बालकके अद्भुत कर्मोंकी वह स्मृति, उन्हें छोड़ नहीं सकी ॥ ४९ ॥

(वसन्ततिलकावृत्तम्)

**ते मातरौ स्वसुतयोरतुलामतर्क्यां लीलां विलोक्य सुखदां च विभाव्य चित्ते।**
**वात्सल्यतस्तनयुगात् पय आस्नुवन्त्यौ संस्थाप्य तौ हृदि गतौ सदनान्तराले ॥५०॥**

दोनों माताएँ अपने पुत्रोंकी उस अतुलनीय, अतर्क्य और सुखदायिनी लीलाको देखकर मन ही मन उसीका चिन्तन करने लगीं। वे वात्सल्य बस अपने स्तनोंसे दूध बहाती हुई उन बच्चोंको गोदमें लेकर घरके भीतर चली गईं ॥ ५० ॥

इत्थं प्रतिक्षणमहो ! प्रियमातरौ ते कृत्वा विचिन्तनपरौ स्वशरीरहेतोः ।
उत्के विधायसततं निजकृत्यतस्तौ तज्जानुघृष्टिगमनं जहतुः स्म तूर्णम् ॥५१॥

अहो ! इसप्रकार प्रतिक्षण प्रिय माताओंको अपने शरीरके लिए चिन्तामग्न करके वे दोनो वालक अपने कार्य-कलापो द्वारा उन्हे सदा उत्कण्ठित वनाये रहते थे । अब उन्होने घुटनोके वल चलनेकी चेष्टाका शीघ्र ही त्याग कर दिया ॥ ५१ ॥

अस्ताचलशिरोरत्नं संयाते लोकभाष्करे ।
गताः स्वस्वगृहांल्लोकास्तल्लीलाकृष्टचेतसः ॥५२॥

जव जगत्‌को प्रकाशित करनेवाले सूर्यदेव अस्ताचल शिखरको चले गये, तब उन वालकोकी लीलासे आकृष्ट चित्तवाले व्रजवासी अपने-अपने घरको गये ॥ ५२ ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
सर्गोऽयमेकविंशोऽगान्महाकाव्ये स्तवात्मके ॥५३॥

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे यह इक्कीसवाँ सर्ग पूरा हुआ ॥ ५३ ॥



# द्वाविंशः सर्गः

[ मातृभ्या सुतयो पादचारणशिक्षणम् । तत्र गीतशब्द श्रुत्वा समागताना बालक-
बालिकादीना ताभ्या सहैव नृत्यवर्णनम् । भगवतो विचार । दुग्धशाला
प्रविश्य पयस्यहृदे निमज्जमानेनाऽनेन स्वमातुरुद्विग्नीकरणम् । ]

अत पर केषुचित् सर्गेषु गोदुहा गोरसविक्रयनिवारणादिका हेतुगर्भा विविधा लीला निर्दर्श्यन्ते । या "वत्सान्मुञ्चन् क्वचिदसमये" चेत्यादिरूपेण व्रजमातरो यशोदासमीपमागत्य समुक्तवत्य उपालम्भात्मिकया स्ववाक्चातुर्या ।

( गीतिरियम् )

चल चल राम ! चल सुखधाम ! द्रुतमभिराम ! चल शमधाम ! ।
चल चल राम ! चल हतकाम ! द्रुतमभिराम ! चल बलराम ! ॥१॥

चल चल कृष्ण ! व्यपगततृष्ण ! हतबुधतृष्ण ! चल चल कृष्ण ! ।
चल चल कृष्ण ! चल चल कृष्ण ! विगतवितृष्ण ! चल चल कृष्ण ! ॥२॥

चल चल राम ! चल चल कृष्ण ! चल बलराम ! चल हततृष्ण !

( वंशस्थेन्द्रवंशयोरुपजातिवृत्तम् )

श्रीकृष्णरामौ प्रियमातरावुभौ प्राग् ग्राहयित्वा स्वकराङ्गुलीस्ततः ।
गन्तुं मुदाऽशिक्षयतां गृहाङ्गणे गीतं प्रगायोपरिगीतमञ्जसा ॥४॥

श्रीकृष्ण और बलरामको उनकी दोनो प्यारी माताएँ पहले अपनी-अपनी अङ्गुलियाँ पकड़ाकर उपर्युक्त गीत गाती हुई घरके आँगनमे प्रसन्नतापूर्वक अनायास चलना सिखाने लगी ॥ ४ ॥

चलामि मातः ! ससुखं मनागित इत्थं वदन्तौ चलतः स्म तौ स्वतः ।
तयोर्मुखे वीक्ष्य समुज्ज्वले उभे बभूवतुस्ते बहुधा प्रहर्षिते ॥५॥

'मा ! मै यहाँ आरामसे थोडा-थोड़ा चल रहा हूँ'—ऐसा बोलते हुए वे दोनो स्वत चलने लगे । उन दोनोके दीप्तिमान् मुखका अवलोकन करके वे दोनो माताएँ बार-बार हर्ष-मग्न हो जाती थी ॥ ५ ॥

इत्थं क्रमेणैव गते तदाऽहनि जातौ समर्थौ चलितुं सुखेन तौ ।
अन्तर्बहिश्चङ्क्रमणे कृतत्वरौ विरेजतुर्यौ स्वजनैश्च वीक्षितौ ॥६॥

इस प्रकार क्रमश कुछ दिन बीत गये, तब वे दोनो बालक सुखपूर्वक अब वे बार-बार बाहर-भीतर जाने-आनेमे बडी फुर्ती दिखाने लगे । परिवारके लोग देखते थे, और वे दोनो चलते समय बड़ी शोभा पाते थे ॥ ६ ॥

आसन् पुरा येऽत्र गृहीतविग्रहा ब्रह्मर्षिराजर्षिसुरर्षियोगिनः ।
अमुं समाराधयितुं तदैव ते समागतास्तत्र वयस्यरूपिणः ॥७॥

जो ब्रह्मर्षि, देवर्षि तथा योगीजन पहलेसे ही श्रीकृष्णकी समाराधनाके लिये व्रजमे देह धारण करके प्रकट हुए थे, वे उस समय नन्द-नन्दनके सखारूप होकर उनके पास आ गये ॥ ७ ॥

अन्येऽप्यहो ! प्रेमविशुद्धया धिया सुखं विहर्तुं प्रभुणा समं ततः ।
समागताः सुन्दरबालिकातनूर्विधृत्य तास्ताः सकलाः समन्ततः ॥८॥

अहो ! अन्यान्य संत-महात्मा भी प्रेम-विशुद्ध बुद्धिसे प्रभुके साथ सुखपूर्वक विहार करनेके लिये सुन्दर गोपकुमारियोके शरीरको धारण करके आ गये थे । वे-वे सारी-की-सारी कन्याएँ उन्हे चारो ओरसे घेरे रहती थी ॥ ८ ॥

कामोज्ज्वलं भाविनमेकमद्भुतं पुमांसमेनं गुणरूपमोहिताः ।
स्त्रियश्च वृद्धा वयसाग्रजा अपि समागमन्नात्मसुखाप्तये तदा ॥९॥

यह बालक कामके समान सुन्दर, होनहार और एक अद्भुत पुरुष था, उसके गुण और रूपसे मोहित हुई जेठी और समझदार स्त्रियाँ भी उस समय आत्मसुखकी प्राप्तिके लिये उसके पास आ जाती थी ॥ ९ ॥

इत्थं प्रियैर्बालकबालिकादिभिर्वृताविमौ स्वात्मरतौ समुज्ज्वलौ ।
तदा त्वभातां सुमनोहरौ वरौ पश्यत्सु चात्मीयजनेष्वहोऽभितः ॥१०॥

इस प्रकार प्रिय बालिकाओ तथा बालकोसे घिरे हुए ये दोनो सुन्दर कुमार, जो अपने आपमे ही रत रहनेवाले थे, उस समय अत्यन्त मनोहर एव श्रेष्ठ स्वरूपसे बड़ी शोभा पा रहे थे । उन्हे समस्त आत्मीय-जन सब ओरसे निहारते रहते थे ॥ १० ॥

जीवेश्वरौ स्वैर्बलवीर्यसद्गुणैः समन्वितौ स्वाभिरनिन्द्यशक्तिभिः ।
सुदीव्यतोऽत्रैव यथा तथैव तौ स्वाभिश्च तैः स्वैश्च वृतौ विरेजतुः ॥११॥

जैसे बलवीर्य और सद्गुणोसे सम्पन्न तथा अपनी अनिन्द्य शक्तियोसे समन्वित जीव और ईश्वर शोभा पाते है, उसी प्रकार वे दोनो बालक राम और श्याम अपनी सखियो और सखाओसे घिरकर विशेष शोभा पाते थे ॥ ११ ॥

लीला प्रवृत्ताऽथ जगत्सुखावहा ताभ्यां कृता तैः सखिभिः समं मुदा ।
आकर्षिणी स्वात्मरतौ भवात्मकान् ह्लादिनी भक्तजनानुरागिणी ॥१२॥

अब उन सखाओके साथ प्रसन्नतापूर्वक की गयी उन दोनोकी जगत्-सुखदायिनी लीला आरम्भ हुई। वह लीला ससारमे रचे-पचे लोगोको आत्मरति ( भगवत्प्रीति ) की ओर खीचनेवाली है। भक्तजनोको अनुराग तथा आह्लाद प्रदान करनेवाली है ॥ १२ ॥

क्रीडासहाया अभवंस्तयोरिह पुराऽऽगतास्ते पशुपक्षिणस्तथा ।
तेऽप्यन्य आसंस्तरुगुल्मरूपिणो गावश्च वत्सा वृषभाश्च संगताः ॥१३॥

पहलेसे व्रजमे प्रकट हुए जो पशु और पक्षी थे, वे भी उन दोनोकी लीलामे सहायक हुए। इनके सिवा अन्य भी जो वृक्ष एव गुल्मरूपधारी जीव थे, वे और गाय, बछडे तथा वृषभ आदि सब मिलकर उनकी लीलाके सहायक थे ॥ १३ ॥

ततस्तयोः सद्गुणनामरूपितं पूर्वोक्तगीतं मृदु मातृवक्त्रयोः ।
निष्क्रम्य शान्तं प्रससार सुन्दरं स्फुटं श्रुतं गोकुलवासिभिस्तदा ॥१४॥

तदनन्तर उन दोनो भाइयोके सद्गुण एव नाम-रूपोसे निरूपित तथा माताओके मुखसे निर्गत जो पूर्वोक्त मधुर गीत था, वह शान्त सुन्दर और स्फुटरूपसे सब ओर फैल गया और समस्त गोकुलवासियोने उस समय उसे सुना—॥ १४ ॥

तन्मायया तत्र विमोहिता भृशं व्रजौकसस्तेऽपि तदाऽनुसृत्य तत् ।
स्वं स्वं शिशुं तद्वयसा समं प्रियं विगृह्य तद्वन्न्यवदञ्चलेति च ॥१५॥

भगवान्की मायासे अत्यन्त विमोहित वे समस्त व्रजवासी राम-श्यामके समान अवस्थावाले अपने-अपने बालकोका हाथ पकडकर उनको चलना सिखाते हुए बोलने लगे—'चल चल राम' इत्यादि ॥ १५ ॥

पित्रोरनुज्ञामधिगम्य तेऽर्भकास्तत्राऽचलन् संपरिगृह्य तत्करान् ।
समागमन्नन्दगृहांस्तदैव ते शनैः शनैश्चङ्क्रमणेन सर्वतः ॥१६॥

माता-पिताकी आज्ञा मान वे बालक उनके हाथ थामकर वहाँ चलने लगे। इस तरह धीरे-धीरे चलते हुए वे उसी समय सब ओरसे नन्दके घर आये ॥ १६ ॥

समागमोऽभूदखिलात्मनाऽमुना ह्याकर्षितानां व्रजवासिनामिह ।
अतर्क्यरूपेण समागता अमी व्यभूषयन्नन्दगृहाङ्गणं पुनः ॥१७॥

इस प्रकार आकर्षित हुए व्रजवासियोका उस अतर्क्य-रूपवाले अखिलात्मा नन्द-किशोरके साथ समागम हुआ। उन सबने आकर नन्दगृहके आँगनको विभूषित किया ॥१७॥

दिशामधीशाः ससुरा यमादयः समुन्नताः स्वैर्गुणरूपकर्मभिः ।
अत्राऽऽगता बालकरूपमाश्रिता अमुष्य पादे व्यलुठन् स्वयं नताः ॥१८॥

यम आदि दिक्पाल तथा देवता जो अपने गुण, रूप और कर्मोंसे समुन्नतिको प्राप्त हुए थे, बालक-रूप धारण करके आये और उन नन्दनन्दनके चरणोंपर मस्तक रखकर वहाँ लोटने लगे ॥ १८ ॥

निवेद्यते भक्तवरा बुधा! मया शृण्वन्तु चैतद्‌व एकमत्र भोः! ।
काव्यस्य पूर्वाऽपरसंगतिस्मृतिः पात्रस्थितिर्ध्यानगता भवेदिति ॥१९॥

भक्तप्रवर विद्वानो! मैं यहाँ एक निवेदन करता हूँ। मेरी इस बातको आप सब लोग सुनें। यह बात इसलिए कहता हूँ कि इस काव्यकी पूर्वापर-संगति, स्थिति और इसके पात्रोंकी अवस्था भी ध्यानमें आ जाय ॥ १९ ॥

अस्यां स्थितावाधुनिकब्रुवा अपि विचारमार्गे सुदृढं चलन्ति चेत् ।
प्राप्स्यन्ति तेषामुखमुद्रणात्मकं क्षेप्योत्तरं मत्कथितं पदे पदे ॥२०॥

इस निवेदनके ऊपर ध्यान देनेपर अपनेको आधुनिक कहनेवाले लोग भी यदि विचार मार्गपर चलेंगे तो वे अपने द्वारा किये गये आक्षेपोंका मेरे द्वारा पद-पदमें कहा हुआ उत्तर, जो मुख बन्दकर देने वाला है, पा जायँगे ॥ २० ॥

लीलाऽत्र चैतन्यमयी विवर्ण्यते जगत्पतेर्गोपशिशोरमुष्य सा ।
तां कर्मभिस्तं च पिधाय हृद्‌गतं येऽसंभवा सेति विगर्हयन्ति नः ॥२१॥

इस काव्यमें उन जगदीश्वर गोप-किशोरकी उस चैतन्यमयी लीलाका वर्णन किया जाता है, जिसे अपनी क्रियाओं द्वारा ढँककर और हृदयस्थित उन परमेश्वरपर भी परदा डालकर वे नास्तिक लोग उस लीलाको असम्भव बताते हुए उलटे हम लोगोंकी ही निन्दा करते हैं ॥ २१ ॥

अस्मत्समाजे शुभधर्मकर्मणोः क्रियाकलापे व्यवहारकेऽपि च ।
विघ्नास्तथेत्थं रसभङ्गकारिणः सन्त्येव हानीश्वरवादिनो बुधाः ॥२२॥

विद्वानो! खेदकी बात है कि हमारे समाजमें ऐसे बहुत-से अनीश्वरवादी तत्त्व हैं, जो शुभ धर्म-कर्मोंमें, क्रिया-कलापमें तथा व्यवहारमें भी विघ्नस्वरूप होते हैं और बीचमें टोक-टाक कर सरस काव्य-प्रसंगमें रस-भङ्ग कर देते हैं ॥ २२ ॥

प्राणी स्वतन्त्रो बहुधा जगद्‌भ्रमे तथापि तेऽस्मानधिकं क्षिपन्ति हि ।
क्रोशन्तु काका दृढनिश्चया वयं लगाम आगच्छत कृत्य एव भोः! ॥२३॥

इस भ्रमणशील संसारचक्रमें सभी प्राणी बहुधा स्वतन्त्र हैं, तथापि वे लोग हमपर ही अधिक आक्षेप किया करते हैं। करें, कौए काँय-काँय करते रहें, हमलोग तो आइये, दृढ निश्चयके साथ अपने कर्तव्यमें ही संलग्न हों ॥ २३ ॥

शृणोति विद्वानपलापमीदृशं को वाऽत्र ? कुर्वन्तु वदन्तु ते तथा ।
वयं त्वनेनैव वशीकृता हठाद् गायाम एतर्ह्यपि तद्गुणानिह ॥२४॥

कौन विद्वान् पुरुष होगा जो इन नास्तिकोके वैसे अपलाप सुनेगा ? वे जो चाहे करे, जैसा चाहे बोले । हमको तो इस नन्दकिशोरने हठात् अपने वशमे कर लिया है, इसलिए ऐसे समयमे भी हम उसीका गुणगान करते है ॥ २४ ॥

समस्तभक्तेषु सुधीषु साधुषु विद्वत्सु चास्यैव शिशोः प्रियेषु च ।
करोति याञ्चां पदयोर्लुठन्नयं क्षम्यो भवद्भिः प्रकृतं त्यजन् कविः ॥२५॥

समस्त भक्तो, सुधीजनो, साधु-पुरुषो, विद्वानो तथा इस नन्दनन्दनके प्रिय जनोके समीप उनके चरणोमे लोटता हुआ यह कवि याचना करता है कि मैने काव्यके प्रकृत प्रसंगको छोडकर जो दूसरी बात छेड दी है, इसके लिए आप सब लोग मुझे क्षमा प्रदान करे ॥ २५ ॥

कर्तुं ह्यकर्तुं च विधातुमन्यथा समर्थ ईशोऽस्ति सदा स्मरन्तु ते ।
दृढं परीक्षन्तु च शक्तिरस्ति चेत् कीदृग् शिशुर्दृश्यत एष भो ! तदा ॥२६॥

वे आधुनिक विचारवाले लोग यह सदा स्मरण रक्खे कि ईश्वर करने, न करने और अन्यथा करनेमे भी समर्थ है। यदि शक्ति हो तो वे इस बातकी दृढता पूर्वक परीक्षा कर ले । हे पाठको ! देखिये, वह नन्दशिशु उस समय वहाँ (ध्यानमे) कैसा दिखायी देता है ॥ २६ ॥

तदस्तु, चेत्थं सकलेष्वथो सुखं समागतेष्वत्र शिशुः स्वरूपतः ।
प्रेम्णा विनिष्कास्य महत्तमं महः सर्वान् समाह्लादयदागतांस्ततः ॥२७॥

अस्तु, छोडिये इन अप्रासगिक बातोको, उस समय उन सब व्रजवासियोके सुखपूर्वक वहाँ आ जानेपर वह परब्रह्म-रूप शिशुने प्रेमपूर्वक अपने स्वरूपसे ही महत्तम तेज प्रकट करके वहाँ आये हुए सबलोगोको आह्लादित कर दिया ॥ २७ ॥

दृष्ट्या स्वया शान्तमनोऽभिरामया विलोक्य सर्वान् भ्रमणेन सर्वतः ।
तान् स्वागतीकृत्य विमुग्धया धिया ननर्त चक्रभ्रमिमेष सोत्सुकः ॥२८॥

अपनी शान्त एव मनोभिराम दृष्टिसे सब ओर घूम-घूमकर सबका अवलोकन करके उसने विमुग्ध बुद्धिसे सबलोगोका स्वागत किया, फिर उत्सुक होकर वह घूमते हुए चक्रके समान वहाँ नाचने लगा ॥ २८ ॥

आह्लादिता इत्थमयत्नतोऽमुना दृष्ट्वा च नृत्यन्तममुं मनोहरम् ।
भृशं विमुग्धा गुणरूपमोहितास्तूष्णीमतिष्ठन् सकलास्तदाऽऽगताः ॥२९॥

इस प्रकार उस बालकने सबको विना यत्नके ही आनन्द-मग्न कर दिया। उस मनोहर शिशुको नाचते देख अत्यन्त मुग्ध हुए सकल समागत सज्जन उसके गुण और रूपसे मोहित हो चुपचाप चित्रलिखित-से खडे रह गये ॥ २९ ॥

**परं वयस्याः प्रियबालबालिका आकर्षिताः स्वेन विनोदिनाऽमुना ।**
**सर्वे समागत्य गृहाङ्गणे सुखं समं ह्यनृत्यन् प्रियसंगतात्मना ॥३०॥**

उस विनोदी शिशुने अपने समान वयवाले बालको और बालिकाओको स्वत अत्यन्त आकर्षित कर लिया। वे सब नन्दगृहके आँगनमे आ अपने प्रिय सुहृदसे मिलकर उसके साथ ही सुखपूर्वक नृत्य करने लगे ॥ ३० ॥

**मन्त्रैर्विमुग्धा भुजगा इवाऽथ ते स्वानां शिशूनां पुरतो व्यवस्थिताः ।**
**लोकातिगां नृत्यकलां निरीक्ष्य तां मूढा बभूवुर्विगतैषणा यथा ॥३१॥**

मन्त्रोसे मोहित हुए सर्पोके समान अपने बालकोके समक्ष खडे हुए वे सब व्रजवासी उस अलौकिक नृत्य-कलाको देखकर मूढ-से हो गये; उनकी सारी इच्छाएँ मानो समाप्त-सी हो गयी ॥ ३१ ॥

**बभ्राम विश्वं परितस्ततो ध्वनिर्ह्लादितानां मुखपद्मनिःसृतः ।**
**तस्यैव शक्त्याऽऽत्मसु तेषु नोदितो मनोहरोऽथस्तनगीतगुञ्जितः ॥३२॥**

उस नृत्यके समय सारा विश्व ही सबओर नाचने लगा। नृत्य-जनित आह्लादमे मग्न हुए लोगोके मुखारविन्दसे निर्गत और अन्त करणमे उस बालकसे ही प्रेरित निम्नाङ्कित गीतसे गूँजता हुआ मनोहर शब्द प्रकट हुआ—॥ ३२ ॥

**जयति ते कृपा चन्द्रशेखर! विलसताच्चिरं गोकुले हर! ।**
**कुशलदाऽधिकं विश्ववस्तुषु सुखकरी भृशं जीवजन्तुषु ॥३३॥**

'हे सकटहरण हर! हे चन्द्रशेखर! आपकी कृपा सर्वोपरि विराजमान है, वह गोकुलमे चिर कालतक विलास करती रहे। वह विश्वकी समस्त वस्तुओमे अधिक कुशलता देनेवाली तथा जीव-जन्तुओके भीतर विशेष सुख उत्पन्न करने वाली है ॥ ३३ ॥

**शिशुरयं विभो! त्वत्कृपामिमां ह्यधिगतः स्वतोऽजायताऽत्र यत् ।**
**समभवन्महांस्तं शिशुं पुनर्ह्यव महेश! नो भाग्यमस्तु तत् ॥३४॥**

'सर्वव्यापी प्रभो! यह नन्दशिशु आपकी कृपा पाकर स्वत यहाँ प्रकट हो गया और सबसे महान् बन बैठा। महेश्वर! इस शिशुकी आप पुन. सदैव रक्षा कीजिए। इसका सरक्षण हम सबके लिए महान् सौभाग्य होगा ॥ ३४ ॥

उच्चैः स्वरंताललयप्रपूरितं प्रगाय गीतं गुरुभक्तिसंयुतम् ।
विघूर्ण्य शीर्षाणि निमील्य सुन्दरं स्वनेत्रपद्मान्यथ ते स्थिताः सुखम् ॥३५॥

उच्च स्वरमे ताल और लयसे पूरित, इस भारी भक्तिसे युक्त गीतको गा-गा कर सब लोग सिर हिलाने लगे और सुन्दर ढङ्गसे अपने नेत्र-कमलोको बन्द करके सुख पूर्वक बैठे रहे ॥ ३५ ॥

इतः स दिव्योऽद्भुतवैश्यबालको विचिन्तयामास तदा क्षणं हृदि ।
मन्मातृकल्पा अबला गृहे गृहे तिष्ठन्त्यशक्ता हि समेतुमत्र ताः ॥३६॥

इधर वह दिव्य एव अद्भुत वैश्यबालक क्षण भरके लिए अपने हृदयमे इस प्रकार विचार करने लगा—'व्रजवासियोके घर-घरमे मेरी माताके समान बहुत-सी अबलाएँ हैं, जो यहाँ आनेमे असमर्थ होकर वही रहती हैं ॥ ३६ ॥

या उत्सुका जन्मत एव दर्शनान्मदेकतानाश्च गुणैर्विमोहिता ।
स्वसद्मकृत्ये विनियोजिता अतो ह्यनागता याम्यहमद्य तद्गृहान् ॥३७॥

जो जन्मसे ही मेरे दर्शनसे उत्सुक हो सारी चित्तवृत्ति केवल मुझमे ही लगाकर एकतान हो गयी हैं, मेरे गुणोंसे मोहित रहती हैं, वे अपने घरके काम काजमे लगा दी गयी है, अत. यहाँ नही आ सकी हैं, अब मैं ही उनके घरोमे चलता हूँ ॥ ३७ ॥

विचार्य चेत्थं स्वजनाभयप्रदो महाविनोदी शिशुरेष कौतुकी ।
तथैव संस्थाप्य विघूर्णमस्तकान् स्वं प्रापयामास तदैव तद्गृहान् ॥३८॥

स्वजनोको अभय प्रदान करनेवाला वह महाविनोदी कौतुकी शिशु मन-ही-मन ऐसा सोचकर वहाँके लोगोको उसी तरह सिर हिलाते बैठे छोडकर स्वय उन माताओके घर-घरमे तत्काल चला गया ॥ ३८ ॥

बीजानि वृक्षा ददतीह चाऽऽत्मतो यथाऽन्यकायेषु विशन्ति योगिनः ।
तथैव शक्त्याश्रयिणाऽमुनापि भो ! अधारि रूपान्तरमैश्वरं क्षणात् ॥३९॥

जैसे वृक्ष अपने स्वरूपसे ही बीज देते हैं, जैसे योगीलोग दूसरे शरीरमे प्रवेश किया करते हैं, उसी प्रकार अपनी शक्तिभूता योगमायाका आश्रय लेनेवाले उस शिशुने भी दूसरा ईश्वरीय रूप क्षणभरमे धारण कर लिया ॥ ३९ ॥

ततो गतः प्राग्वितते स्वमन्दिरे भाण्डारके गोदधिदुग्धसञ्चिते ।
तत्रस्थवस्तून्यसकृद्यथासुखं निरीक्ष्य सोऽचिन्तयदित्थमीश्वरः ॥४०॥

वहाँसे चलकर वह पहले अपने विशाल भवनमे गया, जहाँ भण्डारमे गौओके दही-दूधसे भरे मटके रक्खे थे। वहाँकी वस्तुओका बारम्बार सुखसे अवलोकन करके उस ईश्वररूप शिशुने इस प्रकार सोचा ॥ ४० ॥

इमान् रसौघान् नवलक्ष्यसंख्यका मत्सद्मगावो ददतीह नित्यशः ।
परन्तु खादन्ति सुधोपमानिमान् कंसादयः क्रूरधियोऽपि माथुराः ॥४१॥

'मेरे घरमे नौ लाख गौएँ हैं और वे प्रतिदिन इस गोरस-राशिको देती रहती हैं। परन्तु इन अमृतोपम वस्तुओको मथुरावासी क्रूर-चित्तवाले कस आदि असुर खाते हैं ॥ ४१ ॥

वैश्या वयं क्षेत्रविकर्षणव्रता गोवृत्तयो युक्तमिदं स्वधर्मतः ।
किन्त्वत्र कर्तुं दधिदुग्धविक्रयं ह्ययोग्यमेवाऽहिषु दुग्धदानवत् ॥४२॥

हमलोग नियमपूर्वक खेत जोतनेवाले वैश्य है। गौएँ ही हमारी आजीविकाका साधन हैं। यह धर्मत हमारे लिए उचित है। किन्तु यहाँ दही-दूधका विक्रय करना कदापि ठीक नही है। असुरोको गोरस देना साँपको दूध पिलानेके समान भयकर है ॥ ४२ ॥

पिबन्तु ते गोरसमेत्र नित्यशः का नोऽत्र हानिर्गुणगृघ्नवो वयम् ।
परं ह्यमीषां निगमागमात्मनां दुग्धं त्वपेयं प्रतिभाति तैः खलैः ॥४३॥

'वे ही रोज गोरसका पान करे, इससे हमारी हानि ही क्या होती हैं, हम लोग तो गुणोके अभिलाषी हैं, परन्तु ये गौएँ निगमागम स्वरूपा हैं, इनका दूध वे दुष्ट असुर पीये, 'यह उचित नही जान पडता है' ॥ ४३ ॥

तस्मादिमं गोरससिन्धुमक्षयं पिबाम्यहं प्रागुपयुक्तमाचरन् ।
गावोऽपि तुष्यन्तु, धरा च तृप्यतु, पिबन्तु मित्राणि च मर्कटैः सह ॥४४॥

'इसलिए उपयुक्त आचरण करता हुआ इस अक्षय गोरस-सिन्धुको पहले मै पीऊँगा, इससे गौएँ भी सतुष्ट होंगी और वसुधाको भी तृप्ति प्राप्त होगी। मेरे साथ ही ये मेरे सखा ग्वालबाल तथा मोर-बदर भी इस गोरसकी पान करें' ॥ ४४ ॥

विचार्य चेत्थं कृतकौतुकक्रियो यथार्थदर्शी कविरेष बालकः ।
हैयङ्गवीनं दृढकाष्ठभाजनान्निष्कास्य वत्स्वात्ममुखे जुहाव ह ॥४५॥

इस प्रकार विचार करके वह कौतुककारी और यथार्थदर्शी कवि-बालक काठके बने हुए सुदृढ पात्रसे ताजा माखन निकालकर अपनी मुखाग्निमे उसकी आहुति देने लगा ॥ ४५ ॥

ततोऽन्तराऽसौ विजने व्यवस्थितो जघास बालो दधि दुग्धमेव च।
यद्भोजने तन्मृदुहस्तपादतः संघट्य पात्राणि बभञ्जुरञ्जसा ॥४६॥

तदनन्तर निर्जन एकान्तमे बैठे हुए उस बालकने दही खाया और दूध भी पी लिया। दही दूध खाते समय उसके कोमल हाथ–पैरोसे जो टकरा जाते वे वर्तन-भॉड तत्काल टूट-फूट जाते थे ॥ ४६ ॥

ततो ह्रदोऽजायत निर्मलो महान् भाण्डालयेऽस्मिन् दधिदुग्धमिश्रितः।
श्रौषट् धरायै सकलां गवां रसः स्वाहाऽग्नये चेति वदन्नसौ स्मितः ॥४७॥

फिर तो इस भाण्डागारमे दही-दूधके मिश्रणसे युक्त एक महान् तालाब-सा बन गया। उस समय वह नन्द-किशोर 'यह सकल गोरस धरायै श्रौषट्, अग्नये स्वाहा' इत्यादि बोलता हुआ मुसकरा उठा ॥ ४७ ॥

उपद्रवैरित्थमयत्नतः कृतैः स्वात्मप्रियैरर्थपरम्पराश्रितैः।
रराज कृष्णोऽपि स शुक्लवद्ध्यहो! सर्वाङ्गलग्नैर्दधिदुग्धसद्घृतैः ॥४८॥

अनायास किये गये और अपनेको प्रिय लगनेवाले इन उपद्रवोसे, जो अर्थ शास्त्रीय परम्परापर अवलम्बित थे, वह काला कन्हैया भी सारे अङ्गोमे लगे हुए दही, दूध और माखनसे श्वेत जैसा हो गया। कैसा अद्भुत दृश्य था! ॥ ४८ ॥

एकीकृतं तत्सकलां गवां रसं विज्ञातवान् तत्र ह्रदेऽपि सोऽव्ययः।
अस्या अयं भाग इतीह कौतुकी सस्मार तास्ताः कपिलादिकाश्च गाः ॥४९॥

उस तालाबमे समस्त गौओका गोरस एकमे मिल गया था, तथापि वह अविनाशी चिन्मय बालक यह पहचान लेता था कि गोरसका यह भाग अमुक गायका है और यह अमुक गायका। इस प्रकार उन-उन कपिला आदि गौओका वह स्मरण करता जाता था ॥ ४९ ॥

निमज्जमानो दधिदुग्धपूरिते ह्रदेऽद्भुते भग्नघटादिभिर्वृते।
व्रजेश्वरीं मातरमाजुहाव स तत्रैव तां दर्शयितुं व्यवस्थितिम् ॥५०॥

टूटे फूटे घडे आदि बर्तनोसे आवृत और दही-दूधसे भरे हुए उस अद्भुत तालाबमे डूबता हुआ वह नन्दशिशु अपनी माता व्रजेश्वरी यशोदाको वहाँकी स्थिति दिखानेके लिए वही पुकारने लगा ॥ ५० ॥

मातस्त्वमागच्छ गृहान्तरे द्रुतं ह्यहं निमग्नोऽस्मि ह्रदेऽत्र दुर्गमे।
श्रुत्वैव सा तस्य रवं पुरःस्थितं व्यपश्यदव्यग्रमित. शुचिस्मितम् ॥५१॥

'मैया ! तुम जल्दी घरके भीतर आ जाओ मैं यहाँ एक दुर्गम तालावमे डूब रहा हूँ' । उसकी यह आवाज सुनते ही व्रजरानी ज्योही उधर जानेको उद्यत हुई त्योही उन्होने उसे अपने सामने ही अव्यग्र-भावसे खडा देखा, वह मन्द-मन्द मुसकरा रहा था ॥ ५१ ॥

**परन्तु भूयोऽपि तदुच्चसुस्वरं शुश्राव चार्त्या गदितं पुनः पुनः ।**
**कुतूहलाक्रान्तमना मनागितो नृत्यन्तमेनं तु ददर्श चाङ्गने ॥५२॥**

परन्तु पुनः उच्चस्वरसे बारबार उसकी आर्त पुकार सुनायी देने लगी । अब यशोदा-जीके मनमे कौतूहल उत्पन्न हुआ, वे ज्यो ही कुछ कदम आगे बढी त्योही अपने लालाको आँगनमे नाचते देखा ॥ ५२ ॥

**गृहान्तराद्भूय उपागमद्रव आगच्छ चान्तस्त्वरयेति मे प्रसू ! ।**
**द्रुतं समुत्थाय ततो यशोवती जगाम साऽन्तर्भवनं ससंभ्रमम् ॥५३॥**

घरके अदरसे फिर आवाज आई—'अरी ! ओ मेरी मैया ! जल्दी भीतर आओ ।' तब यशोदा तुरत उठकर बडे वेगसे दौडती हुई घरके भीतर गयी ॥ ५३ ॥

**सत्यं ! सुतं नीलमणिं तथा ह्रदे ददर्श मज्जन्तमियं व्रजेश्वरी ।**
**स्वात्मप्रियं प्राणधनं सुतं ततः कृष्णेति चक्रन्द भृशं निपीडिता ॥५४॥**

वहाँ जाकर व्रजेश्वरी यशोदाने सचमुच ही अपने लाला नीलमणिको दही-दूधके तालावमे डूबते देखा । वह उन्हे अत्यन्त प्रिय था, उनका प्राणधन था । उसे उस अवस्थामे देखकर पीडाका अनुभव करती हुई व्रजेश्वरी चीख उठी 'ओ कृष्ण !' ॥ ५४ ॥

**यदाऽङ्गनादन्त उपागतो ह्यसौ चोचेऽहमायात इहाऽस्मि भो ! इति ।**
**तदा गताधिः परिवृद्धविस्मया व्यलोकयत्साऽऽगतमङ्गनादमुम् ॥५५॥**

तब आँगनसे घरमे आकर कृष्ण बोला—'आ गया माँ ! मै यहाँ हूँ ।' यह देख उनकी मानसिक चिन्ता दूर हुई और आश्चर्य बढ गया । सचमुच उन्होने कृष्णको आँगनसे ही आया देखा ॥ ५५ ॥

**निभाल्य सम्यग्भवनान्तरे पुनः सुतं ह्यदृष्ट्वैव विलोक्य साऽत्र तु ।**
**प्रियं तमाश्लिष्य नताङ्गमञ्जसा पपात द्वार्येव विमोहिता भृशम् ॥५६॥**

फिर उन्होने घरके भीतर भली-भाँति देखा, वहाँ कन्हैया नही था, उसे यहाँ द्वारपर देखकर उन्होने झुके हुए अगवाले उस प्यारे शिशुको हृदयसे लगा लिया और अत्यन्त मोहित होकर वे घर-दरवाजेपर ही गिर पडी ॥ ५६ ॥

**कोलाहलोऽभूदथ चाङ्गणे महान् दृष्ट्वा पतन्तीं व्रजराजगेहिनीम् ।**
**तत्रस्थितैस्तैर्व्रजवासिभिः कृतो दुःखात्मकोऽज्ञातपरार्थभावितः ॥५७॥**

फिर तो व्रजराज गेहिनी यशोदाको गिरती देख नन्दके आँगनमे भारी कोलाहल मच गया। वहाँ जो व्रजवासी खड़े थे, वे दु खपूर्ण आर्तनाद कर उठे। उन्हे वास्तविक कारणका पता नही था ॥ ५७ ॥

**ततोऽसौ विनोदी स्वमातुस्थितिं तां बिलोक्यैव हृष्टो व्रजेशं समीक्ष्य ।**
**समुत्प्लुत्य कृत्वोरसि स्वात्मपातं ममार्जैष वक्त्रं पिबन् स्तन्यमस्याः ॥५८॥**

तब उस विनोदी बालकने अपनी माताकी उस स्थितिको देखकर मन-ही-मन हर्षका अनुभव किया और व्रजराज पर दृष्टिपात करके वह उछलकर माताकी छाती पर गिरा और उसका स्तन्य पान करता हुआ उसके मुँहको हाथसे पोछने लगा ॥ ५८ ॥

**स्पर्शेन तस्य सुखदेन परात्मगेन ह्याह्लादिता व्रजपतेर्महिषी सती सा ।**
**उन्मील्य दृष्टियुगमव्ययमात्मपुत्रं दृष्ट्वा स्ववक्षसि बभूव सुखे निमग्ना ॥५९॥**

उस बालकका कर स्पर्श परात्मसुखकी प्राप्ति करानेवाला था, बहुत ही सुखद एव आह्लादकारी था, उससे आह्लादित हुई व्रजेश्वरी सती यशोदाने दोनो नेत्र खोल दिए और प्रियपुत्रको वक्ष स्थल पर देखकर वे सुखके सिन्धुमे निमग्न हो गयी ॥५९॥

**सा दिव्याऽद्यतनी लीला कृष्णस्य परमात्मनः ।**
**महद्बीजमभूद् दुष्टान् संहर्तुं रक्षितुं सतः ॥६०॥**

परमात्मा श्रीकृष्णकी आज की हुई वह दिव्य लीला दुष्टोके सहार तथा सज्जनोके सरक्षणके लिए महान् बीज ( कारण ) बन गयी ॥ ६० ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**सर्गो द्वाविंश एषोऽगान्महाकाव्ये स्तवात्मके ॥६१॥**

कृष्णप्रसाद घिमिरेकी कृति इस 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे यह बाईसवा सर्ग पूरा हुआ ॥ ६१ ॥



# त्रयोविंशः सर्गः

[ भगवतो वैश्यबालकस्येप्सितगोवत्समोचनादिलीलावर्णनम् । ]

( वसन्ततिलकावृत्तम् )

तत्रैकदा ससुखमित्थमहन्यतीते लीलाह्रदेऽत्र विनिमज्जति गोपवृन्दे ।
सस्मार पूर्वचरितं भगवान् मुकुन्दो ह्याह्लादिता व्रजजनाः शमदेन येन ॥१॥

व्रजमे एक दिन, जब इसी प्रकार सुखपूर्वक दिन बीत गया, भगवान्‌के लीला-सरोवरमे गोपवृन्द निमग्न होने लगे, भगवान् मुकुन्दने अपने पूर्व चरित्रका स्मरण किया जो परम शान्तिदायक था, और जिससे समस्त व्रजवासी जन आह्लादित होते थे ॥ १ ॥

लोकातिगा बुधजनैः सततं विचिन्त्या लीला विधाय रुचिरा गुणगौरवाढ्याः ।
आह्लादितान् व्रजजनान् परमात्मतत्त्वं नीत्वा भवानि कृतकृत्य उदारचेष्टः ॥२॥

'पण्डितजन जिनका सदा चिन्तन करें, जो अलौकिक, रुचिर तथा गुण-गौरवसे सम्पन्न हो, ऐसी लीलाओका विधान करके आनन्दमग्न हुए व्रजवासियोको परमात्म-तत्त्वमे पहुँचाकर मै अपनी उदार चेष्टाएँ प्रकट करता हुआ कृतकृत्य हो जाऊँगा।' ॥ २ ॥

एतद्विचिन्त्य परितो गुरुमातृवर्गे शान्तेऽत्र पश्यति तथाऽवहिते विमुग्धे ।
मन्दस्मितेन समितिं परितोष्य कान्त्या सूर्यप्रभां मलिनयन् स ननर्त भूयः ॥३॥

ऐसा सोचकर मन्द मुसकानसे व्रजवासियोके समुदायको परितुष्ट करके अपनी कान्तिसे सूर्यदेवकी प्रभाको भी मलिन करते हुए श्रीकृष्ण पुनः वहाँ नाचने लगे। गुरुजन-वृन्द तथा मातृवर्ग शान्त, मुग्ध तथा सावधान होकर वहाँ वह सब कृत्य देख रहे थे ॥ ३ ॥

आसीच्छविस्तदनु तस्य मनोऽभिरामा रामेव भूषिततनुर्गुणशीलधामा ।
संपश्यतां हृदि शमादि ददातुकामा सर्वार्थदेति विबुधैर्दृढचिन्त्यमाना ॥४॥

तदनन्तर श्रीकृष्णकी छवि और भी मनोभिराम हो गयी, उनकी देह रमणीकी भाँति विभूषित हो तदनुरूप गुण और शीलका धाम बन गयी थी। कन्हैयाकी वह छवि दर्शकोके हृदयमे शम-दमादि उत्पन्न करना चाहती थी। 'वह सर्वार्थ दायिनी हैं, इस प्रकार विबुध-जन दृढतापूर्वक उसका चिन्तन करते थे ॥ ४ ॥

तस्याः प्रभाववशतोऽथ विमुह्यमाने तत्र स्थिते सुखपरे जन एकताने ।
कृष्णाङ्ग एष गुणवन्तममुं हिमाङ्गं स्वस्याऽग्रजं मुदित आह दृगिङ्गितेन ॥५॥

तब उस छावके प्रभावसे वहाँ उपस्थित हुए सभी लोग सुखमग्न एव मोहित हो गये थे, सब उसीमे एकतान हो रहे थे। इसी समय वह श्याम कान्ति वाला शिशु हिमके समान श्वेत गौर शरीरवाले अपने बडे भाई बलरामसे नेत्रोके सकेत द्वारा प्रसन्नता पूर्वक यो कहने लगा—॥ ५ ॥

**आर्या ! भवन्त इह मान्यजनान् गुणाढ्यान् संमोह्य सद्गुणगणै रुचिरं वसन्तु।**
**वात्सल्यतो मयि गतात्मधियो विमुग्धा मान्याः स्त्रियः सुखयितुं लघु याम्यहं तु ॥६॥**

आर्य ! आप अपने सद्गुण-समूहसे यहाँके माननीय गुणाढ्य जनोको मोहित करते हुए यही रुचिर-निवास करे। मै तो उन मान्या गोपाङ्गनाओको सुख देनेके लिए जा रहा हूँ, जो वात्सल्य-भावसे मुग्ध हो अपनी मन-बुद्धिको मुझमे लगा चुकी हैं॥ ६ ॥

**इत्यूचिवान् प्रियगुणैर्ग्रथितान्तरात्मा सोऽन्तर्हितस्तत उपागमदेष बालः।**
**आर्योपनन्दभवनं गुणवैभवाढ्यं स्वात्मप्रियैः परिजनैर्वृतमात्मनीनम् ॥७॥**

जिसकी अन्तरात्मा प्रिय लगनेवाले गुणोसे ग्रथित है, वह श्याम शिशु ऐसी बात कहकर तत्काल वही अन्तर्धान हो आर्य-उपनन्दके उस गुण-वैभव सम्पन्न भवनमे चला गया, जो अपने प्रिय परिजनोसे घिरा तथा अपने लोगोके लिए परम हितकर था॥ ७ ॥

**दृष्ट्वाऽत्र तं प्रियजनानुपशिक्षयन्तं सच्चिन्मयं परमशान्तमुमेशतत्त्वम्।**
**गत्वा समीप उपविश्य तदर्थलुब्धः शुश्राव शान्तमनसाऽनुपलक्षितस्तैः ॥८॥**

वहाँ जाकर उसने देखा कि उपनन्दजी अपने प्रियजनोको परम शान्त, सच्चिन्मय, शिवतत्त्वका उपदेश दे रहे हैं। निकट जाकर वह बैठ गया और उन सबसे अदृश्य रहकर उपनन्दजीके द्वारा प्रतिपादित विषयपर लुब्ध हो शान्तचित्तसे उसको सुनने लगा॥ ८ ॥

**वत्सा ! शृणुध्वमिदमव्ययमात्मतत्त्वं प्राप्तं मयेह शुभदं गुरुगर्गवक्त्रात्।**
**शान्तं शिवं भजत सद्गुरुलब्धये प्राक् यूयं लभध्वमखिलं स्वगुरोः कृपातः ॥९॥**

वत्सो ! सुनो, यह अविनाशी, शुभद आत्मतत्त्व मैने गुरुदेव गर्गाचार्यजीके मुखसे प्राप्त किया है। तुम लोग भी सद्गुरुकी प्राप्तिके लिए पहले शान्तस्वरूप भगवान् शिवका भजन करो। फिर अपने गुरुदेवकी कृपासे सपूर्ण तत्त्वका ज्ञान प्राप्त कर लो॥ ९ ॥

**वक्ति स्म मां मुनिवरो हरिभक्तिपूर्णो घूर्णो महागुणगणैरतुलैस्तदीयैः।**
**उद्धर्तुमात्मपुरुषान् व्रजराजधाम्नि विक्रीडतेऽद्य शुभदः स इहाऽवतीर्णः ॥१०॥**

हरिभक्तिसे परिपूर्ण हृदयवाले मुनिवर गर्गजी भगवान्‌के अनुपम एव महान् गुणगणोसे आनन्दमत्त रहते हैं। उन्होने मुझसे कहा था कि 'कल्याणदाता भगवान् श्रीहरि अपने भक्त-

जनोका उद्धार करनेके लिए इस भूतलपर व्रजराज नन्दके घरमे अवतीर्ण हो नाना प्रकारकी क्रीडाये कर रहे है ॥ १० ॥

**विज्ञाय यं भवगतौ भ्रमतां जनानां ज्ञातव्यमेव किमपीह न विद्यतेऽङ्ग ! ।**
**तज्ज्ञानकारणमुमेशपदाब्जसेवाप्रीतिश्चकास्ति भज तं त्विह लब्धयेऽमुम् ॥११॥**

'उपनन्द । सुनो—जिन भगवान्‌को जान लेनेपर ससारगतिमे भ्रमण करनेवाले लोगोके लिए यहाँ कुछ भी ज्ञातव्य नही रह जाता है, उनके ज्ञानका कारण है—भगवान् उमानाथके चरण-कमलोकी सेवामे प्रीतिका होना। भगवच्चरण-सेवा—प्रीति ही सर्वत्र सुशोभित होती है, अत श्रीहरिकी उपलब्धिके लिए उन शिवका ही भजन करो ॥ ११ ॥

**मुग्धा विशुद्धमनसः सरलाः स्वभावादाबालवृद्धवनितादियुता व्रजस्थाः ।**
**आश्रुत्य तत्सुगमसद्गुरुलब्ध्युपायं मग्ना बभूवुरधिगम्य गुरुं सुखाब्धौ ॥१२॥**

बालको, वूढो और वनिताओ सहित समस्त व्रजबासी स्वभावसे ही सरल, मुग्ध और विशुद्ध चित्तवाले थे। वे सद्‌गुरुकी प्राप्तिका यह सुगम उपाय सुनकर और गुरुको जानकर सुखके समुद्रमे निमग्न हो गये ॥ १२ ॥

**तद्भक्तिपूर्णहृदयेषु जनेषु तेषु चाह्लादितेषु विनिमीलितलोचनेषु ।**
**स्वं दृश्यरूपमभिगृह्य पुरःस्थितानां तेषां गृहानधिजगाम शिशुर्विनोदी ॥१३॥**

वे सबलोग भगवान् शिवके प्रति भक्तिभावसे परिपूर्ण हृदयवाले हो गये। आनन्दमग्न होकर उन सबने अपने नेत्र मूँद लिये। उसी समय वह विनोदी बालक कन्हैया सामने बैठे हुए लोगोके घरोमे दृश्यरूप धारण करके प्रविष्ट हुआ ॥ १३ ॥

**गोष्ठं विलोक्य पुरतः प्रथमं समृद्धं गोवत्सवृन्दशतकैरभिशोभमानम् ।**
**प्रेम्णा निरीक्ष्य सकलान् स्रवदश्रुधारान् तान् बन्धनाँल्लघु मुमोच कृपालुरेषः ॥१४॥**

वहाँ पहले उसने देखा सामने समृद्धिशाली गोष्ठ है, जो सैकडो बछडोसे सुशोभित है। वे सब प्रेमसे इस नन्द-शिशुको देखकर नेत्रोसे अश्रुधारा बहाने लगे। इस कृपालु बालकने उन सबको बन्धनमुक्त कर दिया ॥ १४ ॥

**दाम्नो विमुच्य युगपन्नवनीरदाभं श्यामं शिशुं कृतदयं गुणतोऽभिरामम् ।**
**दृष्ट्वा पुरःस्थितममुष्य गुणैर्विमुग्धा गोभिः समं वृषगणाः परिबव्रुरेनम् ॥१५॥**

एक साथ ही बन्धनसे छूटकर वे सब पशु नूतन जलधरके समान श्याम उस गुणाभिराम शिशुको, जिसने उन सबके ऊपर बडी कृपा की थी, सामने खडा देख, उसके गुणोसे मुग्ध हो गये। गौओ और बछडोके साथ साँड़ भी उसे चारो ओरसे घेरकर खड़े हो गये ॥१५

गोष्ठात्ततः समुपसृत्य कटाक्षभङ्ग्या पश्यन्नितस्ततत उपेन्द्र उपाजगाम ।
तच्छम्भुभक्तिभरितं भजनैः सुरम्यं पूर्वोक्तवेश्मनि पुनः स तथोपविष्टः ॥१६॥

गोष्ठके भीतरसे निकलकर उपेन्द्र श्रीकृष्ण कटाक्ष-भगीसे इधर-उधर देखते हुए पुनः उस पूर्वोक्त सदनमे पूर्ववत् अदृश्य-भावसे आ बैठे, जो भगवान् शङ्करकी भक्ति भावनासे भरा था और भजन-कीर्तन द्वारा अत्यन्त सुरम्य जान पडता था ॥ १६ ॥

गावो वृषा इत उपेन्द्रममुं व्रजन्तं दृष्ट्वा विमुग्धमनसाऽनुगताः सवत्साः ।
आर्योपनन्दगृहसीमनि मार्ग एवं चान्तर्हितः परमसौ ददृशुश्च तं ते ॥१७॥

उपेन्द्रको यहाँसे जाते देख गाय-बैल और बछडे विमुग्धचित्त हो, उनके पीछे-पीछे चले । किन्तु आर्य उपनन्दके घरकी सीमाके भीतर मार्गमे ही वह श्याम शिशु अदृश्य हो गया । उसे अदृश्य होते उन सबने देखा ॥ १७ ॥

या दुर्दशा भवति लुप्तफणामणीनामाशीविषां हतविवेकधियां नराणाम् ।
तेषामपीह युगपच्छिशुलोपजन्या धन्या दशा भवदहोऽतुलशक्तिगम्या ॥१८॥

फणाकी मणिके लुप्त हो जानेसे सर्पोकी जो दुर्दशा होती है तथा विवेक-बुद्धिके नष्ट हो जानेसे मनुष्योकी जैसी दुरवस्था होती है, वैसी ही दुर्दशा उस शिशुके अन्तर्धान हो जानेसे एक साथ ही उन गौओकी भी हुई । उनकी वह धन्य दशा अतुल शक्तिसे ही गम्य थी ॥ १८ ॥

दुःखात्मकेन तददर्शनजेन तेन शोकेन विह्वलधियो वृषभादयस्ते ।
हुम्बारवं गतभयं प्रतिमुञ्चमाना रेजुस्तदार्यभवनं परितः क्षणेन ॥१९॥

नन्द शिशुके उस अदर्शनजनित दु ख-शोकसे विह्वल-चित्त हुए वृषभ आदि हुम्बारव करते हुए एक ही क्षणमे आर्य उपनन्दके घरके चारो ओर निर्भय खडे हो शोभा पाने लगे ॥ १९ ॥

प्रेम्णा निमीलितदृशः शिवभक्तिपूतास्तन्नामकीर्तनपराः स्मृतगर्गवाक्याः ।
ते गोदुहस्तदनु तान् ददृशुः समेतान् हुम्बारवैर्ध्वनितदिग्दशकानसङ्ख्यान् ॥२०॥

वहाँ जो गोप बैठे थे, उनकी आँखे प्रेमसे मुँदी हुई थी । उनका अन्त करण शिव-भक्तिसे पवित्र हो गया था तथा वे गर्गजीके वचनोको स्मरण करके शिव-नामकीर्तनमे लगे हुए थे । उन्होने हुम्बारवसे दशो दिशाओको ध्वनित करनेवाले असंख्य गाय बैलोको वहाँ एक साथ उपस्थित देखा ॥ २० ॥

आश्चर्यफुल्लवदना उपनन्दमुख्याः प्रेम्णाऽवदन् मिथ उपागतगात्रहर्षाः ।
एतत् कथं ह्यभवदेकपदे समस्ता दाम्नो विमुच्य कथमागतवन्त इत्थम् ? ॥२१॥

उस समय उपनन्द आदि गोप एक दूसरेको देखने लगे। उनके शरीरमे रोमाञ्च हो आया। और मुख-कमल आश्चर्यसे खिल उठे। वे बोल उठे—'ऐसा कैसे हुआ ? एक साथ ही समस्त गाय-वृषभ बन्धनसे छूटकर इस तरह यहाँ कैसे आ गये ॥ २१ ॥

**आभाष्य चेत्थमभितः स्मयचित्रितेषु गोपेषु गोपशिशवोऽस्फुटमाहुरित्थम् ।**
**आगत्य गोष्ठमिह नन्दकुमारकृष्णो दाम्नो मुमोच सकलानिति दृष्टवन्तः ॥२२॥**

इसप्रकार एक दूसरेसे कहकर सब ओर गोपगण जब विस्मयविमुग्ध हो, चित्र-लिखितसे हो गये, तब गोपशिशु अपनी तुतलाती हुई बोलीमे इस प्रकार कहने लगे—'नन्द-नन्दन कृष्णने यहाँ गोष्ठमे आकर समस्त गौओको बन्धनसे मुक्त कर दिया है। यह बात हमने अपनी आँखोसे देखी है ॥ २२ ॥

**एतत् कथं भवति गोकुलराजबालो नैतादृशः सुगतिको वयसा स चाल्पः ।**
**तत्रापि दुग्धवदनाः शिशवो वदन्ति विश्वासयोग्यमद एव कथं भवेद्वा ? ॥२३॥**

'यह कैसे सम्भव है ! गोकुल राजकुमार इस प्रकार अच्छी तरह चलने-फिरनेवाला नही है और उसकी अवस्था बहुत थोडी है। उसपर भी दुधमुँहे बच्चे यह बात कह रहे हैं। भला, इनकी बाते विश्वासके योग्य कैसे हो सकती है ?' ॥ २३ ॥

**इत्थं वदत्सु सकलेषु च चित्रितेषु प्रेम्णा निरीक्ष्य सकलान् स महाविनोदी ।**
**सन्नन्दगोष्ठमभिगम्य तथैव वत्सान् गा गोवृषांश्च विमुमोच सुखेन दाम्नः ॥२४॥**

जब सब लोग आश्चर्यचकित हो, ऐसी बाते कह रहे थे, उस समय उस महाविनोदी बालकने उन सबपर प्रेमपूर्ण दृष्टि डालकर सन्नन्द नामक गोपकी गोशालामे प्रवेश किया। और वहाँ भी उसने उसी प्रकार गायो, बैलो और बछडोको सुखपूर्वक बन्धनसे मुक्त कर दिया ॥ २४ ॥

**दृष्ट्वा तदद्भुतशिशुं पुरतो ज्वलन्तं हुम्बारवं प्रतिविमुच्य गुणार्द्रचित्ताः ।**
**चक्रन्दुरार्तमनसा स्वगिरा यदा ते विश्रुत्य तत् सभयमभ्ययुरत्र गोपाः ॥२५॥**

जब वे सब उस दीप्तिमान् अद्भुत शिशुको सामने प्रकाशित होता देख उसके गुणोसे आर्द्रचित्त हो क्रन्दन करने लगे तब उनकी आवाज सुनकर गोपगण भयभीत हो वहाँ आ पहुँचे ॥ २५ ॥

**दृष्ट्वैव तं सजलमेघसमानकृष्णं कृष्णं ह्युपद्रवकृतं वयसाऽग्रजास्ते ।**
**आकृष्य सस्मितगिराऽसमये कुकृत्यं कुर्वन्तमव्ययममुं न्यवदंश्च किं भोः ? ॥२६॥**

सजल जलधरके समान श्यामवर्णवाले उस उपद्रवकारी कृष्णको देखते ही बडी अवस्थावाले गोपबालक चिल्ला उठे और कुकृत्य करते हुए उस अविनाशी शिशुको समय पर ही पकड़कर मुस्कराती हुई वाणीमे उससे बोले—'अजी ! यह क्या हो रहा है !' ॥ २६ ॥

संदृश्य तान् गुरुजनान् पुरतःस्थितान् स्वानात्मानमित्थमपराधिनमाकलय्य ।
साधारणीं नरशिशोः प्रकृतिं सुरम्यां गम्यां सुधीभिरनुसृत्य हसन् स तस्थौ ॥२७॥

तब सामने खड़े हुए गुरुजनोको देखकर और अपने आपको इसप्रकार अपराधी पाकर मानव शिशुकी सुरम्य साधारणी प्रकृतिका जो सुधी पुरुषोके लिए ही गम्य है, अनुसरण करके वह बालक हँसता हुआ खडा रहा ॥ २७ ॥

धृष्टं तमीश्वरमिमेऽत्र ग्रहीतुकामा किञ्चित्पदानि पुरतोऽस्य गता यदैव ।
कर्तव्यमूढ उपलब्धपरात्मशक्तिरन्तर्हितः सुखद एष शिशुस्तदैव ॥२८॥

उस ऐश्वर्यशाली धृष्ट बालकको पकडनेके लिए वे गोप ज्योही उसके सामने दो-चार पग चले, त्योही वह सुखदायक शिशु किंकर्तव्यविमूढ हो, अपनी परमात्मशक्तिको उपलब्ध करके अन्तर्धान हो गया ॥ २८ ॥

गोपालराजतनयेऽथ तथा विलीने गोपा बभूवुरतिखिन्नहृदः क्षणेन ।
दृष्ट्वा चमत्कृतिममुष्यशिशोरतुल्यां ह्यन्योन्यमेव सकला विकला अभूवन् ॥२९॥

गोपाल राजकुमार कृष्णके इस प्रकार अदृश्य हो जानेपर गोपोका चित्त क्षण भरमे अत्यन्त खिन्न हो गया। उस शिशुका वह अनुपम चमत्कार देखकर वे सब एक-दूसरेका मुँह ताकते हुए अत्यन्त व्याकुल हो उठे ॥ २९ ॥

तद्वद्व्रजस्थगुरुमान्यसुधीजनानां गोष्ठे प्रविश्य बहुरूपधरोऽर्भकोऽसौ ।
दाम्नो विमुच्य सुरभीवृषमानकाले वत्सानपाययदहो ! पय आत्मतुष्ट्यै ॥३०॥

इसी प्रकार व्रजके निवासी गुरु मान्य तथा सुधी जनोके गोष्ठमे प्रवेश करके उस अनेक रूपधारी बालकने असमयमे ही गौओ और बैलोको बन्धन-मुक्त करके बछडोको दूध पिला दिया। यह सब उसने अपनी प्रसन्नताके लिए किया ॥ ३० ॥

स्वां योगशक्तिमधिगम्य ततः स बालो द्रागाससाद वृषभानुगृहं समृद्धम् ।
यस्याऽजिरे प्रियसखीनिवहैः समेता ह्यासीद्विमुग्धहृदयाऽस्य सुता भ्रमन्ती ॥३१॥

तदनन्तर अपनी योगशक्तिका आश्रय ले वह बालक तत्काल ही वृषभानु गोपके समृद्धिशाली भवनमे जा पहुँचा। जिसके आँगनमे अपनी प्रिय सखियोके साथ विमुग्ध-हृदया वृषभानुनन्दिनी श्री राधा विचर रही थी ॥ ३१ ॥

दृष्ट्वैवताममितकान्तिममेयरूपां संभ्रान्त एष बहुधाऽतुलशक्तितोऽस्याः ।
तूष्णीं जगाम तत एव सुशोभितं तद्गोष्ठं गवां बहुगणैः कृतभव्यभूषम् ॥३२॥

उनकी कान्ति अनन्त एवं अपरिमित थी। उनके रूपसौन्दर्यकी कही तुलना नही थी। उसकी अनुपम शक्तिसे यह नन्दनन्दन सम्भ्रममे पड़ गया और चुपचाप गौओकी अनेक यूथोसे सुशोभित उनके गोष्ठमे चला गया, जिसकी सजावट बडी भव्य थी ॥ ३२ ॥

अत्रापि पूर्ववदहो स्थिरबुद्धिरेष दाम्नो मुमोच सुरभीवृषवत्सकांस्तान् ।
प्रेम्णा निरीक्ष्य सभयं सनिवृत्तमानस्तामेव कीर्तितनयां स्वपुरो व्यपश्यत् ॥३३॥

वहाँ भी सुस्थिर चित्तवाले इस बालकने पूर्ववत् गायो, बैलो और बछडोकी रस्सी खोल दी। फिर प्रेमपूर्वक सभयदृष्टिसे देखते हुए जब वह गोष्ठसे लौटने लगा, तब उन्ही कीर्ति-कन्या श्री राधाको अपने सामने खडी देखा ॥ ३३ ॥

दृष्ट्वा पुरस्तमपराधिनमात्महेतुं सञ्चालकं जगत ईश्वरमेकरूपम् ।
साकं सखीभिरुपगम्य रुपा निरीक्ष्य कस्त्वं ब्रुवन्त्यमुमियं परिवार्य तस्थौ ॥३४॥

उस अपराधी शिशुको, जो स्वय ही अपना कारण था, सम्पूर्ण जगत्को सचालन करनेवाला एकरूप ईश्वर था, सामने देख श्री राधा सखियोके साथ पास आ गयी और रोषपूर्वक उसकी ओर देखती हुई उसे घेरकर खडी हो गयी और तत्काल पूछ बैठी—'तुम कौन हो !' ॥ ३४ ॥

धृष्टोऽपि चैष बलवानपि तामवार्यां कन्यां विलोक्य बहुधाऽऽत्मगुणैज्ज्वलन्तीम् ।
प्रेम्णा समीक्ष्य विगतस्मय आह सोऽहं ब्रह्माऽस्मि चैत्यपुरुषो वद देवि ! का त्वम् ॥

यद्यपि यह बालक धृष्ट और बलवान् भी था, तथापि उस कन्याको रोक न सका। वह अपने बहुविध गुणोसे प्रकाशित हो रही थी। उसे देखकर उसके ऊपर प्रेमपूर्ण दृष्टि डालकर उस शिशुका अभिमान उतर गया और वह बोला—'देवि ! मै परब्रह्म हूँ, चैत्य-पुरुष हूँ, बताओ, तुम कौन हो !' ॥ ३५ ॥

सा चाह भोः ! प्रकृतिरस्म्यमेकरूपा सञ्चालिका जगत ईश्वरशक्तिरेका ।
मायां वदन्ति सुधियो बहुधाऽऽत्तमायां मां ब्रह्मणोऽपि हृदिगां धृतबुद्धिकायाम् ।३६।

वह बोली—'भद्रपुरुष ! मै एकरूपा प्रकृति हूँ। इस जगत्का सचालन करनेवाली अद्वितीय ईश्वर-शक्ति हूँ। सुधीजन मुझे अनेक प्रकारकी माया स्वीकार करनेवाली योगमाया कहते है। मै बुद्धिमयी काया धारण करके परब्रह्मके भी हृदयमे निवास करती हूँ ॥ ३६ ॥

त्वं हन्त ! लब्धबहुधाऽऽत्मबलो बलीयान् यच्छोभसे हृदि सतां धृतचैत्यरूपः ।
इत्थं ह्युपद्रवमहो ! प्रतिसद्म गत्वा कुर्वन् विलज्ज इह भासि कथं विरूप ! ॥३७॥

'परन्तु खेदकी बात है कि तुम्हे अनेक प्रकारका आत्मबल प्राप्त है। तुम सबसे अधिक बलवान् हो। चैतन्यरूप धारण करके सत्पुरुषोके हृदयमे विराजमान हो, तो भी तुम प्रत्येक घरमे जा-जाकर ऐसा उपद्रव करते हो। आश्चर्य है कि इसके लिए तुम्हे लज्जा नही आती यहाँ विरूप ( अथवा विविधरूपधारी ) होकर कैसे शोभा पाते हो ? ॥ ३७ ॥

दृष्टं मया बहुविधं तव कर्म चैतत् यत्पीडयत्यहह ! गोकुलवासिनोऽस्मान् ।
येन त्वयाऽसमय एव निविश्य गोष्ठे संमोच्यते वृषगवां गण एकवृत्त्या ॥३८॥

'अहह ! मैंने तुम्हारा यह बहुविध कर्म देखा है। जिससे तुम हम गोकुलवासियोको पीडा देते रहते हो। तुम असमयमे ही गोष्ठमे प्रवेश करके गाय बैलोके समुदायको एक साथ बन्धनमुक्त कर देते हो ॥ ३८ ॥

**भो मेघकृष्ण ! शृणु मद्वचनं त्वमेकं मैतादृशो भव विनोदरतः कदापि ।**
**गोदुग्धविक्रयपरा व्रजवासिवृत्तिर्यत्क्षीयते पिबति वत्सगणः पयांसि ॥३९॥**

'घनश्याम ! तुम मेरी एक बात सुनो। तुम इस तरहकी क्रीडामे कदापि सलग्न न होओ। व्रजवासियोकी जीविका गायोके दूध-दही बेचनेसे ही चलती है। तुम्हारे कारण जब बछडे सारा दूध पी लेते है, तब वह जीविका क्षीण हो जाती है ॥ ३९ ॥

**सा चाऽऽर्थकी सुमहती भवतीह हानिः सीदत्यतो व्रजजनः सधनोऽधनो हा ! ।**
**या वच्मि गोकुलनिवासिसुतासखीनां यूथेश्वरी प्रकृतिरस्मि गुणेषु लुब्धा ॥४०॥**

'यह बहुत बडी आर्थिक हानि हो रही है। इससे व्रजके धनी भी निर्धन होकर कष्ट पायेगे। मै गोकुलनिवासियोकी कन्यास्वरूपा सखियोकी यूथेश्वरी हूँ। तुम्हारे गुणोपर लुब्ध रहनेवाली दिव्य-प्रकृति हूँ। मै जो कहती हूँ, उसपर ध्यान दो ॥ ४० ॥

**यूथेश्वरोऽहमपि पश्य कटाक्षकान्ते ! त्वं दर्पपूर्णहृदयासि किमीक्षसे माम् ।**
**संभूय यूथश इमे रुचिरा वयस्यास्ते चागता इह विलोकय निर्गुणं माम् ॥४१॥**

श्रीकृष्ण बोले—'अपने कटाक्षसे अत्यन्त कमनीय प्रतीत होनेवाली श्री राधे ! देखा, तुम यूथेश्वरी हो तो मै भी यूथेश्वर हूँ। इस समय तुम्हारा हृदय दर्पसे भरा हुआ है। तुम मेरी ओर इस तरह क्यो देखती हो ! ये मेरे सुन्दर सखा यूथके यूथ एकत्र हो यहाँ आ पहुँचे हैं। मैं इन्हीका यूथेश्वर हूँ। मुझ निर्गुण पुरुषपर दृष्टिपात करो। ॥ ४१ ॥

**नास्त्यत्र भो ! मदपराध इमे व्रजस्थाः कुर्वन्ति गोपनिवहाः सततापराधम् ।**
**नीत्वा बहिर्व्रजपुरान्मथुराप्रदेशे विक्रीयतेऽहहह ! गोरसमेभिरेव ॥४२॥**

'अजी ! मेरा यहाँ कोई अपराध नही है। ये व्रजवासी गोप ही सदा अपराध करते है। हाय ! कितने खेदकी बात है कि ये गोदुग्धजीवी गोप ही व्रजपुरसे बाहर ले जाकर मथुरा प्रदेशमे इस गोरसका विक्रय करते है ॥ ४२ ॥

**एतत् कथं भवति युक्तमहो ! वद त्वं तद्दुग्धविक्रयमशोभनकर्म तेषाम् ।**
**तत्रापि दुष्टहृदयेभ्य इमे सहर्षं नीत्वा स्वयं ददति हन्त ! धनेन किञ्चित् ॥४३॥**

'अहो ! उन गोपगणोका यह गोदुग्ध-विक्रयरूप अशोभन कर्म उचित कैसे हो सकता है ? यह तुम्ही बताओ। उस पर भी विशेषता यह है कि ये स्वय ले जाकर उन दुष्ट हृदयवाले असुरोको थोड़े-से धनके बदले अपना सारा गोरस दे आते है ॥ ४३ ॥

एतां स्थितिं ह्यशुभदां परिहर्तुकामो वत्सानपाययमहं तु गवां पयांसि ।
त्वं कर्म तत् परिहराऽत्र भृशं समर्था यच्छ्रीरिवाऽसि सुखदाऽसि रुषं जहीहि ॥४४॥

'इस अशुभदायिनी परिस्थितिको टालनेके लिए मैने बछडोको सारे गोदुग्ध पिला दिये हैं। तुम भी गोपोके इस गोरस-विक्रय रूप कर्मको रोको, क्योकि इसमे पूर्ण समर्थ हो, लक्ष्मीकी भाँति सर्वसुखदायिनी हो। मेरे प्रतिरोषको त्याग दो ॥ ४४ ॥

गोपालनं धरणिकर्षणमात्मनीना वाणिज्यकर्म विहिता शुभवैश्यवृत्तिः ।
सा क्षीयते न यदि तत्क्रियते व्रजस्थैः किं भो ! ब्रुवन्त्यहह ! सैक्षत वक्रदृष्ट्या ॥४५॥

'गोपालन, खेती और वाणिज्य कर्म—यही अपने लोगोके लिए हितकर शुभ वैश्य-वृत्ति है। अहह ! यदि व्रजवासी यह सब न करे तो इनकी जीविकावृत्ति ही नष्ट हो जायगी ! क्यो जी ! क्या ऐसी बात नही है ?' यह कहती हुई श्रीराधाने कटाक्षपूर्वक श्रीकृष्णकी ओर देखा ॥ ४५ ॥

युक्तं शुभे ! तदपि वच्मि भुजङ्गमेभ्यो गोदुग्धदानमुपयुक्तमहो ! कथं स्यात् ।
तस्मान्निवारय विनिन्दितकर्मणस्तान् गोपान् समस्तधनधान्यगुणैः समृद्धान् ॥४६॥

'शुभे ! तुम्हारा कहना ठीक है तथापि अहो ! सर्पोंको गायका दूध पिलाना कैसे उपयोगी हो सकता है ? यहाँके गोप समस्त धनधान्य-गुणोसे सम्पन्न हैं, तथापि यह निन्दित कर्म कर रहे हैं। अत तुम इन्हे रोको ॥ ४६ ॥

किं दानकारणमथाऽपि वरोरु ! तत्र यद्दीयते प्रतिदिनं स्वयमेव नीत्वा ।
दुग्धाधिकत्वविनिवारणमेव तच्चेद् गोपाः सदा ददतु मूल्यमृते सुधीभ्यः ॥४७॥

'वरोरु ! गोप लोग जो प्रतिदिन स्वयं ले जाकर दुष्टोको दूध दही दे आते हैं, उनके इस दानका क्या कारण है ? यदि दूधकी अधिकताका निवारण करना ही कारण है, तो गोपगण सदा ज्ञानी सत्पुरुषोको दूध दिया करें और उनसे इसके लिए कुछ भी मूल्य न ले।' ॥ ४७ ॥

इत्यूचिवान् स तत एव विलीय भूयः स्वस्याऽङ्गणं समधिगम्य विलोक्य सर्वान् ।
लीलां समाप्य बहुसारभरां विचिन्त्यां ह्यङ्के स्वमातुरवसच्च कुचौ प्रगृह्य ॥४८॥

ऐसा कहकर श्रीकृष्ण वहींसे अदृश्य हो गये और पुनः अपने आँगनमे आकर सबकी ओर दृष्टिपात करके उन्होने अत्यन्त सारपूर्ण और चिन्तन करने योग्य अपनी वह लीला समाप्त की। फिर अपनी माताके गोदमे जा बैठे और उसके स्तन पकडकर पीने लगे ॥४८॥

भक्ता बुधा भावुकसाधवोऽङ्ग ! मुग्धा वयं साम्प्रतमस्य पाठात् ।
विश्रम्य किञ्चिद्रसपानमग्ना भूयः पठिष्याम इयं स्थितिः स्यात् ॥४९॥

हे भक्तो ! विद्वानो ! और भावुक साधु पुरुषो ! इस समय हम इस काव्य-पाठसे भाव-मुग्ध हो गये हैं। अब थोडा विश्राम लेकर पुन रसपानमे मग्न हो इसे पढेगे। यही स्थिति रहे ॥ ४९ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**त्रयोविंशोऽपि सर्गोऽगान्महाकाव्ये स्तवात्मके ॥५०॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे तइसवॉ सर्ग पूरा हुआ ॥ ५० ॥



# चतुर्विंशः सर्गः

[ भगवत शौचस्नानादि वर्णनम् । तस्य प्राङ्गणाऽऽगमनम् । भगवता रामेण तद्भाविकार्यक्रमनिर्देशनञ्च ]

( भुजङ्गप्रयातम् )

**कदाचित् प्रभाते प्रबुद्धः स बालो ददर्शाऽऽत्मनस्तल्पसुप्तां यशोदाम् ।**
**निमील्यैव भूयोऽपि नेत्रे मिषेण प्रसुष्वाप हस्तौ क्षिपंस्तत्स्तनाग्रे ॥१॥**

एक दिनकी बात है कि वह बालक नन्दशिशु प्रात काल जाग उठा। उस समय उसने अपनी माता यशोदाको अपनी शय्यापर प्रगाढ नीदमे सोयी देखा। फिर वह भी नीदका बहाना लेकर दोनो आँखे बन्द करके माताके स्तनाग्र-भागपर हाथ फेंकता हुआ सो गया ॥ १ ॥

**तदानीं समुद्भूतवार्तः स्वचित्तेऽभवद् ध्यानमग्नः स्वकृत्ये सदर्थे ।**
**मया गोकुलानां हितार्थं सुखेन प्रसूनां स्तनं पायितास्तर्णकाद्याः ॥२॥**

उस समय उसके मनमे एक बात आयी। वह सत्पुरुषोके हितके लिए किये जानेवाले अपने कर्तव्यके विषयमे ध्यानमग्न होकर सोचने लगा।—'मैने गोकुलके हितके लिए सुखपूर्वक बछडे आदिको उनकी माताओके स्तन पिला दिये हैं ॥ २ ॥

**अनेनाऽप्यभून्न्यूनता गोरसानां व्रजादन्यभागेष्वसद्विक्रयस्य ।**
**तथाऽपीह गोपाः स्वभावेन लुब्धा मिषेणापि नीत्वा तथैवाऽऽचरन्ति ॥३॥**

ऐसा करनेसे इस व्रजसे अन्य भागोमे गोरसके अनुचित विक्रयमे कमी हो गयी है। तथापि यहाँके गोप स्वभावसे ही लोभी हैं, अतः कोई बहाना बनाकर गोरस ले जाते हैं और पूर्ववत् उसका विक्रय करते हैं ॥ ३ ॥

**अतः पूर्णरूपेण तद्रोधनार्थं प्रपूर्णां निजेच्छामिमां कर्तुकामः ।**
**यतिष्येऽहमस्मिन् व्रजे गोरसानां ह्रदे मज्जमानोऽप्यमीषां गृहेषु ॥४॥**

अत इस गोरस-विक्रयपर पूर्ण रूपसे रोक लगानेके लिए तथा अपनी इस अधूरी इच्छाको पूरी करनेके लिए मैं इस व्रजमे प्रयत्न करूँगा। इन गोपोके घरोमे गोरसका तालाब बनाकर उसमे निमग्न होकर भी यह कार्य सिद्ध करूँगा ॥ ४ ॥

**भविष्यत्यनेनाऽपि तृप्तिः परा सा यदिच्छन्ति मित्राणि भोक्तुं च तेभ्यः ।**
**तथा वानरेभ्यो नरेभ्योऽपि सोऽयं विनोदः प्रदास्यत्यभीक्ष्णं च तुष्टिम् ॥५॥**

इससे भी मुझे परम-तृप्ति होगी। क्योकि मेरे सखा माखन आदि खाना चाहते हैं। मेरा यह विनोद उन सखाओको वानरोको तथा अन्यान्य मनुष्योको भी बारम्बार सन्तोष प्रदान करेगा ॥ ५ ॥

**कृतेऽर्थे भविष्यन्ति ये बुद्धिमन्तो महान्तो महात्मान एतेऽथ तस्मिन् ।**
**किमेवं कथं वाऽकरोद्विश्वनाथो वदिष्यन्ति वादैरनेकैर्वितर्क्यैः ॥६॥**

यह कार्य सिद्ध हो जानेपर भविष्यमे जो बुद्धिमान् महान् महात्मा होगे, वे इस विषयमे अनेक प्रकारके वितर्क-वादोद्वारा कहेगे कि जगदीश्वर श्रीकृष्णने ऐसी लीला क्यो की ? कैसे की ? इत्यादि ॥ ६ ॥

**विनोदी स एवं विचार्यैव चित्ते द्रुतं ह्याजुहाव स्वयं मातरं ताम् ।**
**अयि स्वापशीले ! प्रबुध्यैव मान्तु नयेतो बहिः शौचमाकाङ्क्षमाणम् ॥७॥**

मन ही मन ऐसा विचार करके उस विनोदी बालकने तुरन्त अपनी माताको पुकारा। ओ सोनेवाली मैया ! उठो तो सही। मुझे बाहर ले चलो। मुझे शौचकी हालत हो रही है ॥ ७ ॥

**सुतस्येदृशीं वाचमाकर्ण्य सुप्ता यशोदा तमुत्थाप्य चोत्थाय कोष्ठात् ।**
**क्षणादानयामास सद्मान्तराले मलं त्याजयामास संस्थाप्य पद्भ्याम् ॥८॥**

बेटेकी ऐसी बात सुनकर सोयी यशोदा तत्काल उठ खडी हुई और उसे गोदमे उठाकर क्षणभरमे कमरेसे बाहर ले आई। फिर घरके बीच आँगनमे उसे अपने पांबोके सहारे बिठाकर मल त्याग करवाया ॥ ८ ॥

**स्वतः शुद्धरूपं नराकारमेवं ह्यजानन्त्यमुं स्नापयामास पश्चात् ।**
**शुभे पीतवस्त्रे उभे संनिधाप्य शरीरेऽस्य शोभां व्यपश्यत् समृद्धाम् ॥९॥**

यह निराकार बालक स्वत शुद्ध-स्वरूप परमात्मा है, इस बातको यशोदा नही जानती थी। अत शौचके पश्चात् उसे नहलाया-धुलाया। फिर उसे दो पीताम्बर पहनाया। इससे उसके शरीरकी शोभा कई गुनी बढ़ गई। यह बात यशोदाने प्रत्यक्ष देखी ॥ ९ ॥

**ललाटे पुनश्चित्रकं भूषयित्वा विसर्पत्सुगन्धिद्रवं चान्वयुंक्त ।**
**ततो नीलकण्ठस्य पिच्छांशमेकं शिरस्यस्य विन्यस्य हृष्टा बभूव ॥१०॥**

तदनन्तर ललाटमे तिलक और शरीरमे सुगन्ध फैलानेवाला अनुलेपन लगाया। इसके बाद उस शिशुके मस्तक पर एक मोरपंखका मुकुट रख दिया। यह सब करके यशोदाको बड़ा हर्ष हुआ ॥ १० ॥

**तथाऽप्यस्य दृष्ट्वा शरीरश्रियं तां ह्यपूर्णामिवाऽनन्तशक्तेर्विभाव्य ।**
**समानीय कोष्ठादलङ्कारजातं यथास्थानमस्याऽङ्ग आधात् सती सा ॥११॥**

इसपर भी उस अनन्त शक्तिशाली शिशुके शरीरकी शोभाको अपूर्ण सी देखकर उसने मन ही मन विचार किया और घरके भीतरसे बहुतसे आभूषण लाकर सती यशोदाने उसके अगोमे यथास्थान पहना दिया ॥ ११ ॥

**ततः स्वर्णमण्यादिभिः प्रोज्ज्वलं तं प्रदीप्तं यथा चञ्चलं चान्द्रबिम्बम् ।**
**पयः पाययामास सा कापिलेयं विनिःक्षिप्य वक्त्रेऽस्य हैयङ्गवीनम् ॥१२॥**

तदनन्तर स्वर्णरत्न आदिसे जगमगाता हुआ वह बालक चचल चन्द्रमण्डलके समान उद्दीप्त हो उठा । उस समय माताने उसके मुखमे ताजा माखन देकर उसे कपिला गायका दूध पिलाया ॥ १२ ॥

**तदैवाऽऽगतान् प्रेक्ष्य मुग्धान् वयस्यान् स्वकोष्ठाद्बहिः प्रागसावाजगाम ।**
**समुत्प्लुत्य दाशीकराभ्यां नदीतो यथाऽभ्येति मीनः समुद्रे तथैव ॥१३॥**

उसी समय बहुतसे भोले-भाले सखाओको आया देख कन्हैया पहले ही अपने घरसे बाहर निकल आया । जैसे नदीसे निकाला हुआ कोई मीन मल्लाहिनके हाथोसे उछलकर समुद्रमे आ गया हो ॥ १३ ॥

**यशोदा ततो द्वारमागत्य भीता यदा पश्यति स्माऽव्ययां तस्य लीलाम् ।**
**तदाऽऽहूतवानार्य ! चागम्यतां भो ! गृहप्राङ्गणेऽस्मीति रामाग्रजं तम् ॥१४॥**

तब यशोदा भयभीत हो, द्वारपर आकर ज्योही उसकी अविनाशिनी लीलाको देखने लगी, त्योही उसने अपने बडे भाई बलरामको पुकारा—'आर्य ! आओ । मै घरके आँगनमे खडा हूँ' ॥ १४ ॥

**गतस्तध्वनिः कर्णरन्ध्रं प्रविश्य बलं कारयामास सोत्कण्ठमेवम् ।**
**यतस्तेन विस्मृत्य देहस्थितिं स्वां तदैवाऽऽगतं सार्धमेतेन रन्तुम् ॥१५॥**

उसकी आवाज जब कानोमे पहुँची तो बलराम वहाँ आनेके लिए उत्कण्ठित हो गये । वे अपने देहकी सुधि भुलाकर तत्काल उसके साथ खेलनेके लिए आ पहुँचे ॥ १५ ॥

**स कृष्णोऽत्र नीलाम्बरः श्वेतदेहो बलो रक्तवर्णैर्वयस्यैर्वृतस्तैः ।**
**भृशं शोभितोऽभूद्यथा श्वेतमेघो विभाति ह्यपतौ सुरेन्द्रस्य चापैः ॥१६॥**

नन्द-शिशु कृष्णवर्णका था और नीलाम्बरधारी बलरामका शरीर गौरवर्णका था । रक्तवर्णवाले सखाओने उन्हे घेर रखा था । वे वर्षाकाल बीतनेपर इन्द्रधनुषसे घिरे हुए श्वेत बादलके समान अत्यन्त शोभा पाने लगे ॥ १६ ॥

**इतो बाहुमूले धृते क्रीडनार्थे दृढे हालमौसल्ययुग्मे च तस्य।**
**भृशं रेजतुर्वैश्यवृत्तिप्रधाने स्त एवाऽत्र हेतू सुखे संसृते द्वे ॥१७॥**

इधर बलरामजीने अपने बाहोके मूलभागमे खेलके लिए सुदृढ हल और मूसल धारणकर रखे थे। ये दोनो वैश्य-वृत्तिके प्रधान साधन हैं और सासारिक सुखके हेतु भी है, अत. इनकी बड़ी शोभा होती थी ॥ १७ ॥

**ततो वंशयष्टिं वयस्यस्य हस्तात् समाच्छिद्य रामो बभाषे मुकुन्दम्।**
**किमर्थं समाहूत आयुष्मताऽहं कुतस्त्या प्रवृत्तिर्वरीवर्ति चाऽद्य? ॥१८॥**

तदनन्तर एक सखाके हाथसे बाँसकी छडी छीनकर बलरामने मुकुन्दसे कहा—'आयुष्मन्! तुमने मुझे किस लिए बुलाया है? आज किधर चलनेकी प्रवृत्ति हो रही है? ॥ १८ ॥

**करस्था दृढा यष्टिरेषाऽद्य कस्य विभिन्द्याद् घटान् गोरसानां सुधाक्तान्।**
**दधिद्रप्सतक्रैश्च हैयङ्गवीनैः क्षुधा क्षीयते वाऽद्य केषां शुभानाम्? ॥१९॥**

'बताओ, आज मेरे हाथकी यह सुदृढ लाठी किसके घरके गोरस-सुधासे परिपूर्ण घडोको फोड डाले? आज किन शुभ सौभाग्यशाली लोगोकी भूख दही, मट्ठा, तक्र और ताजे माखनोसे मिटायी जायगी? ॥ १९ ॥

**इमे वानरा यात्रिणस्ते नराश्च प्रसन्ना भवन्त्यद्य वा कैश्च कृत्यैः।**
**गुणैर्मोहिता गोपगोप्यश्च गावः प्रफुल्ला भविष्यन्ति किं छद्मचौर्यैः ॥२०॥**

'ये बानर और यात्री मनुष्य आज किन कृत्योसे प्रसन्न होगे? तुम्हारे गुणोसे मोहित ये गोप, गोपी और गायें आज किस, वस्तुकी छद्म-पूर्ण चोरीसे प्रफुल्ल हो उठेगी? ॥ २० ॥

**बले भाषमाणेऽथ भाविन्युदात्ते मुकुन्दस्य कार्यक्रमे चेत्थमत्र।**
**निरीक्ष्यैव तं देहलीं संश्रिता सा यशोदा गृहान्तर्गता विस्मितेव ॥२१॥**

मुकुन्दके ऐसे उदात्त कार्य-क्रमके विषयमे बलरामजीके इस प्रकार भाषण देनेपर द्वार देहलीपर खडी यशोदा उनपर एक दृष्टि डालकर विस्मित-सी हो घरके भीतर चली गयी ॥ २१ ॥

**गोपालराजरमणी रमणस्य पार्श्वे गत्वाऽत्र पूजनगृहे परिगृह्य पुष्पम्।**
**पत्या समं शिवमुपास्य सुतस्य भद्रं स्यादित्यथाऽस्य पदयोश्च तदक्षिपत् सा ॥२२॥**

तब गोपराजकी रमणी यशोदा अपने पतिके पास पूजन गृहमे गयी और एक फूल हाथमे लेकर पतिके साथ ही भगवान् शिवकी उपासना करके 'मेरे पुत्रका

कल्याण हो' इस आशीर्वादकी याचना करती हुई उन्होने शिवके चरणोमे वह पुष्प अर्पित कर दिया ॥ २२ ॥

धृष्टोऽयं चपलो बालो ह्यद्य किं किं करिष्यति ।
न पारयाम्यहं रोद्धुं हरिर्मे शं विधास्यति ॥२३॥

'मेरा यह बालक धृष्ट तथा चपल है। पता नही आज क्या-क्या करेगा ? मै उसे-रोक नही पाती हूँ। भगवान् हो मेरा कल्याण करेंगे' ॥ २३ ॥

इत्युक्त्वा देवदेवस्य महादेवस्य सन्निधौ ।
सा पपात भृशं दीना भयसंजातवेपथुः ॥२४॥

ऐसा कहकर वे देवदेव महादेवके समीप अत्यन्त दीन होकर गिर पडी, भयके कारण वे काँप रही थी ॥ २४ ॥

स्वमातुस्तादृशीं चेष्टां बुद्ध्वा चित्ते विभाव्य सः ।
किंकर्तव्यविमूढोऽभूत् स्नेहात्तद्गतमानसः ॥२५॥

अपनी माताकी वैसी चेष्टा मनमे जानकर और उसपर विचार करके श्रीहरि किं—कर्तव्य विमूढ हो गए। उनके स्नेहवश श्रीकृष्णका मन मातामे ही लग गया था ॥ २५ ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
चतुर्विंशोऽप्यगात् सर्गो महाकाव्ये स्तवात्मके ॥२६॥

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे यह चौबीसवाँ सर्ग पूरा हुआ ॥ २६ ॥



# पञ्चविंशः सर्गः

[ गोपबालकैः सम मथुरामार्गे निलीय गोदुग्धादिविक्रयार्थं मथुरागामिनीना गोपगोपीना पयस्यलुञ्छने सज्जीकरणवर्णनम् ]

( चम्पकमालावृत्तम् )

अन्यमनस्कं मेघसवर्णं भावविवर्णं मातृदशायाम् ।
कृष्णमथोचुस्ते प्रियबालाः पश्यति रामे तत्र सभायाम् ॥१॥

मेघके समान श्याम वर्णवाले कृष्ण भावविवर्ण हो माताकी पूर्वोक्त दशासे अन्य-मनस्क थे। उस समय उनके प्रिय सखा ग्वाल-बाल आकर भरी सभामे बलरामजीके देखते-देखते उनसे इस प्रकार बोले—॥ १ ॥

कृष्ण ! वयं ते स्निग्धवयस्याश्चम्पकमालाः संपरिधाय ।
यन्मिलिता भो ! प्रातरितोऽद्य कुत्र मनस्ते किं कुरुषे वा ? ॥२॥

'कन्हैया ! हम तुम्हारे स्नेही-सखा चम्पाकी मालाएँ धारण करके जो आज तुमसे मिले हैं, उसका कारण यह है कि हम जानना चाहते हैं, आज प्रात काल तुम्हारे मनमे यहाँसे किस ओर चलनेका सकल्प है ? अथवा तुम क्या करते हो ?' ॥ २ ॥

सस्मितमेषां मित्रगणानां वक्त्रसमूहं सोऽथ समीक्ष्य ।
विस्मृततादृग्भाव उवाच मातरमेनां तांश्च निरीक्ष्य ॥३॥

मित्रगणोके मुस्कराते हुए मुखमण्डलपर दृष्टिपात करके कन्हैयाको वह पूर्व कथित भाव भूल गया। फिर उसने मैया यशोदा तथा इन सखाओकी ओर देखकर कहा—॥ ३ ॥

आर्य ! वयस्या ! माथुरमार्गं रोद्धुममीषां विक्रयकर्म ।
याम उपायैर्विक्रयवस्तून्यद्य हितान्येवं प्रविकुर्मः ॥४॥

'बडे भैया ! और मित्रो ! आज हम लोग इन गोप-गोपियोके गोरस-विक्रय सबन्धी कार्यको रोकनेके लिए मथुराके मार्गपर चले और सभी उपायोसे विक्रयकी वस्तुओको अपने अधिकारमे ले ले। आज हम लोग इसी प्रकार व्रजका हित-साधन कर सकते हैं' ॥ ४ ॥

युक्तमिदं स्याद्याम उपेन्द्र ! तेऽस्तु सुपूर्णो हृद्गतकामः ।
एवमुपायैर्गोरसमित्थं भूकपिमित्रेभ्यो वितरामः ॥५॥

सखा बोले—'उपेन्द्र ! यह बहुत उचित है, हम अवश्य चले, तुम्हारा मानसिक सकल्प परिपूर्ण हो। ऐसे उपायोसे हम लोग भूतलके वानर एव मित्रोको गोरस वितरण कर सकेंगे' ॥ ५ ॥

इत्थमसौ तद्वाक्यसुधाभिः प्रेममयीभिरतं त्वभिषिच्य ।
गच्छ दयाब्धे ! प्रागिति चोक्त्वा कृष्णमनैषीन्माथुरमार्गम् ॥६॥

इस प्रकार वह सखामण्डल अपने प्रेममय वचनामृतोसे कन्हैयाका अभिषेक करके बोला—'दयासागर ? पहले तुम्ही चलो'। यो कहकर वह ग्वालबालमण्डली कृष्णको मथुराके मार्गपर ले गयी ॥ ६ ॥

ते व्रजबाला रामसमेताश्चम्पकमालाशोभितगात्राः ।
कृष्णबलाक्ताः संययुरग्रे स्वं करपादं चापि क्षिपन्तः ॥७॥

बलराम सहित वे व्रजके बालक, जिनके गात्र चम्पाकी मालाओसे शोभित थे, कृष्णके बलसे परिपुष्ट हो, अपने हाथ-पैर फेकते हुए आगे-आगे चले ॥ ७ ॥

हो ! हो ! ही ! हीत्युक्त्वा सर्वे शीघ्रं प्रापुर्मध्येमार्गम् ।
कृत्वा कृत्वा नानायुक्तीः संलिल्युस्ते वृक्षाग्रेषु ॥८॥

'हो हो ! ही ही ! इत्यादि कहते हुये वे सब ग्वाल-बाल शीघ्र ही मथुराके मध्य मार्गमे पहुँच गये और नाना प्रकारकी युक्तियाँ कर-करके वृक्षोकी आडमे छिप गये ॥ ८ ॥

श्रीदामरामसुबलार्जुनकृष्णमेघप्रस्थर्षभादय उपेन्द्रमनुप्रयाताः ।
बाला वरूथपयुताः सविशालकाश्च संतस्थुरंशुसहिता बलशक्तियुक्ताः ॥९॥

श्रीकृष्णके पीछे चलनेवाले श्री दामा, बलराम, सुबल, अर्जुन, स्तोककृष्ण, मेघप्रस्थ तथा ऋषभ आदि बालक यूथपतियोंसे युक्त हो, विशाल और अंशुके साथ वहाँ जाकर डट गये। वे सभी बलरामकी शक्तिसे सम्पन्न थे ॥ ९ ॥

समारुह्य बृहत्स्कन्धं कदम्बं जलदोज्ज्वलः ।
शिखाग्रेऽस्य स्वयं कृष्णो विरराज महाबलः ॥१०॥

मेघके समान श्याम-उज्ज्वल वर्णवाले महाबली कृष्ण, एक विशाल तने एव शाखाओं-वाले कदम्ब-वृक्षपर आरूढ हो, उसकी शिखाके अग्र भागपर स्वय विराजमान हो गये ॥ १० ॥

तस्य मूलं श्रितो रामो निजं क्रीडनकं हलम् ।
स्कन्धान्निष्कास्य बाहुभ्यां पृथ्वीं कर्षन्निव स्थितः ॥११॥

बलराम उसी वृक्षके मूलभागका आश्रय ले, अपने खेलके लिए, लिये हुए हलको दोनो हाथो द्वारा कन्धेसे उतारकर धरती जोतते हुए-से खडे हो गये ॥ ११ ॥

कृषिमुख्यां वैश्यवृत्तिं दर्शयंस्तत्र कर्मणा ।
पयस्यविक्रयं रोद्धुं संकर्षण इयेष ह ॥१२॥

उस कर्मके द्वारा वे यह दिखा रहे थे कि वैश्योकी मुख्य जीविका-वृत्ति कृषि ही है। इस प्रकार सकर्षणने भी दूध-दहीके विक्रयको रोकनेका विचार किया ॥ १२ ॥

**माथुरं मार्गमावृत्याऽदृश्याः शाखामृगा यथा ।**
**तस्थुः सरामकृष्णास्ते गोपागमनकाङ्क्षिणः ॥१३॥**

मथुराके मार्गको घेरकर बलराम और कृष्ण सहित सारे ग्वाल-बाल वानरोके समान वृक्षोपर अदृश्य भावसे बैठ गये और गोपोके आगमनकी प्रतीक्षा करने लगे ॥ १३ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**सर्गोऽगात् पञ्चविंशोऽयं महाकाव्ये स्तवात्मके ॥१४॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे पचीसवाँ सर्ग पूरा हुआ ॥ १४ ॥



# षड्विंशः सर्गः

[ मथुराप्रस्थितानां गोपगोपीना परस्परं तत्रत्यस्वस्वानुभवश्रावणम् ]

( वंशस्थेन्द्रवंशयोरुपजातिवृत्तम् )

गोपा इतो गोरसविक्रयोत्सुकाः समाप्य कल्ये गृहकृत्यमञ्जसा ।
घटान् घृताक्तान् दधिदुग्धपूरिताञ्छिरःसु संन्यस्य गृहाद्विनिर्ययुः ॥१॥

इधर गोरस-विक्रयके लिए उत्सुक हुए गोपगण बडे सबेरे सुविधा पूर्वक घरका सारा काम-काज समाप्त करके दही-दूधसे भरे घृताक्त ( चिकने ) घडोको शिरपर रखे घरसे निकले ॥ १ ॥

गत्वा समृद्धां मथुरां पुरीमितो गृहान् भ्रमित्वा यदुभोजवंशिनाम् ।
विक्रीय चेमान् रससम्भृतान् घटांल्लप्स्यामहे काकिणिकाः सुखं वयम् ॥२॥

वे सोचने लगे—हम यहांसे समृद्धि-शालिनी मथुरापुरीमे जाकर यदुवंशियो और भोजवशियोके घरोमे घूमकर गोरस भरे घडोको बेचेगें और सुखपूर्वक बहुत सी काकिवीयाँ ( इकन्नियां ) अर्जित करेगे ॥ २ ॥

संमन्त्र्य चेत्थं प्रतिगृह्य गोरसान् गोप्यश्च गोपाश्च सुसज्जितास्ततः ।
तद्राजमार्गेण ययुर्दिदृक्षवो महार्हपण्यादिविभूषितां पुरीम् ॥३॥

इस प्रकार मन्त्रण करके गोरस ले सुसज्जित गोपी और गोपगण उसी राजमार्गसे बहुमूल्य विक्रेय-वस्तुओसे विभूषित मथुरापुरीको बेचनेके लिए चले ॥ ३ ॥

प्रौढा व्रजन्तः सकला इमे ततः संजल्पुरित्थं पथि चान्तरान्तरा ।
पूर्वं यथा स्वानुभवांस्तु माथुरान् प्रदर्शयन्तो वचनैः सुधामयैः ॥४॥

यात्रा करते हुए वे समस्त प्रौढ़ गोपजन मार्गके बीच-बीचमे इस प्रकार बातें करते थे। वे अमृतमय वचनो द्वारा मथुरा-यात्राके अपने पूर्व अनुभवोका प्रदर्शन कर रहे थे ॥ ४ ॥

तत्रैक आहाऽथ हिमोज्ज्वलो युवा भवन्त आर्याः ! शृणुताऽद्य मद्वचः ।
गतोऽहमासं मथुरां गतेऽहनि गगर्षये चाऽर्पयितुं गवां पयः ॥५॥

वहाँ एक हिमके समान उज्ज्वल वर्णवाला गोप-युवक बोला—'आर्यजन ! आज आप मेरी यह बात सुने । मैं कल महर्षि-गर्गको गो-दुग्ध देनेके लिए मथुरापुरीमे गया था ॥ ५ ॥

समर्प्य तद्वस्तु तथा पदे नतीस्ततो निवृत्तोऽशृणवं जनश्रुतीः ।
विश्रामघट्टे मुनयो महर्षयो वसन्ति तीर्थेभ्य उपागता इति ॥६॥

'मैने दूध अर्पित करके उनके चरणोमे प्रणाम किया और वहांसे लौटते समय लोगोके मुखसे यह चर्चा सुनी कि अन्यान्य तीर्थोसे आये हुए बहुसख्यक महर्षि एव मुनि विश्रामघाट-पर ठहरे हुए हैं' ॥ ६ ॥

ततोऽगमं दर्शनलालसोऽप्यहं प्रगृह्य पुष्पाणि फलानि हस्तयोः ।
सत्यं ! त आसन् यमुनाजलेऽमले समागताः स्नातुममोघशक्तयः ॥७॥

तब मै भी हाथोमे कुछ फूल और फल लेकर उनके दर्शनके लिए गया। सच-मुच ही वे अमोघशक्तिशाली महर्षि यमुनाजीके निर्मल जलमे स्नान करनेके लिए वहाँ आए थे ॥ ७ ॥

निवेद्य तेभ्यस्तदुपायनादिकं समर्प्य पादेषु सभक्ति सन्नतीः ।
तत्राऽविदूरे स्थितवानहं तदा सच्छ्रद्धयाऽऽकृष्टसमस्तहृद्गतिः ॥८॥

मैंने उन्हे उपहार आदि देकर उनके चरणोमें सभक्ति प्रणाम अर्पित किया। और उनके पास ही खडा हो गया। उस समय उत्तम श्रद्धासे मेरे हृदयकी सारी वृत्ति उनकी ओर आकृष्ट हो गई थी ॥ ८ ॥

प्रेक्ष्योपहारं स्वपुरःस्थितं शुभं दयार्द्रचित्तेषु भवत्सु तेष्वथ ।
एको मुनिर्मामवदत् स्वतेजसा विनाशयिष्यन्निव हृद्गतं तमः ॥९॥

मेरे उस शुभ उपहार पर दृष्टि डालकर और अपने सामने खडे हुए मुझे देखकर उन दयार्द्र-चित्त एव पूजनीय महर्षियोमे-से एक मुनि, अपने तेजसे मेरे हृद्गत अन्धकारका नाश-सा करते हुए मुझसे बोले—॥ ९ ॥

व्रजस्थगोपालयुवेव भो ! भवान् संलक्ष्यतेऽस्माभिरतुल्यलक्षणैः ।
पुरः प्रतिष्ठाप्य हृदिस्थितं वचः पृच्छाम उत्काः शिवमस्तु ते प्रिय ! ॥१०॥

'अजी ! आप अपने अनुपम लक्षणोसे हमे व्रजवासी गोप-युवक-से दिखाई देते हैं। अत प्रियवर ! हम अपने हृदयकी बात तुम्हारे सामने रखकर उत्कण्ठापूर्वक पूछते हैं, तुम्हारा कल्याण हो ॥ १० ॥

किं गोकुले नन्दगृहे रमाश्रये कश्चिच्छिशुर्वर्तत एवमेव यः ।
साधून् बुधान् भक्तवरांश्च सद्गुणैराकर्षयन् स्वात्मनि वर्धतेऽनिशम् ॥११॥

'क्या गोकुलमे लक्ष्मीके निवासभूत नन्द-सदनमे कोई ऐसा शिशु विद्यमान है, जो साधुजनो, विद्वानो तथा उत्तम भक्तोको सद्गुणो द्वारा अपनी ओर खीचता हुआ अपने आप-मे निरन्तर बढ़ रहा है ॥ ११ ॥

**नीता सुखं स्वर्गमनेन सा बकी कृतस्तृणावर्त उपायतो वशे ।**
**स तत्र तिष्ठत्यखिलेषु साधुषु दयालुरस्तीति च गीयते जनैः ॥१२॥**

'लोग कहते हैं कि उसने पूतनाको अनायास ही स्वर्ग भेज दिया । तृणावर्तको भी किसी उपायसे अपने वशमे कर लिया और समस्त साधुजनोके प्रति दया-भाव रखता हुआ वह गोकुलमे ही निवास करता है ॥ १२ ॥

**जगाद चान्यो मुनिरात्मनो हितं विभाव्य पृच्छन्निह मां तमद्भुतम् ।**
**किमेष शैवः शिवदः सतां गुरुः शान्तिस्थलं तद् भण चाऽस्य कर्म तत् ॥१३॥**

एक दूसरे मुनि अपने हितका विचार करके उस अद्भुत बालकके विषयमे मुझसे पूछते हुए बोले—'यह सत्पुरुषोका गुरुरूप कल्याणदायी बालक, जो शान्तिका धाम सुना जाता है' शैव है क्या ? इसके कर्मका वर्णन करो' ॥ १३ ॥

**सञ्चालिकाऽसौ जगतः सुखप्रदा दुर्गाऽवतीर्णेति च तत्स्वरूपतः ।**
**अशृणम यत् सत्यमिदं कृपाकरो बालोऽस्ति चेद्वर्णय चान्य आह माम् ॥१४॥**

एक अन्य ऋषि मुझसे पूछ बैठे—'जो जगत्का सचालन करनेवाली सुखदायिनी दुर्गा देवी हैं, वे ही तो उसके रूपमे नही अवतीर्ण हुई हैं ? हमने जो सुना है कि वह बालक कृपाकी खान है, यदि यह बात सत्य है तो उसके वृत्तान्तका वर्णन करो' ॥ १४ ॥

**किमेष बालो गणपं विनायकं समाश्रितो गाणपता वयं ह्यपि ।**
**पृच्छाम उत्कास्तदमुष्य जीवनं विदृश्यते चेत् सुखदं द्रुतं भण ॥१५॥**

एक ने पूछा—क्या इस बालकने गणपति-विनायकका आश्रय लिया है ? हम भी गणपतिके ही उपासक है, इसी लिए उत्कण्ठित होकर उसके जीवनके विषयमे पूछ रहे हैं, यदि यह सुखद बात उसके जीवनमे दिखाई देती हो तो शीघ्र बताओ ॥ १५ ॥

**किं जानकीजानिरसौ समागतो यो राक्षसान् हृष्टहृदाऽवधीत् पुरा ।**
**सोऽसौ महांस्तद्गतकर्मशर्मभृद्बालोऽप्ययं चेद् भण कीदृशोऽस्ति सः ॥१६॥**

अन्य महर्षि बोल उठे—'जिन्होने पूर्वकालमे प्रसन्नचित्तसे राक्षसोका वध किया था, वे जानकी-वल्लभ श्रीराम ही तो उस बालकके रूपमे नही अवतीर्ण हुए हैं ? सुना है कि वह बालक होकर भी महान्, अद्भुतकर्मा तथा कल्याणका निधान है । यदि ऐसी बात है, तो बताओ वह कैसा है ?' ॥ १६ ॥

**उद्यन्तमादित्यमसौ कृतक्रियः सदा ह्युपास्ते पुनरन्य आह माम् ।**
**सौरा वयं यद्गुणगृध्नवश्च तज्जिज्ञासवस्तत्त्वममुष्य सञ्ज्ञतः ॥१७॥**

अन्य महर्षिने मुझसे पूछा—'क्या वह नित्य-कर्म करके प्रतिदिन उगते हुए सूर्य-देवकी उपासना करता है ? हम सूर्योपासक हैं और उसके गुणोके अभिलाषी भी हैं। हम लोग उसके संगसे तत्त्व-ज्ञान प्राप्त करना चाहते हैं' ॥ १७ ॥

**व्याप्यैव विश्वं सचराचरं स्वया शक्त्या स विष्णुः श्रुतिसाधुशान्तिकृत् ।**
**पूर्णावतारं परिगृह्य चागतस्तद्दुष्टनाशार्थमितीह चेद् वद ॥१८॥**

एकने जिज्ञासा की—'जो अपनी शक्तिसे चराचर प्राणियो सहित समस्त विश्वको प्राप्त करके स्थित हैं, वे श्रुतियो तथा साधुओको शान्ति प्रदान करने वाले भगवान् विष्णु ही तो नही, पूर्णावतार धारण करके दुष्टोके सहारके लिए यहाँ आये हैं ? यदि यह बात है, तो बताओ ॥ १८ ॥

**किमस्य हृद्या अलका विभान्ति ते श्रीचक्रचक्राङ्कितदिव्यपीठकाः ।**
**देव्याः किमाराधनपद्धतिं च स जानात्यपृच्छत् पुनरन्य ईप्सितम् ॥१९॥**

तदनन्तर दूसरे मुनिने अपनी मनोवाञ्छित बात पूछा—गोपयुवक ! क्या तुम्हे उस बालककी मनोहरिणी घुँघराली अलके श्रीचक्रके (श्रीविद्याके) चक्रसे चिह्नित दिव्य-पीठ वाली प्रतीत होती हैं ? ( यहाँ इस काव्यके नवम सर्गका २९वाँ श्लोक द्रष्टव्य है । ) क्या वह देवीकी आराधना पद्धतिको जानता है ?' ॥ १९ ॥

**किं सत्यमेतद्वद भो कृपार्णवं तं ये च पश्यन्ति गुणाग्रहं शिशुम् ।**
**मुह्यन्ति तेऽप्यत्र वयं ह्यशृणम यत् तत्तद्दिदृक्षापि च बाधते हि नः ॥२०॥**

'अरे भैया ! क्या यह सत्य है कि उस करुणा-सागर गुणाग्रही बालकको जो ही देखते हैं, वे ही मोहित हो जाते है ? यह बात हमारे सुननेमे आयी है। यदि ऐसा है तो उसके दर्शनकी इच्छा हमे बाधित कर रही है—हम उसे देखनेको उत्सुक हो रहे हैं ॥ २० ॥

**किमस्य रूपं नवनीरदोज्ज्वलं विभाति चैत्यं प्रियवस्तुवद्भण ! ।**
**स्निग्धालके भाति च बर्ह उन्नतो विराजते वा पुनरस्य सद्वपुः ? ॥२१॥**

'बताओ तो क्या उसका रूप नवीन-नीरद ( मेघ ) के समान श्यामोज्ज्वल है ? हृदयस्थित प्रिय वस्तु चिन्मय आत्माके ही समान सुशोभित होता है। क्या उसके स्निग्ध केशपाशमे कोई ऊँचा मोरपंख भी शोभा पाता है ? और इस प्रकार उसका दिव्य विग्रह भी अत्यन्त सुशोभित होता है ?' ॥ २१ ॥

**श्रुत्वेदृशीं तद्गिरमात्मतुष्टिदां चैकाश्रितां तेषु समुत्सुकेष्वथ ।**
**मयापि मान्या ! व्रजराजबालकं प्रशस्य किञ्चिद् गदितं समामुखे ॥२२॥**

'माननीय गोपगण ! वे मुनि श्रीकृष्ण दर्शनके लिए अत्यन्त उत्सुक थे, अपनेको आनन्द देनेवाली उनकी एकमात्र श्रीकृष्णसे सम्बद्ध पूर्वोक्त बातें सुनकर मैंने भी व्रजराज नन्दके इस बालकको प्रशंसा करके उस सभाके संमुख कुछ कहा—॥ २२ ॥

शृण्वन्तु पूज्या ! भगवन्त आर्तिहृत् तदस्य सत्कर्म निवेदयाम्यहम् ।
यः सर्वथाऽस्मान् सुखयत्यलौकिकैः शुभैश्चरित्रैः पशुपक्षिभिः समम् ॥२३॥

'पूजनीय महर्षियो ! आप लोग भगवत्स्वरूप हैं, मै आपके समक्ष उस बालकके सत्कर्मका वर्णन करता हूँ, जो सबकी पीडा हर लेनेवाला है। वह बालक अपने अलौकिक शुभ चरित्रो द्वारा पशु-पक्षियो सहित हम सब लोगोको सर्वथा सुख प्रदान करता है' ॥ २३ ॥

यदत्र पृष्टं भगवद्भिरुत्तमं तत्सत्यमेवाऽस्ति न तत्र संशयः ।
पश्यत्यमुं यः स भवत्यविक्लवो ह्यानन्दमग्नो गुणतो विमोहितः ॥२४॥

'आप पूज्य महर्षियोने जिसके विषयमे पूछा है, वह सब सत्य ही है, उसमे सशय नही है। जो भी उस बालकको देखता है, व्याकुलता-रहित हो आनन्दसिन्धुमे निमग्न हो जाता है। उसके गुणोपर मोहित हो उठता है ॥ २४ ॥

संसारिणः स्वां मतिमेकवृत्तिगां विधाय संस्कारवशात् प्रवर्धिताम् ।
यां दृष्टिमास्थाय निरूपयन्ति तं विदृश्यतेऽसावपि तैस्तथाविधः ॥२५॥

'ससारी मनुष्य अपनी मतिको एकाग्र करके सस्कारवश बढी हुई जिस दृष्टिको अपना कर उस बालकको देखते हैं, वह बालक उन्हे वैसा ही दिखायी देता है ॥ २५ ॥

तस्य स्वरूपं च विभाति तादृशं ह्यापादशीर्षं शशिचन्द्रिकोज्ज्वलम् ।
सुलक्षणैर्विश्वविलक्षणैः श्रितं संपश्यतां स्वात्मसुखप्रदं स्फुरत् ॥२६॥

'उसका स्वरूप भी वैसा ही प्रतीत होता है वह पैरोसे लेकर सिरतक चन्द्रमाकी चाँदनीके समान परम उज्ज्वल है। वह अपने उत्तम लक्षणोसे, जो सारे विश्वसे विलक्षण हैं, युक्त होकर प्रकाशित होता है। अपना दर्शन करनेवाले लोगोंको वह आत्मानन्द प्रदान करता है ॥ २६ ॥

मयूरपिच्छाश्रितचूर्णकुन्तलं निहन्तुमेनश्च कृतप्रयत्नकाः ।
नष्टा अरिष्टा बहवः समागता अग्नौ पतङ्गा इव तस्य तेजसा ॥२७॥

'उसके घुँघराले केशोमे मोरपख शोभा पाता है। इस बालकको मारनेके लिए आकर जिन-जिन बहुसख्यक अरिष्ट-ग्रहोने प्रयत्न किया, वे सबके-सब स्वयं नष्ट हो गये। आगमे पड़े हुए पतिगोके समान उसके तेजसे जल मरे ॥ २७ ॥

मयोदितं तद्गुणरूपवर्णनं श्रुत्वा समासेन विबुध्य सद्गतिम् ।
गतेऽस्तमर्के मुनयोऽपि संयताः स्नातुं प्रविष्टा यमुनाह्रदे ततः ॥२८॥

मेरे द्वारा कथित उसके गुणो तथा रूपका वर्णन सक्षेपसे सुनकर उसके उत्तम स्वरूपको जानकर वे सयमशील मुनि भी सायकाल स्नान करनेके लिए यमुनाजीके जलमे प्रविष्ट हुए ॥ २८ ॥

शुभाशिषं प्राप्य ततोऽहमागमं कृतत्वरो गोकुलराजवेश्मनि ।
मणि यथा तं परिगृह्य हस्तयोः शान्तोऽभवं तावदिहाऽव्ययो हि सः ॥२९॥

तदनन्तर उनका शुभाशीर्वाद लेकर मैं बड़ी उतावलीके साथ गोकुलराय नन्दजीके घर आया और उस नीलमणि सदृश बालकको हाथोमे लेकर शान्त हुआ । यहाँ वह शिशु वास्तवमे अविनाशी परमात्मा ही है ॥ २९ ॥

जगद्विधातुर्गुणरूपवर्णनं निशम्य गच्छत्सु च तेष्वथो पथि ।
जगाद चान्यः स्थविरो गलद्वचास्तन्माथुराणां प्रियतां च तं प्रति ॥३०॥

जगद्विधाता ईश्वरके गुण और रूपका वह वर्णन सुनकर जब वे सब लोग मथुराके मार्गपर चल रहे थे, उस समय एक दूसरे बूढे गोपने, जिसकी वाणी लडखडा रही थी, मथुरा वासियोके श्रीकृष्णके प्रति प्रेमका वर्णन आरम्भ किया ॥ ३० ॥

तन्माथुरे पर्वणि दैशिकोत्सवं द्रष्टुं गतोऽहं वसुदेवसद्मतः ।
पूर्वोत्तरस्यां दिशि संगताञ्जनानपश्यमादौ शृणुताऽत्र मद्वचः ॥३१॥

'एक दिन मथुरामे किसी पर्वपर वहाँ एक स्थानीय उत्सव चल रहा था, मै भी उसे देखनेके लिए गया । वसुदेवजीके घरसे पूर्वोत्तर कोणमे लोगोकी बडी भारी भीड एकत्र थी, वहाँ मैने जो कुछ देखा, पहले उसके विषयमे मेरी बात तुम लोग सुनो—॥ ३१ ॥

स्यान्मर्त्यसंमर्द इयानहो ! कथं तथाऽत्र किं स्यादिति जातकौतुकः ।
यदा गतस्तत्र तदैव दृष्टवान् कश्चिन्मुनिं रक्षिजनैः प्रताडितम् ॥३२॥

'अहो ! यहाँ इतने मनुष्योकी भीड क्यो एकत्र है ? वहाँ क्या हो रहा है ?—यह देखनेके लिए मेरे मनमे भी कौतूहल जाग उठा । जब वहाँ गया तो मैने देखा किसी मुनिको राजाके पहरेदार सिपाही पीट रहे हैं ॥ ३२ ॥

प्रताड्यते किं मुनिरेष रक्षिभिः को दोष एतस्य च विद्यतेऽत्र भोः ! ।
पृष्टा मया तत्र जनास्तदाऽवदन् मद्वामकर्णे निभृतं त्विदं वचः ॥३३॥

'मैने वहाँ लोगोसे पूछा—'ये सिपाही इन महात्मा मुनिको क्यो मार रहे हैं ? इनका क्या अपराध है ?' तब उन्होने मेरे बायें कानमे धीरे-धीरे यह बात कही—॥ ३३ ॥

**न ज्ञायते किं भवता शुभोदयो नन्दोऽस्त्यसौ गोकुलराज उच्चधीः ।**
**तस्यैव पुत्रेण विमोहितो गुणैर्ननर्त हृष्टो मुनिरेष उत्सवे ।।३४।।**

'क्या आप नही जानते हैं, व्रजमे उच्च विचार वाले सौभाग्यशाली गोकुलराज नन्द रहते हैं। उन्हीके पुत्रने अपने गुणोद्वारा इन मुनिवरको मोह लिया है। उसीके स्मरणसे आनन्दित हो ये मुनि इस उत्सवमे नाच रहे थे ॥ ३४ ॥

**तदाऽत्र संभूय निरीक्षणोत्सुकाः पौरा विमुग्धा गतभीतयो नृपात् ।**
**तत्कर्म गायन्तममुं प्रशस्य भो ! स्वात्मानमस्मै मुनये समार्पयन् ।।३५।।**

'उस समय दर्शनके लिए उत्सुक बहुत-से नागरिक मुग्ध हो राजकीय भयको हृदयसे निकालकर यहाँ एकत्र हो गये। नन्द-नन्दनकी लीलाका गान सुनकर इनके इस कर्मकी प्रशसा करते हुए सब लोगोने इन मुनिकी सेवामे अपने आपको सर्मपित कर दिया ॥ ३५ ॥

**सुधीषु पौरेषु निशम्य गायनं ह्यानन्दमग्नेषु विभाव्य तत्स्थितीः ।**
**कंसाज्ञया रक्षिण आगता. क्षणान्निघ्नन्त्यमुं हा ! कशया गतत्रपाः ।।३६।।**

'मुनिके उस कीर्तन एव गानको सुनकर समस्त उत्तम बुद्धिवाले पुरवासी जब आनन्दमग्न हो गये, तब उस स्थितिपर विचार करके कसकी आज्ञासे बहुत से रक्षक सिपाही क्षणभरमे आ गये और हाय! निर्लज्ज हो मुनिपर कोडेसे प्रहार करने लगे है।' ३६ ॥

**असह्यमेवं वचनं जनोक्तिभिः श्रुत्वा सरोषं स्थविरोऽप्यहं तदा ।**
**सुदुर्जयांस्तान् प्रसभं दुरुक्तिभिर्व्यगर्हयं प्रागपसार्य पादतः ।।३७।।**

'जनताके मुखसे यह असह्य वचन सुनकर बूढे होनेपर भी मुझे रोष आ गया और मैंने तत्काल उन दुर्जय सिपाहियोको पहले पाद-प्रहारसे बलपूर्वक हटाकर कटुवचनो द्वारा उनकी भरपेट निन्दा की ॥ ३७ ॥

**क्षुब्धाः खलास्ते लगुडैः प्रताड्य भो ! बद्ध्वा ततो मामनयन्नृपालयम् ।**
**नीतो महात्मा मुनिरप्यसौ समं मामीक्षमाणो धृतविग्रहश्च तैः ।।३८।।**

'वे दुष्ट सिपाही क्षुब्ध हो उठे और मुझे दण्डोसे मार बन्धनमे डालकर राजभवनमे ले गये। मेरे ही साथ वे महात्मा मुनि भी पकड़े जाकर वहाँ पहुँचाये गये। वे मेरी ओर बार-बार देख रहे थे॥ ३८ ॥

नृपब्रुवो दुष्टशिरोमणिर्युवा कंसस्तदासीत् स्वनृपासने स्थितः ।
दृष्ट्वैव मां तं च मुनिं पुरःस्थितं बभूव भृत्यैः प्रतिबोधितार्थकः ॥३९॥

'अपनेको राजा कहनेवाला दुष्टोका सरदार युवक कस उस समय राजसिंहासन पर बैठा था। उसने मुझको और मुनिको भी सामने देखा और सेवकोने उनको सारा वृत्तान्त बता दिया ॥ ३९ ॥

कोऽयं मुनिर्लज्ज उदात्तपौरुषो विभाति धृष्टः सुगलद्वया अपि ।
यो निर्भयं मद्विषयस्थिताः प्रजा विरोधयत्यत्र नृपेण सर्वथा ॥४०॥

'तब वह बोला—'यह निर्लज्ज कौन है ? यह बूढा हो गया है तो भी उत्तम पुरुषार्थी और ढीठ जान पडता है। इसने निर्भय होकर मेरी राज्यकी प्रजाको सर्वथा राजाके विरुद्ध भडकाया है ॥ ४० ॥

मिथ्याप्रवृत्तिर्वसुदेव आत्मजं रात्रावनैषीद् व्रजमण्डलं पुरा ।
सोऽयं रिपुर्मे तदमुष्य गोपजैर्दुष्कीर्तिरेषाऽत्र वितन्यते भृशम् ॥४१॥

'मिथ्याचारी वसुदेवने पहले रातमे ही अपने बेटेको व्रजमण्डलमे पहुँचा दिया था। यही तो मेरा शत्रु है। ये गोपलोग उसकी दुष्कीर्ति यहाँ फैला रहे हैं' ॥ ४१ ॥

कोऽसौ शिशुर्मे पुरतस्तथाप्यहो ! गायन्ति तत्कीर्तिमिमे मुनिब्रुवाः ।
भजन्ति चेमं सुख-शान्तिदं त्विति तत्प्राप्नुयुः शान्ति-सुखे यथेप्सितम् ॥४२॥

'वह शिशु मेरे सामने क्या है ? तो भी आश्चर्य है कि अपने को मुनि कहनेवाले ये दुष्ट लोग उसीकी कीर्ति गाते हैं और उसे सुख-शान्तिका दाता मानकर उसका भजन करते हैं। अत ये अब यथेष्ट सुख-शान्ति प्राप्त करे' ॥ ४२ ॥

आभाष्य चेत्थं खलमन्त्रिभिः समं कंसोऽवदद्रक्षिण आततायिनः ।
निष्कास्यतां दुष्टधियाविमौ पुरादामृत्यु संताड्य सभासु गच्छत ॥४३॥

'इस प्रकार दुष्ट मन्त्रियोसे बात-चीत करके कस अपने आततायी सिपाहियोसे कहा—'इन दोनो दुष्टोको नगरसे निकाल दो और इतना मारो कि इनकी मृत्यु हो जाय उसके बाद राजसभामे लौटना।' ॥ ४३ ॥

शिरस्यथाऽऽधाय निदेशमस्य तैः प्रताडितोऽहं कशया भृशं ततः ।
अत्याहितं कृष्ण ! मृतोऽहमञ्जसा त्रायस्व चोक्त्वेति विमूर्च्छितोऽभवम् ॥४४॥

'उसके इस आदेशको शिरोधार्य करके उन सिपाहियोने मुझे कोडोसे बहुत पीटा।' 'हा कृष्ण ! यह तो अत्यन्त भय प्राप्त हुआ, अब तो मैं मरा। अब तुम्ही मेरी रक्षा करो।' ऐसा कहकर मै मूर्छित हो गया ॥ ४४ ॥

ततस्त्वहं मूढमतिः किमप्यहो ! नाऽज्ञासिषं स्वं च पुरःस्थितं मुनिम् ।
अवेदिषं केवलमस्य सद्गतेः कृष्णस्य शान्तिप्रदबाहुमार्जनम् ॥४५॥

'तदनन्तर मै मूर्छित हो जानेके कारण कुछ भी नही जान सका । न अपनेको और न सामने खडे हुए मुनिको ही जान पाया । केवल इन सत्पुरुषोके आश्रयदाता श्रीकृष्णके शान्तिदायक हाथ फेरनेका मुझे भान हुआ ॥ ४५ ॥

चिरात् प्रबुद्धोऽहमचेतनः कदा नीतो न जाने व्रजसीम्नि रक्षिभिः ।
तथाऽऽगतः सद्मनि तद्गुणान्स्मरन्नेवं ह्यभून्मय्यपि, सोऽत्र ईश्वरः ॥४६॥

'चिरकालके बाद मुझे होश हुआ । न जाने अचेत अवस्थामे मुझे कसके पहरेदारोने कब व्रजकी सीमामे पहुँचा दिया । इस प्रकार मै उसी कृष्णके गुणोका स्मरण करता हुआ घर लौटा । ऐसी घटना मुझपर घटित हुई है । अत मैं कह सकता हूँ कि वह नन्दनन्दन साक्षात् ईश्वर ही है' ॥ ४६ ॥

वक्ति स्म काचिद्युवती व्रजाङ्गना पुरो व्रजन्ती सकलेषु तेष्वथ ।
मयाऽनुभूतं ह्यपि वच्मि तत्पुरि शृण्वन्तु मान्या ! वचनं तथोदितम् ॥४७॥

तदनन्तर कोई युवती व्रजाङ्गना जो उन सबके आगे चल रही थी, कहने लगी— 'माननीय जनो ! मैने भी कुछ मथुरापुरीमे अनुभव किया है । उसे बताती हूँ, आपलोग मेरी बात सुनें ॥ ४७ ॥

प्रसाधनं क्रेतुमहं पुरीं गता गोपीभिराभिर्विपणीः समाश्रिता ।
पण्यान् विपश्यन्त्यसमान् मनोरमं क्षणं स्थिता तत्र तदा गतेऽहनि ॥४८॥

'मै कुछ शृङ्गार-सामग्री खरीदनेके लिए इन गोपियोके साथ मथुरापुरीमे गई थी । वहाँ बाजारमे जाकर अनुपम विक्रय योग्य वस्तुओको देखती फिरी । एक क्षणतक वह मनोरम दृश्य देखती हुई मै वहाँ खडी थी । यह बात अभी कल की है ॥ ४८ ॥

काचित् सखीभिः परितः सुशोभिता रूपैर्गुणैर्भूषितगात्रमानसा ।
पौराङ्गनाऽऽगत्य विगृह्य मत्करं प्रदर्श्य मैत्रीमवदत्तदैव माम् ॥४९॥

'उसी समय कोई नगरकी स्त्री सखियोसे घिरी हुई वहाँ आई । वह अपने रूप और गुणोसे बडी शोभा पा रही थी । उसके तन और मन दोनो विभूषित थे । उसने मेरा हाथ पकडकर मैत्री दिखाते हुए मुझसे इस प्रकार कहा—॥ ४९ ॥

जानासि बाले ! व्रजराजनन्दनः किं नन्दयत्यत्र गताङ्गनानपि ।
किं शक्नुमो गोकुलमागता वयं तं द्रष्टुमानन्दत एव संस्थिताः ॥५०॥

"बाले ! क्या तुम जानती हो ? व्रजराज-नन्दन श्रीकृष्ण वहाँ गये हुए लोगोको भी आनन्दित करते हैं ? क्या हम गोकुलमे आकर उनका आनन्दपूर्वक दर्शन कर सकती है ? ॥ ५० ॥

**किं रूपमस्याऽस्ति कियद्वयाः स वा स्निह्यन्त्यमुस्मिन् प्रतिवेशिनोऽपि किम् ।**
**स तेषु वा स्निह्यति तत्समीभवन् करोति किं वा परचित्तनिर्वृतिम् ॥५१॥**

'उनका रूप कैसा है ? उनकी अवस्था कितने वर्षकी हो गई ? क्या, आस-पड़ोसके लोग भी उनके प्रति स्नेह रखते हैं ? और वे भी उन्हीके समान होकर उन सबके प्रति स्नेहका निर्वाह करते है ? क्या, वे दूसरेके चित्तको सन्तुष्ट कर देते हैं ?' ॥ ५१ ॥

**प्रबाधतेऽस्माञ्छ्रुततद्गुणोदयान् औत्सुक्यमस्यैव दिदृक्षयोद्भवम् ।**
**दत्त्वोचितं ह्युत्तरमत्र शोभने ! कुरुष्व शान्तं मन एकधैव नः ॥५२॥**

'शोभने ! हमने नन्दनन्दनके गुणोदयकी चर्चा सुन रखी है। अत उनके दर्शनकी इच्छासे उत्पन्न उत्कण्ठा, हमे सता रही है। तुम इस विषयमे उचित उत्तर देकर एक बार हमारे मनको शान्त कर दो' ॥ ५२ ॥

**पृष्टा तयेत्थं श्रुततत्कथा त्वहं तदाऽवदं शान्तहृदैव संसदि ।**
**पृष्टं त्वया यत्सुखदं शुचिस्मिते ! जानामि तच्चित्रचरित्रमार्तिहृत् ॥५३॥**

'उसके इस प्रकार पूछने पर उसकी सारी बाते सुनकर मैने नागरियोकी उस सभामे शान्त चित्तसे ही उत्तर दिया—'पवित्र मुस्कानवाली देवि ! तुमने जो बात पूछी है, उसकी चर्चा मेरे लिए बडी सुखदायिनी है। मै जानती हूँ, नन्द-नन्दनका अद्भुत चरित्र सबके समस्त क्लेशोको हर लेनेवाला है' ॥ ५३ ॥

**सत्यं शुभे ! गोकुलराजनन्दनो विराजतेऽस्मद्व्रजमण्डलेऽर्कवत् ।**
**आह्लादयत्यत्र गताञ्जनान् सुखं स्वैः सद्गुणैरात्मसमर्पणादिभिः ॥५४॥**

'शुभे ! यह सत्य है कि हमारे व्रजमण्डलमे गोकुलराज-नन्दन श्रीकृष्ण सूर्यके समान देदीप्यमान हैं। जो लोग वहाँ गये हैं उनको वे अपने आत्म-समर्पण आदि सद्गुणोसे परम सुख एव आह्लाद प्रदान करते हैं' ॥ ५४ ॥

**अभ्यागतांस्तत्पितरावपि स्वतः कार्त्स्न्येन चाऽऽनन्दयतोऽत्र नित्यशः ।**
**संमानितास्तेऽपि शिशोर्मनोहरां क्रीडां समीक्ष्यैव वसन्ति निस्पृहाः ॥५५॥**

'उनके माता-पिता भी वहाँ आये हुए सज्जनोको अपनी ओरसे प्रतिदिन पूर्णत· सुख देते हैं। उनसे सम्मानित होकर वे समागत सज्जन उस शिशुकी मनोहर क्रीड़ा देखते हुए वहाँ नि.स्पृह-भावसे निवास करते हैं' ॥ ५५ ॥

अस्याऽस्ति रूपं वचनातिगं स्फुरत् सच्चिन्मयं केवलमात्मनन्दनम् ।
पश्यत्यमुं यः प्रतिगृह्य यां दृशं तथा भवत्येव शिशुश्च तत्पुरः ॥५६॥

'नन्द-नन्दनका रूप वाणीकी पहुँचसे बाहर है। वह नित्य प्रकाशमान सच्चिदानन्द-मय होनेके कारण केवल आत्माको आनन्द प्रदान करनेवाला है। जो जैसी दृष्टि लेकर उस शिशुको देखता है, वह उनके सामने वैसा ही हो जाता है' ॥ ५६ ॥

कुर्वन् स चेत्थं परचित्तनिर्वृतिं विराजते तत्र भृशं दयार्णवः ।
देव्यश्च यूयं व्रजमागता यदि सुखं लभध्वे वचनातिगं ततः ॥५७॥

'वह इस प्रकार अत्यन्त दयाका सागर है और दूसरोंके चित्तको आनन्द-प्रदान करता हुआ व्रजमे निवास करता है। आप सब देवियाँ यदि व्रजमे आ गयी तो आपको व्रजराज-नन्दनसे वर्णनातीत सुख प्राप्त होगा' ॥ ५७ ॥

इत्थं ब्रुवन्त्यां मयि जातविस्मया स्तत्राऽऽगताः पौरजनाः स बालकाः ।
व्याहारमस्माकमिमं निशम्य ते मुग्धा बभूवुः परिवार्य मां पुनः ॥५८॥

'जब इस प्रकार मैं कह रही थी, तब बहुतसे पुरवासी मनुष्य और बालक विस्मित होकर वहाँ आए और मेरी यह बात सुनकर वे चारोओरसे मुझे घेरकर मुग्ध हो गये ॥५८॥

श्रुत्वाऽन्यया भक्तियुतं सुधोपमं लोकोत्तरं कृष्णचरित्रमीदृशम् ।
सभामुखेऽहं गदिता शुभानने ! शीघ्रं त्वमस्मान्नय गोकुलं त्वितः ॥५९॥

'एक दूसरी स्त्रीने भक्ति-भावसे अमृतके समान मधुर यह लोकोत्तर कृष्णचरित सुनकर सभामे ही मुझसे कहा—'शुभानने ! तुम हमे शीघ्र यहाँसे गोकुलमे ले चलो' ॥ ५९ ॥

अन्योन्यमालप्य तदीयसत्कथा इत्थं व्रजन्तः पथि गोदुहस्तदा ।
स्थूलं घनच्छायमदृश्यबालकं तमेव वृक्षं ददृशुः पुरःस्थितम् ॥६०॥

इस प्रकार परस्पर श्रीकृष्णकी कथा कहते हुए वे गोप जब मथुराके मार्गपर चल रहे थे। आगे जाकर उन्होने घनी छायासे युक्त उसी स्थूल-वृक्षको सामने देखा, जिसपर ग्वाल-बाल छिपे हुये थे ॥ ६० ॥

तस्यैवाऽधः स्थितं चैकं बालं क्रीडाहलेन ते ।
पश्यन्ति स्म पुरः पृथ्वीं कर्षन्तं व्यग्रमानसम् ॥६१॥

उसी वृक्षके नीचे एक बालक अपने खिलौनेके हलसे सामनेकी भूमि जोत रहा था, किन्तु उसके चित्तमे व्यग्रता थी। यह बात वहाँ आये हुए गोपोने देखी ॥ ६१ ॥

**अत्र सर्वा दिशः शून्या मध्ये मार्गमयं शिशुः ।**
**किं करोति स्थितश्चैकः कोऽयं स्यादित्यभून्मतिः ॥६२॥**

उनके मनमे यह विचार उठा कि यहांकी सारी दिशाये तो सूनी हैं किन्तु यह शिशु बीच रास्तेपर खड़ा होकर अकेला क्या कर रहा है । यह कौन हो सकता है ? ॥ ६२ ॥

**गत्वाऽग्रे वृक्षमूलं तद्यदाऽपश्यन्निरूप्य ते ।**
**तदा परिचितो रामस्तैराहूतः सुविस्मितैः ॥६३॥**

आगे बढकर उन्होने जब वृक्षके नीचे देखा तो उन्हे सुपरिचित बलराम दिखाई दिए । फिर उन्होने आश्चर्य-चकित होकर उन्हे बुलाया ॥ ६३ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**एष षड्विंशसर्गोऽगान्महाकाव्ये स्तवात्मके ॥६४॥**

कृष्णप्रसाद घिमिरेकी कृति इस 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे यह छब्बीसवां सर्ग पूरा हुआ ॥ ६४ ॥



# सप्तविंशः सर्गः

[ श्रीरामेण सार्कं तेषां संवादः । वृक्षस्कन्धस्थगोपबालकैस्तच्छिरोभ्यो गोरस-घटलुण्ठनं तेभ्योऽपि वानरैः । तेषां पलायनवर्णनञ्च ]

( प्रहर्षिणीवृत्तम् )

श्रीराम ! त्वमिह कुतः समागतोऽसि क्रीडार्थं रचितहलेन किं करोषि ।
भूरित्थं किमिति विदार्यते त्वयाऽद्य को हेतुस्त्यज पदवीं पुरीं व्रजामः ॥१॥

'श्री बलराम ! तुम यहाँ कहाँसे आ गये ? खेलनेके लिए बनाये गये इस हलके द्वारा क्या करते हो ? इस प्रकार यहाँकी धरतीको क्यो विदीर्णकर रहे हो ? तुम्हारे यह सब कार्य करनेका क्या हेतु है ? छोडो हमारा रास्ता, हम मथुरापुरीकी ओर जा रहे हैं' ॥ १ ॥

त्वद्भ्राता नवजलदोज्ज्वलोऽद्य कृष्णः कुत्राऽऽस्ते क्व च विलसन्ति ते वयस्याः ।
एकाकी त्वमिह कथं कदागतो वा तत्सर्वं वद बल ! का च ते चिकीर्षा ? ॥२॥

'नूतन जलधरके समान श्याम-उज्ज्वल वर्णवाला तुम्हारा भाई कन्हैया आज कहाँ है ? और तुम्हारे वे सखा कहाँ सुशोभित हो रहे हैं ? तुम यहाँ अकेले कब और कैसे आ गये ? भइया बलराम ! ये सब बाते बताओ । तुम क्या करना चाहते हो ?' ॥ २ ॥

इत्थं तैः शिरसि पयोघटान् वहद्भिः संस्पृष्टस्तरुतल उत्थितैश्च गोपैः ।
श्रीरामोऽवददथ तान्निरीक्ष्य शीर्षं चोत्थाप्य स्मितरुचिरेण वाङ्मयेन ॥३॥

वृक्षके नीचे सिरपर दूधके घड़े लिए खडे हुए उन गोपोके इस प्रकार पूछनेपर बलरामने सिर उठाकर उन सबकी ओर देखा और मन्द मुस्कराहटके साथ रुचिर वाणीमे इस प्रकार कहा—॥ ३ ॥

अत्राऽहं गृहत उपागतोऽस्मि कल्ये कृष्यर्थं क्षितिमसमां विदारयामि ।
योगीव स्वधृतसमाधिरार्यपादा ! भ्राता मेऽम्बुजनयनः प्रसुप्त आसीत् ॥४॥

'आर्यचरणो ! मै यहाँ घरसे बड़े सबेरे आ गया था । खेतीके लिए इस विषम भूमि-को जोत रहा हूँ । जब मै आया, उस समय मेरा भाई कमलनयन कन्हैया योगीकी भाँति समाधि लगाए सो रहा था ॥ ४ ॥

अत्राऽहं शृणुत वपामि शष्पबीजं येन स्यात्प्रचुरमदः सुधारसाक्तम् ।
यद्भुक्त्वा ददतु पयश्च गाव इत्थं तन्नीत्वा विकुरुत विक्रयं तु यूयम् ॥५॥

'मै यहाँ घासके बीज बोऊँगा। जिससे सुधा-रससे सिक्त घास प्रचुर मात्रामे हो सके। उस घासको खाकर हमारी गौये खूब दूध दे और आपलोग उसे ले जाकर मथुरा-पुरीमे बेचा करें' ॥ ५ ॥

**अस्माकं श्रमफलजं सुधोपमं तद्भुञ्जन्तु प्रतिदिनमेवमेव दुष्टाः।**
**यद्द्रष्टुं ह्यपि च न पारयन्ति सन्तस्तद्दुःखं व्यथयति चाऽद्य मानसं मे ॥६॥**

'इस प्रकार हमारे परिश्रमके फलस्वरूप वह अमृत समान दुग्ध प्रतिदिन दुष्टोके उपभोगमे आता रहे। जिसको सन्त-पुरुष देख भी नही सकते हैं, वही दुःख आज हमारे चित्तको पीडा दे रहा है' ॥ ६ ॥

**इत्युक्त्वा वचनशरेण तेन चेत्थं विद्धास्ते हृदि विपुलं विबुध्य भावम्।**
**अन्योन्यं गलितहृदः समीक्ष्य तस्थुर्ध्यात्वैवाऽनुचितमिदं विकर्म चेति ॥७॥**

बलराम ऐसा कहकर चुप हो गये। उनके वचन-बाणसे उन गोपोका हृदय बिंध गया। उनके विशद अभिप्रायको समझकर उन सबका हृदय ग्लानिसे भर गया और वे एक दूसरेकी ओर देखते हुए यह सोचकर कि यह अनुचित अथवा बुरा काम है, मौन खडे रह गए ॥ ७ ॥

**एतस्मिन् ह्यवसर एव तत्तरुस्थाः पूर्वोक्ता व्रजशिशवोऽवरुह्य किञ्चित्।**
**गोधुग्भिः शिरसि धृतान् पयोघटांस्तान् बाहुभ्यामुपरि विगृह्य हन्त! जह्नुः ॥८॥**

इस अवसरपर उस वृक्षके उपर बैठे हुए पूर्वोक्त ग्वाल-बालोने कुछ नीचेको ओर उतर कर गोपो द्वारा सिरपर धारण किये गये दूधके घडोको ऊपर ही ऊपर दोनो हाथोसे उठाकर अपने अधिकारमे कर लिया। यह अद्भुत बात हुई ॥ ८ ॥

**तत्राऽऽसन् विपुलमवस्थिता निलीय सद्बाला इव कपयोऽपि पूर्वमेव।**
**दृष्टं तैरपि च यदा पयस्यमेभ्यो निष्कास्य स्वमुखविलेषु ते क्षिपन्ति ॥९॥**

उस वृक्षपर उन अच्छे बालकोकी भाँति बहुत से बानर भी पहले से ही भली-भाँति छिपकर बैठे थे। उन्होने भी दही-दूध आदिके पात्र देखे, जब कि उनमेसे निकाल-निकालकर वे अपने मुँहके भीतर उन वस्तुओको डालने लगे ॥ ९ ॥

**सौभाग्यं गुरुतरमेतदस्मदीयं यल्लब्धं स्वसदन एव पेयमद्य।**
**ध्यायन्तः क्षणमथ वानरा नराणां हस्तेभ्यः ससुखमिमान् घटांश्च जह्नुः ॥१०॥**

'आज हमारा बडा भारी सौभाग्य है कि हमे अपने घरमे ही बैठे-बैठे ही खाने-पानेको वस्तुएँ प्राप्त हो गईं।' ऐसा सोचते हुए उन बानरोने इन नरोके हाथोसे अनायास ही क्षण-भरमे उन गोरससे भरे घड़ोका अपहरण कर लिया ॥ १० ॥

प्राग्वत्ते तत उपविश्य वृक्षकाण्डे तत्पेयं सुखमपिबन्द्रुतं यथेच्छम् ।
तत्पश्चात् सुदृढपयोघटांस्तु रिक्तानुन्मत्तास्तरुतल एव विक्षिपुस्ते ॥११॥

फिर पहलेकी ही भाँति वृक्षकी शाखापर बैठकर उन्होने सुखपूर्वक इच्छानुसार उन पेय वस्तुओका पान किया। तत्पश्चात् खाली हुए उन मजबूत दुग्ध-पात्रोको उन्मत्तकी भाँति वृक्षके नीचे ही फेक दिया ॥ ११ ॥

वर्षर्तौ नवजलदो जलप्रहारैः शैलाग्रान् व्यथयति सोपलैर्हि यद्वत् ।
तद्वत्तानपि हरयो विचक्रुरेवं संस्नातान् व्यथितसुमस्तकांश्च गोपान् ॥१२॥

जैसे वर्षा ऋतुमे नूतन मेघ ओले सहित जल प्रहारके द्वारा शैल-शिखरोको पीडा देते हैं, उसी प्रकार बानरोने उन व्यथित हुए समस्त गोपोको दूध-दहीसे नहलाकर विकृत कर दिया ॥ १२ ॥

दृष्ट्वेमां स्थितिमसमामतर्क्यरूपां सम्भ्रान्ता व्रजमनुजाः शिरः प्रगृह्य ।
सत्रासां झटिति पयस्यविक्रयं तन्मन्वाना अनुचितमेव दुद्रुवुर्हा ! ॥१३॥

यह अतर्कनीय विषम-परिस्थिति उत्पन्न हुई देख व्रज-वासी सिर थामकर घबरा उठे। उनपर भय छा गया और वे उस दुग्ध-विक्रयको अनुचित कर्म मानकर तुरन्त वहाँसे भाग खडे हुए। इस घटनासे उनके मनमे बडा खेद हुआ ॥ १३ ॥

इत्थं याते गोकुलं गोपवर्गे नीचैरायातः स कृष्णो द्रुमाग्रात् ।
बालाश्चान्ये पूर्ववन्मार्गमध्यं ह्यागत्यैवं तस्थुरस्यैव पार्श्वे ॥१४॥

इस प्रकार जब गोपवृन्द गोकुलमे लौट गये, तब श्रीकृष्ण वृक्षसे उतरकर नीचे आए। दूसरे ग्वाल-बाल भी पूर्वोक्त मध्यमार्गमे आकर श्रीकृष्णके ही पार्श्वभागमे खडे हो गये ॥१४॥

ततोऽभाणि रामोऽनुजेनाऽच्युतेन भवान् सत्यकामो विशिष्टो धरायाम् ।
स्वदाक्ष्येण येनाऽत्र गोपाः कुवृत्तौ प्रवृत्ता निवृत्तीकृता धन्य आर्य ! ॥१५॥

तब छोटे भाई कृष्णने कहा—'आर्य! आप धन्य है। इस पृथ्वीपर सत्य-सकल्पके रूपमे विख्यात हैं। आपने किस चातुर्यसे कुवृत्तिमे लगे हुए गोपोको उसकी ओरसे निवृत्तकर दिया है ॥ १५ ॥

व्रजामो वयं चाऽद्य सम्पन्नकामा इतः स्वान् गृहान् भो ! द्रुतं पादचारैः ।
भवेयुर्भृशं खिन्नचित्ता व्रजस्थास्त आर्या अदृष्ट्वा च नो मार्गमाणाः ॥१६॥

'आज हमारी कामनापूर्ण हो गई। अतः हम यहाँसे तुरन्त पैदल ही अपने-अपने घरको लौट चले। व्रजवासी आर्य-जन हमलोगोको खोजते होगे और न देखकर मन ही मन अत्यन्त खिन्न हो रहे होगे ॥ १६ ॥

इत्थं वानरवर्गांस्तान् पयस्यादनलोलुपान् ।
अविक्रयपरान् गोपान् कृत्वा सर्वे गृहान् ययुः ॥१७॥

इसप्रकार बानर समुदायको दही-दूध खानेके लिए लोलुप बनाकर और गोपोको गोरस-विक्रयसे पराङ्मुख करके वे सब लोग अपने घरोको लौट गए ॥ १७ ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
सप्तविंशोऽपि सर्गोऽगान्महाकाव्ये स्तवात्मके ॥१८॥

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे यह सत्ताइसवाँ सर्ग भी पूरा हुआ ॥ १८ ॥



# अष्टाविंशः सर्गः

[ गोपराजसभायां गोपबालकैर्यमुनतटस्थितानां साधकानामन्येषाञ्च
तत्तदनुभववर्णनपूर्वकं तत्स्थितिश्रावणम् । ]

( स्रग्विणीछन्दः )

**काल एवं गतो गोकुले शान्तितो गोदुहां बालकान् वर्धयन् स्वैर्गुणैः ।**
**तेऽपि गोपालका बुद्धिदेनाऽमुना प्रत्यहं वीक्षिताः शान्तिभाजोऽभवन् ॥१॥**

इस प्रकार गोकुलमे ग्वाल-बालोको अपने गुणोसे बढाता हुआ समय शान्तिपूर्वक व्यतीत होने लगा । बुद्धिदाता श्रीकृष्णकी प्रतिदिन दृष्टि पडनेसे वे ग्वाल-बाल भी शान्तिके भागी हो गए ॥ १ ॥

**एकदा संगता बालकाः सर्वत आगता गोपराजस्य सद्माङ्गने ।**
**यत्र चासीदसौ स्वैर्जनैर्वीक्षितो वानरैः संवृतः क्रीडमानः सुखम् ॥२॥**

एक दिन सब गोपबालक चारो ओरसे एकत्र हो गोपराज नन्दके भवनके भीतर आँगनमे आए । जहाँ बानरोसे घिरे हुए श्रीकृष्ण सुखपूर्वक खेल रहे थे और स्वजन, बन्धु उनकी उस लीलाको देख रहे थे ॥ २ ॥

**तं तदा पाययन्ती यशोदा पयो ह्यानयामास हैयङ्गवीनैः समम् ।**
**तन्मुखे स्थापयामास तत्सुन्दरं सोऽपि वक्त्रं च विस्फारयामास ह ॥३॥**

उसी समय यशोदा उन्हे दूध पिलानेके लिए ताजे माखनके साथ घरमे ले आयी । वहाँ लाकर उन्होने वह माखन सुन्दर ढगसे उनके मुँहमे डालना चाहा । तब श्रीकृष्णने अपना मुँह फैला दिया ॥ ३ ॥

**किन्तु तस्मिन् क्षणे तस्य दृष्टिः शुभा संगता वानरेष्वप्यहो ! स्नेहिषु ।**
**येन ते गोपयस्यादने लोलुपाः कारिता स्तद्दिनादागताः पृष्ठतः ॥४॥**

किन्तु उसी क्षण कन्हैयाकी शुभ-दृष्टि उन स्नेही बानरोपर भी पडी । अहो ! उन्होने ही उसी पूर्व दिनमे उन्हे गोरस खानेके लिए लोलुप बना दिया था और वे सदा उनके पीछे लगे रहते थे ॥ ४ ॥

**मातृहस्तादतो दुग्धपात्रं स्फुरत् तेन संगृह्य तद्भक्षितं प्राक् ततः ।**
**वीक्षिता तृप्तिदेनात्मना बालकाः फेलया तर्पिता वानराः स्नेहतः ॥५॥**

उन्होने माताके हाथसे चमकता दूधपात्र लेकर पहले तो स्वय उसका उपभोग किया । फिर उन तृप्तिदाता श्री हरिने स्वय बालको और बानरोकी ओर देखा और उन सबको अपने उच्छिष्ट प्रसादसे स्नेहपूर्वक तृप्त किया ॥ ५ ॥

प्राङ्गणात्तैः समं साग्रजोऽयं पुनर्ह्याजगामाऽऽशु तं गोपराजं प्रति ।
उन्नते स्वासने स्वैर्वृतो यत्र स मग्न आसीद् भृशं तद्विनोदार्णवे ॥६॥

फिर उन सबके साथ वे बडे भाई बलराम सहित शीघ्र ही गोपराज नन्दके पास आए। जो स्वजनोसे घिरे हुए उच्च आसनपर बैठकर अपने उस शिशुकी ही विनोद-सागरमे अत्यन्त मग्न थे ॥ ६ ॥

संस्थितं स्वाङ्क आगम्य तं गोपराण् मूर्ध्न्युपाघ्राय वात्सल्यतः संसदि ।
आप्तवान् स्वात्मगां पूर्णतृप्तिं ततः क्षिप्तवान् स्वां दृशं रौहिणेये च सः ॥७॥

पास खडे हुए कन्हैयाको गोदमे लेकर गोपराजने उस सभामे वात्सल्यपूर्वक उसका मस्तक सूँघा। उससे उनकी आत्माको पूर्ण-तृप्ति प्राप्त हुई। फिर उन्होने अपनी दृष्टि रोहिणी-नन्दन बलराम पर डाली ॥ ७ ॥

संनिविष्टास्ततो बालकाः सर्वतः शोभितं तत्सभासद्म तैः शान्तितः ।
उत्थितस्तत्र चैकः शिशुर्नामत उद्धवो विश्रुतो व्याहरत्प्रेमतः ॥८॥

तदनन्तर वे समस्त बालक उनके चारो ओर बैठ गये। वह सभा-सदन उनके द्वारा शान्तिपूर्वक शोभा पाने लगा। इसी समय वहाँ उद्धव नामसे प्रसिद्ध एक गोप-शिशु उठकर खडा हुआ और प्रेमपूर्वक बोला—॥ ८ ॥

कृष्ण ! सद्वृत्तयो भिक्षुकाश्चर्षयो गोकुलं ह्यागता नागरास्तेऽपि च ।
माथुरे माथुरैः पीडितान्नो भृशं पान्तु बाला इति व्याहरन्त्यत्र च ॥९॥

'हे श्रीकृष्ण ! कुछ सदाचारी भिक्षुक, ऋषि तथा मथुराके नागरिक गोकुलमे आए हैं। वे कहते हैं कि हम मथुरामे मथुरावासी असुरोसे अत्यन्त पीड़ित है। अत गोकुलके बालक हमारी रक्षा करे ॥ ९ ॥

गोदुहामाश्रये तिष्ठतां निर्भयं भुञ्जतां गोरसाञ्छ्रद्धयोपाहृतान् ।
कृष्ण ! तेषां विपत्क्रन्दनं गोकुले गुञ्जतेऽहर्निशं त्रायतां भो इति ॥१०॥

'सबके मनको अपनी ओर खीच लेनेवाले कृष्ण ! वे ग्वालोके घरमे निर्भय ठहरे हुए हैं और उनके द्वारा श्रद्धापूर्वक समर्पित गोरस खाते है, उनका यह विपत्ति-कालिक करुण-क्रन्दन गोकुलमे अहर्निश गूँजता रहता है—'प्यारे गोपबालको ! हमारी रक्षा करो।' इत्यादि ॥ १० ॥

नामतश्चाऽर्जुनो बाल आहाऽथ भो श्रूयतां तत्तटे पावने यामुने ।
संस्थिता दीक्षिता याज्ञिकाः साधवः कुर्वते सत्क्रिया मन्त्रतन्त्रान्विताः ॥११॥

उन बालकोमे एक अर्जुन नामवाला बालक था, वह बीचमे ही बोल उठा—'प्यारे कृष्ण ! मेरी बात सुनो—यमुनाजीके पावन तटपर बहुत-से साधु-महात्मा दीक्षा लेकर यज्ञ-कर्ममे लगे बैठे हैं और मन्त्र-तन्त्रसे युक्त सत्क्रियाओका संपादन करते हैं ॥ ११ ॥

ह्यो वयं दर्शने ह्युत्सुकाः स्मो गता आह्वयाञ्चक्रिरे वीक्ष्य ते नोऽपि च ।
संस्थिता श्रद्धयाऽचञ्चलाः सर्वथा संगतास्तैर्वयं तत्र गत्वा तदा ॥१२॥

'कल हमलोग उनके दर्शनके लिए उत्सुक होकर वहाँ गए थे, उन्होने भी हमे देखकर अपने पास बुला लिया । तब वहाँ जाकर उनसे मिले और चपलता त्यागकर श्रद्धापूर्वक सुस्थिर भावसे वहाँ बैठे रहे ॥ १२ ॥

आशिषं संप्रयुज्यैव नस्ते ततः स्वासने स्थापयामासुरुच्चैर्धिया ।
शर्करामिश्रितं तृप्तिदं सद्घृतं संप्रदायाऽवदन्नित्थमेतद्वचः ॥१३॥

'तदनन्तर उन्होने हमे आशीर्वाद देकर बडी उच्चबुद्धिसे हम सबको अपने ही आसनो पर बिठाया और परम तृप्तिदायक मिश्री-मिला माखन हमे खानेके लिए देकर यह बात कही—॥ १३ ॥

बालका ! ब्रूत किं गोकुले दर्शनादेव शान्तिप्रदो मेघनीलोऽर्भकः ।
विद्यते ! किं भवन्तोऽपि जानन्ति तं ह्यस्ति चेत् कोऽस्त्यसौ किं स्वरूपश्च सः ॥१४॥

'बालको ! यह तो बताओ, क्या गोकुलमे कोई मेघके समान श्याम-कान्तिवाला बालक है जो दर्शनमात्रमे ही सबको शान्ति प्रदान करनेवाला हैं ? तुमलोग उसे अवश्य जानते होगे । यदि है तो बताओ वह कौन है ? और उसका स्वरूप कैसा है ?' ॥ १४ ॥

कीदृशास्तद्गुणाः शक्तिरस्त्यस्य का तेन वाऽऽकृष्यते स्वात्मवृत्तौ जगत् ।
मोहिता भावुका ज्ञानिनः साधका विश्वचक्रं भ्रमन्तीह यत्प्राप्तये ॥१५॥

उसके गुण कैसे है ? उसकी शक्ति क्या है ? क्या उसकेद्वारा सारा जगत् आत्मवृत्तिकी ओर खीच लिया जाता है ? क्या उसके दर्शनसे सब लोग आत्मानन्दका अनुभव करने लगते हैं ? यदि ऐसी बात है, तो यह वही बालक है, जिसकी प्राप्तिके लिए मोहित हो, भावुक-भक्त, ज्ञानी और साधक इस ससार चक्रमे घूम रहे हैं ॥ १५ ॥

तेष्वथो योगिनो माऽवदन् बालका ! ध्यानमार्गस्थिता वृत्तिहीना वयम् ।
अद्भुतं श्यामलं तच्छिशुं शान्तिदं हन्त ! पश्याम एवाऽत्र सच्चिन्मयम् ॥१६॥

'उन लोगोमे जो योगी थे, वे मुझसे बोले—'बालको ! जब हमलोग ध्यान-मार्गमे स्थित होकर वृत्तिहीन हो जाते हैं, तब उस अद्भुत श्यामल, शान्तिप्रद एव सच्चिदानन्दमय शिशुको ही देखने लगते हैं । उस समय बडा आनन्द आता है' ॥ १६ ॥

**ते च साङ्ख्या वदन्ति स्म भो ! पूरुषं तत्प्रधानं च संचिन्त्यमाने हृदि ।**
**सोऽयमायाति तन्मध्यतः संस्फुरद् दृक्पथेऽस्माकमव्याकृतोऽहर्निशम् ॥१७॥**

'तदनन्तर उनमे जो साख्यवादी थे, वे कहने लगे—'गोपबालको ! जब हम अपने हृदयमे पुरुष और प्रकृतिके पार्थक्यका चिन्तन करने लगते हैं तो उन्हीके बीचसे स्फुरित हो, वह अव्याकृत तत्त्व-स्वरूप बालक अहर्निश हमारे दृष्टिपथमे आने लगता है' ॥ १७ ॥

**कृष्ण ! वेदान्तिनोऽप्येवमाहुस्तदा ब्रह्म संचिन्तयन्तो वयं स्वे हृदि ।**
**तं शिशुं मूर्तमेवंविधं नित्यशो हन्त ! पश्याम इत्थंगुणश्चाऽस्त्यसौ ? ॥१८॥**

'कृष्ण ! तब वेदान्ती लोग भी इसी प्रकार बोल उठे—'बडे हर्षकी बात है कि जब हमलोग अपने हृदयमे ब्रह्मका चिन्तन करने लगते हैं, उस समय प्रतिदिन वही श्याम-शिशु मूर्तिमान् दिखाई देता है। ऐसे अद्भुत गुणोवाला वह गोपकिशोर है' ? ॥ १८ ॥

**तत्र नैयायिकाश्चाऽवदंस्तातकाः ! साणुवादं पुरस्कृत्य भव्यं मतम् ।**
**यत्समीक्षामहे तत्त्वमेकं तदा सन्निरीक्षामहे तं महान्तं पुरः ॥१९॥**

'उसी समय वहाँ नैयायिक कहने लगे—'बालको ! हमलोग जब परमाणुवाद-युक्त भव्य न्याय-मतको सामने रखकर एक तत्त्वकी समीक्षा करने लगते है, तो 'महतो महीयान्' चिन्मय तत्त्वके रूपमे उसी श्याम-शिशुका समक्ष दर्शन करते हैं' ॥ १९ ॥

**श्याम ! वैशेषिकास्ते च बौद्धाः पुनर्ब्रुवमाहुर्विशेषं च बुद्धं वयम् ।**
**यद्भजामस्तथापीह सामान्य उँ ! कोऽप्यबुद्धः शिशुर्भासते नो हृदि ॥२०॥**

'श्याम ! तत्पश्चात् वैशेषिक मतावलम्बी और बौद्ध इस प्रकार कहने लगे—'हमलोग यद्यपि विशेष और बुद्धका चिन्तन करते है, तथापि हमारे आन्तरिक ध्यानमे वह कोई सामान्य स्वरूप अथवा बुद्ध-भिन्न शिशु प्रकाशित हो उठता है' ॥ २० ॥

**एवमत्र स्थिते बालकैः संवृतो यूथपस्तोककृष्णोऽप्यथाऽऽगम्य ह ।**
**अन्तराऽपातयद्विघ्नमेकान्ततो बावदूकोऽभणत् सूचयिष्यन्निदम् ॥२१॥**

जब कि वहाँ ऐसी स्थिति थी तभी स्तोककृष्ण नामसे प्रसिद्ध एक यूथपति गोप-बालक बहुतेरे ग्वाल-बालोसे घिरा हुआ वहाँ पहुँचा। वह बड़ा बावदूक ( बोलनेवाला ) था। उसने चलती हुई बात-चीतमे विघ्न उपस्थित कर दिया और यह सूचना देते हुए कहा—॥ २१ ॥

**कृष्ण ! गोपालका नित्यतुष्टास्तथा सन्ति हृष्टा व्रजे पूर्णकामाः स्वतः ।**
**विक्रयं गोरसानां न कुर्वन्ति ते ह्यत्यजन् गर्ह्यकर्मेति सन्निश्चिताः ॥२२॥**

'कृष्ण ! व्रजके गोपगण स्वतः नित्य सन्तुष्ट, हर्ष-मग्न एवं पूर्णकाम हो गये हैं। उन्होने यह निश्चय कर लिया है कि गोरसविक्रय निन्द्यकर्म है। अत अब वे गोरस-विक्रय नही करते हैं। इस धन्धेको उन्होने सर्वथा छोड ही दिया है ॥ २२ ॥

किन्तु नूत्नप्रिया द्रष्टुकामाः पुरीं गोप्य औत्सुक्यतो बालिकाभिः समम् ।
छन्नतोऽपि प्रभो ! प्रत्यहं गोघृतं तत्र नीत्वा ददत्याखलेभ्योऽखिलम् ॥२३॥

'परन्तु प्रभो ! नूतन-वस्तुसे प्रेम करनेवाली गोपियाँ मथुरापुरीको देखनेकी इच्छासे उत्सुक हो, अन्यान्य गोपकिशोरियोंके साथ कोई न कोई बहाना बनाकर प्रतिदिन गो-घृत लिए वहाँ जाती हैं और दुष्टोतकको वह सब दे आती हैं' ॥ २३ ॥

तन्निरोद्धुं वयं स्मः समर्था अतो याम उच्चधिया स्थीयते किं त्वया ।
अमृतं पार्थिवं भुञ्जते यत् खलाः साम्प्रतं नैव तच्छीघ्रमायाहि भोः ! ॥२४॥

'इस अन्यायको रोकनेके लिए हम सर्वथा समर्थ है। अत इस उच्च विचारके साथ हम चले। तुम यहाँ क्यो बैठे हो ? भूतलके अमृतका दुष्टलोग उपभोग करें, यह उचित नही है। अत भइया ! शीघ्र आओ' ॥ २४ ॥

ततस्तोककृष्णस्य वचो ह्यनुत्तमं निशम्य कृष्णोऽत्र बभूव सस्मितः ।
शनैरथोत्थाय निरीक्ष्य मातरं जगाम सार्धं सखिभिर्बहिस्ततः ॥२५॥

स्तोककृष्णकी यह बहुत उत्तम बात सुनकर कृष्ण वहाँ मन्द-मन्द मुस्कुरा उठे। वे धीरेसे उठकर खडे हो गए और मातापर दृष्टि डालकर सखाओके साथ बाहर चले गए ॥२५॥

गृहपार्श्व इहाऽऽगम्य सरामा गोपबालकाः ।
संमन्त्र्य व्रजकार्यं स्वं कृष्णं धृत्वा करे ययुः ॥२६॥

घरके पार्श्वभागमे आकर बलराम सहित समस्त गोपबालक व्रजमे किये जानेवाले कार्यके विषयमे सलाह करके कृष्णका हाथ पकडकर आगे बढ गये ॥ २६ ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
एषोऽष्टाविंशसर्गोऽगान्महाकाव्ये स्तवात्मके ॥२७॥

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे अट्ठाइसवाँ सर्ग पूरा हुआ ॥ २७ ॥



# एकोनत्रिंशः सर्गः

[ नवनीतचौर्यभक्षणप्रसङ्गे भगवता सभ्याना समक्ष देव्यै वृषभानुनन्दिन्यै हैयङ्गवीनभक्षणप्रदानपूर्वक तत्स्वरूपनिरूपणवर्णनम् । ]

( वंशस्थेन्द्रवंशयोरुपजातिवृत्तम् )

**अतर्क्यबोधोऽथ शिशुर्मणिप्रभो मयूरपिच्छाश्रितशीर्ष उच्चधीः ।**
**ददौ शुभादेशममीभ्य ईप्सितं प्रियं करिष्णुर्व्रजयोषितां सताम् ॥१॥**

अतर्क्य-बोधसे सम्पन्न और नीलमणिके समान श्याम-कान्तिसे युक्त उस नन्द-शिशुके मस्तकपर मोर-पखका मुकुट शोभा पा रहा था । उसका विचार बहुत ऊँचा था । वह व्रजके युवतियो और सत्पुरुषोका प्रिय करना चाहता था । अत उसने अपने सखाओको अभीष्ट-कार्यके लिए इस प्रकार शुभ आदेश दिया—॥ १ ॥

**आर्या ! वयस्या. ! शृणुताऽत्र मद्वचस्तथैव कार्यं व्रजमण्डलेष्वपि ।**
**रीतिर्विगर्ह्येयमतो विशेषतो निषेधनीया भववाच्यतां गता ॥२॥**

'आर्य बलराम तथा साथियो ! यहाँ मेरी बात सुनो और व्रजमण्डलमे तदनुसार ही कार्य करो । गोपियोकी यह गोरस-विक्रयकी रीति निन्दनीय है । जगत्मे इससे बडी बदनामी होती है । अत हमे विशेष-प्रयत्न करके इस कुरीतिको रोकना है ॥ २ ॥

**अस्मान् क्षिपन्तोऽत्र श्रुतौ श्रुतौ जना गोपाः समर्था अपि सेश्वरा अपि ।**
**वराटकैर्गोरसविक्रयं सदा कुर्वन्त्ययोग्यं त्विति ते ब्रुवन्ति च ॥३॥**

'जनपदके लोग परस्पर काना-फूसी करते हुए हमलोगोपर आक्षेप करते हुए कहते है कि गोपगण समर्थ है, ईश्वरके साथ रहते है, तथापि सदा ही कौडियोके मोलपर गोरस बेचा करते हैं । यह तो बडा अयोग्य कर्म है ॥ ३ ॥

**गृहे गृहे गच्छत यूथशोऽथ भो ! लभ्येत यद्यद्धिदुग्धसद्घृतम् ।**
**तत्प्रत्यहं खादत मित्रवानरा भवन्ति तेभ्योऽपि च दत्त भूरिशः ॥४॥**

'अत मेरे मित्रो ! तुम घर-घरमे जाओ और वहाँ जो भी दही-दूध तथा उत्तम घृत उपलब्ध हो, उसे प्रतिदिन खा जाया करो । यदि पीछे बानर हो तो उन्हे भी पर्याप्त गोरस दो ॥ ४ ॥

**प्रविश्य गोष्ठं व्रजवासिनां प्रिया ! विमुच्य गोवत्सगणानितस्ततः ।**
**दुग्धं गवां पाययत त्वरान्विता गृहस्थनेत्राण्यपवार्य यत्नतः ॥५॥**

'प्यारे साथियो ! व्रजवासियोके गोष्ठमे प्रवेश करके इधर-उधर बँधे हुए बछडोको खोल दो और तुरन्त उन्हे गौओका सारा दूध पिला दो। परन्तु प्रयत्नपूर्वक घरके मालिककी आँखोसे छिपे रहकर यह कार्य करना चाहिए ॥ ५ ॥

**नराश्च नार्यश्च विशेषतो व्रजे स्निह्यन्ति चाऽस्मासु निजार्भकेष्विव ।**
**यूयं सुखं गच्छत निर्भया अतो गृहे गृहे गोरसपूरितेऽन्वहम् ॥६॥**

'व्रजके लोग विशेषत नारियाँ हम सबके ऊपर अपने बालको-जैसा स्नेह रखती हैं, अत तुम प्रतिदिन निर्भय हो सुखपूर्वक गोरससे भरे प्रत्येक घरमे जाओ ॥ ६ ॥

**स्नेहं प्रदर्श्याऽवसरं प्रतीक्ष्य भो ! प्रसाद्य मान्यान् सकलान् गृहस्थितान् ।**
**कृत्वा कथा मिष्टतमा विमोह्य तान् सुखं गृहान्तर्विशताऽत्र निश्चिताः ॥७॥**

'मित्रो ! अवसरकी प्रतीक्षा करके स्नेह दिखाकर घरके सभी आदरणीय बडे-बूढोको प्रसन्न करो, फिर अपनी मीठी-मीठी बातें सुनाकर उन्हे मोहित करके अपनी कार्य-सिद्धिका निश्चित विचार लिए घरके भीतर आरामसे घुस जाओ ॥ ७ ॥

**ततो दधिक्षीरघृतादिसञ्चिते भाण्डारकोष्ठे निभृतं प्रविश्य च ।**
**यथासुखं खादत यत्नपूर्वकं निष्कास्य तूष्णीं सकलं विभज्य तत् ॥८॥**

'फिर चुपचाप दही, दूध और घृत आदिसे परिपूरित भण्डार घरमे प्रवेश करके आरामसे जितना खा सको यत्नपूर्वक निकाल-निकालकर खाओ और चुपकेसे ही सारी वस्तुएँ आपसमे बाँट लिया करो ॥ ८ ॥

**पयस्यमस्माभिरिह प्रतिक्षणं संभुज्यते लुण्ट्यत इत्यसाम्प्रतम् ।**
**संमन्यमानाः स्वगृहान्तरेऽपि ते तत्स्थापयन्त्येव निगूह्य सर्वथा ॥९॥**

'हमलोग प्रतिक्षण उनके दूध-दही आदिको खाते और लूट लिया करते हैं, यह सर्वथा अनुचित है—ऐसा मानकर वे गोपगण अपनी सारी वस्तुएँ घरके भीतर छिपाकर रखते है ॥९

**तेषां भयं वर्तत आखुभिस्तथा तैराखुभुग्भिः कपिभिश्च भक्षणात् ।**
**तस्मादिमे शिक्य इतस्ततोऽपि भो ! संस्थापयन्तीत्थमदृश्यरूपतः ॥१०॥**

'इनको चूहोसे बिल्लियोसे और बानरोसे गोरसके खाये जानेका भय है, अत मित्रो ! ये लोग इधर-उधर छीकेपर अपने गोरसको इस तरह रखते हैं कि उसपर किसोकी दृष्टि न पडे ॥ १० ॥

**भाण्डैः कुचैलैश्च पिधाय तैरिदं संस्थाप्यते यत्नत एव भित्तिषु ।**
**प्रदर्श्य निष्काशयत स्वविग्रहे विन्यस्तरत्नानि विनाश्य तत्तमः ॥११॥**

'तुम्हारी इच्छा आज यहाँ क्या करनेकी है ? क्या सचमुच तुम्हे गलग्राहिणी पिपासा सता रही है। अहो ! बालको ! यदि ऐसी बात है तो हमारे घरमे जो भी तक्र (मट्ठा) आदि है, वह सब हम तुम्हे देगी' ॥ २३ ॥

**उक्तं प्रियं ताभिरिदं निशम्य ते प्रोत्फुल्लवक्त्राम्बुरुहो व्रजार्भकाः।**
**प्रगृह्य तासां परिधानमाकुलं प्रोचुस्तदा मातर! एवमस्ति तत् ॥२४॥**

इस प्रकार उन स्त्रियोके कहे गए इन प्रिय वचनोको सुनकर व्रज-बालकोके मुखकमल खिल उठे। उन्होने हठात् उनके अचल पकडकर कहा—'माताओ ! हाँ ! वास्तवमे ऐसी ही बात है। ( हमे प्यास सता रही है ) ।' ॥ २४ ॥

**विश्रुत्य तेषां करुणं प्रभाषणं स्निग्धा इमास्तेष्वथ संभ्रमद्धियः।**
**गत्वा समानीय गृहान्तरस्थितं तक्रादि तेभ्यः प्रददुः सुधोपमम् ॥२५॥**

उनका करुणायुक्त वचन सुनकर उन स्नेह-परायणा स्त्रियोंके हृदयमे घबराहट पैदा हो गयी। उन्होने घरके भीतर जाकर वहाँ सुधोपम स्वादसे युक्त जो तक्र आदि वस्तुएँ थी, उन्हे लाकर उन बालकोको दिया ॥ २५ ॥

**प्राग्देहि मह्यं नहि मह्यमीदृशं वदत्सु तेष्वत्र तृषार्दितेष्विव।**
**गृहान्तरेभ्यश्च समागताः स्त्रियः कोलाहलाकर्षितबुद्धयस्त्विह ॥२६॥**

'मैया ! मुझे पहले दें, नही !, पहले मुझे दे' ऐसा कहते हुए जब प्याससे पीडितकी भाँति वे सब बालक बोलने लगे, तब वहाँ कोलाहल मच गया, इससे आस-पडोसकी स्त्रियोका मन भी आकर्षित हुआ और दूसरे-दूसरे घरोसे भी आकर वे वहाँ एकत्र हो गयी ॥ २६ ॥

**पिबत्सु बालेष्वथ शक्रदुर्लभं तक्रं च पश्यत्सु जनेषु सस्पृहम्।**
**तत्राऽऽगता यूथपबालिकेश्वरी सा कीर्तिपुत्री च सखीभिरावृता ॥२७॥**

वे बालक सस्पृह होकर उस शक्र-दुर्लभ तक्रका पान करने लगे। बहुत-से लोग यह दृश्य देख रहे थे। इसी समय यूथप बालिकाओकी अधीश्वरी कीर्ति-कन्या श्रीराधा अपनी सखियोसे घिरी हुई वहाँ आ पहुँची ॥ २७ ॥

**तद्देयमस्मभ्यमपीह मातरः प्राप्ता यथाकालमिमाश्च बालिकाः।**
**प्राक् पाययन्त्वत्र पिपासुता भृशं प्रबाधतेऽस्मानपि साऽऽह सस्मितम् ॥२८॥**

वे मुसकराती हुई बोली—'माताओ ! हम लोगोको भी तक्रदान करो। ये सब बालिकाएँ ठीक समयसे यहाँ आ पहुँची हैं, पहले इन्हे ही पिलाओ। हम सबको भी बड़े जोरकी प्यास सता रही है ॥ २८ ॥

यूथेश्वरीं तामवलोक्य तादृशीं श्रुत्वा च वाचं प्रतिवेश्मिनां स्त्रियः ।
समं गृहस्थाभिरमूभिरुत्सुकाः कर्तव्यमूढाः परितोऽवसंस्तत: ॥२९॥

यूथेश्वरी वृषभानु-नन्दिनीको उपस्थित देख और उनकी उक्त बात सुनकर पडोसी गोपोकी स्त्रियाँ भी उस घरकी स्त्रियोके साथ उत्सुक हो किंकर्तव्य-विमूढ-सी होकर सब ओर बैठ गयी ॥ २९ ॥

धृष्टा भृशं ते शिशवो निरीक्ष्य तां विघ्नप्रदां स्वात्मगुणैर्ज्ज्वलत्प्रभाम् ।
उत्प्लुत्य तासां करतः स्वकैः करैः पयस्यभाण्डान्यपहृत्य दुद्रुवुः ॥३०॥

वे ग्वाल-बाल बडे ढीठ थे, उन्होने देखा—अपने गुणोसे प्रकाशित होनेवाली श्रीराधा विघ्न डालनेके लिये आ गयी हैं। तब वे उछलकर उन गृहिणी-गोपियोके हाथोसे दूध-दहीका पात्र छीनकर अपने हाथोमे लिये भाग चले ॥ ३० ॥

दृष्ट्वैव तानुद्धतकर्मकारिणः क्षणेन गत्वाऽनुपदं सबालिकाः ।
ता यूथपाः संजगृहुः खरस्वरं निर्भत्स्य भाण्डानि शिशुभ्य उत्कटम् ॥३१॥

उन ग्वाल-बालोको उद्दण्डता पूर्ण कार्य करते देख बहुत-सी यूथेश्वरी गोप-किशोरियोने अपने साथकी बालिकाओके साथ क्षणभरमे उनका पीछा करके उन्हे जा पकडा और कडे स्वरमे डाँट-फटकार कर उन शिशुओंके हाथोसे ये गोरस-पात्र छीन लिये ॥ ३१ ॥

ततोऽभवद्बालकबालिकादिषु संघर्ष एवाऽत्र पयस्यलुण्ठने ।
समीक्ष्य यं तद्गृहवृक्षसंस्थिताः शाखामृगास्तेऽप्यभवंस्तदुत्सुकाः ॥३२॥

तदनन्तर बालको और बालिकाओमे दही-दूध लूटनेके लिये संघर्ष छिड गया, जिसे देखकर उस घरके वृक्षपर बेठे हुए वानर भी उत्कण्ठित हो गये ॥ ३२ ॥

विधाय लक्ष्याण्यत उद्धता इमे पयस्यभाण्डान्यवरुह्य वृक्षतः ।
प्रगृह्य सर्वाणि सुखं सझम्पिका आरुह्य वृक्षांश्च तदादुरञ्जसा ॥३३॥

वानर तो स्वभावसे ही उद्दण्ड होते ही हैं। वे गोरस-पात्रको ही लक्ष्य बनाकर वृक्षोसे उतर पडे और उन सबको लेकर छलाग लगाते हुए पुन उन्ही वृक्षोपर चढ गये। और बडे आरामसे उस गोरसका स्वाद लेने लगे ॥ ३३ ॥

अतर्क्य ईदृग् घटनाक्रमो यदा सञ्जात आसीदिह सुन्दरायतिः ।
तदैव तत्सद्मपतिः स्वगोष्ठतो गोधुग्भिरन्यैः सहितः समागमत् ॥३४॥

जब इस प्रकार सुन्दर भविष्यसे युक्त अतर्कणीय घटना-क्रम चल रहा था, उसी समय उस घरका स्वामी गोप अन्य गोपोके साथ गोष्ठसे लौटकर आया ॥ ३४ ॥

स्थितीर्विचित्रा अवलोक्य सद्मनो निरीक्ष्य तान् बालकबालिकादिकान् ।
वृक्षस्थितान् मर्कटकांश्च भुञ्जतः पयस्यमालोक्य विसिस्म्युरत्र ते ॥३५॥

अपने घरकी विचित्र स्थितिका अवलोकन कर वहाँ खडे बालको और बालिकाओ आदि पर दृष्टि डाल तथा वृक्षपर बैठे वानरोको गोरसका भक्षण करते देख वे सब बडे आश्चर्यमे पड गये ॥ ३५ ॥

ततोऽवदंस्ता गृहिणीर्निरीक्ष्य भो क्षुत्तृड्भिरेते शिशवो विबाधिताः ।
लक्ष्यन्त एभ्यस्तत उत्तमं दधि प्रदत्त सार्धं पृथुकैर्गुडैरपि ॥३६॥

तब अपनी गृहिणियोकी ओर देखकर वे गोप बोले—'अरी देवियो ! ये शिशु भूख-प्याससे पीडित दिखाई देते हैं, अत इन सबको गुड-चिउडाके साथ उत्तम दही दो' ॥ ३६ ॥

विश्रुत्य तेषां वचनं सुखावहं सद्यो गृहान्तर्विविशुर्गृहस्त्रियः ।
बहिः समानेतुमनन्ततृप्तिदं पेयं च भक्ष्यं पृथुकादिभिर्युतम् ॥३७॥

उनका यह सुखदायक वचन सुनकर घरकी स्त्रियाँ चिउडा आदिके साथ अनन्त तृप्तिदायक भक्ष्य और पेय लानेके लिए तत्काल घरके भीतर गयी ॥ ३७ ॥

इतो विवादोऽजनि भूय एकधा तत्र स्थितेष्वर्भकबालिकादिषु ।
युष्माभिरेवाऽत्र कृतं ह्यनर्थकं युष्माभिरित्यादिवदत्स्वहो ! मिथः ॥३८॥

इधर बाहर खडे बालको और बालिकाओमे फिर एक वार विवाद छिड गया । वे सब एक-दूसरेपर यह आक्षेप करने लगे कि 'तुम लोगोने ही यहाँ आकर अनर्थ किया है ! नही, हमने नही, तुम लोगोने ! ॥ ३८ ॥

प्रागागता अत्र वयं तृषार्दिता विलप्य कृच्छ्रात् करुणं तथा मृदु ।
प्राप्तं प्रदत्तं प्रियमातृभिश्च तद् यावत् पिबामः किमु विघ्निता मुधा ॥३९॥

लडके बोले—'पहले हम लोग यहाँ आये थे । प्याससे पीडित थे ही, करुण विलाप करके बडी कठिनाईसे प्रिय-माताओका दिया गोरस हमने पाया था, ज्यो ही हम उसे पीने लगे, त्यो ही तुम लोगोने व्यर्थ यहाँ आकर विघ्न डाल दिया' ॥ ३९ ॥

ब्रुवत्सु बालेष्वथ बालिका अपि प्रत्यूचुरेवं गुणरूपगर्विताः ।
क्षिपन्ति नो व्यर्थमिमे दुराग्रहाः पयस्यलुब्धाः शिशवो विपश्यत ! ॥४०॥

बालकोके ऐसा कहनेपर गुण और रूपकी गर्वीली बालिकाएँ भी उन्हे उत्तर देती हुई बोली—'ये बालक दुराग्रही हैं, हम लोगोपर व्यर्थ आक्षेप करते है । आप लोग देखे, ये गोरसके लोभसे ही यहाँ आये हैं' ॥ ४० ॥

**मान्या इमा मातर एव कृत्स्नशो जानन्ति केषाञ्च कुकृत्यमस्ति भोः ! ।**
**एते मुधाऽस्मांस्तु विगर्हयन्ति हा ! सोपद्रवा नित्यमनर्थकारिणः ॥४१॥**

'अजी ! यहाँ किनका कुकृत्य चल रहा है, इस बातको ये माननीया-माताएँ पूर्ण-रूपसे जानती हैं। ये ग्वाल-बाल अकारण हमारी निन्दा करते हैं। हाय ! ये सबके सब उपद्रवी तथा नित्य अनर्थ करनेवाले हैं ॥ ४१ ॥

**एवं स्थिते ताः स्वगृहान्तरं गता गृहं व्यपश्यन् कपिभिः प्रपूरितम् ।**
**तत्रत्यसद्वस्तु सुखेन भक्षित विस्फोटितं लुण्ठितमाकुलीकृतम् ॥४२॥**

इधर बाहरकी तो यह स्थिति थी, उधर गृहिणी-गोपियोंने घरके भीतर जाकर देखा तो सारा घर उन्हे बदरोंसे भरा दिखायी दिया। वहाँकी सारी अच्छी वस्तुएँ ( दूध, घी, माखन आदि ) वे सुखसे खा गये थे। गोरस-पात्र कुछ लुढकाये पडे थे और कुछ फोड दिये थे। सारी वस्तुएँ अस्त व्यस्त पडी थी ॥ ४२ ॥

**कोलाहले प्राप्तपथास्त उद्धताः क्षणात्तथाकुरहो ! प्रविश्य यत् ।**
**दृष्ट्वा गृहाभ्यन्तर आगतास्तदा ये त्रासयामासुरिमाः स्वतर्जनैः ॥४३॥**

जब बाहर कोलाहल हो रहा था, तभी उन बदरोंको घरमे घुसनेका मार्ग और मौका मिल गया था। अहो ! उन उद्दण्ड-कपियोंने क्षणभरमें घरके भीतर घुसकर वहाँकी ऐसी गति बना दी थी। घरके भीतर आयी हुई गोपियोंको देख वे बानर उनको ही घुडक-घुडककर त्रास देने लगे ॥ ४३ ॥

**गजोपमान् दुर्धरकर्मकारिणो निरीक्ष्य तान् दन्तनखायुधान् कपीन् ।**
**भीत्या बहिः प्रेक्ष्य ससंभ्रमा इमा अत्याहितं ! हेति वदन्त्य आगताः ॥४४॥**

दाँत और नख ही उनके आयुध थे। वे हाथीके समान दुर्धर-कर्म करनेवाले थे। उन्हे देखकर भयके मारे बाहरकी ओर देखती हुई ये गोपियाँ बडी घबराहटके साथ द्वारपर आ गयी और कहने लगी—'हाय ! हाय ! बडा अनर्थ हो गया' ॥ ४४ ॥

**सकम्पमित्थं गदितं निशम्य ते वृद्धा अपृच्छन् स्त्रिय उत्सुकास्ततः ।**
**किं तत्र दृष्टं भवतीभिरुत्कटं भयावहं वस्तु वदन्तु भो इति ॥४५॥**

काँपती आवाजमे उनकी यह बात सुनकर वे उत्सुक हुए वृद्ध-गोप उन स्त्रियोंसे पूछने लगे—'अरी ! घरमे जाकर तुमने कौन-सी विकट एव डरावनी बात देखी है, उसे बताओ' ॥ ४५ ॥

**तैः साग्रहं विस्मितमानसं तथा पृष्टाः पुरन्ध्र्यस्तु गलद्गिरं स्वतः ।**
**ऊचुर्विपश्यत्सु च तेषु तन्मुखं भयात् प्रफुल्लारुणपद्मसुन्दरम् ॥४६॥**

जब उन्होने आग्रहपूर्वक विस्मित-चित्तसे पूछा, और भयसे प्रफुल्ल-कमलके समान खिले हुए उनके सुन्दर मुखकी ओर वे देखने लगे, तब उन गोपियोने स्वत गद्‌गदवाणी-मे कहा—॥ ४६ ॥

आर्या ! गृहाभ्यन्तर उच्चविग्रहाः स्थूला भृशं हस्तिनिभा बलोद्धताः ।
भयङ्करा मर्कटका वने यथा क्रीडन्ति विस्फोट्य समस्तभाण्डकम् ॥४७॥

'आर्यजन ! घरके भीतर ऊँचे शरीरवाले अत्यन्त मोटे और हाथीके समान उत्कट बलशाली बलोन्मत्त भयकर वानर जैसे वनमे खेलते हैं, वैसे ही खेल रहे हैं। उन्होने सारे गोरस-पात्र फोड दिये हैं' ॥ ४७ ॥

उच्चासने मेघनिभो भयङ्करः कश्चित्स्थितः प्राक्तनजाम्बवानिव ।
ज्वलत्प्रभो भूधरसन्निभो महान् ह्यस्माभिरेक. शिशुरप्यदर्शि च ॥४८॥

'वहाँ ऊँचे आसनपर मेघके समान काला कोई भयकर भालू बैठा है, जो पूर्वजन्मके जाम्बवान्-सा दिखायी देता है। वह बडा तेजस्वी तथा पर्वतके समान विशाल-काय है। वही हमने एक शिशु भी देखा है' ॥ ४८ ॥

मान्यासु चैवं ब्रुवतीषु सस्मितं साटोपमाविष्कृतदिव्यधीगुणा ।
यूथेश्वरी कीर्तिसुताऽब्रवीदिदं तेनैव भाव्यं व्रजराजसूनुना ॥४९॥

माननीया गोपियाँ जब इस प्रकार कह रही थी, उस समय अपनी बुद्धिके दिव्य-गुणको प्रकट करनेवाली यूथेश्वरी कीर्ति-नन्दिनी राधाने बडे अभिमानके साथ मुसकराकर कहा—'वह बालक अवश्य व्रजराज-नन्दन होगे ॥ ४९ ॥

तदन्तराऽसौ व्रजराजनन्दनो हैयङ्गवीनस्य बृहद्घटं वहन् ।
स्वं दर्शयामास गृहस्य देहलीं श्रित्वा स्वरूपेण शुभेन तान् हसन् ॥५०॥

इसी बीचमे उन व्रजराज-कुमारने ताजे माखनका एक विशाल घट हाथमे लिये अपने आपको उस घरकी द्वार-देहलीपर दिखाया। वे हँस रहे थे। उनका स्वरूप बडा ही सुन्दर था ॥ ५० ॥

ततोऽवदच्चाऽप्रतिमोऽयमर्भकः शृण्वन्तु सत्यं वचनं मयोदितम् ।
यद्ब्रुवन् मातर एत्य चाऽत्र तद्ध्यसत्यमेवेति विचारयन्तु भोः ! ॥५१॥

उस अप्रतिम बालकने कहा—'आर्यजन ! मेरी बताई हुई, सच्ची बात सुने। माताओने यहाँ आकर जो कुछ कहा है, वह सब मिथ्या ही है। इसपर आपलोग विचार करे ॥ ५१ ॥

पूज्या ! गृहाभ्यन्तर एक एव तु बालोऽथवा मर्कटकोऽपि नास्ति च ।
न तत्र किञ्चिच्च विदूषितं तथा विस्फोटितं वाऽस्ति सुखेन पश्यत ॥५२॥

'पूज्य गोपगण ! घरके भीतर एक भी न तो बालक है और न कोई वानर ही है। वहाँ किसी वस्तुको किसीने दूषित नही किया है। और न कोई गोरसका पात्र ही फोडा गया है। आपलोग सुखपूर्वक चलकर देख ले' ॥ ५२ ॥

मां दूषयित्वा वदतीह बालिका सैषा भृशं छद्मवती विनोदिनी ।
कः प्रत्ययोऽस्या वचने जगद् भ्रमे निक्षिप्य या पश्यति तस्य विक्रियाम् ॥५३॥

'यह छल-छन्द करनेवाली विनोदिनी बालिका मुझपर कलक लगाकर जो बात कह रही है, इसकी इस बातपर क्या विश्वास किया जा सकता है ? । जो ससारको भ्रममे डालकर उसकी प्रतिक्रिया देख रही है' ॥ ५३ ॥

तदस्तु, खादन्तु सुखं व्रजार्भका दध्यादि सर्वं पृथुकैर्गुडैः समम् ।
भवन्त आनीय ददत्वदः शुभं भक्ष्यं च पेयं त्विदमस्ति सद्घृतम् ॥५४॥

अस्तु, व्रजके बालक गुड और चिउडोके साथ दही आदि सब वस्तुएँ सुखपूर्वक खाँय और आपलोग घरमे-से ला-लाकर इन्हे शुभ भक्ष्य एव पेय वस्तुये प्रदान करे। यह रहा 'उत्तमघृत' ॥ ५४ ॥

ततो गृहिण्याः करपद्मयोर्युगं ह्यापूरितं तेन घटेन सस्मितम् ।
श्रुत्वा वचस्तादृशमक्षतं गृहं विलोक्य ते विस्मयमापुरद्भुतम् ॥५५॥

तदनन्तर गृहिणीके युगल कर-कमलको नन्द-नन्दनने मुस्कराते हुए उस घटके घृतसे भर दिया। उस श्याम शिशुकी बात सुनकर और घरकी सारी वस्तुओको बिना किसी क्षतिके सुरक्षित देख वे सब अद्भुत आश्चर्यका अनुभव करने लगे ॥ ५५ ॥

भक्ष्येषु पेयेषु समाहृतेष्वथ संस्थाप्य तान् बालकबालिकादिकान् ।
ता मातरस्ते पितरो विभज्य तत् संभोजयामासुरिमान् यथेप्सितम् ॥५६॥

भक्ष्य और पेय पदार्थं एकत्र किये गये। फिर उन बालक और बालिकाओको पक्तिबद्ध बैठाकर उन मातृस्थानीया गोपियोने और पितृतुल्य गोपोने वे सब वस्तुयें सबको बाँट-परोसकर इच्छानुसार भोजन कराया ॥ ५६ ॥

ततः स्वयं नीलमणिर्यथाज्वलँल्लीलाप्रियः स्नेहघनोऽयमर्भकः ।
तृप्ताःस्थ यूयं किमिति प्रभाष्य तां कन्यामपृच्छत् सखिभिः समं स्वकैः ॥५७॥

तदनन्तर नीलमणिके समान प्रकाशमान, लीला-प्रेमी और स्नेहका धनी वह बालक अपने सखाओके साथ स्वय जाकर उस कीर्ति-कन्यासे पूछा—'क्या तुमलोग अच्छी तरह तृप्त हो गई ?' ॥ ५७ ॥

प्रश्नेन तेनाऽपि विशुद्धरूपिणा विदारिता मर्मणि चाऽत्र पीडिता ।
यूथेश्वरी सा कुटिलं निरीक्ष्य तं जगाद तच्छक्तिविवित्सया ततः ॥५८॥

विशुद्धरूपधारी उस बालकके इस प्रश्नसे वह किशोरी इस तरह पीडित हुई, मानो उसका मर्मं विदीर्ण हो गया हो। तब उस यूथेश्वरीने कुटिल कटाक्षसे नन्द नन्दनकी ओर देखकर उनकी शक्तिकी परीक्षाके लिए कहा—॥ ५८ ॥

साऽहं ह्यतृप्ताऽस्मि विभोजयाऽत्र मां हैयङ्गवीनन्तु यथेप्सितं हितम् ।
तद् देहि भो वर्णसमानमानस ! सैषाऽस्मि तद्भक्षण एव सज्जिता ॥५९॥

'अजी ! तुम्हारे शरीरका जैसा रङ्ग है, वैसा ही हृदयका भी तो है। लो ! मै अतृप्त ही रह गई हूँ। मुझे खिलाओ ! इच्छानुसार हितकर माखन दो। मै उसे खानेके लिए ही तैयार बैठी हूँ' ॥ ५९ ॥

तदस्तु सज्जा भव भो ददान्यहं यथेप्सितं भुङ्क्ष्व कियच्च खादसि ।
सेत्थं समुक्ता शिशुनाऽमुना ततो गत्वा गृहिण्यङ्क उपाविशद् द्रुतम् ॥६०॥

'अच्छा ! तो तैयार हो जाओ। मै तुम्हे इच्छानुसार माखन देता हूँ। खाओ, कितना खाओगी।' वह देवी उस शिशुके ऐसा कहनेपर तुरन्त जाकर उस घरके गृहिणीके गोदमे बैठ गयी ॥ ६० ॥

क्षिप्तं मृदस्तन्नवनीतभाण्डकं रिक्तं समुत्थाप्य करेण लीलया ।
पश्यत्सु सर्वेषु निरीक्ष्य तद्घटं संमन्त्रयामास किमप्यसौ जपन् ॥६१॥

मिट्टीका नवनीत पात्र खाली होकर फेका पडा था। कन्हैयाने लीला-पूर्वक उसे हाथसे उठा लिया। फिर सबके देखते-देखते कुछ जप करते हुए इसने उस घडेको अभिमन्त्रित किया ॥ ६१ ॥

तदन्तरे नन्दमुखा व्रजेश्वरास्तत्राऽऽययुस्तैर्वृषभानुभिः समम् ।
बुद्ध्वा कथां शान्तिमयीं च तां स्थितिं समीक्ष्य तस्थुः परितोऽत्र विस्मिताः ॥६२॥

इसीबीचमे नन्द आदि व्रजेश्वर वृषभानुके साथ वहाँ आ पहुँचे। वे वहाँकी शान्तिमयी वार्ताको जानकर और उस स्थितिका निरीक्षण करके चारोओर चकित होकर बैठ गए ॥ ६२ ॥

मृद्भाण्डमेतेन निरीक्षितं तदा हैयङ्गवीनेन बभौ सुपूरितम् ।
ततो विनिष्कास्य करेण तद्बहु व्याक्षिपदस्या विवृते गुहामुखे ॥६३॥

कन्हैयाकी दृष्टि पडते ही वह मिट्टीका गोरसपात्र ताजे माखनसे भर गया। तब अपने हाथसे बहुत-सा माखन निकालकर उसने वृषभानु-नन्दिनीकी फैली हुई मुख-कन्दरामे डाल दिया ॥ ६३ ॥

निक्षिप्य भाण्डं ह्यवनीतले पुनर्निष्कास्य तन्प्राञ्जलिना मुहुर्मुहुः ।
असौ विचिक्षेप तदुन्नते मुखे क्षितेर्महागर्त इवाऽव्ययेऽव्ययम् ॥६४।

फिर पात्रको भूतलपर रखकर वह बार बार अञ्जलिद्वारा माखन निकाल कर उस किशोरीके उठे हुए मुखमे डालने लगा। मानो, धरतीके किसी अक्षय-महागर्तमें अक्षय माखन उडेल रहा हो ॥ ६४ ॥

नैषा गता तृप्तिमितो न बालकस्तत्कार्यजाताद्विरगाम वस्तुतः ।
इत्थं व्यतीतः समयो महानिदं दृष्ट्वा जनौघोऽत्र बभूव विस्मितः ॥६५॥

न तो वह बालिका ही तृप्त होती थी और न वह बालक ही अपने परिवेषण कार्यसे विरत होता था। वस्तुतः यही स्थिति आ गई थी। इस प्रकार बहुत समय व्यतीत हो गया। यह दृश्य देखकर सारा जनसमुदाय चकित हो उठा ॥ ६५ ॥

कर्मप्रधानं जगदस्ति चाऽव्ययं विवर्तते यद्बहुरूपनामसु ।
कालः स्वयं तद्ग्रसते यमीश्वरः प्रचोदयत्यात्मगतौ स्वशक्तितः ॥६६॥

यह सारा जगत् कर्मप्रधान है, जो अक्षय-प्रवाहरूपसे अनेक नाम-रूपोमे विवर्तमान है। काल स्वय जगत्को अपना ग्रास बना रहा है। और यह ईश्वर अपने स्वरूपमे ही स्थित हो अपनी शक्तिसे उसे प्रेरित करता है ॥ ६६ ॥

किमस्य कृत्येष्वधुनातनैर्बुधैर्भृशं विमर्श्येष्वबुधैस्तु मादृशैः ।
ध्यायन्निदं रक्तमुखो रविर्महत् स्वं कर्म संभाव्य गतोऽस्तमद्रिषु ॥६७॥

आजकलके वैज्ञानिक विद्वानोके लिए जो अत्यन्त विचार किये जानेवाले है, ईश्वरके उन कृत्योके विषयमे मेरे जैसे अज्ञानी-पुरुष क्या कह सकते हैं ?। मानो, यही सोचते हुए सूर्यदेवका मुख लाल हो गया और वे अपने कर्तव्यको ही महान् मानते हुए अस्ताचलको चले गये ॥ ६७ ॥

यूथेश्वरीं प्रेक्ष्य तथाविधामितो दीर्घं गुहाव्यायतवक्त्रशोभिनीम् ।
स भाण्डमुत्थाप्य करेण तन्मुखे न्युब्जात्ततोऽपातयदस्थिरं ह्यदः ॥६८॥

यूथेश्वरीको उसी प्रकार दीर्घ कालतक गुहाके समान फैले हुए मुखसे सुशोभित होती हुई देख कन्हैयाने गोरसके पात्रको हाथमे उठा लिया और उसे औंधा करके उसके मुखमे धाराप्रवाह-रूपसे माखन गिराना आरम्भ किया ॥ ६८ ॥

अचिन्त्यशक्त्याश्रयिणाऽमुना ततः प्रवाहिते तस्य प्रवाह ईदृशि ।
स्वेदाम्बुभिस्तन्मुखमम्बुजोपमं व्यापूरि यद्दृष्टमहो ! समास्थितैः ॥६९॥

अचिन्त्य शक्तिके आश्रय-भूत उस शिशुके द्वारा इसप्रकार माखनका प्रवाह बहाये जानेपर किशोरीका मुखारविन्द पसीनेकी बूँदोसे भर गया। इस बातको उस समाजमे स्थित उन सभी लोगोने देखा ॥ ६९ ॥

तदन्तरागत्य गृहस्थगोदुहा तद्भाण्डमादाय शिशोः करद्वयात्।
अभाणि सोऽयं विरमेति सस्मितं प्रेक्षामहे श्वोऽद्य समागता निशा ॥७०॥

तब गृहस्थ-गोपने बीचमे आकर उस शिशुके दोनो हाथोसे वह पात्र ले लिया और मुस्कराते हुए कहा—'बस, अब रहने दो। कल पुन हम यह लीला देखेगे। आज तो रात आ गई है' ॥ ७० ॥

तदस्तु मान्या! वचनं भवादृशां संपाल्यतेऽस्माभिरहर्निशं मुदा।
वदन्तमेनं वृषभानुगोदुहः संस्थाप्य चाऽङ्के पुनरेव सोऽब्रवीत् ॥७१॥

श्रीकृष्णने कहा—'माननीय गुरुजनो! ऐसा ही हो! हमलोग सदा ही प्रसन्नता-पूर्वक आप जैसे माननीय-जनोकी आज्ञाका पालन करते है'। ऐसा कहनेवाले श्रीकृष्णको गोपश्रेष्ठ-वृषभानुके गोदमे बिठाकर फिर उसने इस प्रकार कहा—॥ ७१ ॥

धन्योऽसि भो गोकुलराजनन्दन! चैकागतिस्त्वं व्रजवासिनां धनम्।
येन त्वयेयं धरणी स्वजन्मना स्वकर्मणा चैव पवित्रिता वयम् ॥७२॥

'गोकुलराज-नन्दन! तुम धन्य हो, व्रजवासियोके एकमात्र अवलम्ब और धन हो। तुमने अपने जन्मसे इस धरतीको और अपने कर्मसे हम सब गोपोको पवित्र कर दिया' ॥७२॥

मनोहरं विस्मयकारणं हृदि ध्यातव्यमेभिर्मुनिभिश्च योगिभिः।
विनोदमित्थं प्रतिसद्म गोकुले कृत्वा त्वया हन्त! वशीकृता वयम् ॥७३॥

'तुमने गोकुलके प्रत्येक घरमे ऐसा विनोद करके हम सब लोगोको वशमे कर लिया है। तुम्हारा विनोद मनोहर तथा विस्मय उत्पन्न करनेवाला है। जो इन मुनियो और योगियोके लिए भी चिन्तनीय है' ॥ ७३ ॥

मध्ये सभायां प्रतिवेशिनी स्त्रिय उत्थाप्य सर्वा गृहिणी तदन्तरा।
जगाद पत्युर्वचसा तिरस्कृतां विभाव्य हा! कीर्तिसुतां प्रशस्य ताम् ॥७४॥

तब उस घरकी गृहिणीने उस सभाके बीच पास-पड़ोसकी सभी स्त्रियोको उठाकर पतिके वचनसे कीर्ति-कन्याको तिरस्कृत हुई मानकर उसकी प्रशसा करके कहा—॥ ७४ ॥

शृण्वन्तु कोऽयं चपलो(ऽ)गुणाग्रही कृष्णोऽर्भको धृष्ट उपायविद्वहु।
क्वेयं कुमारी वृषभानुजाऽक्षता प्रशस्यते केन भवद्भिरप्ययम् ॥७५॥

'आप सबलोग ध्यान देकर सुने। यह चपल, निर्गुणताका आग्रही, बहुतसे उपायोका जानकार धृष्ट-बालक कृष्ण क्या हैं? कहाँ तो वह और कहाँ यह हमारी वृषभानु-नन्दिनी कुमारी? जिसमे कोई त्रुटि नही है। यह कलूटा क्या है? आपलोग किस विशेषताके कारण केवल इसकी ही प्रशसा करते हैं' ॥ ७५ ॥

**यज्जन्मतो गोकुलमेत्र मण्डितं बभूव सद्धान्यधनैः सुपूरितम्।**
**भणन्तु विद्वास! इमां शुभोदयां किं भो न जानीथ महापदाश्रिताम् ॥७६॥**

'बताइये, क्या आपलोग इस शुभोदया कन्याको नही जानते हैं? जिसके जन्मसे ही सारा गोकुल श्रीसम्पन्न हो गया है। उत्तम धन-धान्यसे परिपूर्ण हो उठा है, और बहुत ऊँचे पदपर प्रतिष्ठित है' ॥ ७६ ॥

**यस्याः प्रसादं समवाप्य हृद्गतं व्रजेश्वरी ह्येनमसूत सद्व्रता।**
**तदाप्रभृत्येव गृहं समृद्धिमद्बभूव तस्या अपि विस्मृतं किमु? ॥७७॥**

'इसीके हार्दिक-प्रसाद ( अनुग्रह ) को पाकर उत्तम व्रतका पालन करनेवाली व्रजेश्वरी यशोदाने इस कृष्णको जन्म दिया है और तभीसे उन व्रजरानीका घर भी समृद्धिशाली हुआ है। क्या इस बातको आपलोग भूल गये हैं?' ॥ ७७ ॥

**तस्मादियं गोकुलवासिनां धनं ह्यात्मा च सर्वस्वमियं विशेषतः।**
**यां द्रष्टुमेते मुनयोऽपि नित्यशो दिग्भ्यः समायान्ति, क एष किं स्तुतः? ॥७८॥**

'अत यह कन्या गोकुलवासियोका धन है, आत्मा है, और विशेषत यही सर्वस्व है। इसका दर्शन करनेके लिए सभी दिशाओसे ये मुनिलोग भी प्रतिदिन आया करते हैं। इसके सामने यह कृष्ण क्या है? क्यो इसकी स्तुतिकी गई है?' ॥ ७८ ॥

**श्रुत्वा तयोक्तं वच एष सत्यगं स्वयं समायामिदमाह मोहिनीम्।**
**आह्लादिनीं चैव दृशं विकीर्य तां यूथेश्वरीं स्वात्मरतां प्रियां स्तुवन् ॥७९॥**

उक्त गृहकी गृहिणीके द्वारा कहे गए इस सत्य वचनको सुनकर कन्हैया स्वयं भरी-सभामे अपने-आपमे रत रहनेवाली जगन्मोहिनी, परमाह्लादिनी उस यूथेश्वरी प्रियतमा श्रीराधा पर दृष्टि डालकर उनकी प्रशसा करता हुआ बोला—॥ ७९ ॥

**शृण्वन्तु पूज्या! सुगुणेयमीदृशी यद्दृश्यते तन्न, विनोदिनी ह्यसौ।**
**स्थिरा दृढा(ऽ) सद्गुणपूरिताऽनिशं सत्यं विजानीथ महा(ऽऽ)पदाश्रिताम् ॥८०॥**

'पूज्य चरण! आपलोग सुनें। यह कन्या बहुत सद्गुणवती है। यह जैसी दिखाई देती है, वैसी नही है। परम विनोदिनी है। सुस्थिर, सुदृढ तथा निरन्तर उत्तम-गुणोसे भरी हुई है। आपलोग सच जानिये। यह अत्यन्त ऊँचे पद ( महा आपत्तिको स्थान ) पर प्रतिष्ठित है ॥ ८० ॥

**अस्मांस्तु या भ्रामयतीह वस्तुतः स्वदृष्टिमात्रेण जगद्भ्रमे भ्रमे।**
**काऽस्याः कथा निर्गुणतामुपेयुषां सतां हृदाऽतर्क्यगुणाम्बुधेरहो! ॥८१॥**

'वस्तुत यह अपनी दृष्टिमात्रसे हम सबको जगत्के भ्रमरूप भ्रम ( चक्र ) मे भटकाती रहती है। अहो! इसकी बात क्या कही जाय, इसके गुणोका सागर निर्गुणताको प्राप्त सत्पुरुषोके हृदयके लिए भी अतर्क्य है ॥ ८१ ॥

**वर्षद्वयात्पूर्वमहन्तु जातुचित् तां ग्रामदेवीं व्रजसीम्नि संस्थिताम्।**
**संदर्शनार्थं गत आसमेककः प्रणम्य तां पार्श्व उपाविशं तदा ॥८२॥**

'आजसे दो वर्ष पहलेकी बात है, एक दिन मैं व्रजकी सीमापर विराजमान ग्रामदेवीका दर्शन करनेके लिए अकेला ही गया था। वहाँ देवीको प्रणाम करके मैं उनके समीप बैठ गया ॥ ८२ ॥

**कृता मया तत्स्तुतिरत्र चाम्बिके! त्वं पालयाऽस्माञ्छरणागता वयम्।**
**स्वलीलयाऽऽह्लादय नो व्रजस्थितांस्त्वद्वीक्षिताः स्याम जगत्प्रतिष्ठिताः ॥८३॥**

'वहाँ मैने उनकी इस प्रकार स्तुति की—'अम्बिके! हम तुम्हारी शरणमे आये हैं, तुम हमारी रक्षा करो। अपनी लीलासे हम व्रजवासियोको आह्लादित करो। तुम्हारी कृपा-दृष्टि प्राप्त करके हम जगत्मे प्रतिष्ठित होगे' ॥ ८३ ॥

**उक्ता मयेत्थं विनता शिलामयी प्राक् कम्पिता साऽथ विनिसृता ततः।**
**स्वाभिः सखीभिः सममीप्सितं वरं मह्यं ददातीव विनिर्ययावित. ॥८४॥**

'ऐसा कहकर मैने देवीकी शिलामयी प्रतिमाको प्रणाम किया। पहले तो उस प्रतिमामे कुछ कम्पन हुआ, फिर उसमे-से चिन्मयी देवी अपनी सखियोके साथ प्रकट हुई। मानो मुझे अभीष्ट वर देना चाहती हो, इसी मुद्रामे वह एक ओरको चल दी ॥ ८४ ॥

**कुतूहलाकृष्टमना मनागहं तामन्वगां मन्दिरतोऽविदूरतः।**
**स्निग्धैर्घनैः स्कन्धदलादिभिर्वृतो यत्रैक आसीद्वटवृक्ष उन्नतः ॥८५॥**

'कौतूहल वश मेरा मन उनकी ओर आकृष्ट हुआ। मै मन्दिरसे थोड़ी दूरतक उनके पीछे-पीछे गया। वहाँ एक ऊँचा वट वृक्ष है, जो चिकनी घनी डालियो और पत्तोसे भरा हुआ है' ॥ ८५ ॥

**तस्यैव मूलं श्रित एकको मुनिर्ह्यासीत् समाधिस्थित उच्च आसने।**
**गत्वा तदग्रे मुदितानना ह्यसौ स्थिता समुत्थाय सखीभिरन्विता ॥८६॥**

'उसी वृक्षके मूल भागमे एक मुनि बैठे थे, जो ऊँचे आसनपर स्थित हो समाधि लगाये हुए थे। वह प्रसन्नमुखी देवी सखियोके साथ उठकर वही गयी और मुनिके सामने खड़ी हो गयी ॥ ८६ ॥

ततः क्षणादेव शिलानिभो मुनिर्व्युत्थापितो हा ! त्वनया स्वयुक्तितः ।
त्रायस्व दुर्गे ! करुणं वदन्नसावुत्थाय चैनां प्रणनाम भक्तितः ॥८७॥

तदनन्तर देवीकी प्रेरणा एवं युक्तिसे वे शिला-समान निश्चल मुनि क्षण भरमे समाधिसे उठा दिए गये । 'दुर्गे ! मेरी रक्षा करो' ऐसा करुणाभरे स्वरसे कहते हुए उन मुनिने इस देवीको भक्तिभावसे प्रणाम किया ॥ ८७ ॥

वृक्षाश्रये संस्थित आत्मविग्रहं निगूहमानोऽहमितोऽथ सद्गुणाम् ।
एनां विलोक्यैव कृतत्वरो द्रुतं गतश्च पार्श्वं तरुगुल्ममध्यतः ॥८८॥

मै उस वृक्षके ही आश्रयमे अपने आपको छिपाकर खडा हो गया । फिर इस सद्गुणवती बालिकाको वहाँ देखकर मै जल्दी-जल्दी तरु-गुल्मोके बीचमे होता हुआ इसके पास चला गया ॥ ८८ ॥

सेयं तदाऽमुं मुनिराह सादरं मद्धस्तरेखां प्रसमीक्ष्य यत्नतः ।
समुच्यतां मेऽत्र च भाविजीवनं विदृश्यते कीदृशमेतदव्ययम् ॥८९॥

'उस समय इसने उन मुनिसे सादर कहा—ब्रह्मन् ! आप यत्नपूर्वक मेरे हाथकी रेखा देखकर बताइए—यहाँ मेरा यह निर्विकार भावी जीवन कैसा दिखायी देता है ?' ॥ ८९ ॥

भवान् मुने ! गर्ग इतीह विश्रुतो जानाति तत्त्वं सकलां स्थितिं तथा ।
सामुद्रिकीं चैव गतिं ग्रहस्थितिं भौगोलिकीं पश्यति योगचक्षुषा ॥९०॥

'मुने ! आप यहाँ गर्ग नामसे विख्यात ज्योतिर्विद् हैं, आपको सारे तत्त्व और स्थितिका परिज्ञान है । आप अपनी योगदृष्टिसे सामुद्रिकी रेखा, ग्रहस्थिति और भूगोलमे घटित होनेवाली घटनाको प्रत्यक्ष देखते हैं' ॥ ९० ॥

पृच्छामि तस्माद्भगवन्तमीदृशं प्रश्नं च विन्यस्य वदत्विदं पुनः ।
को मे पतिः कीदृगसौ भविष्यति स्तः कीदृशे दुःखसुखे च जीवने ॥९१॥

'ऐसे ऐश्वर्यशाली मुनीश्वरसे मै पूछती हूँ । आप मेरे प्रश्नपर विचार करके फिर कहिए कि मेरे पति कौन और कैसे होगे ? तथा मेरे जीवनमे दु ख-सुख कैसे होगे ?' ॥ ९१ ॥

प्रसार्य पाणी ह्यनया प्रदर्शितौ मुनिर्विगृह्यैव भुजद्वयेन तौ ।
इमामवोचत् करपद्मयोः शुभा रेखाः समीक्ष्याऽथ विमुग्धया धिया ॥९२॥

'यो कहकर इसने दोनो हाथ फैलाकर दिखाये । मुनिने अपने दोनो हाथोसे उन कर-कमलोको पकडकर उनकी रेखाएँ देखी और मुग्ध-चित्तसे इससे कहा—॥ ९२ ॥

अलं शिवे ! त्वां जगदीश्वरीं परां जानाम्यहं भक्तजनानुरागिणीम् ।
भुवं गतां कीर्तिसुताभिधान्वितां मायां परब्रह्मरतां छलाश्रिताम् ॥९३॥

'बस बस, शिवे ! मै जानता हूँ, आप भक्तजनोपर अनुराग रखनेवाली जगदीश्वरी पराशक्ति हैं। इस भूतलपर 'कीर्ति कन्या' के नामसे अवतीर्ण हुई हैं, मानवपुत्रीके छलसे आप परब्रह्म-रता माया ही प्रकट हुई हैं' ॥ ९३ ॥

पश्चादवोचन्मुनिरेष बालिके ! त्वं गोपकन्याऽसि च जन्मना त्वतः ।
गोपं पतिं प्राप्स्यसि तादृशं परं यः स्वैर्गुणैर्विश्वपतिर्भविष्यति ॥९४॥

'इतना कहनेके पश्चात् मुनि बोले—'बालिके ! तुम जन्मसे गोपकन्या हो, अत तदनुसार ही गोप-पति प्राप्त करोगी, जो अपने गुणोसे विश्वपति हो जायगा' ॥ ९४ ॥

परन्तु पत्युः शृणु कन्यके ! त्वया न लप्स्यते दैहिकसङ्ग ईदृशः ।
तत्रापि चैकादशवत्सरे तव पत्युर्वियोगश्च भविष्यति ध्रुवम् ॥९५॥

परन्तु कन्ये ! एक बात सुन ले। तुम्हे पतिका ऐसा अङ्ग-सङ्ग नही प्राप्त हो सकेगा। उसमे भी ग्यारह वर्षकी अवस्थामे निश्चय ही तुम उससे बिछुड जाओगी' ॥ ९५ ॥

त्वं भो ! ह्यनर्थैः कपटैर्निजैर्गुणैर्जीवान् सदा नर्तयसीह यच्छुभे ! ।
तस्यैव सर्वं परिणाममीदृशं संभोक्ष्यसे चेति विदृश्यते स्फुटम् ॥९६॥

'शुभे ! तुम अपने अनर्थकारी कपट-पूर्ण ( मायामय ) गुणो द्वारा जो जीवोको सदा नचाती रहती हो, उसीका ऐसा सब प्रतिकूल परिणाम तुम्हे भोगना पडेगा, यह स्पष्ट दिखाई देता है' ॥ ९६ ॥

इयं सुरेखा वदतीदृशं फलं व्यासोऽपि सद्भागवते वदिष्यति ।
मुनीश्वरस्तत्र सुनाम तावकं नो धारयिष्यत्यपि टङ्कयिष्यति ॥९७॥

'तुम्हारी यह सुन्दर रेखा ऐसा फल बता रही है कि मुनीश्वर वेदव्यास जो भागवत-पुराण सपादित करेगे। उसमे वे तुम्हारे सुन्दर नामका स्पष्टतया कही नही उच्चारण करेगे और न उसे लिखेगे ही' ॥ ९७ ॥

मान्या ! निवृत्तोऽहमथो विचक्षणा वदन्ति मायामिति तां छलाश्रिताम् ।
देवीमिमां दुर्जयकर्मकारिणीं जानीथ भो इत्थमतृप्तरूपिणीम् ॥९८॥

'मान्य जनो ! तदनन्तर मै वहाँसे लौट आया। विद्वान् पुरुष कहते हैं कि ये छलनाका आश्रय लेनेवाली माया हैं। दुर्जय-कर्म करनेवाली देवी है। इन अतृप्त स्वरूपवाली किशोरीके विषयमे आप लोग ऐसा ही जानें' ॥ ९८ ॥

कस्त्वं ? क्षिपस्यत्र परेश्वरीं शिवां देवीमिमां स्वर्गत आगतामिह ।
अस्मान् समुद्धर्तु मतः कदापि भो ! ह्यग्रेऽतसीपुष्पसमान ! मा भण ॥९९॥

'कन्हैया ! तुम कौन हो इनपर आक्षेप करनेवाले ! ये साक्षात् देवी शिवा है और हम सबका उद्धार करनेके लिए स्वर्गसे यहाँ आयी हैं। अतसीकुसुमके समान श्याम-वर्णवाले नन्दकिशोर ! अब तुम आगे कदापि एक शब्द भी इनके विषयमे मत मुखसे निकालना' ॥९९॥

तमित्थमुक्त्वा वृषभानुनन्दिनीं समुज्ज्वलद्रूपगुणैः सुशोभिनीम् ।
तां तद्गृहं प्रापयितुं कृतत्वरा जगाम सेयं गृहिणी निशामुखे ॥१००॥

ऐसा कहकर उस घरकी गृहिणी उज्ज्वल रूप और गुणोसे सुशोभित वृषभानु-नन्दिनीको उनके घर पहुँचानेके लिए उतावली हो प्रदोषकालमे वहाँसे चल दी ॥ १०० ॥

सर्वे गताः स्वस्वगृहांस्ततः परं विसर्जिता साऽपि सभा हतोपमा ।
प्रगृह्य बाहुं स्वशिशोः सतां गतेर्जगाम नन्दोऽपि गृहं प्रहर्षितः ॥१०१॥

फिर वह अनुपम सभा विसर्जित हुई। तत्पश्चात् सब लोग अपने-अपने घरको गये। नन्दजी भी हर्षसे उत्फुल्ल हो सत्पुरुषोके आश्रयदाता अपने शिशुका हाथ पकड़कर घरकी ओर चल दिये ॥ १०१ ॥

अग्रे भवान् गच्छतु तात ? पृष्ठतो ह्यायाम्यहं पूज्यजनानुगोऽस्मि यत् ।
वदन् स इत्थं तत एत्य चाऽन्तरा तिरोहितोऽभूत् किमपि स्मरन् पुनः ॥१०२॥

'तात ! आप आगे-आगे चले और मै पीछे-पीछे आता हूँ, क्योकि मै पूज्यजनोका अनुगामी हूँ।' ऐसा कहकर बीच रास्तेमे आनेपर श्रीकृष्ण पुन. कुछ स्मरण करके अन्तर्धान हो गये ॥ १०२ ॥

इतो व्रजेशोऽस्य शिशोर्महत्तमां लीलां विनोदश्च तथाविधं स्मरन् ।
भूत्वा समाधिस्थ इवाऽध्वनि व्रजन् न ज्ञातवानस्य विचेष्टितं हितम् ॥१०३॥

इधर व्रजेश्वर नन्दजी उस शिशुकी वैसी महत्तम लीला और विनोदको याद करके मार्गमे चलते-चलते समाधिस्थ-से होकर अपने पुत्रकी हितमयी चेष्टाको न जान सके ॥१०३॥

गृहाङ्गणं ह्येत्य सुतं स्वपृष्ठगं निरीक्षमाणोऽयमितस्ततो दृशम् ।
क्षिप्त्वाऽप्यदृष्ट्वा भयजातवेपथुश्चक्रन्द कृष्णेति मुमूर्षु भक्तवत् ॥१०४॥

घरके आँगनमे पहुँचकर अपने पीछेवाले शिशुके ऊपर उन्होने दृष्टि निक्षेप किया, किन्तु उसे न देखकर भयसे काँपने लगे और मरणासन्न भक्तकी भाँति 'हे कृष्ण !' कहकर क्रन्दन करने लगे ॥ १०४ ॥

साम्रेडितं क्रन्दनमार्तमीदृशं श्रुत्वा पितुः साग्रज एष सव्रतः ।
बहिः समायात उभौ स्वमातरौ विसृज्य मुग्धे श्रुतयोगशक्तिभिः ॥१०५॥

पिताका बारम्बार किया हुआ ऐसा क्रन्दन सुनकर श्रीकृष्ण अपने बडे भैयाके साथ घरसे बाहर निकल आये। अपनी माताओको, जो सुनी गयी उनकी योगशक्तियोसे मुग्ध थी, घरमे छोडकर दोनो भाई पिताके पास आये थे ॥ १०५ ॥

अहं गृहाभ्यन्तर एव मातृभी रुद्धोऽवसं साग्रज एव भो पितः! ।
नानाकथाभिः सुविनोदयंश्च ता मध्याह्नकालादिह चाऽस्मि सोऽब्रवीत् ॥१०६॥

कृष्ण बोले—'पिताजी! मैं तो भाईके साथ घरमे ही था, माताओने मुझे रोक रक्खा था। नाना प्रकारकी बातोसे उनका मनोरञ्जन करता हुआ मै दोपहरसे ही यही हूँ' ॥१०६॥

ततः साग्रजेनाऽमुना नन्द एष समानीत एवाऽन्तरं स्वालयस्य ।
सुखं श्रावितश्चाऽत्र तत्रत्यवृत्तं स्वमात्रोर्मुखाभ्यां विमुग्धीकृतश्च ॥१०७॥

तदनन्तर अग्रज सहित श्रीकृष्ण नन्दजीको घरके भीतर ले आये। उनकी दोनो माताओने अपने मुखसे उनका वृत्तान्त उन्हे सुनाया। सुनकर वे मुग्ध हो गये ॥ १०७ ॥

इत्थं प्रतिक्षणमिहाऽऽत्मवतां मुनीनां स्वानां समक्षमतिमानुषकार्यजातम् ।
कुर्वन्नसौ स्थलमभूद् दृढविस्मयानां तद्गोकुलस्थितजनौघहृदां सताञ्च ॥१०८॥

इस प्रकार व्रजमे प्रतिक्षण मनस्वी मुनियो तथा स्वजनोके समक्ष अलौकिक लीला चरित्र करते हुए वे गोकुलवासी जन-समुदाय तथा सत्पुरुषोंके हृदयके लिए सुदृढ विस्मयके स्थान बन गये थे ॥ १०८ ॥

एवं विधाय विविधान् रुचिरान् विनोदान्
दुष्टान् स्वकृत्यकृतमत्सरिणोऽनभिज्ञान् ।
अस्मांश्च भाविन इहेश्वरबुद्धिहीनान्
बभ्राम हन्त! भगवान् व्रजमण्डलेषु ॥१०९॥

इस प्रकार भाँति-भाँतिके सुन्दर लीलाविनोद करके अपने कार्योंके प्रति ईर्ष्या-द्वेष रखनेवाले हम जैसे भावी दुष्टोको आस्तिक बुद्धिसे हीन एव मूढ बनाकर भगवान् व्रजमण्डलमे विचरण करने लगे ॥ १०९ ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
सर्ग एकोनत्रिंशोऽगान्महाकाव्ये स्तवात्मके ॥११०॥

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे यह उनतीसवाँ सर्ग पूरा हुआ ॥ ११० ॥

# त्रिंशः सर्गः

[ यमुनातटे शिलामयीं व्रजदेवीं द्रष्टुमागताया देव्या कीर्तिदाया गोपवधूभि. साक विविध श्रीकृष्णविषयको वार्तालाप तत्कार्यनिर्देशश्च ]

( स्वागतावृत्तम् )

**स्वागतं तव शुभे ! किमिह त्वं प्रातरागतवती व्रजसीम्नि ।**
**कीर्तिदां समवदन् यमुनायां स्नातुमद्य च गता व्रजनार्यः ॥१॥**

आज भी यमुनाजीमे नहानेके लिए गई हुई व्रजसुन्दरियाँ रानी-कीर्तिदासे बोली—'शुभे ! आपका स्वागत है, आप किसलिए आज प्रात काल ही इस व्रजकी सीमामे आयी हुई है ?' ॥१॥

**आगतास्म्यहमिहाऽद्य शिलासु वन्दितुं भगवतीं विलसन्तीम् ।**
**पूजिता किल मया सुखदाऽसौ स्यादतो जिगमिषाऽप्यवदत्सा ॥२॥**

वे बोली— मै शिलाओपर विराजमान भगवतीकी वन्दनाके लिए आयी हूँ। मेरे द्वारा पूजा की जानेपर वे मेरे लिये सुखदायिनी होगी, अत यहाँसे लौट जाना चाहती हूँ' ॥ २ ॥

**विश्रम क्षणमिहाऽपि वरोरु ! का त्वरा तव गृहे गमनेऽपि ।**
**संगता वयमिहाऽद्य चिरेण काऽपि हृद्गतकथा करणीया ॥३॥**

व्रजाङ्गनाये बोली—'वरोरु ! क्षण भर यहाँ भी विश्राम तो करो। तुम्हारे घर जानेके लिए अभी क्या जल्दी है। हमलोग चिरकालके बाद आज यहाँ मिली हैं। कुछ हार्दिक बातोकी चर्चा करनी चाहिए' ॥ ३ ॥

**ताभिरित्थमतुलं गदिता सा तत्र संस्थितवती तटदेशे ।**
**याः समाप्य निजकृत्यममोघं भूय एव मिलिता अचिरेण ॥४॥**

उनके अनुपम ढगसे इसप्रकार कहनेपर रानी-कीर्तिदा तट प्रदेशमे ठहर गईं। वे व्रजाङ्गनाये भी अपना सारा कार्य सफलता पूर्वक समाप्त करके फिर शीघ्र ही उनसे आ मिली ॥ ४ ॥

**तासु गोकुलसतीषु तटीषु संस्थितासु विगलत्सिकतासु ।**
**संबभूवुरसमाः प्रियगाथा आत्मनो हितपरा बहुरूपाः ॥५॥**

जहाँ बालू नही थी, तटके उस स्थानपर सारी गोकुल-सुन्दरियाँ बैठ गईं और उनमे अपने हितसे सम्बन्ध रखनेवाली अनेक प्रकारकी अनुपम एव प्रिय कथा-वार्ता होने लगी ॥ ५ ॥

**स्वानुभूतमवदत्तत आशु काऽपि गोपरमणी स्मृतसार्था ।**
**तां व्रजेश्वरशिशोरनुरूपां स्वां सुतां स्मृतिपथेषु नयन्तीम् ।।६।।**

उस समय देवी कीर्तिदा अपनी पुत्री (राधा) को व्रजेश्वर-नन्दन श्रीकृष्णके अनुरूप मानकर उसीको स्मृति पथमे ला रही थी। तब उनमेसे कोई एक गोप-रमणी पहलेकी बातोको स्मरण करके उनसे अपना अनुभव सुनाने लगी ।। ६ ।।

**कीर्तिदे ! विगतरात्र्यवसाने व्युष्ट एव शयनात् प्रतिबुद्धा ।**
**साऽहमागतवती यमुनायां स्नानमत्र च विधाय निवृत्ता ।।७।।**

'देवि कीर्तिदे ! कलकी रात जब प्राय बीत चली थी उस समय सबेरे पौ फटते ही मै अपनी शय्यासे जाग उठी और यमुनाजीमे स्नान करनेके लिए चली आई' और यहाँ स्नान करके फिर घरको लौट चली ।। ७ ।।

**यावदागममहं गृहसीम्नि तावदेव शिशुरेष मुकुन्दः ।**
**बालिकाभिरखिलैश्च वृतः स्वैर्मद्गृहाङ्गणगतो रमते स्म ।।८।।**

'ज्योही अपने घरकी सीमामे मैने पैर रखा, त्यो ही देखा कि वह शिशु मुकुन्द बहुत-सी बालिकाओ तथा अपने साथी समस्त बालकोसे घिरकर मेरे घरके आँगनमे आकर खेल रहा है ।। ८ ।।

**शान्तिदं विहरणं तदमुष्य संनिरीक्ष्य मुदिताऽत्मनि साऽहम् ।**
**तत्र संस्थितवती चिरकालं मन्त्रमुग्धभुजगीव विमूढा ।।९।।**

'उसका वह क्रीडा-विहार परम शान्तिदायक था। उसे देखकर मै मन-ही-मन आनन्द मग्न हो गई। और मन्त्रसे मोहित हुई सर्पिणीके समान किंकर्तव्यविमूढ हो चिरकाल तक वही खडी रह गई ।। ९ ।।

**तत्र चैष विहरन् कृतलीलो राजवृत्तमनुसृत्य वरोरु ! ।**
**स्वानुगान् धृतमहेन्द्रसमाज्ञ इत्थमादिशदहो ! सुरकल्पान् ।।१०।।**

'वरोरु ! वहाँ विहार करते हुए उसने एक लीला की। वह राजाके बर्तावका अनुसरण करके देवराज इन्द्रके समान आज्ञा देता हुआ अपने देवोपम साथियोसे इस प्रकार बोला—।। १० ।।

**मन्निदेशमसमं शृणुताऽत्र यूयमद्य कुरुताऽङ्ग ! तथैव ।**
**विश्वदुःखजलधौ ह्यनिशं स्वान् मज्जतश्च नयताऽन्तममुष्य ।।११।।**

''प्यारे साथियो ! तुम यहाँ मेरे अनुपम आदेशको सुनो और सुनकर आज वैसा ही करो। ससारके दु खरूपी सागरमे निरन्तर डूबते रहनेवाले आत्मीय-जनोको उसके पार पहुँचाओ' ।। ११ ।।

यत्र यत्र गुरुनिन्दनमेवं धर्महेलनमनार्यसमृद्धिः ।
दृश्यते श्रुतिसतां च विपत् सा तत्र तत्र भवतां सुगतिः स्यात् ॥१२॥

'जहाँ-जहाँ गुरुजनोकी निन्दा, धर्मकी अवहेलना, दुष्टोकी समृद्धि, तथा श्रुतियो और स्मृतियोपर विपत्ति दिखाई दे, वहाँ-वहाँ तुमलोगोको अवश्य जाना चाहिए' ॥ १२ ॥

कार्यमत्र रुचिरं शृणुत प्राक् स्वं मनो हृदि निरुध्य विशुद्धम् ।
आत्मयोगपथगं करणीयं स्वेष्टकृद्भवति तद्ध्यवधार्यम् ॥१३॥

"वहाँ जो रुचिर कार्य करना है, उसे सुनो। पहले अपने मनका विशुद्ध भावसे हृदयमे निरोध करो और उसे आत्म-योग पथका अनुगामी बनाओ। ऐसा मन ही अभीष्टका साधक होता है, इस बातको अच्छीतरह समझ लो' ॥ १३ ॥

यूयमत्र च यदीप्सथ तत्र कामयध्व इतरद्भवितुं वा ।
सर्वमेव भवतीह सुखेन योग एव कथितोऽमृतपायी ॥१४॥

'वहाँ ( उस योगस्थितिमे ) पहुँचकर तुम लोग जो-जो चाहोगे, अथवा दूसरी जिन-जिन वस्तुओके होनेकी कामना करोगे, वह सब सुख-पूर्वक सिद्ध हो जायेगा। यह योग कहा गया है, जो मर्त्यको अमृत पान करानेवाला है' ॥ १४ ॥

एवमेष उपदिश्य सखीन् स्वान् स्वं च शक्तिरहितं परिकल्प्य ।
आजुहाव तनयां मम शक्तिनामिकां स्वसदनान्तरसुप्ताम् ॥१५॥

'इस प्रकार अपने सखाओको उपदेश देकर और अपनेको शक्ति-रहित-सा मानकर मेरी शक्ति नामवाली बालिकाको इसने पुकारा। वह दूसरे अपने घरमे सोई थी' ॥ १५ ॥

एहि देवि ! सुखदा त्वमसीह तस्थुषाश्च जगतामखिलानाम् ।
शक्तिरप्यसि सुखं विहराव एहि तूर्णमिह शर्म ददावः ॥१६॥

'वह बोला—'देवि ! यहाँ आओ। तुम स्थावर, जंगम सभी प्राणियोके लिए ससारमे सुखदायिनी हो। साक्षात् शक्ति भी हो, शीघ्र आओ, हम दोनो यहाँ सुख-पूर्वक विहार करे और लोगोको कल्याण प्रदान करे' ॥ १६ ॥

तस्य हूतिरियमार्तजनानां शान्तिदा श्रुतिपथं मम पुत्र्याः ।
संगता तत इमां शयनात् स्वादुत्थितां समकरोत् त्वरितां च ॥१७॥

'उसका यह आह्वान आर्तजनोको शान्तिप्रदान करनेवाला था। वह मेरी पुत्रीके कानमे पडा। उसने तत्काल मेरी इस कन्या शक्तिको शय्यासे उठा दिया ॥ १७ ॥

वीक्षिता किल मयाऽपि सुखेन तत्क्रिया गृहगवाक्षविलेन ।
देहलीं श्रितवती मम पुत्री कीर्तिदे ! समभवत् तव पुत्री ॥१८॥

'मैने भी खिडकीके छिद्रसे सुख-पूर्वक उसकी क्रिया देखी। कीर्तिदे ! मेरी पुत्री ज्योही उस घरके दरवाजे पर आई, त्योही तुम्हारी पुत्री बन गई' ॥ १८ ॥

नव्यभव्यजलदोज्ज्वलरूपः कृष्ण एष गुरुगोकुलमानी ।
शक्तिपूर्ण उरुगाय उपेन्द्रो भ्राजते स्म तत ईश्वरमानी ॥१९॥

'कृष्णका रूप नव्य-भव्य जलधरके समान शोभा पाता था। वह गुरुजनो और गोकुलका मान बढाने वाला था। उस समय शक्तिसे परिपूर्ण हो बहुतोके द्वारा गाये जानेवाले भगवान् विष्णुके सदृश सुशोभित हुआ और अपनेको ईश्वर मानने लगा ॥ १९ ॥

तत्र तौ च मिलितौ रुचिराङ्गैरैक्यतामुपगतैरथ देवि ! ।
राजतः स्म रुचिरं श्रितत्त्वौ तावुभौ तदनु संसदि तेषाम् ॥२०॥

'देवि ! वहाँ वे दोनो अपने सुन्दर अङ्गोसे परस्पर मिले। उनके दोनो अङ्ग एकताको प्राप्त हो गये थे। ( वे शक्ति और शक्तिमान् दोनो मिलकर एक हो गये )। तत्त्वका आश्रय ले वे दोनो ही उस बाल-ससदमे रुचिररूपसे शोभा पाने लगे ॥ २० ॥

गोदुहां शिशव ईशनिकाशास्तत्क्षणात् समभवन्नवितर्क्याः ।
दिव्यवस्त्रतुलसीदलमाल्यैर्भूषिता विहिततत्स्तुतयश्च ॥२१॥

तब वे 'गोपोके शिशु भी अतर्क्यरूपसे तत्काल ईश्वर जैसे हो गये। दिव्य वस्त्र और तुलसीदलोकी मालाएँ उन्हे विभूषित करने लगी। वे उन दोनो शक्ति-शक्तिमान्‌की स्तुति करने लगे ॥ २१ ॥

दृश्यमीदृशमहं कमलाक्षि ! संनिरीक्ष्य चकिताऽथ विमुग्धा ।
साऽहमीक्षितवती तत एनं सोऽपि मामपि च तत्र ददर्श ॥२२॥

'कमललोचने ! इस प्रकार उसकी ऐसी लीला देखकर मै चकित और मुग्ध हो गयी। तदनन्तर मैने कृष्णको देखा और उसने भी वहाँ मुझे देख लिया ॥ २२ ॥

तावदेव विधृतात्मिकशक्तिरीश एष शिशुराश्रितलीलः ।
स्वं तथा तव सुतां च सखींश्च पूर्वरूपविधृताः समकार्षीत् ॥२३॥

'तब तक ही आत्मशक्ति-धारी ईश्वररूप इस नन्द-नन्दनने लीलाशक्तिका आश्रय ले अपनेको, तुम्हारी पुत्रीको तथा अपने सखाओको ऐसा कर दिया कि, जिससे वे सब अपने-अपने पूर्वरूपमे ही स्थित हो गये ॥ २३ ॥

कीर्तिदे समवलोक्य ततो मामाह्वयन् मधुरया स्वगिरा सः ।
स्वां सखीं मम सुतां प्रियशक्तिं मामदर्शयदियं छलिनीति ॥२४॥

'कीर्तिदे ! तब उसने मेरी ओर देखकर मधुर वाणी द्वारा अपनी सखी एव मेरी पुत्री प्रिय शक्तिको बुलाकर मुझे दिखाते हुए कहा—मा ! 'यह बडी छलिनी है' ॥ २४ ॥

स्वानुभूतमवदत् पुनरन्या सोत्सुकास्विह भृशं सकलासु ।
कीर्तिदे ! शृणु हितं कथयामि त्वामहं विघटितं तदुदन्तम् ॥२५॥

तदनन्तर दूसरी गोपीने अपना अनुभव सुनाते हुए उनसे कहा । उसका अनुभव सुननेके लिए सभी स्त्रियाँ उत्सुक थी । वह बोली—'कीर्तिदे ! सुनो, तुम्हारे हितकी बात कहती हूँ । बीती हुई घटना सुनाती हूँ ॥ २५ ॥

अद्य सार्धघटिकाद्वयपूर्वमिन्धनप्रभृतिसंग्रहणार्थम् ।
व्युष्ट एव विपिने विगताऽऽसं कर्तुमात्महितकृद्गृहकृत्यम् ॥२६॥

'आज ढाई घडी पहलेकी बात है । मैं इन्धन आदि वस्तुओके सग्रह तथा अपने लिए हितकर गृहकृत्यका सम्पादन करनेके लिए बडे सबेरे ही वनमे गई थी' ॥ २६ ॥

तत्र सुन्दरि ! मयाऽखिलवस्तु सञ्चितं निमिषतोऽथ निवृत्ता ।
गह्वराद्वनपथात्त्वरिताऽहं दर्भदारुसुफलानि गृहीत्वा ॥२७॥

'सुन्दरि ! वहाँ सारी आवश्यक वस्तुओका क्षण-भरमे सग्रह करके कुशा, ईंधन और फल आदि लेकर मै तुरन्त उस गह्वर-वनके मार्गसे लौटी' ॥ २७ ॥

सुन्दरं सखि ! वनं गहनं तद् दृश्यते स्म रमणीयमभीक्ष्णम् ।
स्थावरा अपि सुखं स्म लसन्ति यत्र काममनुभूय हृदिस्थम् ॥२८॥

'सखि ! वह गहन वन निरन्तर परम सुन्दर और रमणीय दिखाई देता है । वहाँके स्थावर वृक्ष आदि भी हार्दिक कामनाओका अनुभव करते हुए बड़े सुखसे सुशोभित होते है' ॥ २८ ॥

जङ्गमास्तु सकलाः सकलं स्वान् स्माऽऽश्रयन्त इह कामरसाक्ताः ।
ज्ञानिनः सुदति ! कामकलानां तान् विभूष्य बहुधा स्म विभान्ति ॥२९॥

'समस्त जगम-प्राणि तो इच्छानुसार उपलब्ध काम-रससे सराबोर हो, वहाँ स्वजनोको बडी कलाके साथ अपनाते है । सुन्दर दाँतोवाली देवि ! काम-कलाके ज्ञाताजन वहाँ सब लोगोको अनेक प्रकारसे विभूषित करके स्वय भी सुशोभित होते हैं' ॥ २९ ॥

सर्वतः सुखमये समयेऽस्मिन् बालसूर्यकिरणैः स्नपितेऽथ ।
यूथशः पशुविहङ्गमवर्गान् साध्वपश्यमहमीश्वरि ! तत्र ॥३०॥

'ईश्वरि ! ( रानीजी ! ) बालसूर्यके किरणोसे नहलाये गये इस सर्वत सुखमय समयमे मैने उस वनमे झुण्डके झुण्ड आते हुए पशुओ और पक्षियोके समुदायोको अच्छी तरह देखा' ॥ ३० ॥

आगताः कुत इमे त्वरिता वा संगता जिगमिषन्ति च कुत्र ।
तर्क एष तुदति स्म मदीयं मानसं गतभयं तदभूच्च ॥३१॥

'उस समय मेरे मनको ऐसा तर्क प्रेरित करने लगा कि 'ये पशु-पक्षी इतनी उतावलीके साथ कहाँसे आये हैं और झुण्डके झुण्ड मिलकर कहाँ जाना चाहते हैं ?' तब मेरे मनसे भय भी निकल गया था' ॥ ३१ ॥

सोत्सुकाऽहमगमं ह्यथ तत्र तत्पथानुसरणं कृतवन्तौ ।
मत्पदावपि शुभे ! चलतः स्म मां विगृह्य तरसाऽस्मृतकृत्याम् ॥३२॥

'मै उत्कण्ठित होकर उधर ही चल पडी । शुभे ! मेरे दोनो पैर उन्हींके पथका अनुसरण करते हुए मुझे लेकर वेगसे आगे बढने लगे । उस समय मै अपने घरके सारे काम-काज भूल गयी थी ॥ ३२ ॥

वेष्टिते तरुलतादिभिरित्थं शोभितेऽतिगहने वनकुञ्जे ।
साऽहमागतवती तत आलि ! दृष्टवत्यहह ! दृश्यमतर्क्यम् ॥३३॥

'आलि ! इस प्रकार वृक्षो और लताओसे परिवेष्टित एव सुशोभित अत्यन्त गहन वनकुञ्जमे मै आ पहुँची । अहा हा ! वहाँ मैंने अतर्क्य दृश्य देखा' ॥ ३३ ॥

द्वित्रिवत्सरमितोऽर्भक एकः संविगृह्य करयो रुरुशृङ्गम् ।
वादयन् विलसति स्म पुरस्तादागतान् समनुगृह्य च वन्यान् ॥३४॥

'दो-तीन वर्षकी अवस्थाका एक बालक दोनो हाथोमे रुरु-हिरणका सीग लेकर बजाता हुआ शोभा पा रहा था । उसने वहाँ सामने आये हुए समस्त वन्य पशु-पक्षियोपर महान् अनुग्रह प्रकट किया था' ॥ ३४ ॥

शृङ्गवादनममुष्य वरोरु ! सामगायनमिवर्षिवरस्य ।
शोभते स्म ललितं सरसं च ब्रह्मगं स्वरलयाढ्यमतुल्यम् ॥३५॥

वरोरु ! उसका शृङ्गवादन किसी श्रेष्ठ ऋषिके सामगान-सा सुशोभित होता था । स्वर और लयसे युक्त वह ललित एव सरस सगीत अनुपम था, ब्रह्मानन्दका अनुभव कराता था' ॥ ३५ ॥

व्याप्य येन सकलं त्रिदिवं तत् साम्प्रतं सखि ! चमत्कृतमासीत् ।
संगताः श्रुतिधरा भुवनेशा यन्निशम्य त इहाऽऽगतवन्तः ॥३६॥

'सखि ! उस संगीतने सम्पूर्ण विश्वमें व्याप्त होकर उस समय स्वर्ग-लोकतकको चमत्कृत कर दिया था। श्रवण-शक्तिसे सम्पन्न समस्त लोकपाल उसे सुनकर वहाँ आ गये थे और एकत्रित हो गये थे' ॥ ३६ ॥

भूतलं तदुपगैः पशुपक्षिवृन्दकैरथ नभः सुरसंघैः ।
व्याप्तमेव समभूत् प्रति बालं स्वात्मपातनतिसत्स्तुतिकृद्भिः ॥३७॥

'इस प्रकार वहाँका भूतल-पास आये हुए पशु-पक्षियोंके समुदायोंसे तथा आकाश देव-समूहोंसे व्याप्त हो गया था। वे सब उस बालकके प्रति साष्टाङ्ग-प्रणाम एवं स्तुति कर रहे थे' ॥ ३७ ॥

पुष्पवृष्टिरतुलेह नभस्तोऽजायताऽहहह ! जीव ! जयेति ।
शब्दवृष्टिरपि देवि ! यतोऽसौ संसदेव परमां मुदमाप ॥३८॥

'अहा हा ! वहाँ आकाशसे अनुपम पुष्प-वृष्टि होने लगी। साथ ही 'जय, जीव' आदि शब्दोंकी वर्षा आरम्भ हो गई। देवि ! इससे वह सारी सभा ही परमानन्दमें निमग्न हो गई' ॥ ३८ ॥

दृश्यमेतदभिवीक्ष्य शिशोस्तां शक्तिमद्भुततमां च विभाव्य ।
कोऽयमीश्वरगतिः पृथुकः स्यादित्यतर्क्यत मया चिरमत्र ॥३९॥

'यह दृश्य देखकर और उस शिशुकी अत्यन्त अद्भुत शक्तिपर विचार करके मैं बहुत देरतक इस तर्क-वितर्कमें पड़ी रही कि यह ईश्वरके समान प्रभावशाली बालक कौन हो सकता है ?' ॥ ३९ ॥

ध्यानमार्गमवलम्ब्य चिराय वीक्षितोऽपि शिशुरेष मयाऽद्धा ।
नाऽभवत् परिचितोऽथ पुनस्तं साऽहमीक्षितवती गुरुयोगात् ॥४०॥

'मैंने ध्यानमार्गका आश्रयले चिरकाल तक इस शिशुको देखा। परन्तु किसी तरह उसका परिचय नहीं प्राप्त हुआ। तब मैंने अत्यन्त एकाग्र चित्तसे उसपर दृष्टिपात किया' ॥४०॥

यावदानखममुष्य मयाऽपि शीर्षमेव निपुणं परिलक्ष्य ।
तत्र वीक्षितमथेश्वरि ! तावन्मेचकोऽत्र विलसन् सखि ! दृष्टः ॥४१॥

'रानीजी ! जब मैंने उसके नखसे लेकर शिखातकके भागका भलीभाँति निरीक्षण किया, तब हे सखि ! मुझे उसके मस्तकपर मोर-पंखका मुकुट शोभा पाता दिखाई दिया' ॥ ४१ ॥

तावतैव परिलक्षित एष नन्दपुत्र इति जातसुबुध्या ।
दृष्टपूर्वसुगुणैरनुभूतैः शक्तिभिश्च विषमाभिरमुष्य ॥४२॥

'उसपर दृष्टि पडते ही मुझमे सद्बुद्धिका उदय हुआ और मैं पहचान गई कि यह हमारे नन्दरायजीका ही पुत्र है। उस बालकमे जो अनुपम शक्तियाँ है तथा जो उसके उत्तम गुण देखे या अनुभव किये गये है, उन सबके द्वारा भी उसको पहचाननेमे सहायता मिली' ॥ ४२ ॥

यावदब्जनयनो मयि दृष्टिं पातयन् स्थिरमभूद् धृतशक्तिः ।
तावदेव पुनरत्र मनोज्ञे ! दृश्यमन्यदभवत्तदिहस्थम् ॥४३॥

'सुन्दरी रानीजी ! वह कमलनयन नन्द-नन्दनजी अपने भीतर अनन्त शक्ति धारण किया हुआ था, ज्यो ही मुझपर दृष्टि डालकर स्थिर-भावसे खडा हुआ, त्यो ही वहाँका सारा दृश्य बदलकर कुछ और ही हो गया' ॥ ४३ ॥

कीर्तिदे ! वटुकभैरवरूपः शान्तमूर्तिरतुलोऽद्भुत एषः ।
योगशक्तिपरिसेवितगात्रो दृष्टिगोचरमितो मम भूयः ॥४४॥

'कीर्तिदे ! तव यह अनुपम और अद्भुत बालक शान्तमूर्ति बटुकभैरव-रूप हो गया। सारी योगशक्तियाँ उसके शरीरकी सेवाकर रही थी। इस अभिनव-रूपमे वह मुझे फिर दृष्टि-गोचर हुआ' ॥ ४४ ॥

दृष्टपूर्ववपुषो भुवनेशाः स्माऽत्र सन्ति य इमे प्रियरूपाः ।
तेऽपि सर्व इह सुन्दरि ! जाताः प्रेतभूतकगणाश्च विदृष्टाः ॥४५॥

'सुन्दरी ! पहले जो मूर्तिमान् लोकपाल देखे गये थे तथा जो यहाँ प्रिय लगनेवाले नयनाभिरूपसे विराजमान थे, वे सब भूत-प्रेतोके गण हो गये। भूतो-प्रेतोके रूपमे ही इनका दर्शन होने लगा' ॥ ४५ ॥

भ्राजते स्म तदनु प्रमथैः स्वैर्गीतकैः सुविहितैरथ नृत्यैः ।
स्वान् समीक्ष्य सदयं परतत्त्वं संदिशन्नसमया स्वदृशाऽत्र ॥४६॥

'तदनन्तर प्रथमगणोके सुन्दर गीत और नृत्योके साथ वह वटुकभैरव शोभा पाने लगा। वह अपनी अनुपम दृष्टिसे आत्मीयगणोकी ओर दयापूर्वक देखकर परम तत्त्वका उपदेश दे रहा था' ॥ ४६ ॥

तद्विलोक्य सखि ! साऽहमतर्क्यं दृश्यमात्महृदि संभृतकम्पा ।
तं जगत्पतिमतुल्यगुणाढ्यं सन्नतिं ह्यकरवं क्षितिपातम् ॥४७॥

'सखि ! वह अतर्क्य-दृश्य देखकर मै अपने हृदयमे काँप उठी। और उस अतुल्य-गुण सम्पन्न जगदीश्वरको मैने धरतीपर माथा टेककर प्रणाम किया' ॥ ४७ ॥

यावदात्मशिर उन्नमितं तत्तावदेव पुनरेष मयाऽपि ।
त्वत्सुतां विपरिष्वज्य तयैव साकमत्र विहरंश्च विदृष्टः ॥४८॥

'फिर ज्योही मैने अपना शिर उठाया, त्योही वह मुझे तुम्हारी पुत्रीका आलिङ्गन करके उसीके साथ वहाँ विचरता दिखाई दिया' ॥ ४८ ॥

तावुभौ तदनु तत्र निरीक्ष्य स्नेहबद्धहृदया तरुगुल्मात् ।
पार्श्वमागममहं ह्यनयोस्तु नासीदत्र स परन्त्विह साऽऽसीत् ॥४९॥

'तत्पश्चात् वहाँ उन दोनोको देखकर मेरे हृदयमे स्नेह उमड आया। और मै वृक्षो एव झाडियोके बीचसे होती हुई उनके पास जा पहुँची। किन्तु उनमेसे एक वह कृष्ण तो विद्यमान नही था परन्तु वह तुम्हारी पुत्री वही मौजूद थी' ॥ ४९ ॥

एकिकामथ करेण गृहीत्वा पृष्टवत्यहमिमां क्व गतोऽसौ ।
उक्तवत्यहह मामपि साऽपि मातरेनमिह बिद्धि सदर्थम् ॥५०॥

'तब उस अकेलीको ही हाथसे पकडकर मैने पूछा—'वह कहाँ चला गया'। तब अहा हा ! उसने मुझसे कहा कि मैया ! तुम इस कृष्णको सदा सर्वत्र विद्यमान सत्-तत्त्व समझो' ॥ ५० ॥

प्रातरद्य मम गेहमुपेन्द्र आजगाम विपिनं च ततोऽपि ।
मामिहाऽऽनयदहो ! कृतमायः स्वैरचार्य्यविहतप्रभ एषः ॥५१॥

'आज प्रात काल उपेन्द्र ( कृष्ण ) मेरे घर आया और वहाँसे कोई माया रचकर मुझे इस वनमे भी यहाँ ले आया। अहो ! वह महान् स्वेच्छाचारी है और कभी भी इसका तेज प्रतिहत नही होता है' ॥ ५१ ॥

मां गृहं नयतु मातरितीह त्वत्सुतामथ भयेन गदन्तीम् ।
स्नेहतो हृदि समुह्य भुजाभ्यां तां विसृज्य गृहमेवमिताऽहम् ॥५२॥

'तब मैया ! मुझे घर ले चलो। यहाँ डर लगता है'। भयसे ऐसा कहती हुई तुम्हारी पुत्रीको मैने हार्दिक स्नेहवश दोनो हाथोसे उठा लिया और उसे तुम्हारे यहाँ छोड़कर मै इस प्रकार अपने घर लौटी हूँ' ॥ ५२ ॥

काचिदित्थमवदत्तत ऊर्ध्वं प्रेक्ष्य शं कुरु शिवेत्यभिधाय ।
हृद्गतं सुदति ! कौतुकमेकं ह्यव्यथं तुदति नः शृणु वच्मि ॥५३॥

तदनन्तर कोई गोपी ऊपरकी ओर देखकर तथा 'हे शकर ! कल्याण करो।' ऐसा कहकर इस प्रकार बोली—'सुन्दर दाँतोवाली रानी जी ! मेरे हृदयमे एक कौतुक है, जो व्यथा पहुँचाये विना ही मुझे पीडा दे रहा है, उसे बताती हूँ, सुनो ! ॥ ५३ ॥

**कीर्तिदे ! तदिदमस्ति सुधीनां हृद्गतोऽयमतुलो गुणधाम ।**
**गोकुलेशतनयोऽमिततेजाः स्यात् क आगत इहाऽपि कथं वा ॥५४॥**

'कीर्तिदे ! वह यह है कि विशुद्ध बुद्धिवाले ज्ञानियोके हृदयमे ध्येय-रूपसे विद्यमान यह कही भी तुलना न रखनेवाला अमित तेजस्वी तथा सकल सद्‌गुणधाम गोकुलेन्द्र-नन्दन कृष्ण कौन हो सकता है तथा कैसे यहाँ आया है' ? ॥ ५४ ॥

**शङ्करः किमथवा स विरिञ्चिर्देवराज उत विष्णुरसौ वा ।**
**विद्म एव न वयं शिशुमेनं देवि ! सोऽयमिति निश्चिततत्त्वाः ॥५५॥**

'देवि ! यह साक्षात् शंकर है, अथवा ब्रह्मा है या देवराज इन्द्र है अथवा स्वय विष्णु है ? । हमलोग इस शिशुके विषयमे यह अमुक ही है !, इस प्रकार तत्त्व निश्चयपूर्वक कुछ नही जानती हैं ॥ ५५ ॥

**लोकपालसमसत्त्वगुणाढ्यो दृश्यते शिशुरसौ बलवांश्च ।**
**दिव्यशक्तिगतिपूर्णसुबुद्धिर्योगिराडिव विभाति पुनर्यः ॥५६॥**

'यह बालक लोकपालोके समान सत्त्वशाली, गुणसम्पन्न और बलवान् दिखाई देता है। दिव्य शक्ति और गतिसे परिपूर्ण उत्तम बुद्धिवाला यह नन्द-शिशु किसी योगिराज-सा जान पडता है' ॥ ५६ ॥

**भाग्यमीदृशमहो ! कमलाक्षि ! ब्रूहि केन विधिना भवतीह ।**
**येन विद्म उरुगायममुं तद् धृच्च नस्तुदति वेत्सि किमु त्वम् ॥५७॥**

'अहो कमललोचने ! तुम्ही बताओ। इस जगत्मे ऐसा सौभाग्य कैसे प्राप्त होता है। जिससे, बहुतोके द्वारा जिसकी कीर्ति गाई जाती है, उस बालकको हमलोग जान सके। यही प्रश्न हमारे हृदयको पीडा देता रहता है। देवि ! क्या तुम उसके विषयमे तत्त्वत जानती हो ?' ॥ ५७ ॥

**वेद्मि किञ्चिदपि नाऽहममुष्य साऽभ्यधादथ विहस्य सलज्जम् ।**
**सत्यमाल्य उरुशक्तियुतोऽयं ध्येय इत्थमभवत् स्वजनानाम् ॥५८॥**

यह सुनकर रानी कीर्तिदा लज्जापूर्वक हँसकर बोली—'सखियो ! मै सच कहती हू कि उसके विषयमे कुछ नही जानती हूँ। यह अनन्त शक्ति-शाली बालक इस प्रकार हमारे स्वजनोका ध्येय बन गया है ॥ ५८ ॥

पीडयत्यहह ! मामपि सख्य एकवाक्यमनिशं किमिदं नु ? ।
ब्रूत यन्मम सुता शयनेऽपि कृष्ण ! कृष्ण ! वदति ह्यविरात्रम् ॥५९॥

'अहह सखियो ! मुझे भी एक बात निरन्तर पीडा देती रहती है। न जाने यह क्या है ? तुम्ही लोग बताओ। मेरी पुत्री (राधा) रातके समय शय्या पर सोती रहकर भी 'कृष्ण !, कृष्ण !!' पुकारा करती है ॥ ५९ ॥

उत्थिता तत इयं शृणुताऽत्र ध्यानमार्गमवतिष्ठत इत्थम् ।
येन लभ्यत इहाऽव्यय ईशः साऽप्यदर्शि च मया बहुवारम् ॥६०॥

'शय्यासे उठनेके बाद भी यह मेरी कन्या ऐसे ध्यानमार्गका अवलम्बन कर स्थित होती है, जिससे यहाँ अविनाशी परमेश्वरकी प्राप्ति की जाती है। मैने उसे बहुत बार ध्यान करते देखा है' ॥ ६० ॥

तद्दशाऽस्पृशदहो ! मम चित्तं शान्तिदा सुखकरी च भृशं या ।
प्रेरयत्यथ च मामपि हन्त ! कृष्ण ! कृष्ण !! कथने च वयस्याः ॥६१॥

'अहो ! उसकी इस दशाने मेरे चित्तका भी स्पर्श किया है, जो अत्यन्त शान्तिदायिनी और सुखकारी है। हन्त ! सखियो ! उसकी वह ध्यान-निष्ठा मुझे भी 'कृष्ण ! कृष्ण !!' कहकर पुकारनेको प्रेरित करती है' ॥ ६१ ॥

तन्मयाऽनुमितमाल्य ! उपेन्द्रो ह्याजगाम गुणशक्तियुतोऽयम् ।
स्वैर्गुणैः प्रियजनान् परिपाल्य शक्तिभिर्हरति दुष्टहृदस्तान् ॥६२॥

'अत सखियो ! मैने अनुमान द्वारा यह निश्चय किया है कि गुण और शक्तिसे सम्पन्न ये उपेन्द्र ( विष्णु ) ही इस बालकके रूपमे आये हैं। जो अपने गुणो द्वारा प्रियजनोंका परिपालन करके अनन्त-शक्तियो द्वारा दुष्टोका सहार करते है' ॥ ६२ ॥

दृष्ट एव भवतीभिरमुष्य शान्तिदः सुखकरश्च विनोदः ।
रञ्जयत्यनिशमेव मनो नः कामयामह इहाऽस्तु स नित्यम् ॥६३॥

'तुमलोगोने तो देखा ही है। इस बालकका विनोद कितना शान्तिदायक और सुखद होता है। जो हमारे मनका नित्य निरन्तर अनुरञ्जन करता है। हम तो चाहती हैं, यह नन्द-नन्दनका वह विनोद नित्य यहाँ बना रहे' ॥ ६३ ॥

सोत्सुकं भवति हृत् पुनरित्थं द्रष्टुमस्य सुविनोदमतो वः ।
किञ्चिदत्र निभृतं कथयामि स्वाच्च नोऽपि च सुखायतिरेषः ॥६४॥

'उसके इस तरहके सुन्दर विनोदको बार-बार देखनेके लिए हृदय सदा उत्सुक रहता है। अत मै तुमलोगोसे एकान्तमे कहने योग्य कुछ कहती हूँ। यह विनोद भविष्यमे हमलोगोके लिए भी सुखदायक हो' ॥ ६४ ॥

एत्य सद्म स उपद्रवमित्थं ह्याचरन् विगतभीर्भवतीभिः ।
संनिगृह्य सुखमाल्य ! उपायैः क्षिप्त एव च भवेद् गृहकोष्ठे ॥६५॥

'सखियो ! जब वह बालक हमारे घरमे आकर पूर्वोक्त प्रकारसे उपद्रव करने लगे, तब तुम लोग निर्भय होकर उसे पकड लेना और सुखपूर्वक विभिन्न उपायो द्वारा उसे अपने घरके भीतर ही डाले रखना' ॥ ६५ ॥

प्रेक्ष्य एष पुनरत्र निरुद्धः किं किमाचरति जल्पति किं वा ।
तद्विचार्य सविनोदममोघं कर्म यद्भवति साधु विधेयम् ॥६६॥

'फिर देखना, वह वहाँ रोक लिये जानेपर क्या-क्या करता अथवा कहता है। उसके द्वारा किया गया सफल विनोद-युक्त कर्म जैसा भी हो उसे विचारपूर्वक भली भाँति करना चाहिए' ॥ ६६ ॥

स क्षमां च यदि याचत आल्यः साऽपि तेन लघु तत्र समाप्या ।
प्राप्य यां विहतशक्तिरुपेन्द्रो लज्जयाऽत्र विरमेच्च चिराय ॥६७॥

'सखियो ! यदि वह क्षमा याचना करे तो वह क्षमा भी उसे शीघ्र मिलनी चाहिए। जिसको पाकर उपेन्द्रकी शक्ति कुण्ठित हो जाय और वह लज्जावश चिरकालके लिए उपद्रवसे विरत हो जाय' ॥ ६७ ॥

तद्विमृश्य यदि धृष्ट इहाऽपि नेय एष ससुखं नृपवेश्म ।
तत्र तेन विहिता गृहहानिस्तत्सभासु विदिता करणीया ॥६८॥

'इन सब बातोपर विचार करके भी यदि वह धृष्ट ही बना रह जाय—उपद्रवसे विरत न हो तो उसे सुखपूर्वक नन्दरायजीके घरपर ले जाया जाय और वहाँ उसके द्वारा की गई प्रत्येक घरकी हानिभरी कहानी सभामे विदित कराई जाय' ॥ ६८ ॥

प्राप्स्यते फलमनेन तदेव तस्य दण्ड उचितो ह्ययमेव ।
किं करिष्यति भविष्यति हास्यो दृश्यते च गतिरित्थममुष्य ॥६९॥

'ऐसा करनेसे ही उसे तत्काल अपनी करनीका फल मिलेगा। उसके लिए यही दण्ड उचित होगा। वह सबके लिए उपहासका पात्र हो जायेगा। फिर क्या करेगा ? इस प्रकार उसकी भावी गति-विधि भी देखी जायेगी' ॥ ६९ ॥

अन्यदस्तु, समये समये तद्विद्म एव बहुधा वयमाल्यः ! ।
कोऽत्र संशय उपेन्द्रसमोऽसौ गोकुलेशतनयो जयतीह ॥७०॥

'सखियो ! अब और बाते रहने दो। समय-समयपर उसके और भी नाना प्रकारके जो खेल होगे, उन्हे हमलोग जानेगी ही। इसमे क्या सन्देह है कि वह गोकुलराज-कुमार साक्षात् विष्णुके समान पराक्रमी है। उसकी यहाँ सदा ही जय हो' ॥ ७० ॥

गच्छाम आल्य ! इति कीर्तिदया समुक्ता-
स्ता उत्थिता अथ गृहान् प्रति गन्तुकामाः ।
कर्तुं च गोप्यमिदमात्महितं सुवृत्तं
संमन्त्र्य चाऽऽययुरिमाः पुरि सुप्रसन्नाः ॥७१॥

'अच्छा, सखियो ! अब हमलोग चले'। रानी कीर्तिदाके ऐसा कहनेपर वे सब व्रजाङ्गनाये अपने-अपने घर जानेके लिए उठी। और अपने लिए हितकर उस उत्तम कार्य-क्रमको गोपनीय रखनेके लिए ही परस्पर सलाह करके अत्यन्त प्रसन्नतापूर्वक सभी अपने गाँवमे लौट आई ॥ ७१ ॥

हंहो ! व्रजस्त्रिय उपेन्द्रमनुप्रयाताश्चौरं सदोषमिव तं च गृहीतुमित्थम् ।
सज्जा बभूवुरधिसद्म कृतप्रयत्नाः शेकुर्न यं तु मुनयोऽपि च कर्तुमेवम् ॥७२॥

अहो ! जिन्हे प्रयत्न करके मुनिलोग भी वशमे नही कर पाते हैं, उन्ही उपेन्द्रको माखन-चोरीके अपराधमे रँगे हाथ पकडनेके लिए प्रत्येक घरकी गोपाङ्गनाये तैयार हो गई थी ॥ ७२ ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
त्रिंशः सर्गोऽप्यगादेष महाकाव्ये स्तवात्मके ॥७३॥

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे यह तीसवाँ सर्ग पूरा हुआ ॥ ७३ ॥



# एकत्रिंशः सर्गः

[ सम्प्रदायवादिना महात्मनां दृष्टिपथमागते श्रीवसुदेवपोते तेषां तत्स्तवनम् ।
तद्विलोक्य विस्मितानां कंसचराणा तद्वैषयिकी विजिज्ञासा ।
त दृष्ट्वा तेषा तत. पलायनवर्णनञ्च । ]

( गीतिरियम् )

जय जय दुर्गे ! जय जय मातर्बुधजनचित्ते विहर सदा त्वम् ।
जय जय राम ! हतखरकाम ! मुनिवरचित्ते विहर सदा त्वम् ॥
जय जय शम्भो ! हर कलुषं भो ! सुखदचरित्र ! स्वजनान् पाहि ।
जय जय विष्णो ! सुकृतविधृष्णो ! जय जय दुष्टान् सुजनान् पाहि ॥

'दुर्गे ! तुम्हारी जय हो, जय हो। मात ! तुम्हारी जय हो, जय हो। तुम विद्वानोके चित्तमे सदा विहार करती रहो।

राक्षस-खरकी कामनाओको नष्ट करनेवाले श्रीराम ! तुम्हारी जय हो, जय हो। तुम श्रेष्ठ मुनियोके मानस-मन्दिरमे सदा विहार करो।

शम्भो ! तुम्हारी जय हो, जय हो। तुम सारे पापको हर लो। प्रभो ! तुम्हारा चरित्र सुखदायी है। तुम अपने भक्तजनोका पालन करो।

विष्णो ! तुम्हारी जय हो, जय हो। पुण्यधारी हरे ! तुम दुष्टोपर विजय प्राप्त करो, विजय प्राप्त करो और सज्जनोका सदा सरक्षण करो।

( वंशस्थेन्द्रवंशयोरुपजातिवृत्तम् )

शरच्छशाङ्कप्रतिमं मनोहरं ध्येयं विभुं साग्रजमेनमच्युतम् ।
गृहाद्विनिष्क्रम्य गृहान्तरागतं समीक्ष्य हृष्टा मुनयोऽथ जातुचित् ॥१॥

एक समयकी बात है—शरद ऋतुके चन्द्रमाके समान मनोहर तथा ध्यान करने योग्य भगवान् अच्युत अपने बडे भैयाके साथ घरसे निकलकर दूसरेके घर आये। उन्हे देखकर मुनियोको बडी प्रसन्नता हुई ॥ १ ॥

स्वैः स्वैर्मतैर्ध्यानपथागतैर्हितैः स्वैः संप्रदायैश्च विमृश्य तत्त्वतः ।
भक्त्या हृदिस्थापितमेनमस्तुवन् गीतं प्रगायोपरिगीतमत्र ते ॥२॥

वे स्मरण-पथपर आये हुए अपने-अपने हितकर मतो एव सम्प्रदायो द्वारा तत्त्वत. विचार करके भक्तिभावसे हृदयमे स्थापित किये गए उन भगवान् अच्युतकी वहाँ उपर्युक्त गीत गा-गाकर स्तुति करने लगे ॥ २ ॥

भावानुकूलं कृतदिव्यकीर्तनाः स्वध्येयसंदर्शनजातविभ्रमाः ।
त आत्मपातं ननृतुर्मुदान्विता गायन्त एकैकश आत्मनः प्रियम् ॥३॥

उन्होने अपने-अपने भावोके अनुकूल दिव्य कीर्तन किया। अपने ध्येयका दर्शन करके उनके हृदयमे एक प्रकारकी हडबडी पैदा हो गई—वे भावावेशसे विह्वल हो गये। उनमेसे एक-एक व्यक्ति अपने प्रिय देवताका गुणगान करने लगा। वे सबके सब आनन्दमग्न हो नाचने लगे। नाचते-नाचते वे गिर-गिर पडते थे ॥ ३ ॥

**संसार इत्थं प्रियलक्ष्यलब्धये व्यग्रोऽस्त्यहो ! यद्गत ईश्वरोऽप्यसौ ।**
**लब्धुं च तल्लक्ष्यमिमे वयं तथा व्यग्रास्त आसन् मुनयोऽपि तद्यथा ॥४॥**

अहो ! सारा संसार अपने प्रिय-लक्ष्यकी प्राप्तिके लिए व्यग्र है। साक्षात् ईश्वर भी इसीके अन्तर्गत हैं। उसी लक्ष्यको पानेके लिये हमलोग भी प्रयत्नशील हैं। जैसे उस समय मुनिलोग भी लक्ष्य-सिद्धिके लिए व्यग्र थे ॥ ४ ॥

**विपश्यतः स्वार्थममुष्य दुर्हृदः कंसस्य भृत्या बहुरूपधारिणः ।**
**इतः समागत्य तथास्थितानमून् गाढं ह्यपश्यन् कृतसज्जनप्रियान् ॥५॥**

मथुराका राजा दुष्ट हृदयवाला कस भी इसी प्रकार स्वार्थपर दृष्टि रखनेवाला था। उसके सेवक अनेक प्रकारके रूप धारण करके इधर आ निकले और इस प्रकार कीर्तनमे लगे हुए तथा सज्जनोका प्रिय करनेवाले इन मुनियोकी ओर आँखे फाडकर देखने लगे ॥५॥

**तेष्वेक आगत्य समीपमुद्धतोऽपृच्छन्मुनिं कंचिदिदं समत्सरम् ।**
**कस्त्वं त्वयेदं वद किं विधीयते को हेतुरित्थंकरणे च के च ते ? ॥६॥**

उनमे एक उद्दण्ड राजपुरुष निकट आकर ईर्ष्यापूर्वक किन्ही मुनिसे पूछने लगा—'तुम कौन हो ? बताओ, तुम्हारे द्वारा यह क्या किया जा रहा है। ऐसा करनेका क्या हेतु है और जो लोग इस कार्यमे लगे हैं, वे कौन है ?' ॥ ६ ॥

**तान् दुष्टचित्तानथ विघ्निता इमे विरम्य संकीर्तनतो व्यलोकयन् ।**
**पृष्टो मुनिस्तेन तमित्थमभ्यधात् प्रसन्नचेताः स्मृततच्छुभाकृतिः ॥७॥**

उन सबके आनेसे मुनियोके कार्यमे विघ्न पड गया। ये सकीर्तनसे विरत होकर उन दुष्टोको देखने लगे। जिस मुनिसे प्रश्न किया गया था, वे प्रसन्न चित्त हो भगवान्‌के शुभ आकारका चिन्तन करते हुए उस पूछनेवालेसे इस प्रकार बोले—॥ ७ ॥

**शाक्तोऽस्म्यहं पञ्चमकारसेवको शक्तिं ह्युपासे जगदीश्वरीं पराम् ।**
**सैषाऽस्ति तन्नन्दगृहे सुतात्मना श्रीकृष्णनाम्ना च भजामि तामहम् ॥८॥**

'भइया ! मैं शक्तिका उपासक हूँ। पञ्च-मकारका सेवन करता हूँ और जगदीश्वरी पराशक्तिके उपासनामे संलग्न रहता हूँ। वह शक्ति नन्दरायके घरमे पुत्ररूपसे उत्पन्न हुई है। उसका नाम 'श्रीकृष्ण' है। मै उसीका भजन करता हूँ' ॥ ८ ॥

के ते मकाराः कथमव्ययात्मिका साध्या प्रसन्ना भवतीह साधके ।
जानाम्यहं सम्यगिदं किमीहसे त्वमाप्तुमेनामनुगो भवाऽत्र मे ॥९॥

'वे पञ्चमकार कौन-कौनसे है? कैसे उनका सेवन किया जाता है और वह निर्विकार-स्वरूपा हमारी आराध्या जगदम्बा साधकपर कैसे प्रसन्न होती है? इन सब बातोको मै अच्छी तरह जानता हूँ। बताओ, तुम क्या चाहते हो?। यदि तुम भी जगदम्बाके प्राप्तिके इच्छुक हो तो इस साधनाके मार्गमे मेरा अनुगामी हो जाओ' ॥ ९ ॥

कंसस्य भृत्येषु ततः सविस्मयं पश्यत्सु चाऽन्यो मुनिरेवमाह भोः! ।
न सत्यमेतत् कथनं मयोदितं सत्यं सतत्त्वं शृणु यद्वदाम्यहम् ॥१०॥

कसके भृत्य यह सब सुनकर आश्चर्य चकित हो उन सबकी ओर देखने लगे। इसी समय कोई दूसरा मुनि इस प्रकार बोल उठा—'अजी यह कथन सत्य नही है। मैं जो बताता हूँ, वह सत्य है। उसका तत्त्वत वर्णन करता हूँ, सुनो'। ॥ १० ॥

श्रीराम एवाऽत्र समागतः स्वयं कृतावतारो व्रजराजवेश्मसु ।
विराजता पञ्चवटीं सुखं तदा रक्षोगणा येन हताः खरादयः ॥११॥

'यहाँ साक्षात् श्रीरामका ही शुभागमन हुआ है। स्वयं श्रीराम ही व्रजराज-नन्दके भवनमे अवतीर्ण हुए है। जिन्होने पचवटीमे रहते समय खर आदि सहस्रो राक्षसोका अनायास ही सहारकर डाला था ॥ ११ ॥

न पश्यसि त्वं किमिहाऽभितः स्थितांस्तत्प्राक्तनान् मित्रगणांश्च वानरान् ।
स रावणो दुष्टसखः क्षणेन यैः सहायभूतैः प्रभुणा विनाशितः ॥१२॥

'क्या तुम यहाँ चारो ओर स्थित उनके पुराने मित्रगण वानरोको नही देखते हो? जिनकी सहायता पाकर भगवान्ने दुष्ट साथियो सहित रावणको क्षणभरमे नष्ट कर दिया था' ॥ १२ ॥

श्रीकृष्णरूपं धरताऽधुनाऽमुना विपाल्यते हन्त! जगद्विभावय ।
शरण्यमेभिर्मुनिभिर्हृदा धृतं त्वं जानकीजानिममुं समाश्रय ॥१३॥

'श्रीकृष्णका रूप धारण करके वे भगवान् श्रीराम इस समय जगत्की रक्षा कर रहे हैं। इस बातका तुम मन ही मन विचार करो। वे जानकी-वल्लभ श्रीराम शरणागतवत्सल है। इन मुनियोने उन्हीको हृदयमे धारण कर रखा है। तुम उन्हीका आश्रय लो' ॥१ ॥

प्रेम्णाऽऽर्द्रभक्त्या गदितं सुधामयं निशम्य तद्वाक्यमिदं सुदुर्धराः ।
ते कंसभृत्या अपि जातविस्मया अन्योन्यमालोक्य बभूवुरुन्मदाः ॥१४॥

प्रेमसे सराबोर भक्ति-भावसे कही गई इस सुधामयी वाणीको सुनकर वे दुर्धर्ष कस-भृत्य भी विस्मयमे डूब गये और एक दूसरेकी ओर देखकर उन्मद हो गये ॥ १४ ॥

तदन्तरा शैव उवाच सस्मितं विमत्सरा भो शृणुताऽत्र मद्वचः ।
तमव्ययं शङ्कररूपधारिणं नित्यं विजानीथ जगद्गुरुं हरम् ॥१५॥

इसी बीचमे एक शैव सज्जनने मुस्कराते हुए कहा—'अरे भाइयो ! ईर्ष्या-द्वेष छोडकर यहाँ मेरी बात सुनो ! लोककल्याणकारी रूप-धारण करनेवाले उस बालकको तुमलोग साक्षात् जगद्गुरु भगवान् शिव समझो ॥ १५ ॥

साध्वीं कृपां यस्य समाप्य सज्जना असज्जनाश्चैव गताः पदं परम् ।
तमीदृशं शक्तिसमन्वितं हरं त्यक्त्वा कुतो गच्छथ लब्धुमीश्वरम् ॥१६॥

'जिनकी उत्तम कृपाको पाकर सज्जन और असज्जन सभी परम-पदको प्राप्त हो गये है। ऐसे शक्तिशाली उन पापहारी हरको छोडकर तुम ईश्वरकी प्राप्तिके लिए कहाँ जा रहे हो ?' ॥ १६ ॥

गोपालकानां सुहृदां सतां गवां शान्तिप्रदो गोकुलराजसद्मनि ।
विक्रीडते हन्त ! शिशुत्वमाश्रयन् यो नित्यमित्थं परिपाति वश्च सः ॥१७॥

'वे भगवान् शिव गोकुलराजके भवनमें शिशुत्वका आश्रय ले गोपालो, सखाओ, सन्तो और गौओको शान्ति प्रदान करते हुए इस प्रकार नित्य नूतन क्रीडाये करते हैं। वे ही तुमलोगोका परिपालन करते हैं' ॥ १७ ॥

स आशुतोषो भगवान् भवेश्वरो भक्तान् भयात्त्रायत एव नित्यशः ।
विभाव्य चेत्थं भजत स्वमायया गोप्यङ्कबद्धं प्रभुमीश्वरं हरम् ॥१८॥

'वे भगवान् आशुतोष और जगत्के ईश्वर हैं। वे नित्य ही अपने भक्तोकी भयसे रक्षा करते है। ऐसा विचारकर अपनी मायासे गोपीकी गोदमे सटे हुए उन सामर्थ्यशाली ईश्वर-हरका भजन करो' ॥ १८ ॥

सिद्धान्तपुत्रौ भवतः सदा प्रियौ स्वबुद्धिवीर्यप्रभवौ च शोभनौ ।
एवं विचार्यैव जगद्गुरुं हरं यूयं भजध्वं तत आप्स्यथेप्सितम् ॥१९॥

'अपना सिद्धान्त अपनी बुद्धिसे प्रकट होता है और अपना पुत्र अपने वीर्यसे। इसीलिए वे दोनो सदा ही प्रिय एव शोभायमान जान पडते है। ऐसा विचार करके तुमलोग जगद्गुरु-हरका भजन करो। इससे तुम्हे मनोवाञ्छित फल प्राप्त होगा' ॥ १९ ॥

धन्यः स राजाऽपि च यस्य पूरुषा राज्ञा समं प्राप्तुममुं सुखप्रदम् ।
दृढं यतन्ते कपटैर्हठैरपि शृण्वन्ति वाचं च विभोर्गुणाश्रिताम् ॥२०॥

'वह राजा कस भी धन्य है। जिसके सेवक राजाके साथ ही उन सुखदायक प्रभुको प्राप्त करनेके लिए दृढ प्रयत्न करते है तथा कपट और हठसे भी उन भगवान्के गुणोसे सम्बन्ध रखनेवाली वार्तायें सुना करते है' ॥ २० ॥

**पुरः समागत्य तदैव वैष्णवः सशङ्खचक्राङ्कितबाहुयुग्मकः।**
**उद्दिश्य तान् व्यक्तमिदं जगाद भो किं पश्यथैवं तु भजध्वमव्ययम् ॥२१॥**

तदनन्तर जिनकी दोनो भुजाओमे शख-चक्रके चिह्न थे, वे वैष्णव सज्जन तत्काल सामने आकर उन राज-सेवकोसे यह सुस्पष्ट वचन बोले—'अरे भाइयो! क्या देखते हो। अविनाशी श्री हरिका भजन करो' ॥ २१ ॥

**भुक्तिं च मुक्तिं च ददाति तोषितो भक्तेभ्य इत्थं भगवानसौ हरिः।**
**को द्वापरो विष्णुरयं स्वशक्तितो वेवेष्टि विश्वं तु विसृज्य यः स्वयम् ॥२२॥**

'वे भगवान् श्रीहरि ऐसे हैं कि सन्तुष्ट किये जानेपर वे अपने भक्तोको भोग और मोक्ष भी दे डालते हैं। उनसे दूसरा कौन है?। ये भगवान् विष्णु ही अपनी शक्तिसे सम्पूर्ण विश्वकी सृष्टि करके स्वयं उसमे व्याप्त हो रहे हैं' ॥ २२ ॥

**कंसादयः सन्ति सहस्रशोऽधुना सुदुर्धरा दुर्हृद आततायिनः।**
**तानेव संहर्तुमिहाऽऽगतं ध्रुवं तं विष्णुमेनं ह्यवगन्तुमर्हथ ॥२३॥**

'तुम सबलोग यह जान लो कि इस समय जगत्मे जो कस आदि सहस्रो दुर्धर्ष एव दुष्ट-चित्त आततायी हैं, निश्चय ही उन्हीका सहार करनेके लिए ये भगवान् विष्णु यहाँ स्वय पधारे हैं' ॥ २३ ॥

**प्रियैर्वयस्यैरनुगैर्गवादिभिर्वृतः सरामो व्रजराजनन्दनः।**
**दृग्गोचरीभूय तदा महात्मनामेषां पुरस्तादविदूरतो ययौ ॥२४॥**

उस समय बलराम सहित व्रजराज-नन्दन श्रीकृष्ण अपने प्रिय सखाओ, सेवको और गौओ आदिसे घिरे हुए उन महात्माओके सामने दृष्टिगोचर हो निकट-से ही जाने लगे ॥२४॥

**दृष्ट्वैव तं पद्मदलायतेक्षणं प्रसन्नवक्त्रं शरदिन्दुसुन्दरम्।**
**मयूरपिच्छाश्रितशीर्षमुन्नसं प्रसन्नतां प्राप मुनीन्द्रसंहतिः ॥२५॥**

उनके विशाल लोचन प्रफुल्ल-कमल-दलके समान जान पडते थे। मुखपर प्रसन्नता छा रही थी। उनका सौन्दर्य शरत्कालके चन्द्रमाको लज्जित कर रहा था। मस्तकपर मोरपखका मुकुट सज्जित था। उनकी नासिका ऊँची थी। उन्हे देखते ही वह मुनीन्द्र-समुदाय आनन्दमग्न हो गया ॥ २५ ॥

पुनः प्रगायोपरिगीतमार्तिहृत् तद्गीतमेने मुनयः प्रहर्षिताः ।
स्वध्येय आविश्य मनः समुज्ज्वलं ह्यानन्दमग्ना ननृतुः पुरा यथा ॥२६॥

तदनन्तर ऊपर बताये हुए उसी आर्ति-हारी उत्तम गीतको पुन गाकर वे मुनि हर्षसे खिल उठे और विशुद्ध मनको अपने-अपने ध्येयमे लगाकर आनन्दमग्न हो पूर्ववत् नांचने लगे ॥ २६ ॥

कंसस्य भृत्या इव आत्मनो(ऽ)हितं विलोक्य धृष्टैः शिशुभिर्वृतं स्वमुम् ।
स्वपार्षदैः संवृतमन्तकं यथा वितर्क्य तस्माद्भयमाप्य दुद्रुवुः ॥२७॥

इधर कसके सेवक धृष्ट बालकोसे घिरे हुए उन भगवान्‌को अपना अहित जान और पार्षदोसे घिरे हुए यमराजके समान मानकर भयभीत हो वहांसे भाग खडे हुए ॥ २७ ॥

तत्रत्यानां काल आनन्दनाम्ना ध्येयेनैवाऽऽक्रान्त एवं जगाम ।
कृत्यैः सोऽयं कृष्ण औपद्रवैः स्वैः प्राप्तानन्दान् स्वान् प्रकुर्वन् रराज ॥२८॥

उन गोकुलवासियोका वह समय आनन्द-नामधारी ध्येय-तत्त्वसे आक्रान्त हो इस प्रकार सुखसे बीतने लगा और वह बालक कृष्ण अपने उपद्रवी कृत्योसे सबको आनन्द प्रदान करता हुआ अतिशय शोभा पाने लगा ॥ २८ ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
सर्गोऽगादेकत्रिंशोऽयं महाकाव्ये स्तवात्मके ॥२९॥

कृष्णप्रसाद घिमिरेको कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे यह एकतीसवां सर्ग पूरा हुआ ॥ २९ ॥



# द्वात्रिंशः सर्गः

[ भगवतो नवनीतादिचौर्यलीला । गोपीभिस्तद्बन्धनञ्च । ]

( कव्वालीगीतिरियं 'भाषायां गजल' इति चोच्यते )

गृहे चौरोऽयमायातो भवन्तः सर्वे आयान्तु ।
निगृह्णीमो वयं ह्येनं भवन्तः सर्वे आयान्तु ॥१॥

'आप सबलोग आइये । घरमे यह चोर घुस आया है । हम सबलोग मिलकर इसे पकडे । इसलिए आप सबलोग आ जाइये' ॥ १ ॥

पयस्यं तत्प्रियं स्वेष्टं गृहस्थान् मोहयित्वाऽयम् ।
हरत्यस्माकमायान्तु भवेद्धास्यो विगृह्योऽयम् ॥२॥

'इसको दूध दही घी और माखन आदि बडा प्रिय है । यही इसकी अभीष्ट-वस्तु है । यह हम गृहस्थोको मोहमे डालकर हमारी ये वस्तुये हर लेता है । इसलिए आपलोग आइये और इसे पकडिये जिससे यह लोगोमे उपहासका पात्र बने' ॥ २ ॥

पिधायैवं गृहद्वारं मया संरुद्ध एषोऽस्ति ।
भवन्तश्चाऽत्र पश्यन्तु गृहे चौरोऽस्ति धृष्टोऽस्ति ॥३॥

'मैने घरका दरवाजा बन्द करके इसे रोक रखा है । आपलोग यहाँ आकर इसे देखिये । घरमे चोरी करनेवाला यह चोर बडा ही धृष्ट ( सीनाजोर ) है' ॥ ३ ॥

( भुजङ्गप्रयातं वृत्तम् )

कदाचिद् व्रजेशस्य पुत्रो विनोदी पयस्यस्य चौर्ये गतो गोकुलानि ।
प्रविष्टो गृहेष्वेकको भिन्नरूपं गृहीत्वा गृहस्थान् विमोह्यैव चान्तः ॥४॥

एक समयकी बात है कि व्रजराज-नन्दका वह विनोदी पुत्र गोरसकी चोरीके लिए गोकुलमे जाकर वहाँके घरोमे अकेला ही भिन्न-भिन्न रूप धारण करके घुस गया और गृहस्थोको मोहमे डालकर ही अन्दर दाखिल हो गया ॥ ४ ॥

स गत्वाऽत्र खादन् पयस्यं यथेष्टं विदृष्टो गृहिण्या गृहस्यैव रन्ध्रात् ।
तदैवाऽनया गीतमेतत् प्रगाय समाकारिताः प्रतिवेश्याः समन्तात् ॥५॥

घरमे घुसकर वह इच्छानुसार गोरस खाने लगा । गृहिणीने घरके एक छेदसे उसको ऐसा करते देख लिया । फिर उसीने यह उपर्युक्त गीत गाकर आस-पासके लोगोको चारो ओरसे पुकारा ॥ ५ ॥

**तदाऽऽगत्य कश्चौर आ चौर एवं ब्रुवन्त्यस्त्रियः प्रोचुरौत्कण्ठ्यतस्ताम् ।**
**तथैव स्थितो निर्भयश्चौरबालो गवाक्षैस्तया दर्शितो हन्त ! ताभ्यः ॥६॥**

तब बहुत-सी स्त्रियाँ 'कौन चोर ? आ चोर !' इत्यादि बोलती हुई आईं और उत्कण्ठापूर्वक उस पुकारनेवाली स्त्रीसे पूछने लगी । उस स्त्रीने खिडकीके छेदसे उन्हे उस बालकको दिखा दिया । वह चोर बालक उसी प्रकार निर्भय खडा था ॥ ६ ॥

**तदानीमिमा मन्त्रयामासुरित्थं विगृह्योऽयमस्माभिरत्रैव चाऽद्य ।**
**विसंतर्ज्य एवं पुनश्चैष बालो न कुर्याद्विकर्मेदृशं गोकुलेषु ॥७॥**

उस समय इन स्त्रियोने इस प्रकार सलाह किया—'आज हमलोग इसे यही पकड ले और इस प्रकार डरावे, धमकावे कि यह बालक फिर कभी गोकुलमे ऐसा अनुचित कर्म न करे ॥ ७ ॥

**गृहद्वारमुद्घाट्य चाऽन्तः प्रविश्य प्रगृह्णीम एनं समामन्त्र्य चेमाः ।**
**तथाकृत्य चाऽन्तर्गतास्तं क्षणेन निगृह्याऽऽययुः प्राङ्गणे तद्गृहस्य ॥८॥**

'घरका दरवाजा खोलकर भीतर घुसकर हम सब इसे पकड ले ।' इसप्रकार सलाह करके वे भीतर गई और क्षण-भरमे उसे पकडकर घरके आँगनमे ले आईं ॥ ८ ॥

**त्वमस्माकमात्मा प्रियः प्राणतत्त्वं व्रजेशस्य योग्योऽर्भक. स्नेहपात्रम् ।**
**कुकर्मेदृशं किं करोषीह कृष्ण ! प्रदर्श्याऽभितो धार्ष्ट्यमस्मद्गृहेषु ॥९॥**

फिर कहने लगी—'कृष्ण ! तुम हमारे प्रिय आत्मा और प्राणतत्त्व हो । व्रजराजके योग्य पुत्र हो और स्नेहके पात्र हो । बताओ तो हमारे घरोमे ढिठाई दिखाकर चारोओर ऐसा कुकर्म क्यो करते हो' ? ॥ ९ ॥

**समुक्तो गृहिण्या भयान्नेत्रयुग्मे चले कारयित्वा शरीरं प्रकम्प्य ।**
**कराभ्यां तु संप्रोञ्छ्य नेत्राम्बुजे स्वे बभूवाऽत्र रोरूयमाणः स बालः ॥१०॥**

गृहिणीके ऐसा कहनेपर भयसे दोनो नेत्रोको चञ्चल करके शरीरको कँपाकर दोनो हाथोसे अपने दोनो नेत्रोको पोछता हुआ वह बालक जोर-जोरसे रोने लगा ॥ १० ॥

**तदैवाऽभितो गोकुलानां गृहाणि प्रविष्टो गृहे चौर आयात चाऽत्र ।**
**इतीदं वचः श्रूयते स्माऽत्र ताभिः समुक्तं ह्यपूर्वं व्रजस्थाभिराभिः ॥११॥**

उसी समय गोकुलके अन्य घरोके आस-पाससे भी यह आवाज सुनाई देने लगी कि घरमे चोर घुस आया है—आओ, आओ । यह अपूर्व बात उन-उन घरोकी व्रजबालाओने कही थी ॥ ११ ॥

इदानीं तु संस्थाप्य सद्मान्तराले तमः पूर्णकोष्ठेऽत्र रुद्ध्वा सुखेन ।
पुनर्नेतुमेनं यशोदासमीपं विचार्यं शुभेऽस्माभिरेवं शुभं स्यात् ॥१२॥

तब इस प्रथम गृहकी स्त्रियोंमें-से एकने सलाह दी—'शुभे ! इस समय तो हमलोग इस चोर बालकको घरके भीतर अँधेरे कमरेमे सुख-पूर्वक बन्द कर दें। फिर इसे यशोदा जीके समीप ले चलनेका विचार किया जायेगा। ऐसा करनेसे ही भला होगा ॥ १२ ॥

तदायाहि बाले ! समाप्य स्वकार्यं व्रजामो वयं प्रातिवेश्यालयांश्च ।
विपश्याम उत्काः क एषोऽस्ति चौरः स्वमौत्कण्ठ्यमेवं निरस्याम इत्थम् ॥१३॥

'बाले ! अत इस समय घरका काम समाप्त करके आओ, पडोसके घरोमे चलें। उत्कण्ठा बढ रही है। देखें, यह चोर कौन है ? इस प्रकार हमलोग अपनी उत्सुकताको शान्त करें' ॥ १३ ॥

कयाचित्तथाभाषितां वाचमेनां निशम्याऽवदद् गेहिनी सस्मितं द्राक् ।
भवत्यः सुखं गच्छताऽहं तु बालं न मुञ्चाम्युपायैस्तु बद्ध्वा नयामि ॥१४॥

किसी स्त्रीका ऐसा भाषण सुनकर गृहिणीने तुरन्त मुस्कराकर कहा—'आपलोग सुखपूर्वक जाइये। मै तो इस बालकको नही छोडूँगी। अनेक उपायोसे बाँधकर इसे ले जाऊँगी' ॥ १४ ॥

गृहिण्या वचस्तत् समाकर्ण्यमिष्टं ततो जग्मुरौत्सुक्यपात्राणि सर्वाः ।
प्रविष्टा गृहे प्रातिवेश्ये पुनस्ता रुदन्तं तमेनं ह्यपश्यन् निरुद्धम् ॥१५॥

गृहिणीका वह मधुर कथन सुनकर उत्सुक हुई अन्य सब व्रजाङ्गनाये वहाँसे चली गईं। एक पडोसके घरमे प्रवेशकर उन्होने देखा कि फिर वही बालक यहाँ पकडा जाकर रो रहा है ॥ १५ ॥

निरीक्ष्यैव ता मातृकल्पाः पुरस्तात् स चक्रन्द चाऽऽर्त्येव पश्चाज्जगाद ।
विपश्यन्तु मां मातरः पीड्यमानं दयन्तां च तूर्णं त्वितो मोचनार्थम् ॥१६॥

उन माता जैसी स्त्रियोको सामने देखते ही वह बालक मानो पीडासे चीख उठा और फिर बोला—'माताओ ! देखिये, मुझे पीडा दी जा रही है। आपलोग शीघ्र यहाँसे मुझे छुडानेके लिए दया कीजिये' ॥ १६ ॥

तथावस्थितं पूर्वगेहे तमेनं निरीक्ष्याऽऽगता अत्र पूज्याः पुरन्ध्र्यः ।
तथाभूतमेनं समीक्ष्येह भूयो महाश्चर्यगर्ते निपेतुस्तदानीम् ॥१७॥

वे पूजनीया व्रजाङ्गनाये पहलेवाले घरमे इस बालकको उस रूपमे अवस्थित देखकर यहाँ आई थी। इस घरमे पुन इसे उसी अवस्थामे देखकर वे उस समय महान् आश्चर्यके गर्तमे जा गिरी ॥ १७ ॥

**स बालस्ततोऽभाणि ताभिः किमर्थं विगृह्णन्ति चौरं यथा त्वामिमाश्च ।**
**कुतः किं त्वयोपद्रवश्चाऽत्र सत्यं वद त्वं यतो मुच्यसे शीघ्रमेव ॥१८॥**

तब उन स्त्रियोने उस बालकसे कहा—'क्यो ये सब तुम्हे चोरकी तरह पकडे हुये हैं। सच-सच बताओ। तुमने यहाँ उपद्रव क्यो और क्या किया है ? बता दोगे तो शीघ्र ही छोड दिये जाओगे' ॥ १८ ॥

**अवोचच्छलेनैष वाचं निरुध्य क्षुधार्तोऽहमायात उच्चैः प्रधावन् ।**
**अदृष्ट्वा निलीना इमाः शून्यगेहे प्रविश्याऽऽद्मासान्तु हैयङ्गवीनम् ॥१९॥**

उनकी बातको बीचमे ही रोककर इस बालकने छलसे कहा—'मैया ? मे भूखसे पीडित था। अत जोर-जोरसे दौडता हुआ यहाँ आ गया। ये सब सूने घरमे छिपी हुई थी। अत इन्हे न देखकर मै घरके भीतर घुस आया और इनका माखन खाने लगा ॥ १९ ॥

**क्षुधार्तोऽत्ति भक्ष्यं तु कोऽस्यापराधो मया वा कृतं किं तदन्यद्वदन्तु ।**
**दरिद्रा इमा मां निगृह्णन्ति किञ्चित् सुधाभे घृते खादितेऽप्यत्र मान्याः ॥२०॥**

'जो भूखसे पीडित होता है, वह भक्ष्य-पदार्थ मिलने पर उसे खाता ही है। उसका क्या अपराध है ? मैने इसके सिवा और क्या किया है ? तुम्ही बताओ। माननीय माताओ ! मैने यहाँ थोडा सा अमृतसमान मधुर माखन खा लिया है, जिसके कारण ये दरिद्र गोपियाँ मुझे पकड रही हैं' ॥ २० ॥

**सतथ्यं तथा युक्तिमद्वाक्यमेतन्निशम्याऽस्य हृष्टाः पुरन्ध्र्योऽवदंश्च ।**
**सहेलं विहस्यैव तं साधुबाल ! भवान्नापराधी त्विमा दूषयन्ति ॥२१॥**

उस बालककी यह युक्ति-युक्त तथा तथ्य बात सुनकर वे व्रजाङ्गनायें बहुत प्रसन्न हुईं और लीलापूर्वक हँसकर बोली—'शाबाश बच्चे ? तुमने कोई अपराध नही किया है। ये गोपियाँ झूठे ही तुम पर दोषारोपण करती हैं' ॥ २१ ॥

**तदैवाऽब्रवीद् गेहिनी धृष्टमेनं गृहीत्वा यशोदासमीपं नयामि ।**
**अनेनाऽत्र यद्यत् कृतं तत्कुकृत्यं सभायां स्वतोऽहं समुद्घाटयामि ॥२२॥**

उसी समय उस घरकी गेहिनी बोल उठी—मै इस धृष्ट-बालकको पकडकर यशोदा-जीके पास ले जाऊँगी। इसने यहाँ जो-जो कुकृत्य किया है उसे मै स्वय भरी-सभामे खोल-खोलकर कहूगी' ॥ २२ ॥

**अभीष्टं कुरुष्वेति तां सेर्ष्यमुक्त्वा गतास्ताः पुनर्द्रष्टुमन्यालयेषु ।**
**श्रुतस्तेषु शब्दो यदा ताभिरेवं प्रविष्टो गृहे चौर आयात चेति ॥२३॥**

'अच्छा तुम्हारी जो इच्छा हो सो करो' ईर्ष्या पूर्वक ऐसा कहकर वे सब स्त्रियाँ पुन दूसरे घरोमे वहाँका कौतुक देखनेके लिए गई। क्योकि उन्होने उन घरोमे भी यह शब्द सुना था कि 'मेरे घरमे चोर घुस आया है। आओ' ॥ २३ ॥

**अपश्यंस्तदाऽत्राऽपि तं मेघनीलं करैः संगृहीतं व्रजस्थाभिरित्थम्।**
**सदोषं तथा साश्रुनेत्रे मृजन्तं कराभ्यां धृतं पात्रमेकं घृतस्य ॥२४॥**

वहाँ भी उन व्रज-गोपियोने उस मेघ-श्याम बालकको व्रजवनिताओंके हाथो उसी प्रकार पकडा गया देखा। वह अपराधी तो था ही आँसूभरे नेत्रोको दोनो हाथोसे पोछ रहा था। उसके पास ही माखनका एक पात्र भी रखा हुआ था ॥ २४ ॥

**अहो! किं कृतं श्रीमतीभिर्ह्ययोग्यं समुक्ताः स्त्रियः प्रोचुरभ्यागतास्ताः।**
**कृतं दुष्कृतं कज्जलाभेन तेन गृहं दूषितं चोरितं सद्घृतादि ॥२५॥**

तत्काल आई हुई स्त्रियोने उस घरकी गोपियोसे कहा—'अहो! आपलोगोने यह क्या अनुचित कर्म किया है!' तब वे बोली—'इस काले-कलूटेने बहुत बुरा काम किया है। इसने माखन आदि तो चुराया ही है, हमारे घरको भी दूषित कर दिया है ॥ २५ ॥

**नयामस्तदेनं व्रजेशस्य पार्श्वं भवेन्न्यूनमौपद्रवं येन चाऽस्य।**
**भवत्यो द्रुतं गच्छताऽन्यालयेऽपि प्रविष्टो गृहे चौर इत्यस्ति वार्ता ॥२६॥**

'इसलिए हमलोग इसे व्रजराजके पास ले जायेगी। जिससे इसका उपद्रव कुछ कम हो। आप सबलोग तुरन्त दूसरे घरोमे जाइये। क्योकि वहाँ भी चोरके घुसनेकी बात सुनाई पडी है' ॥ २६ ॥

**निशम्येदृशीं वाचमासां ततस्ताः समाजग्मुरौत्कण्ठ्यपात्राणि सर्वाः।**
**अपश्यन्निमं चौरवत्सापराधं धृतं स्त्रीभिरन्यालयेऽप्युच्चधैर्यम् ॥२७॥**

उनकी ऐसी बात सुनकर वे सबकी सब उत्कण्ठित व्रजगोपियाँ वहाँसे चली गई और दूसरे घरोमे भी उसी बालकको चोरके समान अपराधी तथा वहाँकी स्त्रियो द्वारा पकडा गया देखा। उसका धैर्य बहुत ऊँचा था ॥ २७ ॥

**दृष्ट्वैव तं सजलमेघसमानकृष्णं कृष्णं त्वमुत्र चकिता व्रजमातरस्ताः।**
**पप्रच्छुरेनमसकृद् व्रजराजबाल! प्राक् ब्रूहि नोऽत्र कति चाऽसि कथं विभासि ॥२८॥**

सजल-जलधरके समान श्यामवर्णवाले कृष्णको वहाँ भी देखकर वे व्रजवासिनी मातायें चकित हो उठी। और व्रजराजके उस बालकसे बार-बार पूछने लगी—'बेटा! पहले यह बताओ कि यहाँ तुम कितने हो और कैसे अनेक रूपोमे प्रकाशित होते हो?' ॥ २८ ॥

पूज्याभिराभिरिह मातर! इत्थमद्य रुद्धोऽहमस्म्यवददत्र स यत्र तत्र।
रुन्धन्ति मां सहृदयाश्च तथा क्षणाद्वा! सोऽहं विरौमि विलपामि दयध्वमद्वा ॥२९॥

वह बोला—'अन्यत्रकी भाँति यहाँ भी माताओ! इन पूजनीया व्रजदेवियोने इस प्रकार मुझे यहाँ पकड रखा है। इसी प्रकार जहाँ जो भी सहृदयलोग है, मुझे क्षण-भरमे पकड लेते और रोक रखते हैं। अत मै रोता हूँ, बिलखता हू। आपलोग मुझपर दया करें॥ २९॥

नाऽहं करोमि पुनरेवमिमा अतो मां मुञ्चन्तु शीघ्रमहमस्मि च नीयमानः।
पित्रोः समीपमथ मां तु समीक्ष्य साध्यः शृण्वन्तु मेऽद्य वचनं गुणगृध्नुरस्मि ॥३०॥

'अब मै पुन कभी ऐसा नही करूँगा। अत मुझे छोड दो। मुझे शीघ्र ही माता-पिताके पास ले जाया जायेगा। इसलिये साध्वी देवियो! मेरी दयनीय दशा देखकर आपलोग मेरी बात सुने। मै गुणग्राही हूँ'॥ ३०॥

इत्युक्तवन्तमथ तं गृहिणी ह्यवोचत् त्वं कज्जलाभ! विहितच्छल इत्थमेव।
नित्यं कदर्थयसि नोऽत्र गृहान् भ्रमित्वा त्वां तन्नयामि चल राजसभासु धृष्टः ॥३१॥

उसके ऐसा कहनेपर गृहिणीने कहा—'काले कृष्ण? तू प्रतिदिन ही ऐसा छल करता है। और हमारे घरोमे घूस-घूसकर हमे क्लेश देता है। अत धृष्ट! चल तुझे राजसभामे ले चलती हूँ'॥ ३१॥

सेत्युक्त्वा तं समारोप्य स्कन्धे विन्यस्य भारवत्।
स्वोत्तरीयेण चाच्छाद्य गोकुलेशसभां ययौ ॥३२॥

ऐसा कहकर उसने कृष्णको बोझकी तरह अपने कन्धोपर ले लिया और अपनी ओढनीसे ढँककर उसे गोकुलेश्वर नन्दकी सभामे ले गई॥ ३२॥

इत्थं गोकुलनार्यस्ताश्चौरं स्वस्वगृहागतम्।
युक्त्या प्रगृह्य प्रच्छाद्य जग्मू राजसभां प्रति ॥३३॥

इसी प्रकार गोकुलकी दूसरी स्त्रियाँ भी अपने-अपने घरमे आये हुए माखनचोर कृष्ण-को युक्तिपूर्वक पकड कर और वस्त्रसे मुँह ढँककर राजसभामे ले गईं॥ ३३॥

नरा नार्यश्च तत्रत्या आसामनुपदं ययुः।
यातोऽहमपि विद्वांऽऽसोऽप्यायाताऽस्य विचिन्तकाः ॥३४॥

वहांके दूसरे-दूसरे नर और नारियाँ भी उन गोपियोके पीछे पीछे गए। विद्वानो ! तथा इस बालककी लीलाका चिन्तन करनेवालो ! मै भी उन देवियोके साथ चला। आप भी चाहे तो आ जांय ॥ ३४ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**गतो द्वात्रिंशसर्गोऽयं महाकाव्ये स्तवात्मके ॥३५॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे यह बत्तीसवां सर्ग पूरा हुआ ॥ ३५ ॥



# त्रयस्त्रिंशः सर्गः

[ देव्या कीर्तिदाया योगमार्गेण सुषुप्तिस्वप्नजाग्रदादिदशायां तदूर्ध्वं विगताया-
मवस्थायाञ्च सम्प्राप्ततत्तदनुभववर्णनम् ]

( अनुष्टुब्वृत्तम् )

ब्रह्मरात्रिरुपावृत्ता ब्रह्मरूपप्रकाशिनी ।
यस्यां विक्रीडते बुद्धिः प्राणिनामात्मरूपिणी ॥१॥

अब ब्रह्मके स्वरूपको प्रकाशित करनेवाली ब्रह्मरात्रि ( ब्राह्मी वेला ) आई। जिसमे प्राणियोकी बुद्धि आत्मरूप होकर विलास करती है ॥ १ ॥

तस्यां प्रवर्तमानायां प्रबुद्धा विबुधा बुधाः ।
नरा नार्यश्च विश्वस्मिन् ब्रह्मानन्दमभीप्सवः ॥२॥

ब्रह्मवेलाके आ जानेपर बुध और विबुध ( विद्वान् और विज्ञ देवगण ) जाग उठे। ब्रह्मानन्दकी इच्छा रखनेवाले समस्त स्त्री-पुरुष निद्रा त्यागकर उठ बैठे ॥ २ ॥

विस्मृत्य सकला वार्ता ऐहिकामुष्मिकीश्च ताः ।
संलग्नास्ते तमभ्येतुं स्व-स्व-कर्मणि संयताः ॥३॥

इहलोक और परलोककी सारी बाते भूलकर वे सबलोग उस ब्रह्मानन्दको प्राप्त करनेके लिए अपने-अपने कर्तव्यमे सयत होकर लग गए ॥ ३ ॥

गोकुलावसथे चास्मिन् गोप-गोपीभिरावृते ।
व्रजमण्डलकेऽप्यद्य प्रबुद्धास्तादृशा जनाः ॥४॥

गोपो और गोपियोसे घिरे हुए गो-समुदायके निवासभूत इस व्रजमण्डलमे भी आज वैसे लोग जाग उठे थे ॥ ४ ॥

समाप्य विधिवत् कृत्यं शौच-स्नानादिकं स्वकम् ।
स्वेष्टमाराधयामासुर्यथा-ज्ञानं स्वकर्मभिः ॥५॥

अपने शौच-स्नानादि-कृत्यको विधिपूर्वक समाप्त करके उनलोगोने अपने ज्ञानके अनुसार स्ववर्णाश्रमोचित कर्मोद्वारा इष्ट-देवताकी आराधना की ॥ ५ ॥

आसीत्तत्र गृहं चैकं रमाक्रीडं मनोरमम् ।
वसतः स्म सुखं यत्र सुशीलौ गोपदम्पती ॥६॥

उस व्रजमे एक बडा मनोरम गृह था, जो लक्ष्मीका क्रीडास्थल जान पडता था। वहाँ दो सुशील गोप-दम्पति सुखपूर्वक निवास करते थे ॥ ६ ॥

**तयोर्नरः सदाचारो गोपवंशप्रदीपकः ।**
**वृषभानुरितिख्यातो गोप आसीत् सुधार्मिकः ॥७॥**

उन दोनोमे जो पुरुष था, वह सदाचारी होनेके साथ ही गोपवशका दीपक था—अपने कुलको उजागर करनेवाला था। उसका नाम था वृषभानु। वृषभानु गोप बडे धर्मात्मा थे ॥ ७ ॥

**स्त्रीणां सद्रत्नभूतैषा कीर्तिदेति श्रुता जनैः ।**
**पूज्या गोगोपगोपीनां चकास्ति स्माऽखिले व्रजे ॥८॥**

नारी, स्त्रियोमे रत्नभूता कीर्तिदाके नामसे विख्यात थी। गोप और गोपियाँ सभी उसका सम्मान करते थे। वह समस्त व्रजमण्डलमे बडी शोभा पाती थी ॥ ८ ॥

**तयोरेका सुता साऽऽसीद् गुणस्थानं सुरूपिणी ।**
**स्व-शक्त्या रूप-सम्पत्त्या प्रोज्ज्वला विश्व-मोहिनी ॥९॥**

इन गोप-दम्पतिके एक पुत्री थी। जो गुणोका आगार तथा सुन्दर रूपवाली थी। वह अपनी शक्ति तथा रूपसम्पत्तिसे परम उज्ज्वल एव विश्वके मनको मोह लेनेवाली थी ॥९॥

**सौधोज्ज्वलं गृहं तस्याः सर्वाधिष्ठानमद्भुतम् ।**
**प्रबुद्धैर्विबुधैः सिद्धैः सेव्यमानं बभौ व्रजे ॥१०॥**

कीर्तिदाका अट्टालिकाओसे सुशोभित अद्भुत भवन समस्त वस्तुओका एकमात्र अधिष्ठान था। उत्तम ज्ञानी, विद्वान् और सिद्ध महात्माओसे नित्य सेवित रहकर वह भवन व्रजमे अधिक शोभा पाता था ॥ १० ॥

**रात्रौ स्वसुतया सार्धं स्वतल्पे शङ्करं हृदा ।**
**ध्यायं ध्यायं प्रसुप्ता सा स्वप्नमेकं व्यलोकत ॥११॥**

देवी-कीर्तिदा रातमे अपनी पुत्रीके साथ अपनी शय्यापर मन ही मन भगवान् शङ्करका ध्यान करती हुई जब सोई थी, उस समय उन्होने एक स्वप्न देखा ॥ ११ ॥

**काल आसीत् प्रभातोऽद्य मुहूर्तोऽपि शुभोदयः ।**
**यस्मिंस्तन्मन आरूढं तत्स्वप्नपथमद्भुतम् ॥१२॥**

उस समय प्रात काल हो रहा था। वह मुहूर्त भी शुभोदयका सूचक था। उसी वेलामे कीर्तिदाका मन उस अद्भुत स्वप्न मार्गपर आरूढ हुआ था ॥ १२ ॥

तया दृष्टमिदं तत्र प्रागाकाशमपावृतम् ।
गुरुणा तमसाच्छन्नं शबलं सर्वव्याप्तिमत् ॥१३॥

देवी-कीर्तिदाने स्वप्नमे यह देखा—'पहले खुला आकाश प्रकट हुआ, जो सर्वत्र व्यापक तथा प्रगाढ अन्धकारसे आच्छन्न होनेके साथ ही चित्र-विचित्र रङ्गोसे युक्त दिखाई देता था ॥ १३ ॥

नामरूपाऽऽत्मकं किञ्चिन्नाऽत्राऽऽसीद्वस्तुमात्रकम् ।
शून्यं शान्तमतर्क्यं च सा ददर्शाऽखिलं त्विदम् ॥१४॥

उसमे नाम-रूपात्मक कोई वस्तु नही थी। वह सारा आकाश शून्य, शान्त और अतर्क्य था। देवी-कीर्तिदाने उसे वैसा ही देखा ॥ १४ ॥

नीहारपिहिताकाशे दिग्भ्रमो जायते यथा ।
तथैवाऽऽविरभून्मोहस्तस्याश्चित्तेऽप्यहो ! तदा ॥१५॥

'कुहरेसे भरे हुए आकाशमे जैसे दिग्भ्रम हो जाय, उसी प्रकार उसके चित्तमे उस समय आश्चर्यजनक मोहका आविर्भाव हुआ ॥ १५ ॥

दृष्ट्वैतत्सकलं तत्र भयोद्विग्ना चलन्मतिः ।
स्वात्मानं धारयामास स्वात्मना सुस्थिरा सती ॥१६॥

उनकी बुद्धि विचलित हो गई। फिर भी सुस्थिर स्वभाववाली उस सतीने अपने-आप ही अपने हृदयको स्थिरता पूर्वक धारण किया ॥ १६ ॥

गतो मौहूर्तिकः काल इत्थमेव शनैः शनैः ।
सद्विचारोदयो जातस्तदाऽऽत्मनि ततोऽमले ॥१७॥

इसीप्रकार धीरे-धीरे एक मुहूर्तका समय व्यतीत हो गया। फिर तो उनके निर्मल अन्त करणमे उत्तम विचारका उदय हुआ ॥ १७ ॥

यतो विचारयामास कीर्तिदा ध्यानमास्थिता ।
गाढं तमोमयं सर्वं किमेतद् दृश्यतेऽद्भुतम् ॥१८॥

कीर्तिदाने ध्यान लगाकर इस बात पर विचार किया कि प्रगाढ अन्धकारमय दीखने-वाला यह सारा अद्भुत दृश्य क्या है ? ॥ १८ ॥

नामरूपात्मकानीह वस्तुमात्राणि कान्यपि ।
न दृश्यन्ते विदृश्यन्ते शून्यप्रायाणि सर्वतः ॥१९॥

'यहाँ नामरूपात्मक वस्तुमे कुछ भी नही दिखाई देती है, सबओर शून्यमात्र ही दृष्टि-गोचर होता है' ॥ १९ ॥

**वर्तमानोऽप्ययं देहो मदज्ञानाय कल्पते ।**
**नास्म्यहं कीर्तिदा सेति भावः स्फुरति चात्मनि ॥२०॥**

'यद्यपि मेरा यह देह विद्यमान है, तो भी यह मेरे अज्ञानका ही कारण बनता है। मैं वह कीर्तिदा नही हूँ, ऐसा भाव हृदयमे स्फुरित होता है' ॥ २० ॥

**इमानीन्द्रियजालानि मद्देहानुगतान्यपि ।**
**स्वस्वकर्मासमर्थानि चानुभूयन्त आत्मनि ॥२१॥**

'मेरे देहमे अनुगत जो ये इन्द्रिय-समुदाय है, वे सभी अपने-अपने कर्ममे असमर्थ हैं, ऐसा अनुभव मेरे हृदयमे हो रहा है' ॥ २१ ॥

**शब्दग्रहणसामर्थ्यं नास्ति श्रोत्रेन्द्रियेऽप्यहो ! ।**
**तच्छब्दविषयाभावाद् धृषीकाभाव आप्यते ॥२२॥**

'मेरी श्रवणेन्द्रियमे शब्दग्रहणकी शक्ति नही है। उसके विषयभूत शब्दका अभाव होनेसे उस इन्द्रियका अभाव प्राप्त होता है' ॥ २२ ॥

**वस्तुस्पर्शनचातुर्यं सत्यं नास्ति त्वगिन्द्रिये ।**
**तत्स्पर्शविषयाभावो विद्यते यत्समन्ततः ॥२३॥**

'सचमुच ही मेरे इस त्वगिन्द्रियमे तत्तत् वस्तुओके स्पर्शनकी चातुरी या सामर्थ्य नही है। क्योकि सबओरसे स्पर्श-विषयका अभाव ही विद्यमान है' ॥ २३ ॥

**अत्र रूपस्य का वार्ता रूपयेत् किं तदिन्द्रियम् ।**
**तैजसं चापि तच्चक्षुः सान्धकारं प्रदृश्यते ॥२४॥**

'इस स्थितिमे रूपकी तो बात ही क्या है ? वह चक्षु-इन्द्रिय भी क्या निरूपण करे—रूप-सम्बन्धि इन्द्रिय किसका निरूपण करे। वह नेत्र जो तेजस-पदार्थ कहा जाता है, मुझे अन्धकारयुक्त दिखाई देता है' ॥ २४ ॥

**रसना च रसश्चोभौ यदन्योन्याश्रितावपि ।**
**पृथग्भूतौ विदृश्येते रसाभावाद्विशेषतः ॥२५॥**

'रसना तथा रस, दोनो जो एक दूसरेपर आश्रित हैं, वे भी विशेषत रसका अभाव होनेसे पृथक्-पृथक् दिखाई पड़ते हैं' ॥ २५ ॥

घ्राणेन्द्रियमिदं भूयो विद्यमानमपि ध्रुवम् ।
अधिष्ठानमृते किञ्चिन्नोपयुक्तं भवत्यहो ! ॥२६॥

'फिर यह घ्राणेन्द्रिय अवश्य विद्यमान होनेपर भी अधिष्ठानके बिना इसका कोई उपयोग नही हो रहा है। यह कैसा आश्चर्य है ?' ॥ २६ ॥

ज्ञानेन्द्रियाणि सर्वाणि पञ्चकर्मेन्द्रियैः सह ।
प्रेरकं मन आदाय विकर्माणि भवन्ति यत् ॥२७॥

'पाँच कर्मेन्द्रियो सहित समस्त ज्ञानेन्द्रियाँ अपने प्रेरक मनको साथले कर्महीन हो गई हैं' ॥ २७ ॥

सविकल्पं ससङ्कल्पं मनो दोलायितं मम ।
इत्थं मयाऽप्यवस्थेयं क्षणात् काऽप्यनुभूयते ॥२८॥

'सकल्प और विकल्पके व्यापारसे युक्त मेरा मन भी दोलायमान हो गया है। इस-प्रकार मुझे क्षण-भरमे ही किसी अनिर्वचनीय अवस्थाका अनुभव हो रहा है' ॥ २८ ॥

सदा चिन्तनशीलं तच्चित्तमप्यद्य तुष्टिदम् ।
विभ्रान्तं सर्वथा युक्तं न संचिन्तयति स्फुटम् ॥२९॥

'मुझे सन्तोष देनेवाला नित्य चिन्तनशील वह चित्त भी सर्वथा विभ्रान्त हो गया है और स्पष्ट है कि यह किसी उपयुक्त बातका चिन्तन नही कर रहा है ॥ २९ ॥

अस्मच्छब्दप्रयुक्तोऽयं शब्दो निर्दिशतीह किम् ।
तन्मनो वा किमन्यद्वा नैतन्निर्धार्यते पुनः ॥३०॥

'अस्मत्-शब्दसे प्रयुक्त होनेवाला यह 'अहम्' और 'मम' (मै और मेरा) शब्द किसका निर्देश करता है। उस मनका या किसी और वस्तुका ? इस बातका निश्चय नही हो पाता है ॥ ३० ॥

इतः सा कीर्तिदाऽस्मीति प्ररूढाभ्यासवेगतः ।
ममात्माऽऽकृष्यते भूयः किंस्यादेतदनिष्टकृत् ? ॥३१॥

इधर 'मै वही कीर्तिदा हूँ' इसप्रकार सुदृढ अभ्यासके वेगसे मेरा आत्मा बारम्बार आकृष्ट होता है। ऐसी अनिष्टकारिणी बात क्या है ? ॥ ३१ ॥

तदत्र केवला बुद्धिः शिष्यते सापि वस्तुतः ।
भ्रान्तोद्विग्नेव यद्भाति गुरुणा तमसेरिता ॥३२॥

'इस स्थितिमे केवल बुद्धि ही शेष रह जाती है, किन्तु वह भी प्रगाढ अन्धकारसे प्रेरित हो वस्तुत. भ्रान्त और उद्विग्न सी प्रतीत होती है ।। ३२ ।।

दृश्यदर्शनयोर्लोपः स्फुटमत्र विभाव्यते ।
शिष्यते केवलो द्रष्टा स्फुरतीत्थं मतिर्मम ।।३३।।

'दृश्य और दर्शन-दोनोका यहाँ लोप हो गया है, यह स्पष्ट जान पडता है। केवल द्रष्टा ही यहाँ शेष है। इस प्रकार मेरी बुद्धि स्फुरित हो रही है ।। ३३ ।।

नूनं बुद्धिरियं शुद्धा सदसद्भ्यां परा शुभा ।
रूपं निर्दिशति स्वस्य तत्सत्या सैव मे गतिः ।।३४।।

'वास्तवमे मेरी यह बुद्धि ही विशुद्ध है। जो सत् असत् ( कारण और कार्य ) से परे होनेके कारण शुभ है। वही मेरे स्वरूपका निर्देश करती है। अत वही सत्य है और वही मेरी गति है ।। ३४ ।।

इत्थं निश्चित्य सा देवी शङ्करं लोकशङ्करम् ।
संस्मृत्य शरणं गत्वा स्वात्मन्यात्मानमादधे ।।३५।।

ऐसा निश्चय करके देवि-कीर्तिदाने लोक कल्याणकारी भगवान् शकरका स्मरण करके उनकी शरण मे जा अपने-आपमे बुद्धिको स्थिर किया ।। ३५ ।।

तत समभवच्चित्रं खद्योता इव रात्रिषु ।
जीवाणवस्तदाकाशे तया ददृशिरे तदा ।।३६।।

तदनन्तर रात्रिमे प्रतीत होनेवाले खद्योतोकी भाँति आकाशमे जीवाणु प्रकट हुये। यह विचित्र दृश्य सामने आया। कीर्तिदाने उन जीवाणुओको देखा ।। ३६ ।।

निरीक्ष्यैताननन्तान् सा प्रोज्ज्वलज्ज्योतिषः कणान् ।
क एत इति स्वात्मानं संस्तभ्याऽचिन्तयत् क्षणात् ।।३७।।

इन अनन्त उज्वल तेज कणोका दर्शन करके कीर्तिदाने अपने मनको एकाग्र करके एक क्षण तक यह विचार किया कि 'ये सब क्या हैं ? ।। ३७ ।।

दृश्यदर्शनसंयोगः कथं संजायते पुनः ।
कोऽयं द्रष्टा तथेमे के सचैतन्या विभान्ति ये ।।३८।।

फिर कैसे दृश्य-दर्शनका संयोग होने लगा है। यह द्रष्टा कौन है ? और ये जो प्रतीत हो रहे हैं, वे चैतन्य युक्त ज्योति कण कौन हैं ।। ३८ ।।

जीवाणवः किमेते वा गतिमन्तोऽर्चिषः कणाः ।
अवश्यमेव तैर्भाव्यं यान् पश्यामीह सर्वतः ॥३९॥

'क्या ये जीवाणु हैं या गतिशील ज्योति कण हैं ? मै जिन्हे सब ओर देखती हूँ, ये अवश्य वे ही होने चाहिए ॥ ३९ ॥

त इमे चेदहो ! कष्टं ये नित्याः सुखिनोऽपि हा ! ।
कथमस्यामवस्थायां सीदन्त्यत्र विशेषतः ॥४०॥

'यदि ये वे ( जीव ) ही हैं, तो वडे कष्ट की बात है। हाय! जो नित्य और सुखी कहे गए है, वे यहाँ इस अवस्थामे पडकर क्यो विशेष क्लेश उठा रहे हैं ॥ ४० ॥

मोहरूपिण्यवस्थेयं दृश्यते च तमोमयी ।
एतेषां बुद्धिनाशाय कल्पते या स्वरूपतः ॥४१॥

'यह अवस्था मोहरूपिणी एवं तमोमयी दिखाई देती हैं। जो स्वरूपतः इन जीवोकी बुद्धिका नाश करनेमे समर्थ हो रही है ॥ ४१ ॥

किमेषा नरकः स्याद् वा संगता यत्र पापिनः ।
इत्थमेव विसीदन्ति श्रुतमासीन्मयाऽप्यहो ! ॥४२॥

'क्या यह अवस्था नरक ही तो नही है ? जहाँ गए हुए पापीजन इसीप्रकार दु ख उठाते हैं। अहो! मैने नरकके विषयमे तो ऐसी ही बात सुन रखी है ॥ ४२ ॥

किमहं नरकं प्राप्ता मृता किं वा स्वदेहतः ।
यदिन्द्रियाणि सर्वाणि न दृश्यन्त ऋते स्मृतिम् ॥४३॥

'क्या मै नरकमे आ गई हूँ ? या अपने शरीरसे मृत हो गई हूँ ? फिर क्या कारण है कि सारी इन्द्रियाँ अदृश्य हो गई हैं और केवल उनकी स्मृति ही शेष है ॥ ४३ ॥

आत्माऽमरोऽव्ययो नित्यः सच्चिदानन्दरूपकः ।
अस्तीत्यादि श्रुतं चाऽद्य सत्यमेवाऽनुभूयते ॥४४॥

'मैंने जो सुना था कि आत्मा अमर, निर्विकार, नित्य और सच्चिदानन्दस्वरूप है, उसका आज ही सत्य अनुभव हो रहा है' ॥ ४४ ॥

तस्मादेभिर्विभिन्नोऽयं ममात्मा तद्विवेकतः ।
विशुद्धः सत्यसंकल्पी साक्षी द्रष्टा च सोऽस्म्यहम् ॥४५॥

'अत. नित्यानित्य विवेकसे यह जान पड़ता है कि हमारा यह आत्मा इन्द्रियादि-विकारोसे पृथक् है। यह विशुद्ध सत्यसकल्प, साक्षी तथा द्रष्टा है। ऐसा जो आत्मा है, वह मै ही हूँ' ॥ ४५ ॥

इत्थं चिन्तयमानायां कीर्तिदायां तदा पुनः।
नानारूपेष्वदृश्यन्त प्राग्दृष्टा अर्चिषः कणाः ॥४६॥

जब कीर्तिदा देवी इसप्रकार चिन्तन कर रही थी, उस समय फिर नाना रूपोमे वे पहलेके देखे गए समस्त ज्योति.कण दृष्टिगोचर होने लगे ॥ ४६ ॥

परिवर्तनशीलांस्तान् क्षणादित्थं विलोक्य सा।
भूयोऽप्यचिन्तयद् धैर्यात् संस्तभ्याऽऽत्मानमात्मना॥४७॥

इस प्रकार क्षण-क्षणमे परिवर्तनशील उन ज्योति.कणोको देखकर रानी कीर्तिदा फिर धैर्यपूर्वक स्वय ही अपने चित्तको स्थिर करके विचार करने लगी ॥ ४७ ॥

क्षणाद्रूपान्तरं प्राप्तास्त इमे पुनरप्यहो!।
इत्थंरूपाः कथंभूता नानायोनिगता इव ॥४८॥

'अहो! आश्चर्यकी बात है कि फिर ये सारे ज्योति।कण क्षण-भरमे रूपान्तरको प्राप्त हो गए। इस प्रकार ये नाना योनियोमे प्राप्त हुए की भाँति कैसे हो गए' ॥ ४८ ॥

किमेतद् दृश्यते भूयो विचित्रं परिवर्तते।
दृश्यमेतन्मया सर्वं सत्यमेवाऽनुभूयते ॥४९॥

'यह पुन क्या दिखाई देने लगा है? विचित्र परिवर्तन हो रहा है। यह सारा दृश्य मुझे सत्य सा-ही प्रतीत हो रहा है' ॥ ४९ ॥

मर्त्यलोके यथा भान्ति रजोविक्षिप्तचेतसः।
बहुरूपगता जीवाः सूक्ष्मास्तद्वद्विभान्ति ये ॥५०॥

'जैसे मर्त्यलोकमे रजोगुणसे विक्षिप्त-चित्त हुए जीव अनेक रूपोमे दिखाई देते हैं, ठीक उसी तरह ये सब भी सूक्ष्मरूपमे प्रतीत हो रहे हैं' ॥ ५० ॥

यतन्तेऽलब्धलाभार्थं लब्धस्य परिपालने।
रागद्वेषौ समादाय ये द्रुह्यन्ति परस्परम् ॥५१॥

ये भी मर्त्यलोकके जीवोकी भाँति अप्राप्त वस्तुकी प्राप्तिके लिए प्रयत्न करते हैं। प्राप्त वस्तुकी रक्षाके लिए यत्नशील दिखाई देते हैं तथा राग-द्वेषका आश्रय ले परस्पर द्रोह करते है ॥ ५१ ॥

स्फुटमत्र विदृश्यन्ते लोभाक्रान्ताः स्वरूपतः ।
रजोगुणयुताश्चैते कामक्रोधाभिपीडिताः ॥५२॥

'स्पष्ट ही यहाँ वे सब स्वरूपत लोभाक्रान्त दिखाई देते हैं। ये सभी रजोगुणसे युक्त और काम-क्रोधसे पीडित है' ॥ ५२ ॥

तन्नूनं बुद्धिविक्षेपो मेऽत्र संभवति स्फुटम् ।
या प्रपश्याम्यहं चैतान् संलग्नान् स्वस्वकर्मसु ॥५३॥

'ऐसी स्थितिमे निश्चय ही मेरी ही बुद्धिमे विक्षेप हो गया है, स्पष्टत इसी बातकी सम्भावना है। क्योकि मै इन सबको अपने-अपने कर्मोमे सलग्न देखती हूँ' ॥ ५३ ॥

तदत्र शरणस्थानं तथा चैका गतिर्मम ।
भगवाञ्छङ्करो देवः सैष कुर्यात् कृपां मयि ॥५४॥

'अतः अब यहाँ देव-देव भगवान् शङ्कर ही मुझे शरण देनेवाले हैं। एकमात्र वे ही मेरी गति हैं। वे मुझपर कृपा करे' ॥ ५४ ॥

आशुतोषं शशाङ्काङ्कं शिवं ध्यात्वा प्रणम्य सा ।
यदा स्थितवती तत्र दृश्यमन्यदभूत्तदा ॥५५॥

इस प्रकार जब वह आशुतोष चन्द्रशेखर भगवान् शिवका ध्यान और प्रणाम करके सुस्थिर हुई, तब वहाँ दूसरा ही दृश्य दिखाई दिया ॥ ५५ ॥

समदृश्यन्त ते सर्वे विशुद्धा दिव्यवर्चसः ।
क्षणादेव तया भूयश्चिन्तितं परमार्थतः ॥५६॥

वे सब जीवाणु क्षण-भरमे विशुद्ध एव दिव्य-कान्तिसे सम्पन्न दिखाई देने लगे। तब कीर्तिदाने पुन परमार्थरूपसे चिन्तन आरम्भ किया—॥ ५६ ॥

किमेतद् दृश्यते दृश्यं परिवर्तितमीदृशम् ।
स्थानं सुखावहं चैतन्मनोनन्दनमार्तिहृत् ॥५७॥

'यह कैसा दृश्य दिखाई देता है? इसमे ऐसा परिवर्तन कैसे हो गया? यह स्थान मनको आनन्द देनेवाला सुखावह और क्लेशहारी जान पडता है' ॥ ५७ ॥

सुदर्शनाः क एतेऽपि नरा नार्यश्च भूषिताः ।
अत्रत्यास्तु विदृश्यन्त आप्तकामा इवाऽर्थतः ॥५८॥

'ये सुन्दर दिखाई देनेवाले तथा वस्त्राभूषणोसे विभूषित नर और नारियाँ कौन हैं ? यहाँके समस्त स्त्री-पुरुष वस्तुत आप्तकाम-से दिखाई देते हैं' ।। ५८ ।।

साह्लादं मे मनोऽप्यत्र बुद्धिश्चाऽपि प्रसीदति ।
अत्रैव रमते चित्तं साऽहं चाऽस्म्यभिजायते ॥५९॥

'इस समय यहाँ मेरे मनमे आह्लाद भर गया है। बुद्धि भी प्रसन्न हो गई है। मेरा चित्त इसी स्थितिमे रम रहा है। और 'मै वही कीर्तिदा हूँ, ऐसा बोध होता है' ।। ५९ ।।

सुयुक्तं स्थानमेतद्धा मत्कृते दिव्यशान्तिदम् ।
साऽहं किमत्र तिष्ठेयं दिव्यभोगादिसेविता ॥६०॥

'यह स्थान मेरे लिए दिव्य शान्तिप्रद और अत्यन्त उपयुक्त जान पडता है। क्या मै दिव्य-भोग आदिसे सेवित हो यही निवास करूँ ?' ।। ६० ।।

सुखदः किमयं स्वर्ग इहस्थाः किमिमे सुराः ।
इदं नन्दनमासाद्य रमन्ते येऽप्सरोगणैः ॥६१॥

'क्या यह सुखदायक स्वर्ग है ? क्या यहाँ रहनेवाले ये सबलोग देवता हैं ? जो इस नन्दनवनमे आकर अप्सराओके साथ विहार करते है' ।। ६१ ।।

धार्मिकाः सत्त्वसम्पन्नाः कामात्मानो मृता जनाः ।
अत्राऽऽगत्य शुभं यावद् रमन्त इति च श्रुतम् ॥६२॥

'मैने सुन रखा हैं कि धार्मिक, सत्त्वगुण-सम्पन्न, किन्तु सुख भोगकी इच्छा रखनेवाले लोग मरनेके बाद यहाँ आकर जबतक पुण्य शेष रहता है, तबतक यहाँ आनन्द भोगते हैं' ।। ६२ ।।

श्रुतमासीन्मया पूर्वं संस्कारवशतः स्मृतम् ।
स्पर्धासूयादिभिर्विद्धा अत्रत्याः प्रभवन्ति यत् ॥६३॥

'मैने पहलेसे सुन रखा था, इस लिए सस्कारवश इनका स्मरण हो आया है। परन्तु इस स्वर्गके लोग आपसमे स्पर्धा और असूया आदि दोषोसे युक्त प्रतीत होते है' ।। ६३ ।।

तन्नैतद् कामये साऽहं भ्रान्तचित्ताऽपि सर्वथा ।
हृदिस्थं स्वगुरुं देवं शरणं यामि निःस्पृहा ॥६४॥

'इसलिए मै सर्वथा भ्रान्त-चित्त होनेपर भी इसकी कामना नही करती हूँ। अपने हृदयमे विराजमान श्रीगुरुदेवकी शरणमे नि स्पृहभावसे जाती हूँ' ।। ६४ ।।

इति संचिन्त्य सा देवी भ्रुवोर्मध्यं व्यलोकत ।
तदैवाऽऽविरभूत्तेजस्तत्राऽलौकिकमव्ययम् ॥६५॥

ऐसा सोचकर देवी कीर्तिदाने अपने भौहोके मध्यभागमे दृष्टि स्थिर की। उसी समय वहाँ अलौकिक और अविनाशी तेज प्रकट हुआ ॥ ६५ ॥

ततः पूर्वकृताभ्यासात् संस्कारवशतस्तथा ।
आशीर्वादैर्मुनीनाञ्च तत्रैवेदं ददर्श सा ॥६६॥

तदनन्तर पूर्वकृत अभ्याससे तथा सस्कारवशात् मुनियोके आशिर्वादके साथ उन्होने वहाँ इस प्रकार देखा—॥ ६६ ॥

वृक्षाद्बीजमिवोद्भूतं काष्ठादग्निमिवोज्ज्वलम् ।
श्रीसूर्यमिव पूर्वाद्रेर्जगत्त्रयप्रकाशकम् ॥६७॥

जैसे वृक्षसे बीज उत्पन्न होता है, काष्ठसे उज्वल अग्निका प्राकट्य होता है उदयाचलसे सूर्यका उदय होता है, उसीप्रकार तीनो लोकोको प्रकाशित करनेवाले एक तेज पुञ्जको कीर्तिदाने दृष्टिगोचर किया ॥ ६७ ॥

आह्लादकरमानन्दं चान्द्रं तेज इवाऽक्षतम् ।
परिपूर्णतमं शान्तं शबलं नैकरूपकम् ॥६८॥

जो पूर्ण चन्द्रमाके समान शीतल, परिपूर्णतम शान्त, चितकबरा तथा अनेक रूपवाला था। पहले तो वह विविधरूपोमे प्रकट हुआ ॥ ६८ ॥

पूर्वं बहुविधं पश्चान्मनोनयनवर्धनम् ।
एकरूपस्थितं शुद्धं नभोवर्णं महामहः ॥६९॥

फिर मन और नेत्रोका आनन्द बढानेवाले हो एक ही विशुद्धरूपमे स्थित हुआ। वह महान् प्रकाश-पुञ्ज आकाशके समान नीलोज्वल वर्णका था ॥ ६९ ॥

सा दृष्ट्वैतन्महाभागा स्वात्माह्लादकरं महः ।
स्थैर्याद् धैर्याद् विलोक्यैवं चिरं तत्र व्यतिष्ठत ॥७०॥

महाभागा कीर्तिदा अपने आत्माको आनन्द प्रदान करनेवाले इस तेजको देखकर स्थिरता और धीरतापूर्वक उसमे दृष्टि गडाये हुए चिरकालतक उसी अवस्थामे स्थित रही ॥ ७० ॥

ततः प्रादुरभूत् तत्र साकारं तेज ऐश्वरम् ।
तदेकतानयावृत्याऽऽकृष्टमत्यद्भुतं शिवम् ॥७१॥

तदनन्तर वहाँ साकार ईश्वरीय तेज प्रकट हुआ। जो अत्यन्त अद्भुत तथा कल्याणमय था। वह कीर्तिदाकी एकतान दृष्टिसे मानो आकृष्ट हुआ था ॥ ७१ ॥

संस्काराभ्यासयोगैस्तैस्तत्कृतैरेकरूपतः ।
प्राप्तकाले फलीभूतं सच्चिदानन्ददं स्वतः ॥७२॥

उस देवी द्वारा एक रूपसे किए गए पूर्व साधनजनित संस्कार और अभ्यासयोगसे समय आनेपर फलके रूपमे स्वत प्रकट हुआ वह तेज सच्चिदानन्दमय था ॥ ७२ ॥

साधकैः साधनैः साध्यं स्वतः सिद्धमबोधहृत् ।
कण्ठे नीलविभाशोभि स्फुरज्ज्योतिरतृप्तिकृत् ॥७३॥

साधको और साधनो द्वारा साध्य वह तेज, वास्तवमे स्वत सिद्ध तथा अज्ञान हर लेनेवाला था। वह कण्ठदेशमे नील-छविसे सुशोभित था। उससे ज्योति प्रकट हो रही थी तथा वह देखनेवालेके हृदयमे अतृप्ति ( अधिकाधिक देखनेकी अभिलाषा ) उत्पन्न करनेवाला था ॥ ७३ ॥

समुन्नतजटाभारं श्रीचक्रैरलकैर्युतम् ।
प्रतिपश्चन्द्रसज्ज्योतिश्चयान्तरितमुज्ज्वलम् ॥७४॥

उसके मस्तकपर जटाका ऊँचाभार भासमान था। श्रीचक्राकार अलकावली उसकी शोभा बढ़ाती थी भालदेशमे द्वितीयाके चन्द्रमाकी ज्योति उद्भासित होती थी। वह तेज उज्वल वर्णका था ॥ ७४ ॥

तदन्तः क्रीडितं गाङ्गैः प्रवाहैः सर्वतो वृतम् ।
गुप्तं परमदृश्यं च ध्यानस्थैरपि योगिभिः ॥७५॥

उसकी जटाके भीतर गङ्गाका जलप्रवाह क्रीडा करता था। वह जटाकलाप उस प्रवाह द्वारा सब ओरसे आवृत था। वह परम गुप्त तेज पुञ्ज ध्याननिष्ठ योगियोके लिए भी अदृश्य था ॥ ७५ ॥

प्रोज्ज्वलज्ज्वालमालाढ्यं नीलज्योतिषमद्भुतम् ।
अतर्क्यमविचिन्त्यं च सा व्यलोकत यत्नतः ॥७६॥

उससे अत्यन्त उज्वल ज्वालामालाएे प्रकट होती थी। वह अद्भुत नीलोज्वल तेज अतर्क्य एव अचिन्त्य था। कीर्तिदाने यत्नपूर्वक उसे दृष्टि गडाकर देखा ॥ ७६ ॥

मध्ये ललाटमव्यग्रं रूपस्याऽस्य समुज्ज्वलम् ।
अतापकरमाग्नेयं चोर्ध्वनेत्रं ददर्श सा ॥७७॥

इस भव्य तेजस्वी-रूपके ललाटमे सुस्थिर उज्ज्वल, अतापकारी एव अग्निमय, उर्ध्व-नेत्रका उन्हे दर्शन हुआ ॥ ७७ ॥

भाश्वरं सौरतेजस्कं दक्षिणं चक्षुरैश्वरम् ।
वाममाह्लादकं चान्द्रं तथैवाऽपश्यदव्ययम् ॥७८॥

उस ईश्वरका दाहिना नेत्र सूर्यके तेजसे परिपूर्ण एव प्रकाशमान था। बाँया नेत्र आह्लादजनक चन्द्र-ज्योतिसे सम्पन्न था। यह अविनाशी रूप कीर्तिदाको उस समय वहाँ स्पष्ट दिखायी दिया ॥ ७८ ॥

सुप्रसन्नमुखाम्भोजमीषत्स्मितमनोहरम् ।
शरण्यं करुणामूर्ति शङ्करं सा व्यलोकत ॥७९॥

कीर्तिदाने देखा—वे शरणागत वत्सल करुणामूर्ति साक्षात् भगवान् शङ्कर थे। उनका मुखारविन्द अत्यन्त प्रसन्न तथा मन्द मुस्कानसे मनोहर प्रतीत होता था ॥ ७९ ॥

क्षणादेव चिदानन्दं तद्रूपं पूर्णतामितम् ।
व्यदृश्यत तया तत्र दृष्टपूर्वे परात्मनि ॥८०॥

कीर्तिदाने पूर्वदृष्ट परमात्माके भीतर क्षणभरमे ही इस प्रकार भगवान् शङ्करका पूर्णत्वको प्राप्त हुआ चिदानन्दमय रूप देखा ॥ ८० ॥

इन्द्राद्याः सकला देवा नारदाद्या महर्षयः ।
तं स्तुवन्ति स्म तत्रव स्व-स्वबुद्ध्यनुसारतः ॥८१॥

इन्द्र आदि समस्त देवता तथा नारद आदि महर्षि वही उपस्थित हो अपनी-अपनी बुद्धिके अनुसार उनकी स्तुति कर रहे थे ॥ ८१ ॥

तत्रत्यं सकलं वस्तु विविच्यैवाऽन्तरात्मना ।
ॐ ह्रीं नमः शिवायेति महामन्त्रं जजाप सा ॥८२॥

वहाँकी सारी वस्तुओका अन्तरात्मा द्वारा विवेचन करके वह 'ॐ ह्री नम शिवाय' इस मन्त्रका जप करने लगी ॥ ८२ ॥

पर्यवर्तत तद्दृश्यं ततस्तु ददृशे तया ।
अर्धनारीश्वरो देवः शिवशक्तिमयः पुनः ॥८३॥

फिर उस दृश्यमे परिवर्तन हुआ। तदनन्तर कीर्तिदाने शिव-शक्तिमय देव अर्द्ध-नारीश्वरको अपने सामने देखा ॥ ८३ ॥

श्वेतवर्णं श्रिया जुष्टं तद्वामार्धं व्यशोभत ।
आपादमस्तकं पूर्णं विस्फुरत्स्तनगोलकम् ॥८४॥

उन भगवान् अर्द्धनारीश्वरका वामार्द्धभाग पैरसे लेकर शिरतक गौरवर्ण तथा अनुपम शोभासे सम्पन्न था। उसका एक गोलाकार स्तन उद्भासित हो रहा था ॥ ८४ ॥

दक्षिणार्धं ततो भिन्नं नीलमस्य प्रकाशकम् ।
अशेषं शेषसन्नद्धं सर्वात्म्यैक्यं व्यराजत ॥८५॥

उनका दूसरा सम्पूर्ण दक्षिणार्द्धभाग उससे सर्वथा भिन्न नीलवर्ण एव प्रकाशक था। उसमे शेषनाग लिपटे हुए थे। उस स्वरूपको सम्पूर्ण आत्माओसे ऐक्य प्राप्त था। इस प्रकार उसकी बडी शोभा हो रही थी ॥ ८५ ॥

विद्याऽविद्ये उभे तत्र व्यक्ताऽव्यक्ते समुज्ज्वले ।
चकाशाते स्म सन्मन्त्रतन्त्रयन्त्रादिभिर्वृते ॥८६॥

वहाँ विद्या और अविद्या-दोनो ही विराजमान थी। व्यक्त और अव्यक्त भी उत्तम मन्त्र, यन्त्र और तन्त्र आदिसे युक्त हो विद्यमान थे ॥ ८६ ॥

उच्चां प्रपत्तिमाश्रित्य तत्पश्यन्ती निरन्तरम् ।
ऋषिदृष्टिमिता देवी स्पष्टं तत्त्वमबुध्यत ॥८७॥

उच्चकोटिकी शरणागतिका आश्रय ले उस स्वरूपको निरन्तर देखती हुई देवी कीर्तिदाने ऋषियोकी दृष्टि प्राप्त कर ली और उसीके द्वारा यथार्थ-तत्त्वको जान लिया ॥८७॥

दृष्टपूर्वमिदं रूपं ह्यर्धनारीश्वरोदयम् ।
वामदक्षिणपार्श्वाभ्यां द्वैधं समभवत्ततः ॥८८॥

तदनन्तर पहलेका देखा हुआ अर्द्धनारीश्वरके रूपमे प्रकट भगवान् शिवका वह स्वरूप वाम और दक्षिण पार्श्वसे दो रूपोमे विभक्त हो गया ॥ ८८ ॥

दक्षिणार्धमभूद्बालो वामार्धं कन्यकैकिका ।
उभौ परिचितावास्तां तस्या अङ्कोपलालितौ ॥८९॥

दक्षिणार्द्धभाग एक बालक और वामार्द्धभाग एक बालिकाके रूपमे परिणत हो गया। वे दोनो कीर्तिदाके अकमे उपलालित हुए थे। अत उनके पूर्ण परिचित थे ॥ ८९ ॥

नन्दगोपसुतो बालः स्वपुत्री बालिका च सा ।
परस्परमभीप्सन्तौ क्रीडतः स्म तदेह तौ ॥९०॥

वह बालक नन्दगोपका लाडला था और बालिका कीर्तिदाकी अपनी ही पुत्री थी। वे दोनो एक दूसरेको चाहते हुए वही परस्पर क्रीडामे सलग्न हो गए ॥ ९० ॥

अन्यत्सर्वं तथैवाऽऽसीत् तत्रत्याः सकलाः सुरा ।
तौ स्तुवन्ति स्म सद्भक्त्या विधिविष्णुहरादयः ॥९१॥

और सब बाते ज्योकी त्यो थी। वहाँ उपस्थित ब्रह्मा, विष्णु और शिव आदि सब देवता उन दोनोकी स्तुति कर रहे थे ॥ ९१ ॥

क्रीडन्तौ तावुभौ भूयः शिवशक्तिस्वरूपिणौ ।
तदुत्सङ्गमुपागत्य व्यतिष्ठेतां निरीक्ष्य ताम् ॥९२॥

क्रीडा करते हुए वे दोनो कुमारी और कुमार जो शक्ति और शिवके रूप थे, पुन कीर्तिदाकी गोदमे आकर उसकी ओर देखते हुए बैठ गये ॥ ९२ ॥

दक्षिणाङ्केऽवसद्बालो वामाङ्के बालिका ततः ।
बभूवतुस्तदोभौ तावेकाकारौ स्वरूपतः ॥९३॥

दाहिने अकमे बालक बैठा था और वामाङ्कमे बालिका। तदनन्तर वे दोनो उस समय स्वरूपत एकाकार हो गए ॥ ९३ ॥

दृष्ट्वैतत्सकलं दृश्यं विस्मिता कीर्तिदा स्वतः ।
स्वात्मना तौ नमस्यन्ती प्रबुद्धा स्वप्नयोगतः ॥९४॥

यह सारा दृश्य देखकर कीर्तिदाको बडा आश्चर्य हुआ। वह अपने मनसे उन दोनोको नमस्कार करने लगी। इतने ही मे वह स्वप्न टूट गया और वह जाग उठी ॥ ९४ ॥

स्मारं स्मारं तथादृष्टं स्वप्नवस्तु यथार्थतः ।
संत्यज्य शयनं याता कर्तुं शौचादि साऽप्यथ ॥९५॥

स्वप्नमे यथार्थत देखी गई सारी बातोको स्मरण करती हुई माता कीर्तिदा शौचादि कर्म करनेके लिये शय्या छोडकर उठ गई ॥ ९५ ॥

स्वं प्रातःकालिकं कृत्यं समाप्य विधिवच्च सा ।
पूजास्थानं समागत्य निषसादाऽऽसने शुभे ॥९६॥

विधिपूर्वक प्रात कालिक कृत्य समाप्त करके वह पूजा स्थानमे जाकर एक उत्तम आसनपर बैठी ॥ ९६ ॥

तैर्यमैः पालितैर्नित्यं नियमैश्च कृतैर्हितैः ।
प्राणायामैर्दृढाभ्यासैः प्रत्याहाराश्चकार सा ।।९७।।

अपने द्वारा नित्य पालित हितकर साधन यम, नियम, तथा सुदृढ अभ्यासयुक्त प्राणायाम करके कीर्तिदाने प्रत्याहार किया ।। ९७ ।।

भावनां धारणां शुद्धां गुरुशुश्रूषयाऽऽगताम् ।
निरन्तरं प्रकुर्वाणा ध्यानमाप्ता सती स्वतः ।।९८।।

गुरु-शुश्रूषासे प्राप्त हुई विशुद्ध भावना और धारणाको निरन्तर करती हुई वह सती स्वत ध्यानस्थ हो गई ।। ९८ ।।

निर्दर्शितक्रमेणैवं स्थैर्याद्धैर्याच्च कीर्तिदा ।
समाधिं सविकल्पं तं जगामाऽथ ददर्श यत् ।।९९।।

इस प्रकार निर्दर्शित क्रमसे स्थिरता और धीरताका आश्रय ले कीर्तिदा सविकल्प समाधिमे स्थित हो गयी । उस समय उन्होने देखा—।। ९९ ।।

वस्तु स्वप्नविदृष्टं तच्चिन्तयन्ती क्रमोदितम् ।
तामवस्थां गता देवी न जानाति स्म किञ्चन ।।१००।।

स्वप्नमे देखी गई उपर्युक्त वस्तुएँ क्रमश. प्रकट होने लगी । उनका चिन्तन करती हुई वे देवी उस अवस्थाको पहुँच गईं, जहाँ दूसरी किसी वस्तुका भान नही होता था ।।१००।।

एतस्मिन्नन्तरे स्वस्मिन् सदने शयनं श्रितः ।
गोकुलेशसुतो बालः प्रबुद्धोऽथोषसि द्रुतम् ।।१०१।।

इसी समय गोकुलेश्वर नन्दरायका बालक, जो अपने घरमे शय्यापर सोया था, आज उस कालमे ही सहसा जाग उठा ।। १०१ ।।

वृषभानुप्रिया देवी यां दशां प्रापिता यया ।
तां दशां प्रापितश्चासीद्बालोऽपीशेच्छया तदा ।।१०२।।

जिस शक्तिने वृषभानु प्रिया देवी-कीर्तिदाको उस पूर्वोक्त अवस्थामे पहुँचाया था, उसी शक्तिने ईश्वरेच्छासे उस बालकको भी उसी दशामे पहुँचा दिया ।। १०२ ।।

विसृज्य शयनं तस्मान्मन्त्राकृष्ट इव स्वतः ।
कीर्तिदाया गृहं धावन्नाजगाम स वेगतः ।।१०३।।

अत शय्या छोडकर मन्त्र-शक्तिसे आकर्षित पुरुषकी भाँति वह स्वत बडे वेगसे दौडता हुआ कीर्तिदाके घर आ पहुँचा ॥ १०३ ॥

अरुणोदयवेलायां प्राप्तद्वारो गृहस्य तत् ।
तदावृत्य स्थितां तस्याः पुत्रीमेव ददर्श सः ॥१०४॥

अरुणोदयकी वेलामे जब वह उनके गृह-द्वारपर पहुँच गया, तो उसे रोककर खड़ी हुई कीर्तिदाकी कन्याको ही उसने देखा ॥ १०४ ॥

तां दृष्ट्वैव प्रसन्नोऽसौ सिद्धिमेव पुरःस्थिताम् ।
तामालिङ्ग्य तया सार्धं तत्पूजास्थानमागमत् ॥१०५॥

मानो सिद्धि ही सामने खडी हो। उसे देखते ही नन्द-नन्दन प्रसन्न हो गया और उसका आलिङ्गन करके उसीके साथ कीर्तिदाके पूजा स्थानपर आया ॥ १०५ ॥

उभौ निरीक्षमाणौ तां तुर्यावस्थागतां तथा ।
ज्ज्वलन्तीं ज्योतिषा शुद्धां दृष्ट्वा स्वमुदमापतुः ॥१०६॥

तब उन दोनोने देखा—कीर्तिदा तुर्यावस्थामे पहुँचकर दिव्य तेजसे देदीप्यमान हो, विशुद्धरूपमे विराजमान है। इस रूपमे कीर्तिदाको देखकर उन दोनोको बडी प्रसन्नता हुई ॥ १०६ ॥

इन्द्रियैर्मनसा रुद्धैः स्थितप्रज्ञां तथाऽऽत्मना ।
परतत्त्वगतां तत्र तौ पश्यन्तीं निरन्तरम् ॥१०७॥

उसने इन्द्रियोको मनके द्वारा वशमे कर लिया था। वह स्थितप्रज्ञ होकर स्वरूपसे ही परम तत्त्वको प्राप्त हो गई थी और उस अवस्थामे निरन्तर उन्ही दोनोका दर्शनकर रही थी ॥ १०७ ॥

शिवशक्तिमयौ चैकाविमाविति च चेतसि ।
नन्दपुत्रं स्वपुत्रीं च भावयन्तीं परापरौ ॥१०८॥

ये शिव-शक्तिमय नन्दनन्दन और मेरी पुत्री दोनो एक तथा परस्पर अभिन्न स्वरूप हैं। ऐसी वह चित्तमे भावना करती थी ॥ १०८ ॥

अतर्क्यं सच्चिदानन्दमैक्यं स्वात्मपरात्मनोः ।
विभाव्य संस्थितां चैत्ये दीप्तामग्निशिखामिव ॥१०९॥

अतर्क्य, सच्चिदानन्दमय, आत्मा और परमात्माका ऐक्य अनुभव करके वह देवी प्रज्वलित अग्निशिखाकी भाँति विराजमान थी ॥ १०९ ॥

विलोक्य कीर्तिदामित्थं शुद्धां निर्विक्रियां स्वतः ।
तां प्रबोधयमानौ तौ निरुपायौ बभूवतुः ॥११०॥

इस प्रकार कीर्तिदाको विशुद्ध एव निर्विकार अवस्थामे देखकर वे दोनो उन्हे जगानेकी इच्छा करने लगे। परन्तु उनको कोई उपाय नही सूझा ॥ ११० ॥

तां प्रबोधयितुं तत्र मन्त्रयामासतुर्युभौ ।
परस्परमवालोक्य स्वशक्त्येदं च चक्रतुः ॥१११॥

तब वे दोनो उन्हे वहाँ जगानेके लिए एक दूसरेकी ओर देखते हुए परस्पर मन्त्रणा करने लगे और इस कार्यको उन्होने अपनी शक्तिसे ही सम्पन्न कर लिया ॥ १११ ॥

अस्या ध्यानपथं यातावावामत इयं सती ।
न जागर्ति ततो याव आवां तत्र त्वदृश्यताम् ॥११२॥

वे बोले—'ये सती देवी कीर्तिदा इसलिए नही जाग रही हैं कि हम दोनो इनके ध्यान-पथमे आ गए है। अत हम दोनो वहाँ अदृश्य हो जायँ और इनकी गोदमे जा बैठे। ऐसा करनेसे ये जाग उठेगी' ॥ ११२ ॥

तिष्ठावश्च तदुत्सङ्गे येन सा बोधमेष्यति ।
इत्याऽऽलोच्य तयाऽऽकृष्टौ तथाचक्रतुरीश्वरौ ॥११३॥

ऐसा विचार करके पूर्वोक्त ईश्वरीय शक्तिसे आकृष्ट किये गए उन दोनो ईश्वरी और ईश्वर ( राधा, कृष्ण ) ने वैसा ही किया ॥ ११३ ॥

दक्षिणाङ्केऽवसद्बालो वामाङ्के बालिका ततः ।
बभूवतुस्तदोभौ तावेकाकारौ स्वरूपतः ॥११४॥

कीर्तिदाके दाहिने अकमे वह बालक बैठ गया और बाये अकमे वह बालिका। फिर उस समय वे दोनो स्वरूपत एकाकार हो गये ॥ ११४ ॥

ततः खिन्नतरा सैषा समजायत तत्क्षणात् ।
तद्वियोगात् समाधौ यावदृश्येतां तथासुखम् ॥११५॥

तब जिन्हे सुखपूर्वक समाधिमे देख रही थी, उनके वियोगसे देवी कीर्तिदा तत्क्षण खिन्न हो उठी ॥ ११५ ॥

दृष्ट्वैतत् सकलं दृश्यं विस्मिता कीर्तिदा स्वतः ।
ससंभ्रमं प्रबुद्धाऽथ भ्रंशिता ध्यानयोगतः ॥११६॥

यह सारा दृश्य देखकर आश्चर्यमे पड़ी हुई कीर्तिदा देवी स्वत सम्भ्रममे पडकर ध्यानयोगसे च्युत हो जाग उठी ॥ ११६ ॥

तथाविधाविमौ दृष्ट्वा शान्तचिन्ता सुविस्मिता ।
साह्लादं तौ समालिङ्ग्य गद्गदेदं समब्रवीत् ॥११७॥

इन दोनोको इस रूपमे देखकर विस्मित हुई कीर्तिदाका चित्त शान्त हुआ और वे बडे आनन्दसे दोनोको हृदयसे लगाकर गद्गद् वाणीमे इस प्रकार बोली—॥ ११७ ॥

युवां ध्यानपथं यातावित्थमेवाऽधुनेह भोः ! ।
तन्नूनं तौ चिदात्मानौ सदानन्दौ नमाम्यहम् ॥११८॥

'बच्चो ! तुम्ही दोनो इसप्रकार मेरे ध्यान-पथमे आए थे। अत निश्चय ही तुम चिदात्मा एव सदानन्दमय हो। मै उन तुम्ही दोनोको नमस्कार करती हूँ' ॥ ११८ ॥

इत्थं स्वशरणं यातां तां विसृज्य तथैव तौ ।
पूजास्थानाद्बहिर्यातौ क्रीडन्तौ पूर्ववत् पुनः ॥११९॥

इस प्रकार अपनी शरणमे आई हुई देवी कीर्तिदाको उसी अवस्थामे छोडकर वे दोनो पुन पूर्ववत् क्रीडा करते हुए पूजास्थानसे बाहर चले आए ॥ ११९ ॥

हस्तौ प्रगृह्य बहिरेत्य ततः स बालो
बालामभाषत शुभेन्दुमुखीं प्रियां स्वाम् ।
त्वं देवता गुणवती ह्यसि किन्तु सोऽहं
स्वात्मप्रियोऽस्मि विगुणः स्वरतिः स्वतन्त्रः ॥१२०॥

बालिकाके दोनो हाथ पकडे बाहर निकलकर उस बालकने अपनी प्रिया उस सुन्दर चन्द्रमुखी बालासे कहा—'देवि ! तुम गुणवती देवता हो। किन्तु मै स्वात्म-प्रिय, निर्गुण, आत्म-रति एव स्वतन्त्र हूँ ॥ १२० ॥

तच्छोभने ! त्वमिह मां त्यज सङ्गभीत्या
खिन्नोऽस्मि सिद्ध इव सिद्धिषु दृष्टदोषः ।
मह्यं न रोचत उरुप्रियया त्वया ये
सद्वीक्षितास्त इह तत्र चिरं रमन्ताम् ॥१२१॥

'अत शोभने ! तुम यहाँ मुझे छोड दो। क्योकि मै सङ्ग ( आसक्ति ) के भयसे खिन्न हूँ। सिद्ध पुरुषकी भाँति सिद्धियोमे दोष देखता हूँ। इसलिए मुझे यह सब अच्छा नही लगता। तुम लक्ष्मीरूपसे बहुत लोगोकी प्रीतिपात्र हो। तुमने अच्छी दृष्टिसे जिन्हे देखा है, वे महानुभाव यहाँ लौकिक सिद्धियोमे चिर-कालतक रमते रहे' ॥ १२१ ॥

**किन्त्वत्र ये प्रविलसन्ति जना मदीया भक्ता रताश्च मयि बद्धहृदोऽहमेषाम् ।**
**कर्तुं प्रियं विवशमापित आत्मयोगात् सोऽहं भ्रमामि भव तत्र सहायिका त्वम् ॥१२२॥**

'परन्तु यहाँ जो मेरे भक्तजन सुशोभित होते हैं, जिनका मुझमे ही अनुराग है तथा जिन्होने अपने मनको मुझमे बांध रखा है, उन लोगोका प्रिय करनेके लिए विवश हो आत्मयोगसे मै यहाँ प्रकट होता और चक्कर लगाता हूँ । तुम यहाँ मेरी सहायिका बनो' ॥ १२२ ॥

**श्रुत्वा तथाविधममुष्य वचो दुरूहं सेर्ष्यं निरीक्ष्य कुटिलं जगदीश्वरी सा ।**
**त्यक्त्वाऽथ तत्करसरोरुहमार्तिहारि सोऽयं निरर्गल इति प्रविचिन्त्य याता ॥१२३॥**

नन्द-नन्दनकी वह बात कठिनाईसे समझमे आनेवाली थी । उसे सुनकर उस जगदीश्वरीने ईर्ष्यापूर्वक कुटिल-कटाक्षसे उनकी ओर देखा । फिर वे उनके परपीडा-हारी कर-कमलको छोडकर 'ये निरकुश है' ऐसा सोचकर चली गई ॥ १२३ ॥

**विद्वांस ! उन्नतधियो गुरुणा श्रमेण दृष्टा मया स्थितिरियं भवतां प्रसादात् ।**
**या वर्णिता तदिह लब्धुमिमां भवन्तोऽहं प्रार्थये शुभविचारणया यतन्ताम् ॥१२४॥**

ऊँची बुद्धिवाले विद्वानो ! गुरुदेवके अनुग्रह और आपलोगोंके कृपा-प्रसादसे मैने परिश्रम पूर्वक इस स्थितिका साक्षात्कार किया है, जिसका यहाँ वर्णन किया । मेरी प्रार्थना है कि इस स्थितिको प्राप्त करनेके लिए आपलोग भी शुभ विचारपूर्वक प्रयत्न करे ॥ १२४ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**त्रयस्त्रिंशोऽप्यगात्सर्गो महाकाव्ये स्तवात्मके ॥१२५॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे तेतीसवाँ सर्ग पूरा हुआ ॥ १२५ ॥



# चतुस्त्रिंशः सर्गः

[ व्रजराजसभायां व्रजराजस्य स्वभृत्येषु व्रजकार्यनिर्देशनात्मका प्रश्ना । चौररूपिणं शणपोटलिकास्थित भगवन्त विगृह्य तत्रैव व्रजवधूनामागमनम् । व्रजराज्ञीमुद्दिश्य तामिस्तदुपालम्भनम् । चौरनिदर्शने हास्योपलब्धिश्च । ]

( वसन्ततिलकावृत्तम् )

**दिष्ट्या स्वयाऽभिमतया हरिणा समीक्ष्य संबर्धितो मुनिगणैश्च सुधीभिरेवम् ।**
**बभ्राज गोकुलपतिः सह गोपगोभिर्गोपीभिरित्थमथ चन्द्र इवांशुभिः स्वैः ॥१॥**

इस प्रकार श्रीहरिने तथा मुनिजनो एवं विद्वानोने भी अपनी अनुकूल दृष्टिसे देखकर गोकुलपति नन्दरायका संबर्धन किया। जैसे चन्द्रमा अपनी किरणोसे सुशोभित होते हैं, उसी तरह नन्दबाबा गोपो, गोपियो और गौओसे सयुक्त हो बडी शोभा पाने लगे ॥ १ ॥

**औदार्यमुच्चतरमुन्नतमार्यभावं दाक्षिण्यमव्ययममुष्य वदान्यताञ्च ।**
**संलक्ष्य योगिन इमे मुनयो बुधाश्च तत्रैत्य तस्थुरभितो गृहमस्य तावत् ॥२॥**

उनकी उच्चतर उदारता, उन्नत-आर्यभाव, अक्षय-दाक्षिण्य तथा दानशीलता आदि गुणोको लक्ष्य करके ये योगी, मुनि, ज्ञानी-पुरुष वहाँ आकर उनके घरके आसपास डेरा डाले रहते थे ॥ २ ॥

**सच्चित्स्वरूपमिममक्षयमात्मतत्त्वं ध्येयं शिशुं समवलोक्य मनोभिरामम् ।**
**तद्गेहमार्गमवलम्ब्य गताः सुदूरं ते यात्रिणोऽप्यहह ! तत्र चिरं ह्यतिष्ठन् ॥३॥**

नन्दबाबाके घरके रास्तेसे यात्रा करते हुए कुछ दूर तक गये हुए वे यात्री भी इस सच्चिदानन्दस्वरूप, अविनाशी, आत्मतत्त्वरूप, ध्यान करने योग्य तथा मनोभिराम शिशु-( श्रीकृष्ण ) का दर्शन करके वहाँ चिरकाल तक खडे रह जाते थे ॥ ३ ॥

**इत्थं प्रपूर्णमसकृत् सुजनैः सुरम्यं तद्गोकुलेशभवनं बहुधा रराज ।**
**आनन्दधाम गुणगौरवतोऽभिरामं ह्याकृष्टसत्त्वमसमं कृतबाललीलम् ॥४॥**

इस प्रकार निरन्तर सन्त-जनोंसे भरा रहनेवाला गोकुलेश्वर नन्दका वह सुरम्य भवन अनेक प्रकारसे सुशोभित होता था। वह आनन्दका धाम था। गुण-गौरवकी दृष्टिसे अभिराम प्रतीत होता था। सब जन्तु उसकी ओर खिच आते थे। उसकी कही भी तुलना नही थी तथा वहाँ सदा श्रीकृष्णकी बाललीला होती रहती थी ॥ ४ ॥

**तस्मिन् स्वसद्मनि कदाचिदसौ व्रजेश आसीत्सभाङ्गणगतो ह्युपनन्दमुख्यैः ।**
**गोपैः प्रियैः शिशुजनैर्वसुदेवपत्न्या पत्न्या च सार्धममुना च शिशुद्वयेन ॥५॥**

एक समयकी बात है व्रजराज नन्द अपने इस भवनके भीतर सभाके प्राङ्गणमे उपनन्द आदि प्रिय गोपो, ग्वालबालो, वसुदेवपत्नी-रोहिणी, अपनी पत्नी यशोदा तथा दोनो शिशु कृष्ण-बलरामके साथ बैठे थे ॥ ५ ॥

**दृष्ट्वा समृद्धमथ राजसभ विशालं संचिन्तयन् स निजगोकुलराज्यभारम् ।**
**निर्देशकं कमपि भद्रमुखाभिधेयं गोपं मुदाऽऽह मधुरं व्रजकार्यमेवम् ॥६॥**

उस विशाल राजसभाको लोगोसे भरी देख नन्दजी अपने गोकुल-राज्यके भारका चिन्तन करते हुए भद्रमुख नामक किसी गोपसे, जो निर्देशक था, प्रसन्नता पूर्वक मधुर वाणीमे व्रजसम्बन्धी कार्यके विषयमे इस प्रकार पूछने लगे—॥ ६ ॥

**निर्देशक ! त्वमसि किं कुशली स्वकृत्ये किं वा नियोजयसि योग्यजनांश्च कृत्ये ।**
**प्रेम्णा विपश्यसि ददासि च वा स्वभृत्ये प्रोत्साहनं सधनमानमुपेतकृत्ये ॥७॥**

'निर्देशक ! क्या तुम अपने कार्यमे योग्य मनुष्योको नियुक्त करते हो ? प्रेमपूर्वक उन सबको देखते हो ? क्या अपना कार्य पूर्ण कर लेनेवाले सेवकोको धन और मन सहित प्रोत्साहन देते हो' ? ॥ ७ ॥

**किं किं कृतं व्रजसुरक्षणहेतुभूतं कार्यं त्वयेह वद शान्तमनाः शृणोमि ।**
**निर्देश्यमस्ति किमु वा मम राजकृत्ये युक्तं विचार्य भण तच्छुभदं करोमि ॥८॥**

'बताओ, व्रजकी सुरक्षाका हेतुभूत कौन-कौन सा कार्य तुमने यहाँ सम्पन्न किया है ? मै शान्तचित्त होकर तुम्हारी बात सुनता हूँ। मेरे राजकार्यके विषयमे तुम्हे क्या-क्या निर्देशन देना है ? । उचित विचार करके कहो। तुम्हारे शुभदायक सुझावका मै पालन करूँगा' ॥ ८ ॥

**तद्गोकुलेशमधुराक्षरपुष्पमालां मालां यथा शिरसि सन्नमिते विधृत्य ।**
**निर्देशकोऽयमवदत् कृतकार्यजातं बद्धाञ्जलिंसदसि चोत्थित आत्मपातम् ॥९॥**

गोकुलेश्वर नन्दके मधुर अक्षररूपी पुष्पोको मालाको मालाकी ही भाँति झुकाये हुए मस्तकपर सादर धारण करके निर्देशकने हाथ जोड साष्टाङ्ग प्रणाम पूर्वक खडा हो सभामे अपनेद्वारा किए कार्य-कलापको इस प्रकार बताया ॥ ९ ॥

**स्वामिन् ! कृतं बहुविधं व्रजरक्षणार्थं सत्कर्म राज्यमभितो विहितव्यवस्थम् ।**
**न्यस्तं चतुर्दिशि सुखं व्रजवीरसैन्यं नानायुधं परिचिताग्र्यजनप्रवेश्यम् ॥१०॥**

'स्वामिन् ! व्रजकी रक्षाके लिए मैने बहुतसे उत्तम कार्य किये हैं। राज्यके चारो-ओर सुरक्षाकी उत्तम व्यवस्था कर दी गई है। चारो दिशाओमे सुखपूर्वक व्रज वीरोकी सेना तैनात की गई है। उस सेनाके पास अनेक प्रकारके अस्त्र-शस्त्र है तथा उसमे जाने बुझे हुए श्रेष्ठ-पुरुषोका ही प्रवेश है' ॥ १० ॥

पृष्ट्वा व्रजागमनहेतुमनेकयत्नैर्भावैः प्रबुध्य हृदयान्तर्गतां च चेष्टाम् ।
त्यज्यन्त एव सकला मुनिवेषिणश्च ह्यागन्तुकाश्च सततं सुपरीक्ष्य देव ! ॥११॥

'देव ! आने-जानेवाले लोगोसे, 'वे मुनियोके भी वेषमे क्यो न हो, उनके व्रजमे आगमनका कारण पूछकर अनेक प्रयत्नो और भावो द्वारा उनकी हार्दिक चेष्टा जानकर सदा भली-भाँति जाँच परख कर लेनेके बाद ही सबको आने अथवा जाने दिया जाता है ॥ ११ ॥

सर्वत्र चैष नियमोऽस्ति शुभां नृपाज्ञां मूर्ध्ना वहन्ति सुखदामिति गोकुलस्थाः ।
तस्माद् व्रजेश ! विषये ससुखं वसन्ति युष्मत्प्रजा जितभया विहरन्ति कामम् ।१२॥

सर्वत्र यही नियम लागू कर दिया है, समस्त गोकुलवासी जन राजाकी शुभ एवं सुखद आज्ञाको सिरपर ढोते हैं । 'अत व्रजराज ! आपके राज्यमे सारी प्रजा सुखपूर्वक निवास करती तथा निर्भय हो, इच्छानुसार विचरती है' ॥ १२ ॥

सर्वं सुकृत्यमिह वर्तत एव किन्तु द्वौ माथुरौ कुपुरुषौ स्त इमौ गृहीतौ ।
यौ प्रायशोऽर्भकयुगे तदपि प्रकृष्टे कृष्णार्जुने निहितदुष्टदृशौ यदाऽऽस्ताम् ॥१३॥

'यहाँ सब शुभकार्य ही हो रहा है, किन्तु मथुराके ये दो दुष्ट पुरुष पकड़े गए है, जो प्राय. यहाँके दो उत्कृष्ट बालक श्याम-गौर कृष्ण-बलरामके प्रति सदा दुष्टतापूर्ण दृष्टि गडाए रखते थे' ॥ १३ ॥

अस्माकमक्षयधनानि शिशोः कुलानि तेभ्योऽपि धन्यतरमर्भकयुग्ममेतत् ।
यस्मिन् निवेशितदृशौ कुधियाविमौ तु दण्ड्यावनश्यमिति गोपभटैर्गृहीतौ ॥१४॥

'हमारे अक्षय धन हैं व्रजके बालकवृन्द । उन सबसे भी धन्यतर हैं ये दो बालक, श्रीकृष्ण और बलराम । इन्ही दोनो पर इन दुष्टोने दृष्टि गडा रखी थी । अत, हमारे गोप-योद्धाओने इन्हे पकड लिया है । ये दोनो अवश्य ही दण्ड पानेके योग्य हैं' ॥ १४ ॥

तस्मात्प्रमाणमिह गोकुलराज एव स्वामिन् ! यदिच्छसि कुरुष्व तथा सुयोग्यम् ।
इत्युक्तवन्तमथ तं व्रजराज आह दुष्टाविमौ त्यजत भो व्रजसीम्नि नीत्वा ॥१५॥

'इस लिए गोकुलराज ! प्रभो ! अब इस विषयमे आप ही प्रमाण हैं । आपकी जैसी इच्छा हो, तथा आप जो उचित समझे वह करें' । निर्देशकके ऐसा कहनेपर व्रजराज बोले— 'अजी ! तुम इन दुष्टोको व्रजकी सीमापर ले जाकर छोड़ दो' ॥ १५ ॥

भाण्डारिकं तदनु वीक्ष्य पुनः सभायां किञ्चिद्विहस्य मुदिताननं आह सोऽथ ।
किं भो ! त्वया भण वदान्यतयाऽतिथिभ्यो भक्ष्यादिकं स्वयमुपेत्य समर्प्यतेऽत्र ? ॥१६॥

तदनन्तर भाण्डागाराध्यक्षकी ओर देखकर सभामे कुछ मुस्कराते हुए प्रसन्नमुख नन्द फिर बोले—'भइया ! तुम बताओ कि स्वय पहुँचकर यहाँ आये हुए अतिथियोको भक्ष्य-भोज्य आदि पदार्थं समर्पित करते हो क्या ?' ॥ १६ ॥

**त्वद्धृत् किमस्ति विततं बहुधा प्रदाने त्यागस्य मार्गमवगच्छसि वाऽत्र दाने ?।**
**संसारिणो वयमिह द्विकराः स्म दाने सोऽस्मांस्तु पश्यति सहस्रकरः प्रदाने ॥१७॥**

'क्या तुम्हारा हृदय दूसरोको नाना प्रकारकी वस्तुयें देनेमे विशाल है ? क्या तुम दानके विषयमे त्यागका मार्ग अच्छी तरह जानते हो ? हम ससारी लोग देनेमे दो हाथ वाले हैं परन्तु हमको वह प्रभु देखता हैं, जिसके दानके लिए हजारो हाथ हैं' ॥ १७ ॥

**एतद्विचार्य सततं व्रजराज्यकोषं ह्युद्घाट्य देयमसमं सकलेभ्य इत्थम् ।**
**येनाऽऽगता अतिथयो मुनयो बुधाश्च स्युर्योगिनोऽपि नितरां परितृप्तचित्ताः ॥१८॥**

'ऐसा विचारकर सदा व्रजके राज्यका खजाना खोलकर समस्त याचकोको इस प्रकार दान दो, जिसकी कही तुलना न हो। उस दानसे यहाँ आये हुए अतिथि, मुनि, विद्वान् और योगी भी निरन्तर जी भरकर तृप्त होते रहे' ॥ १८ ॥

**संच्छिद्य गोतुलजनेश्वरवाक्यमित्थं मध्ये जगाद विहिताञ्जलिरेष तत्र ।**
**स्वामिन् ! मया स्वयमुपेत्य सभक्ति तेभ्यो भक्ष्यादिकं सकलवस्तु समर्प्यतेऽत्र ॥१९॥**

गोकुलराजकी इस बातको बीचमे ही काटकर ये भाण्डागाराध्यक्ष वहाँ हाथ जोडकर बोले—'स्वामिन् ! मैं स्वय पहुँच कर समागत जनोको भक्ष्य आदि सारी वस्तुएँ भक्ति-भावसे अर्पित करता हूँ ॥ १९ ॥

**भाण्डारकोष्ठमभिगम्य सहस्रशस्ते स्वात्मप्रियं हितकरं रुचिमद्यथेष्टम् ।**
**भक्ष्यादिकं सदधिदुग्धमभीक्ष्णमेव श्रद्धार्पितं स्वयमवेक्ष्य नयन्ति देव ! ॥२०॥**

'देव ! हजारो लोग भाण्डागारमे जाकर अपने लिए प्रिय, हितकर, रुचिकारक दही, दूध आदि सहित यथेष्ट भक्ष्य-भोज्य आदि पदार्थ जो उन्हे निरन्तर श्रद्धापूर्वक ही अर्पित किया जाता है, स्वय देख-भालकर ले जाते हैं' ॥ २० ॥

**इत्थं प्रतिक्षणमबाधमवार्यरूपैर्नीतं प्रभो ! बहुपदार्थकमीप्सितं तत् ।**
**आश्चर्यधाम भवतीश्वर ! दृश्यमानं संपूर्यते द्विगुणमेभिरहो ! क्षणेन ॥२१॥**

'प्रभो ! इस प्रकार प्रतिक्षण बिना किसी बाधाके अनिवार्य रूपसे ले जानेवाला बहुत-सा अभीष्ट पदार्थ इन सबकी दृष्टि पडते ही क्षण-भरमे दुगुना होकर भाण्डारमे भर जाता है। मेरे मालिक ! यह बड़े आश्चर्यकी बात है' ॥ २१ ॥

पश्यत्सु तेषु सकलेष्वथ विस्मितेषु शान्त्या स्थितास्वखिलमूर्तिषु तत्सभायाम् ।
द्रागागता युवतिभिः शिशुभिर्वृतास्ता मान्याः स्त्रियोंऽशुकसुपोटलिकां वहन्त्यः ॥२२॥

उस सभामें सारी मूर्तियाँ शान्तिसे बैठी थी और सब लोग विस्मित होकर यह सब देख रहे थे । इसी समय युवतियो और शिशुओसे घिरी हुई वे माननीय गोपाङ्गनाएँ कपड़ेको पोटली उठाये वहाँ आ पहुँची ॥ २२ ॥

दृष्ट्वा सभासद इमा युवतीश्चतस्रः पूज्याः स्त्रियो व्रजसतीजनरत्नभूताः ।
आगोकुलेशमभितश्चकिता बभूवुर्हस्ताम्बुजस्थितसुपोटलिकाभिराभिः ॥२३॥

जो व्रजकी सतियोमे रत्नभूता थी, उन पूजनीया चार युवती-स्त्रियोको कर-कमलोमे पोटलियोके साथ वहाँ आई देख गोकुलेश्वर पर्यन्त वहाँके सभी सभासद् चकित हो गए ॥२३॥

तास्ताः प्रगृह्य सुदृढं रुचिरं विहस्य तैः स्वैर्गुणैरहह ! लक्ष्म्य इवाऽत्र दीप्ताः ।
ऊचुर्व्रजेशगृहिणीमुपहास्य तावत् किं भो ! व्रजेश्वरि ! वदाऽर्भकराज्यमेतत् ? ॥२४॥

वे स्त्रियाँ अपने गुणोसे लक्ष्मियोकी भाँति प्रकाशित होती थी । वे अपने हाथोमे मजबूत गठरी लेकर कुछ हँसती हुई-सी व्रजराज-गेहिनी यशोदाका उपहास करके बोली—'व्रजरानीजी ! बताओ तो सही, क्या गोकुलमे इन बालकोका ही राज्य है ? ॥ २४ ॥

ये राजभिः प्रतिगृहं व्रजमण्डलेऽस्मिन्नागोकुलेशभवनं प्रतिगोपवेश्म ।
सङ्गम्य सङ्घश उपद्रवमेव कृत्वा बाध्यन्त इत्थमसकृत् ससुखाः प्रजाः स्वाः ॥२५॥

'ये बालक-राजालोग इस व्रजमण्डलमे गोकुलेश्वरके घरसे लेकर प्रत्येक गोपके घरोमे यूथ बना-बनाकर जाते हैं, और उपद्रव करके अपनी प्रजाओको सताते हैं' ॥ २५ ॥

किं साम्प्रतं भवति तद्वद भो ! यशोदे ! ध्येये स्थिते व्रजजने प्रतिसद्म गत्वा ।
तस्मान्निवारणममुष्य पुरः स्वमेव निर्दिश्य विस्फुरणमस्य शिशोः सुकर्म ॥२६॥

'रानी यशोदा ! तुम्ही बताओ, क्या यह उचित है कि जब व्रजके लोग ध्येयमे स्थित हो—अपने इष्टदेवके चिन्तनमे लगे हो, उस समय यह प्रत्येक घरमे जाकर उन लोगोको ध्यानसे भ्रष्ट करे और उनके आगे अपनेको ही प्रकट करके दिखाए या प्रकाशित करे ? । क्या इस बालकका यही सुकर्म है ?' ॥ २६ ॥

युक्तं कथं भवति भो ! तदपि स्वभक्तैर्मित्रैर्भयङ्करमुखैः कपिभिः समेत्य ।
अव्याहतं परगृहेषु निविश्य हन्त ! विस्फोटनं सकलवस्तुन आत्मतन्त्रम् ॥२७॥

'रानीजी ! यदि उपर्युक्त कर्मको ठीक मान लें तो भी यह कैसे उचित होगा कि अपने भक्तो, सखाओ तथा भयानक मुखवाले वानरोके साथ आकर यह दूसरोके घरोमे बे रोक-टोक

घुस जाय और वहाँ की प्रत्येक वस्तुको स्वच्छन्दतापूर्वक तोड-फोड डाले। यह तो बडे खेदकी बात है' ॥ २७ ॥

**अत्याहितीकरणमव्यथमात्मनीनं ह्यस्मद्गृहे विहरणं शिशुभिर्वृतस्य।**
**स्वेष्टं प्रियं भवति गोकुलराज्ञि! किन्तु मन्यामहे(ऽ) सुकृतमेव तदप्यमुष्य ॥२८॥**

'गोकुलकी रानी! गोप शिशुओके साथ घिरे हुए इस बालकका हमारे घरमे मनमाना विहार करना और किञ्चित् व्यथाका अनुभव न करके भयदायक कर्म करना तथा जो अपनेको प्रिय लगे वही करते रहना हमे अभीष्ट और प्रिय हो तो भी हम उसे इसका वह कर्म अनुचित ही मानते है' ॥ २८ ॥

**शुद्धे स्वतो धनदगेह इवाऽभिरम्ये ह्यन्तर्बहिश्च परिमार्जित आलये नः।**
**आगत्य नित्यमहहा(ऽ) शुचिवस्तुभिर्भो! तद्दूषणं भवति साम्प्रतमस्य किं वा? ॥२९॥**

'हमारा घर स्वत शुद्ध तथा कुबेरके गृहके समान मनोभिराम है तथा भीतर और बाहरसे झाड-बुहार लीप-पोतकर स्वच्छ किया हुआ है। किन्तु हाय! वहाँ आकर यह अपवित्र वस्तुओसे उसे दूषित कर देता है। इस बालकका यह कर्म क्या उचित माना जायेगा?' ॥ २९ ॥

**गोष्ठं प्रविश्य समयेऽसमये कुकृत्यं कृत्वा विमुच्य सुरभीवृषवत्सकांस्तान्।**
**तस्मात् पलायनममुष्य चरित्रमेतत् किं शोभनं भवति राज्ञि! गृहे गृहे नः(?) ॥३०॥**

'रानीजी! हमलोगोके घर-घरमे जाकर समय-बेसमय गोशालामे प्रवेश करके कुकृत्य करते हुए यह हमारी गायो, बैलो और बछडोको खोल देता है और वहाँसे भाग जाता है। इसका यह चरित्र क्या शोभन कहा जायेगा?' ॥ ३० ॥

**व्यग्रेषु कृत्यनिवहेषु गृहस्थवर्गेष्वागत्य नेत्रकमलान्यपवार्य युक्त्या।**
**भाण्डारकोष्ठमभिगम्य गृहस्थितं तद्दध्यादिचोरणममुष्य सुखं ददाति (?) ॥३१॥**

'व्रजके गृहस्थवृन्द जब अपने-अपने कार्यमे व्यग्र रहते हैं। उस समय आकर यह उनके नेत्र कमलोको युक्तिसे किसी दूसरी ओर देता है और स्वय कोठारमे घुसकर वहाँके दूध-दही आदिको चुराने लगता है। यही सब कार्य इसे सुखद जान पडता है' ॥ ३१ ॥

**आरुह्य पीठमथवा तदुलूखलादि दुष्प्राप्यभाण्डमपि शिक्यविलम्बितं तत्।**
**निष्कास्य बालसखिभिः कपिभिः समं वा तत्रत्यवस्त्वदनमस्य सुखं तनोति(?) ॥३२॥**

'किसी पीढेपर या उस घरके ओखली आदिपर चढकर जिसको पाना कठिन है, उस छीकेपर लटकाये गए पात्रको भी यह पा लेता है और उसमे रखी हुई माखन आदि वस्तुओको निकालकर सखाओ अथवा बन्दरोके साथ खाता है। इस प्रकार चुराकर खाना इसको अधिक आनन्द देता है' ॥ ३२ ॥

ध्वान्तालये निहितवस्तुन आत्मबोधं सम्पाद्य चन्द्रकिरणैरिव संज्ज्वलद्भिः ।
रत्नांशुभिस्तनुधृतैर्विहितैरुपायैर्हैयङ्गवीनमपि हर्तुममुष्य यत्नः ॥३३॥

'अँधेरे घरमे रखी हुई वस्तुओका अपने शरीरमे धारण किये रत्नमय आभूषणोकी प्रभासे जो चन्द्र किरणोके समान प्रकाशित होती है, ज्ञान प्राप्त करके ताजा माखन चुरानेके लिए इसका यत्न रहता है ॥ ३३ ॥

चौरः प्रविष्ट इति सद्मनि संविभाव्य गत्वा निरीक्ष्य सुधृतोऽपि शुभे! सदोषी ।
अस्मान् विहस्य विपरीतमसौ सुमिष्टैर्वाक्यैर्विमोह्य भवतीह च साधुवद् यः ॥३४॥

'शुभे ! घरमे चोर घुसा हुआ है, यह जानकर वहाँ जाकर देख-भाल करनेपर पकड़ लिए जानेके बाद भी वह दोषी बालक उलटे हमारा उपहास करके अपने मीठे-मीठे वचनो द्वारा हमे मोहमे डाल देता और स्वय भलामानुस सा बन जाता है ॥ ३४ ॥

संगृह्य चाऽप्रतिहतां गतिमात्मनीनां सर्वत्र हन्त ! विहरन्नतसीसुमाभः ।
सोऽयं गृहस्थितजनान् सुखदे! हतेच्छो ह्याक्रुश्य गच्छति शिशूनपि रावयित्वा ॥३५॥

'सुखदायिनी यशोदे ! खेदकी बात है कि अपनी अप्रतिहत गतिको लेकर सर्वत्र विहार करनेवाला यह अतशीकुसुमके समान श्याम कान्तिवाला बालक अपनी इच्छा पूरी न होनेपर घरके लोगोको खोटी-खरी सुनाकर और छोटे बच्चोको भी रुलाकर चल देता है ॥ ३५ ॥

विश्वं विनाशि विकृतं ह्यविनश्वरस्तु स्वात्मैव भाति तदमुष्य सुलब्धयेऽत्र ।
भुङ्ध्वं सदात्महितमेव विहाय सर्वं त्यागस्य मार्गमवलम्ब्य वदत्ययं नः ॥३६॥

यह हमलोगोको उपदेश देता है कि यह विश्व क्षणभङ्गुर है, सविकार है। केवल अपना आत्मा ही अविनाशी है। अत उसकी उपलब्धिके लिए सदा सब कुछ छोडकर त्यागके मार्गका अवलम्बन करके अपने लिए हितकर भोगका ही उपभोग करो ॥ ३६ ॥

भावोऽप्यथाऽस्य कथनस्य न चैव विद्मो विद्मो वयं तु सुतरां छलिनं ह्यमुं तु ।
ज्ञातारमस्य भुवनस्य च दीप्तबोधं को ज्ञातुमीश उरुगायममुं वरोरु ! ॥३७॥

'वरोरु ! इसके इस कथनका अभिप्राय हम नही समझते है किन्तु इतना अवश्य जानती है कि यह छलिया है। यह समस्त लोकोका ज्ञाता है। इसकी ज्ञान-शक्ति अत्यन्त उद्बुद्ध है। बडे-बडे लोग इसके यशका गान करते हैं। भला इसको कौन जान सकता है ? ॥३७॥

एतादृशोऽपि सुखदाऽपि तवैष बालो किं दुष्कृतं व्रजगृहेषु करोत्यभीक्ष्णम् ? ।
किं वक्ष्यसीह ललिते ! वदकज्जलाभं त्वेनं निजाङ्कमधिरोप्य सुखं हसन्ती ॥३८॥

'ललितरूपवाली रानी यशोदे ! तुम इस काजल जैसे काले बालकको सुखपूर्वक गोदमे बिठाकर हँस रही हो। तुम्हारा यह शिशु ऐसा होनेपर भी बडा सुखदायी है। तो भी यह तो बताओ कि यह बार-बार व्रजवासियोके घरोमे जा-जाकर अनुचित कार्य क्यो करता है ? तुम्हारे पास इस प्रश्नका क्या उत्तर है ?' ॥ ३८ ॥

**संयुक्तरूपत इदं वचनं निगद्य तूष्णीं स्थितासु सकलासु जगाद चैका ।**
**बद्धाञ्जलिं सभयगद्गदवाचमेवं सम्बोध्य गोकुलजनेश्वरमस्य कृत्यम् ॥३९॥**

सामूहिकरूपसे यह बात कहकर जब सारी व्रजगोपियाँ चुप हो गईं, तब एक गोपीने गोकुलेश्वर नन्दरायको सम्बोधित करके हाथ जोड इस शिशुके कृत्यका सभय गद्गदवाणीमे इस प्रकार वर्णन आरम्भ किया—॥ ३९ ॥

**राजन् ! भवान् विजयतां तदिमौ विशुद्धौ ब्रह्मेश्वराविव शिशू जयतां सदेत्थम् ।**
**किन्त्वत्र कृष्णशिशुना कृतमैश्वरं तत्सत्कर्म सज्जनसभास्ववधार्यताञ्च ॥४०॥**

'राजन् ! आपकी जय हो तथा आपके इन दोनो विशुद्ध ब्रह्म और ईश्वरके समान बालकोकी भी सदा इसी प्रकार जय होती रहे। किन्तु आपके इस श्याम-शिशुने यहाँ जो ईश्वरोचित सत्कर्म किया है, उसे सज्जनोकी उस सभामे सुनाती हूँ। ध्यान देकर सुनिए ॥ ४० ॥

**आसं व्रजेश्वर ! गताऽद्य सरिज्जलेषु स्नातुं तथा किमपि कर्म शुभञ्च कर्तुम् ।**
**सम्पाद्य कृत्यमहमीश ! ततो निवृत्ताऽद्राक्षं पुरः स्थितममुं वनमार्ग एकम् ॥४१॥**

'व्रजेश्वरी ! मै आज यमुनाजी के जलमे नहाने और कुछ शुभ-कर्म करनेके लिए गई थी। वहाँ सम्पूर्ण कृत्य सम्पन्न करके जब मै वहाँसे लौटी हूँ कि यह वनके मार्गमे अकेला ही मेरे सामने खडा है' ॥ ४१ ॥

**भ्रान्तं मनो मम समीक्ष्य तदैव चैनं कस्मादिहाऽऽगत उपेन्द्रसमोऽर्भकोऽयम् ।**
**किं वा चिकीर्षति गताः क्व च ते सखाय एकाकिनं कथमिहाऽद्य वने त्यजेयम् ॥४२॥**

'उस समय इसे देखकर मेरा मन भ्रान्त हो उठा। मैने सोचा—यह भगवान् विष्णुके समान पराक्रमी बालक यहाँ कहाँसे आ गया ? क्या करना चाहता है और इसके वे सखा कहाँ चले गये। आज मै इसे इस वनमे अकेला ही कैसे छोड़ दूँ ?' ॥ ४२ ॥

**मन्मानसे मतिरियं समभूत्ततस्तु गत्वा समीपमहमस्य करे गृहीत्वा ।**
**प्रेम्णाऽभ्यधां कुत इहाऽसि मुकुन्द ! सर्वं सत्यं वदेत्यमुमहो ? हृदये निधाय ॥४३॥**

'मेरे मनमे जब ऐसा विचार उत्पन्न हुआ, तब मै उसके पास गई और इसका हाथ पकड़कर इसे हृदयसे लगाकर प्रेमपूर्वक बोली'—'मुकुन्द ! तुम यहाँ कहाँसे आ गए ?। सब-कुछ सच-सच बता दो' ॥ ४३ ॥

वक्ति स्म सोऽथ करुणं स्रवदश्रुधारो मातर्भयानकवनेऽहमिहाऽऽस्मि चैकः ।
आनीय कीर्तिसुतया स्वसखीभिरेवं त्यक्तोऽस्मि मां नय गृहं छलिनी भृशं सा ॥४४॥

'तब यह नेत्रोसे आँसूकी धारा बहाता हुआ करुणाजनक स्वरमे कहने लगा— 'मइया ! इस भयानक वनमे मै अकेला ही हूँ । मुझे सखियो सहित कीर्ति-कन्या राधा यहाँ लाकर छोड़ गई है । वह बडी छलिनी है । तुम मुझे मेरे घर पहुँचा दो ॥ ४४ ॥

लोकं मुहुर्मुहुरियं विविधैः स्वकृत्यैरित्थं विवर्तयति तामपि पश्य मातः ! ।
युक्त्याऽनयाऽहमपि चाऽत्र विवर्तयामि हास्या यया भवति साऽद्य सुधीसभासु ॥४५॥

'माँ ! देखो, यह राधा इस प्रकार विविध उपायोद्वारा बार-बार लोगोको ठगती रहती है । मै भी उसे इस युक्तिसे पराजित करूँगा कि जिससे वह आज सुधी-समाजमे उपहासका पात्र बनेगी' ॥ ४५ ॥

इत्युक्तवन्तमथ तं हृदये समुह्य संमील्य नेत्रयुगलं गृहमागताऽहम् ।
पश्यामि तावदमुमेव गृहान्तरे मे दध्यादिचौर्यनिरतं सखिभिः समं स्वैः ॥४६॥

'इसके ऐसा कहनेपर मैने इसे हृदयमे रख लिया—छातीसे लगा लिया और दोनो आँख बन्द करके घर लौटी आनेके बाद क्या देखती हूँ कि यही मेरे ही घरके भीतर अपने सखाओके साथ दही आदिकी चोरीमे सलग्न है ॥ ४६ ॥

साश्चर्यमात्महृदयस्थितमेनमित्थं कुर्वन्तमत्र च निरीक्ष्य भृशं विमुह्य ।
पश्यामि यावदहमात्महृदं ततोऽत्र नासीदयं करयुगं मम रिक्तमासीत् ॥४७॥

'जिसे मैने अपने हृदयसे लगा रखा था और हाथोसे पकड रखा था, उसे ऐसा करते देख मुझे बडा आश्चर्य हुआ । मै भारी मोहमे पड गई और जब अपने हृदयकी ओर देखती हूँ तो वहाँ यह नही रहा तथा मेरे दोनो हाथ भी खाली ही थे ॥ ४७ ॥

तन्मूर्छिताऽपतमहं ह्यवनीतले द्राङ् नाऽज्ञासिषं किमपि गोकुलराज ! पश्चात् ।
संज्ञां समाप्य निमिषात् स्वहृदि स्थितं तं ह्यद्राक्षमीश ! पुनरेव मुखं मृजन्तम् ॥४८॥

'गोकुलराज ! इससे मै तत्काल मूर्छित होकर धरती पर गिर पडी और पीछे क्या हुआ, कुछ भी नही जान सकी । निमेषमात्रमे जब होश हुआ तो फिर देखती हूँ कि वह मेरे हृदयसे ही लगा हुआ है । और पुन मेरा मुँह पोछ रहा है ॥ ४८ ॥

संस्मृत्य पूर्वचरितं हृदयस्थितं तं भूयोऽपि बाहुयुगलेन विगृह्य गाढम् ।
सेर्ष्याऽभ्यधामहमपि त्वमसत्यवादिन् ! मायाव्यतुल्यशिशुरूपधरोऽसि यक्षः ॥४९॥

'फिर इसके पूर्वचरित्रका स्मरण करके हृदयसे लगे हुए उस बालकको मैने पुन दोनो हाथोद्वारा उसको जोरसे जकड लिया और ईर्ष्यापूर्वक कहा—अरे ओ मिथ्यावादिन्! तू मायावी है और अनुपम शिशुका रूप धारण करनेवाला कोई यक्ष है ॥ ४९ ॥

**यक्षोऽस्म्यसौ न रुचिरे ! स्मृतिविभ्रमस्ते भूतानि यं तु परिपीडयितुं न शेकुः ।**
**तद्विद्धि मां स्ववशगं व्रजराजपुत्रं बालोऽस्मि योऽस्मि हतरूपगुणोऽस्मि सोऽहम् ॥५०॥**

'[ श्रीकृष्णने उत्तर दिया— ] 'मेरी सुन्दरी मइया! मै वह यक्ष नही हूँ जिसे अग्नि आदि पाँचो-भूत पीडित न कर सके ( यह कथा केनोपनिषदमे आई है। ) तुम्हारी स्मरण-शक्ति भ्रान्त हो गई है। अत. तुम मुझे अपना वशवर्ती व्रजराजका बालक समझो। मै बालक अवश्य हू परन्तु प्राकृत-रूप और गुणसे अतीत हूँ। जो हूँ, वही हूँ। ( तुम दूसरा कुछ मुझे न समझो। )' ॥ ५० ॥

**जल्पन्तमित्थमसमं मधुरैर्वचोभिर्मां मोहयन्तमनिशं व्रजराज ! वत्र ।**
**स्मृत्वा तदस्य बहुबारकृतं कुकृत्यं रुष्टाऽवदं तदनु साऽहमिमं समीक्ष्य ॥५१॥**

'व्रजराज! इसप्रकार मधुर वचनो द्वारा असङ्गत बात कहकर जब यह मुझे मोहित करने लगा, तब इसके द्वारा अनेक बार किये गए कुकृत्योका स्मरण करके मुझे रोष आ गया और मै इसकी ओर देखकर इसप्रकार बोली—॥५१॥

**त्वां कज्जलाभ ! कलुषीकृतलोकचित्तं संपश्य राजसभमद्य नयामि तावत् ।**
**उद्घाटयामि तव चौर्यमिदं सभायां हास्यो भविष्यसि भविष्यति च त्वमेव ॥५२॥**

'ओ काजल जैसे काले-कलूटे कन्हैया! तूने लोगोके चित्तको अपनी ओरसे कलुषित कर लिया है। देख, अब मै पहले तुझे राजसभामे ले चलती हू। वहाँ भरी सभामे तेरी यह चोरी खोलकर बताऊँगी। फिर भविष्यमे तूँ ही सबकी हँसीका पात्र बनेगा' ॥ ५२ ॥

**मा मां नयस्व सुखदे ! कथयन्तमेनं प्रच्छाद्य वस्त्रयुगलेन हठात् समुद्य ।**
**आनीतमत्र सुधियोऽपि विलोकयन्तु सोयं विराजत इहाऽपि परन्तु हन्त ! ॥५३॥**

'तब यह बोला—'मेरी सुखदायिनी माँ! मुझे वहाँ मत ले चलो'। इसके ऐसा कहनेपर भी मैने इसे दो वस्त्रोसे ढँककर हठात् गोदमे यहाँ उठा लाई हूँ। आप सब सुधीजन इसे अपनी आँखो देख ले। परन्तु आश्चर्य है कि वही यह बालक यहाँ भी पहलेसे मौजूद है' ॥ ५३ ॥

**इत्थं प्रजल्प्य विविधं हृदयानुकूलं ध्येयं तमीश्वरमसौ प्रतिगृह्य दोर्भ्याम् ।**
**निष्कास्य वस्त्रत इह स्वगुरुस्वरूपं संदर्शयन्त्यहह ! भीतियुता रराज ॥५४॥**

इसप्रकार अपनी हार्दिक भावनाके अनुसार तरह-तरहकी बाते कहकर उन ध्यान योग्य ईश्वरको दोनो हाथोसे पकड़कर वहाँ वस्त्रसे बाहर निकाला। परन्तु वह उसका गुरु

( अपनी बुद्धिके अनुसार जैसा जो समझे ) निकला। अहा हा! अपने गुरुके रूपको दिखाती हुई वह भयभीत हो अद्भुत शोभा पाने लगी ॥ ५४ ॥

**आश्चर्यमुच्चतरमेवमभूत्तदानीं पश्यत्सु तेषु सकलेषु सुविस्मितेषु।**
**बद्धोऽर्भकः समभवत् स्वगुरुर्ह्यमुष्या दृष्टः सभासु सकलैरनया तु सैषः ॥५५॥**

उस समय वहाँ विस्मित होकर देखते हुए सब लोगोको बडा भारी आश्चर्य हुआ। सभामे उसके द्वारा बँधा हुआ वह बालक अन्य सबको उसका गुरु ही दीखा, किन्तु उसे तो वह नन्दशिशु ही दिखाई पड़ा ॥ ५५ ॥

**कोलाहलः समुदभूत् परिहासजन्यो दृष्ट्वाऽस्य तद्गुरुममुं स्थविरं सभासु।**
**आर्ये! त्वया कृतमिदं किमहो! गुरुस्ते ह्यानीत इत्थमिह चाभ्यवदंश्च सभ्याः ॥५६॥**

फिर तो उस सभामे उसके बूढे गुरुको देखकर सबलोग उसकी हँसी उड़ाने लगे। उस परिहासके कारण वहाँ महान् कोलाहल मच गया। सभी सभासद् कहने लगे—'आर्ये! तुमने यह क्या किया? अहो! इस प्रकार तुम अपने गुरुको ही यहाँ उठा ले आयी' ॥ ५६ ॥

**दृष्ट्वा स्वकृत्यपरिहासमिमं त्वसह्यं श्रुत्वा सदस्यवच ईदृशमार्तिकारि।**
**साऽतप्यत स्वहृदि कृष्णशिशुं पुरस्थं संदृश्य तत्र विचरन्तमथाऽभ्यधाच्च ॥५७॥**

अपने कार्यका यह परिहास देख तथा सदस्योका ऐसा क्लेशदायक वचन सुनकर उसको अपने हृदयमे बडा संताप हुआ। वह वहाँ अपने सामने विचरते हुए उस कृष्ण-शिशुकी ओर देखकर इस प्रकार बोली—॥ ५७ ॥

**दुश्चेष्ट! धूर्त! बहुमाय! सदाग्रह! त्वां जानाम्यहं छलिनमस्म्यबलाऽहमत्र।**
**तस्माद्रुणद्भ्मि हृदि याहि बहिर्यदि त्वं सामर्थ्यवानसि विभो! सबलाऽस्मि तत्र ॥५८॥**

'दुश्चेष्ट! धूर्त! बहुत-सी माया फैलानेवाले! हठीले! मैं जानती हूँ, तू बड़ा छलिया है। किन्तु क्या करूँ? मै अबला हूँ। तुझे बलसे जीत नहो सकती। अत अपने हृदयके भीतर तुझे रोके लेती हूँ। यदि तुझमे सामर्थ्य है तो बाहर निकल जा! विभो! इस क्रियामे मै सबला हूँ' ॥ ५८ ॥

**उक्त्वा तमित्थमभयं स्मृततत्स्वरूपा सा साधुगोपगृहिणी स्वहितं वितर्क्य।**
**बद्धाञ्जलिं स्वगुरुरूपधरं ततोऽमुं नत्वाऽभवत्सुचिरमस्य कृपासु मग्ना ॥५९॥**

उस निर्डर बालकसे ऐसा कहकर उसके स्वरूपका स्मरण करके उस साध्वी गोपाङ्गनाने अपने हितका विचार किया और अपने गुरुका रूप धारण करनेवाले उस बालकको हाथ जोडकर मस्तक झुकाया। फिर चिरकालतक उसकी कृपामे डूबो रही ॥५९॥

**सभ्यान् समीक्ष्य तत आसु जगाद चैका स्थित्याऽनया प्रकुपिता व्रजराजमेवम् ।**
**राजन् ! मयाऽपि शिशुरेष पिधाय वस्त्रैरानीत आत्ययिककर्म गृहे विकुर्वन् ।।६०।।**

तदनन्तर उन व्रजाङ्गनाओमे-से एक इस परिस्थितिसे कुपित होकर सभ्योकी ओर देखकर व्रजराजसे इस प्रकार बोली—'राजन् ! मेरे घरमे हानिकारक कर्म करते समय मै भी इस शिशुको वस्त्रोसे ढँककर ले आई हूँ' ६० ।।

**ग्रन्थिं विमुच्य शणपोटलिकां गृहीत्वा सम्यङ् निरीक्ष्य शिशुमेनमिह स्थितं च ।**
**तिष्ठेति सेर्ष्यमभिधाय तमीश्वरं सा निष्कास्य दर्शितवती स्वसुतस्वरूपम् ।।६१।।**

परन्तु गाँठ खोलकर सनकी पोटली ले उसमे रखे हुए इस शिशुकी ओर अच्छी तरह देखकर उसने ईर्ष्यापूर्वक कहा—'अरे ! खडा रह !' ऐसा कहकर इस ईश्वर-रूप बालकको निकालकर जब दिखाया तो यह उसका अपना ही बेटा निकला ।। ६१ ।।

**दृष्ट्वैव तं परिचितं प्रतिवेशिबालं सभ्या इमां जहसुरुच्चधियोऽपि हन्त ! ।**
**उत्थाय गोकुलजनेश्वरपुत्र एष गत्वा स्वमित्रममुमाशु तदाऽऽलिलिङ्ग ।।६२।।**

हा हन्त ! उस अपने पडोसी एव परिचित बालकको देखते ही उच्च विचारवाले सदस्य भी इस गोपीकी हँसी उडाने लगे । फिर इस गोकुलराजके पुत्र कृष्णने भी उठकर अपने मित्र-स्वरूप उस बालकको हृदयसे लगा लिया ।। ६२ ।।

**दृष्ट्वा स्थितिं तदनु गोकुलरत्नभूताः प्रौढाः स्त्रियः प्रकुपिताश्चकिता भृशं याः ।**
**ऊचुस्तमित्थमसमं प्रतिगृह्य बाहौ त्वं शम्बरोऽसि बहुमाय उपायविच्च ।।६३।।**

यह स्थिति देखकर गोकुलकी रत्नभूता प्रौढा स्त्रियाँ अत्यन्त कुपित एवं भारी आश्चर्यसे चकित हो उठी । वे इस अनुपम बालककी बाँह पकडकर इस प्रकार बोली—'अरे ! तू बहुत-सी माया प्रकट करनेवाला शम्बर है । तरह-तरहके उपाय जानता है' ।।६३।।

**सभ्या ! वदन्त्यहह ! मां व्रजमातरोऽपि मायाविनं ह्यनपराधिनमप्यभीक्ष्णम् ।**
**नाऽहं स राक्षस उपायशतेष्वभिज्ञा मायाविनी महितकीर्तिसुताऽस्ति साऽत्र ।।६४।।**

कृष्ण बोले—'सभासदो ! कितने खेदकी बात है कि ये व्रज-माताएँ भी बिना किसी अपराधके ही मुझे बार-बार मायावी कहती हैं । किन्तु मै वह मायावी राक्षस शम्बर नही हूँ । मायाविनी तो यहाँ पूजनीया कीर्तिजीकी कन्या ही है' ।। ६४ ।।

**एवं निगद्य धृतयौगिकशक्तिरेष आसां प्रभावमवगम्य कयाचिदत्र ।**
**आनीतमात्मगृहवस्तुविदूषकं स्वं संमन्त्र्य तत्र च विवर्तयति स्म भूयः ।।६५।।**

ऐसा कहकर इन गोपाङ्गनाओके प्रभावको जानकर इस बालकने यौगिक-शक्ति धारण कर ली । किसी गोपीके द्वारा लाये गये स्वगृह-वस्तु-विदूषक अपने स्वरूपको ही अभिमन्त्रित करके उसकी पोटलीमे ही रूपान्तरित कर दिया ।। ६५ ।।

**क्षिप्त्वाऽथ तत्करयुगस्थितमात्मरूपं रूपान्तरे परिणमय्य सुखं तदस्याः ।**
**ग्रन्थिं विमुच्य शणपोटलिकास्थितां तां तान् दर्शयन् स विरराज महासभासु ॥६६॥**

फिर उसके दोनो हाथोके बीच स्थित हुए अपने रूपको हटाकर उसे अनायास ही रूपान्तरमे परिणत कर दिया। तदनन्तर बोरेकी गाँठ खोलकर उनमे बैठी हुई कीर्ति-कन्याको उस महासभामे दिखाता हुआ वह अपूर्व शोभा पाने लगा ॥ ६६ ॥

**देवो जगाद पुनरेवमहो! महान्तः पूज्याः प्रपश्यत समेऽपि इहाऽस्ति सैषा ।**
**व्यामोहयत्यखिलविश्वमनादिरेषा मायाविनी जयति हन्त! विनोदिनीयम् ॥६७॥**

तत्पश्चात् उस देवस्वरूप बालकने इस प्रकार कहा—'अहो! पूजनीय महापुरुषो! आप सब लोग देखें। यह कीर्ति-कन्या राधा इसीमे बैठी है। यह अनादि मायाविनी है और अखिल विश्वको मोहमे डालती रहती है। आश्चर्य है, इस विनोदिनीकी सदा ही जीत होती है' ॥ ६७ ॥

**इत्थं प्रभाष्य वृषभानुसुतां प्रदर्श्य तां तत्र बाहुयुगलेन विगृह्य बाढम् ।**
**सोऽयं जगद्धर उपेन्द्रशिशुः सभायां प्रेम्णा ननर्त सुजनैरभिवीक्ष्यमाणः ॥६८॥**

ऐसा कहकर और वृषभानु-नन्दिनी श्रीराधाको वहाँ दिखाकर वह जगदाधार उपेन्द्र-रूपी शिशु भरी सभामे उस कीर्ति-किशोरीको दोनो हाथोसे पकडकर प्रेमपूर्वक नृत्य करने लगा। सन्त-जन उसकी इस लीलाको देख रहे थे ॥ ६८ ॥

**दृष्ट्वैव तद्युगलमात्मसुखस्वरूपं सच्चिन्मयं प्रकृतिपूरुषयोर्निदानम् ।**
**आनन्दहेतुमपरं परतत्त्वसंज्ञं सभ्या अपाह ननृतुश्च मुदाऽऽत्मपातम् ॥६९॥**

आत्मसुखस्वरूप, सच्चिदानन्दमय आनन्द-हेतु, अपर, परमतत्त्व तथा प्रकृति और पुरुषके आदि कारण उस युगल जोडीको देखते ही समस्त सभासद् भी हर्षके मारे नाचने लगे। नाचते-नाचते वे गिर-गिर पड़ते थे ॥ ६९ ॥

**एतां स्थितिं समवलोक्य गृहीतकृष्णा अन्याः स्त्रियः स्वभुजपोटलिकां विसृज्य ।**
**विद्धा हरिण्य इव हिंस्रजनेन शश्वद् ह्रीणाः स्वकृत्यनिवहेष्वथ दुद्रुवुर्हा! ॥७०॥**

इस स्थितिको देखकर श्रीकृष्णको पकडकर लानेवाली अन्य गोपाङ्गनाओने अपने हाथकी बोरीको वही छोड दिया और वधिकके बाणसे बीधी हुई हरिणियोकी भाँति वहाँसे भाग चली। हाय! उन्हे अपनी करतूतोपर बड़ी लज्जा आ रही थी ॥ ७० ॥

**इत्थं ह्युपालब्धुममुं जगत्पतिं समागतास्ता व्रजवासिनां स्त्रियः ।**
**शान्त्याऽमुनैवाऽत्र तिरस्कृताः सुखं ह्यानन्दमग्नाश्चकिता गृहान् ययुः ॥७१॥**

इस प्रकार उन जगदीश्वर श्रीकृष्णके विषयमे उलाहना देनेके लिए आई हुई वे व्रजवासियोकी स्त्रियाँ यहाँ शान्तिपूर्वक उन्हीके द्वारा तिरस्कृत हो आनन्दमग्न एव चकित होकर सुखसे अपने-अपने घरोको लौट गई ॥ ७१ ॥

**पश्चिमाशां गते सूर्ये चन्द्रे पूर्वां श्रिते ततः ।**
**सभ्यान् संमोह्य सर्वांस्तान् विवेशाऽऽत्मगृहं हरिः ॥७२॥**

जब सूर्य पश्चिम-दिशामे अस्ताचलको चले गए और पूर्वदिशामे चन्द्रमाका उदय हुआ तब उन समस्त सभासदोको सम्मोहित करके श्रीहरि अपने घरमे गए ॥ ७२ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**चतुस्त्रिंशोऽप्यगात्सर्गो महाकाव्ये स्तवात्मके ॥७३॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक सुधीप्रिय महाकाव्यमे यह चौतीसवाँ सर्ग पूरा हुआ ॥ ७३ ॥



## पञ्चत्रिंशः सर्गः

[ भगवता मृद्भक्षणम् । मात्रे विश्वरूपनिदर्शनञ्च । ]

( प्रहर्षिणीवृत्तम् )

**स्वैर्मित्रैर्व्रजमणिभिः समं बलेन संक्रीडन् क्षितिपतिपुत्र एष तत्र ।**
**अन्यस्मिन्नहनि धरां स्वमातरं च संपश्यन् दयितुमना मृदं ह्यखादत् ॥१॥**

दूसरे दिनकी बात है—अपने साथी व्रजरत्न बालकों तथा बलरामजीके साथ खेलते हुए इस व्रजराज कुमारने भू-देवी तथा माता यशोदापर कृपा करनेके लिए देखते-देखते मिट्टी खा ली ॥ १ ॥

**दृष्ट्वैव प्रियतममित्थमेनमत्र खादन्तं मृदमसमं सदोषबुद्ध्या ।**
**संभ्रान्ता व्रजशिशवो व्रजेशवेश्म संगम्य द्रुतमवदन्निदं यशोदाम् ॥२॥**

अपने प्यारे मित्रको इस प्रकार अनुचित-रूपसे मिट्टी खाते देख उसमे सदोषताकी भावना करके व्रजके बालक घबरा उठे और तुरन्त व्रजराजके भवनमे जाकर यशोदासे इस प्रकार बोले—॥ २ ॥

**भो मातर्नवजलदोपमः सखा नः क्रीडित्वा सुचिरममीभिरेव बालैः ।**
**अस्माकं नयनसमक्षमद्य मृत्स्नामाखादीद्बलसहिता वयं वदामः ॥३॥**

'अरी मइया ! हमारे सखा नूतन जलधरके समान श्याम-वर्णवाले तुम्हारे लालाने इन बालकोंके साथ चिरकाल तक क्रीडा करके हमलोगोकी आँखोके सामने मिट्टी खाई है । यह बात बलरामजीके साथ हम सबलोग कहते हैं' ॥ ३ ॥

**किं युक्तं भवति शुभे ! तदत्र कृत्यं ध्यातव्यं क्षुधिततरोऽपि कृष्ण एषः ।**
**मृत्स्नां किं विजनगतोऽत्ति भक्ष्यमिष्टं नाप्नोति व्रजसुखदे ! निवार्यतां तत् ॥४॥**

'शुभे ! व्रजराज-सुखदायिनी मइया ! इस विषयमे क्या करना उचित होगा, यह सोचना चाहिए । अत्यन्त भूखा होनेपर भी यह कन्हैया एकान्तमे जाकर मिट्टी क्यो खाता है ? क्या, इसे अभीष्ट भोजन नही मिलता है ? अत तुम इसे रोको' ॥ ४ ॥

**तच्छ्रुत्वा व्रजशिशुभिर्निगद्यमानं सद्वाक्यं भयचकिता व्रजेश्वरी सा ।**
**दृष्ट्वा तं हिमधवलाङ्गरौहिणेयं प्रेम्णैवाऽवददथ राम ! सत्यमेतत् ? ॥५॥**

व्रज-बालकोंके मुखसे कही जानेवाली इस सच्ची बातको सुनकर व्रजेश्वरी यशोदा भयसे चकित हो उठी । उन्होने हिमके समान गौर अङ्गवाले रोहिणीनन्दन बलरामकी ओर देखकर प्रेमसे ही पूछा—'राम ! क्या यह सत्य है ?' ॥ ५ ॥

सत्यं भो ! जगदपि योऽस्ति कालतुल्यो मद्भ्राता गुणगरिमाभिराम एषः ।
किं चित्रं स्मर सुखदेऽत्र सद्गुणानां कृत्येऽपि ह्युदरगतं जगच्च येषाम् ।।६।।

[ बलरामने कहा—] 'हाँ मइया ! सच है । मेरा यह भाई अपने गुणोकी गरिमासे अत्यन्त अभिराम है । यह काल तुल्य होकर समस्त जगत्को भी अपना ग्रास बना सकता है । सबको सुख देनेवाली माँ ! उत्तम गुणवाले पुरुषोके ऐसे कार्यमे भी क्या आश्चर्यकी बात है । याद रखो माँ ! यह सारा जगत् ही ऐसे लोगोके पेटमे है' ।। ६ ।।

साकूतं वदति बलोऽपि कृष्णमेनं कर्माऽपि प्रविततमस्ति चाऽस्य भूयः ।
आहारा अननुगुणास्तु भक्षितारं बाधन्ते तदुचितमस्य वारणं स्यात् ।।७।।

[ यशोदाने सोचा—] 'बलराम भी इस कृष्णके विषयमे विशेष अभिप्राय भरी बात बोल रहा है तथा इस बालकका कर्म या चरित्र भी बहुत दूरतक फैला हुआ है । प्रतिकूल आहार अवश्य खानेवालेको क्लेश पहुँचाता है । अतः कन्हैयाको इस कार्यसे रोकना ही उचित होगा' ।। ७ ।।

ध्यात्वेदं द्रुतमभिगम्य सा वरोरुर्वात्सल्यात् सरभसमग्रहीत् स्वपुत्रम् ।
संभ्रान्तो व्रजमहिषीधृतो भयार्तः कृष्णोऽयं तदनु तया ह्यभाणि चाऽत्र ।।८।।

यह सोचकर सुन्दरी यशोदा तत्काल वात्सल्य-भावसे प्रेरित हो कन्हैयाके पास गई और बडे वेगसे उन्होने अपने पुत्रको जा पकडा । व्रजरानीके द्वारा इस प्रकार पकडे जानेपर कन्हैया घबरा गया और भयसे व्याकुल हो उठा । तब यशोदाने उससे वहाँ कहा—।। ८ ।।

किं वा भो कृतमहहा! ह्यदान्त! बाल! यद्भुक्ता मृदपि तथा त्वमञ्जनाभ! ।
क्लिश्यामो वयमसमं दिवानिशं हा ! त्वत्कृत्यैरतिमनुजैः परात्मनिष्ठैः ।।९।।

'हाय, हाय, उद्दण्ड बालक ! यह तूने क्या किया ? काजल-से काले-कलूटे ! तूने मिट्टी भी खा ली ! हाय, हमलोग तुम्हारे अलौकिक तथा परमात्मोचित कर्मोसे दिन-रात अनुपम क्लेश उठाते रहते हैं ।। ९ ।।

किं सत्यं बलकथनं सखाय एते मृद्भक्षं शृणु निगदन्ति साम्प्रतं त्वाम् ।
एकान्ते त्वमपि मृदं स्वयं किमादः को हेतुर्वद चपलाऽत्र मां तु सत्यम् ।।१०।।

'क्या, बलरामका कथन सत्य है ? सुन ले, ये तेरे सखा भी तुझे इस समय मिट्टी खानेवाला बताते हैं । एकान्तमे स्वयं तूने भी मिट्टी क्यो खाई है ? इसका क्या कारण है ? ओ चचल ? यहाँ मुझसे सच-सच बता' ।। १० ।।

पृष्टोऽसौ तदनु तयाऽऽह निर्व्यलीकं ! सत्यं तज्जगदखिलं मृषा मयीति ।
तन्नाऽहं सुमृदमभक्षयं हि मातर्मां सर्वे (ऽ) सममनृतेन दूषयन्ति ।।११।।

मताके इस प्रकार पूछनेपर कन्हैयाने सच्ची बात कही—'माँ ! सत्य तो यह है कि मुझमे सारा जगत् ही मिथ्या है। अत मैने मिट्टी नही खाई है। ये सारे सखा अनुचित-रूपसे झूठ बोलकर मुझपर कलङ्क लगा रहे हैं॥ ११ ॥

**विश्वासो भवतु दृढो मयीह मातस्तं मेधा द्रढयतु सैव विश्वहन्त्री ।**
**प्रज्ञैषा जगदखिलं स्वचित्स्वरूपे सानन्दे परिणमयत्वदो विवर्तम् ॥१२॥**

'माँ ! मुझपर तुम्हारा दृढ विश्वास होना चाहिए। मेधा ( धारणा शक्ति ) उस विश्वासको अधिकाधिक सुदृढ करे। वह शक्ति ही विश्वका सहार करनेवाली है। यही प्रज्ञा बनकर सम्पूर्ण जगत्को, जो विवर्त या भ्रमरूप है, अपने सच्चिदानन्द-स्वरूपमे परिणतकर देती है' ॥ १२ ॥

**उक्तिर्मे यदि वितथा विभाति चेत्त्वं पश्येदं मम मुखमस्ति यत्समक्षम् ।**
**यद्गन्धैस्तदवयवैश्च दन्तलग्नैः संदृष्टैः सदसदिति प्रबुध्यते च ॥१३॥**

'यदि मेरी बात झूठी प्रतीत होती है तो यह मेरा मुँह तुम्हारे सामने है, देख लो। क्योकि मिट्टीकी गन्धसे तथा दाँतमे लगे हुए मृत्तिका-कणोके दिखाई देनेसे इसकी सत्यता और असत्यताका स्वत बोध हो जाएगा' ॥ १३ ॥

**इत्युक्ता व्रजमहिषी सुखं सुतेन विभ्रान्ता शिशुसदसि प्रबुध्य पश्चात् ।**
**वक्ति स्म स्वसुतमिदं तदस्त्वदान्त ! व्यादेहि स्वमुखमहं स्वयं निरीक्षे ॥१४॥**

अपने पुत्रके सुखपूर्वक ऐसा कहनेपर बालकोकी उस सभामे व्रजरानीको कुछ भ्रम हो गया। परन्तु पीछे फिर सचेत होकर वे पुत्रसे बोली—'उद्दण्ड ! यदि ऐसी बात है तो अपना मुँह खोल ! मै स्वय देखती हूँ' ॥ १४ ॥

**ईशोऽसावथ भगवान् स्वयोगशक्त्या ह्यात्मानं परिणतवान् विराट्शरीरे ।**
**साऽऽद्राक्षीच्छिशुवदने मृकण्डुपुत्रः प्राङ्मायामिव विततं जगत् स्वदृष्ट्या ॥१५॥**

यह सुनकर षड्विध ऐश्वर्यसे सम्पन्न जगदीश्वर कृष्णने योगशक्तिसे अपने आपको विराट् शरीरमे परिणत कर लिया। यशोदाने शिशुके मुखमे अपनी आँखोसे देखा—सारा जगत् फैला हुआ है। ठीक उसी तरह जैसे पूर्वकालमे मार्कण्डेयजीने मुकुन्दके मुखमे मायामय-जगत्का दर्शन किया था॥ १५ ॥

**स्वर्भूमी सुखदमिदं जगत्तथाऽत्र तद्धेतू प्रकृतिकृतोऽवरान् गुणांश्च ।**
**तन्मात्राण्यपिहितभूतपञ्चकानि वैकारांस्तदुपचिते च नामरूपे ॥१६॥**

यशोदाने देखा—श्रीकृष्णके मुखमे स्वर्गलोक, पृथ्वी, यह सुखद जगत्, इसके हेतुभूत प्रकृति-पुरुष, कार्य, तीनो गुण, तन्मात्रायें पाँचो-भूत उनके विकार तथा उनसे बढे हुए नाम और रूप सभी कुछ हैं॥ १६ ॥

तद्विद्वानुभयजगद्भवांश्च जीवान् प्रत्येकं ह्यधिगतमर्म कर्म चैषाम् ।
कालश्चाऽप्रतिहतवीर्यमत्र बीजं संप्रेक्ष्याऽभवदथ सा भृशं विमूढा ॥१७॥

उस नाम-रूपसे युक्त, स्थावर-जङ्गम उभयविध जगत्मे होनेवाले जीव, इनमेसे प्रत्येकके मार्मिक कर्म, अप्रतिहत शक्तिशाली काल और बीज ( कारणतत्त्व ), इन सबको देखकर व्रजरानी यशोदा अत्यन्त मोहित हो गईं ॥ १७ ॥

स्वे नेत्रे तदनु विमृज्य चाऽऽप्तसंज्ञा सा भूयः सुचिरममुत्र तत्समीक्ष्य ।
दृष्ट्वाऽन्तर्हितमखिलं व्रजं धवं स्वं साशङ्का विधृतवती परेशमेनम् ॥१८॥

तत्पश्चात् अपनी दोनो आँखे मलकर होश-हवास ठीक करके यशोदाने फिर देरतक उसके मुखमे वह सब कुछ देखा। मुखके ही भीतर सारे व्रजको, अपने पतिको और अपनेको भी देखकर शङ्कितचित्त हो, उन्होने निश्चितरूपसे समझ लिया कि यह बालक साक्षात् परमेश्वर है ॥ १८ ॥

चित्तेऽभूदतुलकथा तथास्थितेऽस्याः स्वप्नोऽदर्श्यसमकथो मयाऽत्र किं वा ? ।
किं मायाऽदितिदितिपुत्रयोरियं वा संमोहः किमुत मम स्वबुद्धिजोऽयम् ? ॥१९॥

उस स्थितिमे उनके चित्तके भीतर अद्भुत बाते उठने लगी। वे सोचने लगी कि क्या मैने कोई ऐसा स्वप्न तो नही देखा है, जिसकी कथा अनुपम हो। अथवा यह देवताओ और दैत्योकी माया तो नही है ? अथवा क्या यह मेरी बुद्धिमे उत्पन्न हुआ व्यामोह है ? ॥ १९ ॥

यद्वैतत् स्वहितधियोऽर्भकस्य विष्णोरंशस्याऽतुलबलतेजसो महत्त्वम् ।
शक्तिर्वा नहि नहि चैष आत्मयोगः सद्भावोऽखिलभवगो विभाति वाऽस्य ? ॥२०॥

किं वा यह मेरे हितका विचार रखनेवाले अतुल-बल और तेजसे सम्पन्न इस बालककी जो भगवान् विष्णुका अंश है, महत्ता या शक्ति है। नही, नही, यह आत्मयोग है अथवा इस बालककी अखिललोक-व्यापिनी सत्ता प्रतीत होती है ॥ २० ॥

यद्दृष्टं शिशुवदने मयाऽत्र चैतत्सद्वर्यैरपि मनसाऽप्यतर्क्यमाद्यम् ।
अन्येषामहमहमेव कुर्वतां तु का वार्ता दुरधिगमं हि तत्त्वमैशम् ॥२१॥

मैने यहाँ अपने शिशुके मुखमे जो यह सब देखा है, वह आदि ईश्वरीय तत्त्व है। इसे बडे-बडे सन्त शिरोमणि भी अपने मनके द्वारा सोच भी नही सकते। फिर जो केवल 'मै मै' ही करनेवाले है, उन इतरलोगोकी तो बात ही क्या है इस तत्त्वकी प्राप्ति सभीके लिए अत्यन्त दुष्कर है ॥ २१ ॥

ब्रह्मैतच्छरणमिताऽस्मि सा ममाऽहं मन्वानाऽधिगतमदाभिमानमूढा ।
यद्बुध्या प्रकृतिमिमां जहाति जीवो मां सोऽयं विभुरवताच्चिदात्मरूपः ॥२२॥

सदा मै और मेराकी भावना करनेवाली मै अपनेको प्राप्त मद और अभिमानमे मूढ हो गई हूँ। जिसकी दी हुई बुद्धिसे यह जीव इस प्रकृतिका परित्याग कर देता है, उसी ब्रह्माकी मै शरणमे जाती हूँ। वही यह सर्वव्यापी सच्चिदानन्द स्वरूप परमात्मा मेरी रक्षा करे॥ २२॥

**ध्यात्वेदं व्रजमहिषी सुतं प्रगृह्य विन्यस्य स्वहृदि समुह्य चेश्वरं तम्।**
**मग्नाऽभूत्सुचिरममुष्य योगिगम्ये सद्ध्याने निजदहरे गतेन्द्रिया सा॥२३॥**

इस प्रकार सोचकर व्रजरानी यशोदा अपने ईश्वररूप बालकको पकडकर हृदयसे लगा गोदमे लेकर देरतकके लिए उसके ध्यानमे निमग्न हो गईं। उस समय उनकी सम्पूर्ण इन्द्रियाँ हृदयाकाशमे स्थित हो गई थी। वे उस उत्तम-ध्यानमे सलग्न थी, जो योगीजनोके लिए ही गम्य है॥ २३॥

**तां दृष्ट्वा गुणगणतोऽभिरामरूपां सज्ज्योत्स्नामिव शशिनः श्रिया ज्ज्वलन्तीम्।**
**जानन्तीमसमधिया परं पुमांसं भूयोऽयं प्रभुरतनोत् स्वयोगमायाम्॥२४॥**

गुणसमूहसे सुन्दर रूपवाली तथा चन्द्रमाकी चाँदनी-सी कान्तिसे प्रकाशमान माता यशोदाको अनुपम बुद्धिके द्वारा अपनेको परम-पुरुषके रूपमे जानती देख इन भगवान्ने पुन अपनी योगमायाका विस्तार किया॥ २४॥

**यद्व्याप्ता व्रजमहिषी पुरेव तत्त्वं जीवत्वं समधिगता दुरापमाप्य।**
**संभ्रान्ता पुनरपि तं तथैव मेने स्वं बालं गुणगरिमाभिराममत्र॥२५॥**

उस दुर्लभतत्त्वको पाकर भी वह योग मायासे व्याप्त हो पहलेकी भाँति पुन अपने जीवभावको प्राप्त हो गई। फिर घबड़ाकर उन्होने उस बालकको वहाँ गुण-गरिमासे अभिराम अपना पुत्र ही माना॥ २५॥

**सा चाऽहं व्रजपतिरेष मे पतिस्ते गोपा मे हितवचनस्थिताश्च गोप्यः।**
**सोऽयं मे शिशुरसमं धनं ममैतद्धीत्याद्या मतिगतयोऽभवन् पुनस्तु॥२६॥**

'मै वही व्रजरानी यशोदा हूँ, ये मेरे पति व्रजराज नन्दजी हैं। और वे मेरे हितकर वचनके पालनमे स्थिर रहनेवाले गोप और गोपियाँ है। मेरा यह पुत्र हो मेरे लिए अनुपम धन है' इत्यादि मति और गति उनके भीतर पुनः प्रकट हो गई॥ २६॥

**बाहुभ्यामथ तनयं प्रगृह्य गाढं वात्सल्यामृतसुरसे चिरं वगाह्य।**
**स्वं मेने शिवकृपया भवे कृतार्थं साऽऽश्लिष्य प्रचुरगुणं सुतं परेशम्॥२७॥**

तदनन्तर अपने दोनो भुजाओसे पुत्रको पकडकर उसे छातीसे चिपकाती हुई वे चिरकालतक वात्सल्यामृत-रसके सिन्धुमे अवगाहन करती रही। उस प्रचुर गुणोसे सम्पन्न

परमेश्वररूप पुत्रको हृदयसे लगाकर यशोदाने शिवकी कृपासे संसारमे अपने-आपको कृतार्थ माना ॥ २७ ॥

**धन्यौ हि व्रजहितदम्पती गतार्थौ यावास्तां कृततपसौ स्वपूर्वयोनौ ।**
**नन्दोऽयं वसुरतुलो धरा यशोदा भूत्वा यौ फलमिदमापतुस्तदीशात् ॥२८॥**

व्रजका हित चाहनेवाले वे दोनो दम्पति धन्य और आप्तकाम हो गये थे । उन दोनोने पूर्वजन्ममे बडी तपस्या की थी । उस समय उनके नाम वसु और धरा थे । अनुपम भाग्यशाली वसु, ये नन्द हुए और धरा, यशोदा । उन्होने भगवान्से यह दुर्लभ फल प्राप्त किया था ॥ २८ ॥

**विश्वं कर्मप्रधानं हि यत्कुर्वन्त्यबुधा बुधाः ।**
**चेष्टन्ते सत्सु तज्ज्ञाना विचेष्टन्तेऽत्र दुर्हृदः ॥२९॥**

यह जगत् कर्मप्रधान है । उस कर्मको विद्वान् और मूर्ख सभी करते हैं । परन्तु जो ज्ञानी हैं, वे सत्कर्मोके लिए चेष्टा करते हैं और जो दुष्ट हृदयवाले लोग हैं उनकी चेष्टायें धर्मके विपरीत होती हैं ॥ २९ ॥

**अहंममादिभिर्यन्त्रैर्मन्त्रैरिव भुजङ्गमाः ।**
**बाध्यन्ते कालपाशैस्ते येषामत्र सदा मनः ॥३०॥**

जिन लोगोका मन सदा इस संसारमे अहंता, ममता आदि यन्त्रोद्वारा, मन्त्रोसे सर्पोके समान बँधा हुआ है, वे ही यहाँ कालपाशसे बाधित होते हैं ॥ ३० ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**पञ्चत्रिंशोऽप्यगात्सर्गो महाकाव्ये स्तवात्मके ॥३१॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्ण चरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे यह पैतीसवाँ सर्ग पूरा हुआ ॥ ३१ ॥



# षट्त्रिंशः सर्गः

[ यशोदया भगवतश्चरित्रं गाय गाय दधिमन्थनम्। भगवता दधिमन्थनदण्डादीनां विध्वंशनम्। यशोदयैतद् दृष्ट्वा तं विगृह्य दाम्ना तदुदरे चोलूखले बन्धनम्। ]

( वंशस्थेन्द्रवंशयोरुपजातिवृत्तम् )

लीलामनुष्यस्य विभोर्जगत्पतेः श्रीकृष्णचन्द्रस्य सुतस्य गोपतेः।
तृतीयवर्षस्य सुदीपमालिका समागता साऽद्य सुमङ्गलैर्धिता ॥१॥

लीलाके लिए मनुष्यरूपधारी व्रजराज-कुमार सर्वव्यापी जगदीश्वर श्रीकृष्णचन्द्र जब तृतीय-वर्षकी अवस्थामे पहुँच गये, तब उसके लिए दीपमालिकाका पर्व आया, जो उत्तम मङ्गल कृत्योसे समृद्ध था ॥ १ ॥

तस्यां व्रजेशस्य गृहे रमाश्रये ह्यासन् समेता बहवो निमन्त्रिताः।
नराश्च नार्यश्च कुटुम्बबान्धवा आरात्तथा दूरत आगताः स्थिताः ॥२॥

उस पर्वपर लक्ष्मीके आश्रयभूत व्रजराजके भवनमे बहुत-सी नारियाँ, नर, कुटुम्बी एव बन्धु-बान्धव निमन्त्रित होकर आये। उनमेसे कुछ लोग दूरसे आये थे और कुछ नजदीकसे ॥ २ ॥

उद्दिश्य यस्यां भगवन्तमक्षयं सुरासुरेशं व्रजराज उच्चधीः।
भक्त्या तमानर्च सुतस्य सर्वथा स्याच्छ्रेय इत्येव विचार्य तन्महे ॥३॥

उच्चविचारवाले व्रजराज नन्दने दीपमालिका पर अविनाशी सुरासुरेश्वर भगवान् नारायणकी भक्तिभावसे पूजा की। उन्होने यह सोचकर कि ऐसा करनेसे मेरे पुत्रका सर्वथा कल्याण होगा, उस पर्वपर भगवान्की प्रसन्नताके उद्देश्यसे उनकी पूजाका आयोजन किया था ॥ ३ ॥

पितृष्वसा कुन्त्यपि तस्य सद्गतेर्याऽऽसीत्प्रिया सन्नतपाण्डुभूपतेः।
महोत्सवेऽस्मिन् मिलिता पितुर्गृहादत्राऽऽगता गोपवृषैः सुपूजिता ॥४॥

श्रीकृष्णकी बुआ कुन्ती भी जो, सत्पुरुषोके प्रति विनम्र रहनेवाले राजा-पाण्डुकी प्रिय पत्नी थी, उस महोत्सवमे सम्मिलित हुई। वे अपने पिताके घरसे यहाँ आई थी। श्रेष्ठ-गोपगणोने उनका बड़ा सम्मान किया ॥ ४ ॥

प्रभात एवाऽत्र समुत्सुको महाञ्जनोपमर्दो व्रजराजवेश्मनि।
विशोभते स्माऽद्य सुखं गता इतो दासाश्च दास्यश्च युताः स्वकर्मणि ॥५॥

प्रात कालसे ही व्रजराजके भवनमे उत्सुक लोगोकी बडी भारी भीड एकत्र हो, शोभा पाती थी। बहुत-सी दासियाँ और दास अपने-अपने कार्यमे सुखपूर्वक सलग्न थे ॥ ५ ॥

**स्वभृत्यवर्गेष्वखिलेष्वथोत्सवे व्यग्रेषु कृत्येषु सती व्रजेश्वरी ।**
**विचिन्तयामास सुसुप्तमर्भकं निरीक्ष्य जागर्तिमियाद् बुभुक्षितः ॥६॥**

अपने समस्त सेवकोके उत्सव सम्बन्धी कार्योंमे संलग्न हो जानेपर सती-साध्वी व्रजेश्वरी यशोदाने गाढ निद्रामे सोये हुए अपने बालकको एकबार देखकर बिचार किया कि जब इसे भूख लगेगी, तब यह जाग उठेगा ॥ ६ ॥

**किं देयमस्मै यदि याचते स चेद्भक्ष्यं हितं यच्च भवेत्सुतृप्तिकृत् ।**
**न रोचतेऽस्मै गतयाम उत्तमः कश्चित्पदार्थोऽपि करोम्यहं नु किम् ? ॥७॥**

उस समय यदि यह भोजन माँगे तो इसे क्या देना उचित होगा, जो इसके लिए हितकर और परम तृप्तिकारक हो। इसे बहुत पहलेका बना हुआ कोई उत्तम पदार्थ भी अच्छा नही लगता है। मै क्या करूँ ! ॥ ७ ॥

**तस्माद्विनिर्मथ्य मया स्वयं दधि स्थाप्यं विनिष्कास्य घृतं सुधोपमम् ।**
**यतो भवेच्छ्रेय उरुक्रमोऽर्भको भवेच्च तुष्टो नवनीतभक्षणात् ॥८॥**

अत मुझे स्वय ही दही मथकर उससे अमृतके समान मधुर माखन निकालकर रख देना चाहिये। जिससे बालकका भला हो। मेरा भगवत्स्वरूप पुत्र माखन खानेसे ही सन्तुष्ट होगा' ॥ ८ ॥

**विचार्य चेत्थं शयने विसृज्य तं प्राग् दुग्धशालां प्रययौ स्वकोष्ठतः ।**
**संमार्ज्य पात्राणि ससंभ्रमाऽद्य सा तत्कापिलेयं दधि निर्ममन्थ ह ॥९॥**

ऐसा विचारकर उसे शय्यापर ही छोड व्रजरानी अपने कमरेसे निकली और पहले दुग्धशालामे ही गईं। फिर बडे वेगसे सब पात्रोको माँजकर साफ किया और कपिला-गायके दूधसे तैयार दहीको मथने लगी ॥ ९ ॥

**तदैव तस्या मुखगह्वरादिदं विनिःसृतं गीतमघस्तनं हितम् ।**
**तेनैव पूर्वं व्रजमण्डले कृतैर्लीलात्मकैः सच्चरितैः सुपूरितम् ॥१०॥**

उसी समय उनके मुखसे निम्नाङ्कित हितकारी गीत निकला, जो उस बालकके द्वारा ही पहले व्रजमण्डलमे किये गये लीलात्मक सच्चरित्रोसे परिपूर्ण था ॥ १० ॥

( इतः परं श्लोकपञ्चकं ललितं छन्दः, सुन्दरीति वा )

**जयतु कृष्ण ! ते शक्तिरुत्तमा बलमथाऽव्ययं तेज उन्नतम् ।**
**ददति यत्सदा तुभ्यमाशिषा मुनिगणास्तथा साधवोऽनिशम् ॥११॥**

'हे कृष्ण ! तुम्हारी उत्तम शक्ति, अक्षय बल और उन्नत तेजकी जय हो। मुनिगण और साधुजन तुम्हे नित्य-निरन्तर यही शुभाशीर्वाद दिया करते हैं ॥ ११ ॥

**कृतमिह त्वयाऽमानुषं महत्सुचरितं विनोदोऽपि शान्तिदः ।**
**जयति योगिनस्तद्विचारकाः सुगुणिनश्च ते येऽत्र मोहिताः ॥१२॥**

'तुमने यहाँ महान् एव उत्तम, अलौकिक लीला-चरित्र किए है। शान्तिदायक विनोद भी किया है। उसकी सदा जय हो। उत्तम विचार करनेवाले योगीजन तथा सद्गुणशाली मनुष्य यहाँ तुम्हारी लीलाओपर मोहित रहते है ॥ १२ ॥

**जयति जन्म ते येन गोकुलं गुणगणैश्चितं ह्रीन्दिराश्रितम् ।**
**धनजनैर्युतं गोधनैर्हितं मुनिगणैस्तथाऽभ्यागतैर्वृतम् ॥१३॥**

'तुम्हारे जन्मकी जय हो, जिससे गोकुल गुण-गणोसे समृद्ध तथा लक्ष्मीका आश्रय ( लीलानिकेतन ) बन गया है। यह धन-जनसे सम्पन्न गोधनसे हितकारक तथा मुनिगणो एव अभ्यागतोसे भरा-पूरा हो गया है ॥ १३ ॥

**जयति पूतनाकृतनाशकृच्चरितमार्तिहृद् दुष्टनाशभृत् ।**
**शकटभञ्जनं त्वद्बलं तथा जयति तत्तृणावर्तसूदनम् ॥१४॥**

'तुम्हारा चरित्र पूतनाका नाश करनेवाला पीडा-निवारक तथा दुष्टोका सहारक है। उसकी जय हो। तुम्हारा बल शकटभञ्जनकारक और तृणावर्तका विनाशक है। उसकी भी जय हो ॥ १४ ॥

**जयतु कृष्ण ! ते वत्समोचनं दधिपयोऽमृतास्वादनं च तत् ।**
**प्रतिगृहं गतो गोकुले भवान् विजयतेतरां शान्तिदः सताम् ॥१५॥**

'हे कृष्ण ! तुम्हारे द्वारा बछडोको खोल दिया जाना तथा दूध-दही और अमृतके समान मधुर माखनका स्वाद लिया जाना विजयी हो। तुम गोकुलके घर-घरमे जाकर विजयी होते और सत्पुरुषोको शान्ति प्रदान करते हो' ॥ १५ ॥

**तदेव रम्यं सुखदं नवं प्रियं प्रगाय गीतं मृदु नन्दगेहिनी ।**
**बभौ तदा मेखलयाञ्चिता कटौ नितम्बिनी क्षौमदुकूलधारिणी ॥१६॥**

उस रमणीय, सुखदायक, नूतन, प्रिय एव कोमल, गीतको गा-गाकर नन्द गेहिनी उस समय बडी शोभा पा रही थी। उनके कटिप्रदेशमे करधनी खन-खना रही थी। नितम्बिनी यशोदा रेशमी साड़ी पहने हुए थी ॥ १६ ॥

**स्नेहात्स्वपुत्रस्य कुचात्स्रवत्पयाः किञ्चित्सकम्पा सुदती श्लथत्करा ।**
**प्रगृह्य रज्जू चलरत्नकुण्डला स्रस्तांशुका तद्दधि निर्ममन्थ सा ॥१७॥**

पुत्रके प्रति स्नेहके कारण उनके स्तनसे दूध झर रहा था। उनके हाथ थक जानेके कारण कुछ ढीले पड रहे थे। जिससे सुन्दर दाँतोवाली व्रजरानी कुछ-कुछ कम्पित हो जाती थी। दोनो हाथोसे मथानीकी रस्सी पकडकर वे दही मथ रही थी। उस समय उनके रत्नमय कुण्डल हिल रहे थे और वस्त्र सिरसे खिसक जाता था ॥ १७ ॥

**इतस्तदैवाऽव्यय एष बालको लब्धप्रबोधो नयने मृजन्नुभे।**
**समाह्वयन्मातरमात्मनः प्रियां तत्राऽऽगतोऽलब्धगती रुदन् भ्रमन् ॥१८॥**

इधर वह अविनाशी बालक उसी समय जाग उठा और दोनो आँखे मलता हुआ अपनी प्यारी माँको बुलाने लगा। जब माताका कुछ पता न चला, तब वह रोता-घूमता वही आ पहुँचा ॥ १८ ॥

**तां तादृशीं तत्र निरीक्ष्य सोऽव्ययो व्यग्रां स्वकृत्येष्वतथोचितां प्रसूम्।**
**निषेद्धुकामः स्तनपान उत्सुकः समीपमागत्य तदङ्क आवसत् ॥१९॥**

वह निर्विकार शिशु अपनी माताको इसप्रकार दही मथनेमे व्यग्र और परिश्रान्त देख, जो इतने परिश्रमके योग्य कदापि नही थी, रोकनेके लिए स्तनपानकी इच्छासे उत्सुक हो, उनके निकट आकर गोदमे बैठ गया ॥ १९ ॥

**ततो गृहीत्वैकभुजेन सुन्दरं मन्थानदण्डं च तदन्यबाहुना।**
**मातुर्विगृह्यैककुचं बुभुक्षितस्तच्चूचुकं स्वाननपङ्कजे न्यधात् ॥२०॥**

उसने एक हाथसे मथानीको पकड़ लिया और दूसरे हाथसे माताका एक स्तन पकडकर भूखा होनेके कारण उसका अग्रभाग अपने मुखारविन्दमे डाल लिया ॥ २० ॥

**सा स्नेहमालोक्य निषेधिताऽमुना तमङ्कमारूढमपाययत्स्तनम्।**
**हैमप्रियाऽङ्कादिव वारिनिर्झरा या दुग्धधारा विसृज्यन्त्यहो! बभौ ॥२१॥**

उसका स्नेह देखकर तथा उसके द्वारा रोकी जानेपर यशोदा उस गोदमे बैठे हुए शिशुको स्तनपान कराने लगी। अहो! स्तनसे दुग्ध धारा छोडती हुई यशोदा अपने अकसे जलके निर्झर बहानेवाली गङ्गाके समान सुशोभित होती थी ॥ २१ ॥

**इतस्तदाऽऽसीत्स्वगृहस्थभृत्यकैर्दुग्ध्वा समानीय समाप्तकृत्यकैः।**
**चुल्ल्यां समारोपितमुत्तमं पयः सोत्सिच्यमानं समवैक्षताऽग्रतः ॥२२॥**

इधर उनके घरके सेवकोने सब काम पूरा करके दुहनेके पश्चात् दूध ले आकर उसे चूल्हे पर चढ़ा दिया था। उस समय व्रजरानीने अपने सामने देखा—वह उत्तम दूध उबाल खा रहा है ॥ २२ ॥

तलस्त्वियं भ्रान्तमतिर्निरीक्ष्य तत् स्वाङ्कस्थितं ब्रह्मसुखप्रदं सुतम् ।
अतृप्तमुत्सृज्य तथैव तत्पय उत्तारणार्थं प्रययौ ससंभ्रमा ॥२३॥

यह देख वे घबरा उठी और गोदमे बैठकर ब्रह्मानन्द-प्रदान करनेवाले उस पुत्रको अतृप्त ही छोडकर वे दूध उतारनेके लिए बडे वेगसे दौडी ॥ २३ ॥

तदन्तरा गोपशिशुत्वमाश्रयन्नव्याहतैश्वर्य उपेन्द्र ईश्वरः ।
भृशं चुकोपाऽत्र रुदन्निमां प्रति तथा गतां तां प्रसमीक्ष्य सद्गतिः ॥२४॥

इसी बीचमे गोपशिशुका नाट्य करनेवाले अव्याहत-ऐश्वर्यसे सम्पन्न एव सत्पुरुषोके अवलम्ब जगदीश्वर उपेन्द्ररूप श्रीकृष्ण इस तरह चली जानेवाली माताकी ओर देखकर उसके प्रति अत्यन्त कुपित हो उठे और रोने लगे ॥ २४ ॥

मन्थानदण्डं दधिमन्थभाजनान्निष्कास्य विस्फोट्य च तेन भाजनम् ।
मात्रे धरायै वषडित्यजूहवत् पयस्यमेतत्सकलं स रोषितः ॥२५॥

उन्होने दहीके पात्रसे मथानी निकाल ली और उसीसे उस पात्रको फोड दिया । फिर वह सारा गोरस रोषपूर्वक माता धराके लिए होम दिया ॥ २५ ॥

ततस्त्वसौ संस्फुरितारुणाधरं संदश्य दन्तैर्मृदुहीरकोज्ज्वलैः ।
मृषाश्रुभिः कज्जलविन्दुमिश्रितैर्विभूषयामास मुखं शशिप्रभम् ॥२६॥

तदनन्तर उन्होने अपने हीरे—जैसे उज्वल दाँतोसे कोमल एव फडकते हुए लाल ओष्ठको दबाकर झूठे बहाए गये कज्जल-विन्दु-मिश्रित आँसुओ द्वारा चन्द्रमाके समान उज्वल मुखको विभूषित कर लिया ॥ २६ ॥

अथाऽपसव्येन भुजेन लीलया व्युत्क्षिप्य भूमेर्नवनीतपिण्डकम् ।
स्वाहा परब्रह्मण इत्यसौ जपंस्तं चिक्षिपवानात्ममुखे स्वतन्त्रतः ॥२७॥

तत्पश्चात् दाहिने हाथसे लीलापूर्वक भूतल पर गिरे हुए माखनके लोदेको उठाकर 'परब्रह्मणे स्वाहा' इस मन्त्रका जप करते हुए स्वतन्त्रतापूर्वक अपने मुँहमे डाल लिया ॥ २७ ॥

ततस्त्वयं प्राञ्जलिना सुधोपमं हैयङ्गवीनं सकलं कलामयः ।
उत्थाप्य यत्नेन बहिर्ययौ द्रुतं मातुर्भयात् कृत्यविशङ्कितेक्षणः ॥२८॥

फिर वे कलामय भगवान् अपनी अजलिसे उस सारे अमृतोपम माखनको यत्नपूर्वक उठाकर माताके भयसे तुरन्त बाहर निकल गये । अपने इस कृत्यसे उनकी दृष्टि शकापूर्ण हो गई थी ॥ २८ ॥

उत्सिच्यमानं पय आत्मबाहुना सेतः समुत्तार्य समागता द्रुतम् ।
विस्फोटितान्यत्र विलुण्ठितान्यपि तन्मन्थपात्राणि ददर्श न त्वमुम् ।।२९।।

इधर उबलते हुए दूधको अपने हाथसे उतारकर यशोदा तुरन्त लौट आईं । किन्तु यहाँ आकर उन्होने मन्थनपात्रोको फूटे और धरती पर लुढके हुए देखा । और श्रीकृष्ण नही दिखाई दिये ।। २९ ।।

संभ्रान्तचित्ता तत आत्मवत्प्रियं सुतं ह्यपश्यन्त्यसमक्रियाकरम् ।
कोष्ठाद्विनिष्क्रम्य सविस्मया क्षणाद् बभ्राम कोष्ठान्यभितश्चलत्कुचम् ।।३०।।

आत्माके समान प्रिय तथा अनुपम-कर्म करनेवाले उस पुत्रको वहाँ न देखकर यशोदाके चित्तमे बडी घबराहट हुई । वे क्षण-भरमे उस कमरेसे निकलकर आश्चर्य-चकित हो अन्य कमरोके आस-पास घूमने लगी । उस समय उनके स्तन हिल रहे थे ।। ३० ।।

पश्चाद्धसित्वा बहु तस्य कर्मणि ततः समागत्य गृहाङ्गनान्तरम् ।
साऽपश्यदात्मप्रियमात्मजं च तं ह्युलूखलाङ्घ्रेरुपरि व्यवस्थितम् ।।३१।।

फिर वे उसके कर्मपर बहुत हँसकर वहाँसे चलती हुई घरके दूसरे आँगनमे आईं । वहाँ उन्होने अपने प्यारे पुत्रको ओखलीके ऊपर खडा देखा ।। ३१ ।।

हस्तस्थितं तं नवनीतपिण्डकं शाखामृगेभ्यो वितरन्तमत्र च ।
तद्भक्षणायैव कृतत्वरानिमान् निर्दशयन्तं च पुनः शिचिस्थितम् ।।३२।।

वह वहाँ हाथमे लिए हुये माखनके लोदेको बन्दरोमे बाँट रहा था । उस माखनको खानेके लिए ही जल्दी मचानेवाले इन बानरोको वह बार-बार छीकेपर रखा हुआ माखनपात्र दिखा रहा था ।। ३२ ।।

तद्भाण्डविस्फोटनचौर्यकर्मभिर्विशङ्कमानं भयविह्वलेक्षणम् ।
निरीक्षमाणं सकलासु दिक्षु तं ददर्श दूरान्निभृतं व्रजेश्वरी ।।३३।।

उस भाण्डको फोडने और माखनकी चोरी करनेके कर्मसे वह शकित था । उसके नेत्र भयसे चचल हो रहे थे । वह चारो दिशाओकी ओर बार-बार देखता था । इस अवस्थामे उसे व्रजेश्वरीने दूरसे चुपचाप देखा ।। ३३ ।।

तदैव संजातरुषा धिया त्वमुं गोपेश्वरी ताडयितुं स्खलद्गतिः ।
जग्राह चैकां लघुवंशयष्टिकां ततोऽगमत् सम्मुखमस्य सद्गतेः ।।३४।।

उसी समय गोपेश्वरीके हृदयमे कुछ रोष प्रकट हो गया । वे लडखडाती हुई आगे बढ़ी और एक छोटी-सी बाँसकी छडी हाथमे लेकर सत्पुरुषोके आश्रयभूत उस बालकके सम्मुख गईं ।। ३४ ।।

प्रपूर्णबोधोऽथ शिशुर्निरीक्ष्य तां कराप्तयष्टिं निजकृत्यकोपिताम् ।
उलूखलाङ्घ्रेरवरुह्य सत्वरो भीतो यथाऽधावदहो ! महाप्रभुः ॥३५॥

अहो ! परिपूर्ण-बोधसे सम्पन्न वह महाप्रभु शिशु अपने ही कुकृत्यसे कुपित हुई माताको हाथमे छड़ी लेकर आती देख भयभीत हो, तुरन्त ओखलीसे उतरकर भागे ॥ ३५ ॥

धावन्तमेनं प्रसमीक्ष्य सद्गतिं श्रोणीस्तनाभोगभरालसा सती ।
द्रागन्वधावद् दृढकेशबन्धनच्युतप्रसूनानुगतिर्गलद्गतिः ॥३६॥

सन्तोके आश्रयभूत इस बालकको भागते देख साध्वी यशोदा तत्काल उसके पीछे दौडी। नितम्ब और स्तनमण्डलके भारसे उनकी गति मन्द थी। वे लड़खडाती जाती थी और उनके सुदृढ केशबन्धसे पग-पग पर फूल गिर रहे थे ॥ ३६ ॥

योगैस्तपोभिर्नियमादिभिर्व्रतैस्ते ध्यानिनो योगिन आप्तुमत्र यम् ।
शेकुर्न हन्तेह तमात्मगोचरं विभुं जिघृक्षन्त्यनुगा परामृशत् ॥३७॥

हन्त ! जिन्हे योग, तप और नियम आदि व्रतोके द्वारा ध्यानपरायण योगी भी नही पा सके, उन्ही आत्मगोचर भगवान्के पीछे-पीछे उन्हे पकडनेके लिए जाती हुई यशोदाने आखिर जा पकडा ॥ ३७ ॥

ततो गृहीत्वाऽस्य करं सुकोमलं मुखाम्बुजं नेत्रजलैर्मृजन्मलम् ।
समीक्ष्य सान्ध्यप्रभमार्तिमद्भयाद् भ्रान्त्वा स्वयं सा करयष्टिमत्यजत् ॥३८॥

तदनन्तर उसके अत्यन्त कोमल हाथको पकडकर मइयाने जब पुत्रके मुखारविन्दपर दृष्टिपात किया तो आँसुओके जलसे वह अपने मुँहको धो रहा था। उस समय उसके भयसे पीडित हुए लाल मुखकी कान्ति सन्ध्याकालकी आभाके समान प्रतीत होती थी। उसे देखकर मइया यशोदाने भ्रान्त होकर अपने हाथकी छडी फेक दी ॥ ३८ ॥

कुन्तीप्रधाना व्रजमातरस्तदा तेऽभ्यागतास्तद्गृहदेहलीं श्रिताः ।
मातुः शिशोश्चाऽप्रतिमं सुदर्शनं प्रधावनं प्रग्रहणं व्यलोकयन् ॥३९॥

व्रज-बालकोकी माताये तथा कुन्ती आदि देवियाँ, जो वहाँ आई थी, उस घरकी द्वार-देहली पर खडी हो, माता और बेटेका वह दौडना और पकड़ना, जो उनके लिए अनुपम सुन्दर दृश्य था, देखने लगी ॥ ३९ ॥

तदैव कुन्त्या मुखगह्वरादिदं विनिःसृतं गीतमनर्थनाशनम् ।
❀जगद्विभो ! भीरपि यद्बिभेत्यहो ! तस्यैव ते भीतिरियं विडम्बना ? ॥४०॥

* अत्र श्रीमद्भागवतप्रथमस्कन्धाष्टमाध्यायस्यैकत्रिंश श्लोको 'गोप्याददे त्वयी' इत्यादिकः स्मरणीयो विद्वद्भिः ।

उसी समय कुन्ती देवीके मुखरन्ध्रसे यह अनर्थनाशक गीत निकल पड़ा—'अहो जगदीश्वर! जिससे भय भी भय मानता है, उसी तुझ-परमेश्वरको यह भय होना विडम्बनामात्र है' ॥ ४० ॥

श्रुत्वा तया गीतमिदं वचो हरिर्दृष्ट्वा च तां भक्तिरसाप्लुतां तदा।
विज्ञाततत्त्वां च विभाव्य मोहिनीं दृशं विकीर्याऽत्र रुरोद सोऽव्ययः ॥४१॥

उनका गाया हुआ यह गीतमय वचन सुनकर श्रीहरिने उस समय भक्तिरसमें डूबी हुई कुन्ती देवीकी ओर देखा और उन्हें तत्त्वज्ञ जानकर उन अविनाशी ब्रह्मने उनपर अपनी मोहिनी दृष्टि फेंकी तथा वे जोर-जोरसे रोने लगे ॥ ४१ ॥

वृद्धेन वात्सल्यरसेन यन्त्रिता गोपालिका सेत इमं स्वबालकम्।
इयेष दाम्नाऽथ निबद्धुमञ्जसा निदर्शयन्ती महतीं विभीषिकाम् ॥४२॥

बढ़े हुए वात्सल्य-रससे नियन्त्रित हुई गोपी यशोदाने बड़ी भारी विभीषिका दिखाते हुए अपने इस बालकको अनायास ही रस्सीसे बांधनेकी इच्छा की ॥ ४२ ॥

हंहो! जयत्यत्र महाऽज्ञता भृशं यशोदया यत्र कृताऽस्य बन्धने।
महर्षिदृष्ट्या प्रसमीक्ष्य यां प्रभुः शुकोऽहसद्भागवतस्य भाषणे ॥४३॥

हंहो! यशोदाने इस बालकको बांधनेके लिए चेष्टा की, यह उसने अपनी बड़ी भारी अज्ञताका परिचय दिया। उसकी वह अज्ञता विजयिनी हुई। प्रभु शुकदेव-मुनिने महर्षि-दृष्टिसे यशोदाको देखकर भागवतका प्रवचन करते समय उसकी हँसी उड़ायी है ॥ ४३ ॥

नाऽदिर्न चान्तर्न बहिश्च विद्यते पूर्वापरं वाऽपि न यस्य कल्प्यते।
तं सर्वगं बीजमिव स्थितं तरौ को वा निबद्धुं प्रभवेत् क्षिताविति ॥४४॥

जिनका न आदि है न अन्त, न बाहर है, न भीतर अथवा जिसके पूर्वापरकी कल्पना भी नहीं है। वृक्षमें बीजकी भांति स्थित हुए उन सर्वव्यापी प्रभुको इस भूतलपर कौन बांध सकता है? ॥ ४४ ॥

अव्यक्तमेतत्परमात्मतत्त्वकं व्याप्तं चिदानन्दमयं ह्यमूर्तकम्।
मूर्तं प्रकल्प्य स्वमथो विनोदिनं बबन्ध दाम्नाऽन्यसुतं यथाऽत्र सा ॥४५॥

जो यह अव्यक्त परमात्म-तत्त्व सर्वत्र व्याप्त है, सच्चिदानन्दमय और अमूर्त है, तथा जो अपनेको मूर्त बनाकर लीला, विनोद कर रहा है, उसीको यशोदाने दूसरे सामान्य बालकोंकी भांति रस्सीसे बाँधनेका प्रयत्न किया ॥ ४५ ॥

तद्बध्यमानस्य शिशोः स्वमायया व्रजेश्वरीहस्तगृहीतदाम तत् ।
न्यूनं ह्यभूद्द्व्यङ्गुलमात्रमिष्टकृद् द्रागन्यदादाय ततोऽत्र संदधे ॥४६॥

बाँधे जाते हुए उस शिशुकी अपनी ही मायासे व्रजेश्वरीके हाथकी रस्सी दो अगुल छोटी हो गई। तब उसने अपनी अभीष्ट-कार्यकी सिद्धिके लिए झट दूसरी रस्सी उसमे जोड़ दी ॥ ४६ ॥

न्यूने च तस्मिन्नपि तत्र साऽपरं सन्धाय भूयोऽपि बबन्ध तं सती ।
न्यूनं ह्यभूद्द्व्यङ्गुलमेतदप्यहो ! संभ्रान्तचित्ताऽथ ततोऽन्यदाददे ॥४७॥

किन्तु जब वह भी दो अगुल छोटी पड़ गई तो साध्वी यशोदाने फिर उसमे दूसरी रस्सी जोड़ी। अहो ! यह भी दो अगुल छोटी पड़ गई। तब व्रजेश्वरी मन ही मन घबडा उठी। फिर उन्होने दूसरी रस्सी हाथमे ली ॥ ४७ ॥

गृहस्थदामान्यथ संदधत्यपि न्यूनानि जातानि यदैव तान्यपि ।
तदैव कोष्ठान्तरिता व्रजस्त्रियः कुन्त्या समं संजहसुः स्मयान्विताः ॥४८॥

उस घरमे जितनी रस्सियाँ थी, वे सब जोड दी गईं, फिर भी जब वे छोटी ही पडती चली गईं तब उस कमरेके भीतर मुस्कुराती हुई व्रजाङ्गनायें कुन्ती देवीके साथ ठहाका मारकर हँस पड़ी ॥ ४८ ॥

इतो व्रजेश्याः कबरीधृतस्रजश्च्युतानि माल्यात् कुसुमानि सुन्दरम् ।
स्वेदाम्बुभिः सार्धमगुष्य सद्गतेः श्रीविग्रहं सार्द्रमकार्षुरञ्चितम् ॥४९॥

इधर व्रजेश्वरीकी चोटीमे गूँथे हुए पुष्पहारसे झड़े फूल पसीनेकी बूँदोके साथ उस साधुजनाश्रय बालकके सुन्दर श्रीविग्रहको आर्द्र एव अलङ्कृत करने लगे ॥ ४९ ॥

उद्विग्न एवं जननीभयाच्चले विमृज्य नेत्रे हरिणा विलोकिता ।
ततोऽभवत्सा सफलाऽत्र तत्क्षणादाप्त्वा दयां तस्य पृथानुरोधिताम् ॥५०॥

माताके भयसे उद्विग्न एव चञ्चल नेत्रोको पोछकर श्रीहरिने उनकी ओर देखा। कुन्तीने भी उनसे कृपा करनेका अनुरोध किया। तब उनकी कृपा पाकर उसी क्षण यशोदा उन्हे बाँधनेमे सफल हो गईं ॥ ५० ॥

स्यात् केन लब्धेह कृपेदृशी प्रभोर्या प्राप गोपी मुनिभिः सुयोगिभिः ।
इन्द्रादिदेवैर्विधिभिश्च दुर्जया माया च सैषा ह्यतुलाऽस्यवेधसः ॥५१॥

गोपी यशोदाने भगवान्‌के जिस कृपाको प्राप्त किया, इस जगत्‌मे किसने प्राप्त की होगी ? भगवान्‌की यह माया अनुपम है। इसे उत्तम-योगी, मुनि, इन्द्रादि देवता तथा विधाताके लिए भी जीतना कठिन है ॥ ५१ ॥

सलोकपालं विधिशङ्करादिभिर्वृतं जगत्स्थावरजङ्गमात्मकम् ।
वशे स्थितं यस्य विभाति तेजसा तस्याप्यहो ! पश्यत भक्तवश्यताम् ॥५२॥

अहो ! लोकपालो तथा ब्रह्मा और शङ्कर आदिसे युक्त समस्त चराचर जगत् जिनके तेजसे वशीभूत दिखाई देता है, उनकी भी इस भक्त-परवशताको तो देखो ! ॥ ५२ ॥

तद्ब्रह्म सत्यं परमेश्वरं त्वमुं प्राप्तुं ह्युपायः सुगमोऽस्त्ययं हितः ।
यो भक्तिमार्गस्थबुधैर्महात्मभिः प्रयोजितः संकथितश्च गौरवात् ॥५३॥

उन ब्रह्मस्वरूप सत्य परमेश्वरको प्राप्त करनेके लिए सुगम और हितकर उपाय यह है, जिसे भक्ति मार्गपर चलनेवाले ज्ञानी महात्माओने प्रयोगमे लाया है तथा गौरवपूर्वक कहा है ॥ ५३ ॥

यस्मिन् तदात्मत्वनिवेदनं विभौ विराजतेऽहंममतादिनिर्गतम् ।
अन्येषु नास्त्येव विशोभते च भो सोऽहंममत्वादि कुभावना च सा ॥५४॥

जिस भक्तिमार्गमे परमात्माके प्रति अहता और ममता आदिसे रहित तादात्म्य-निवेदन शोभा पाता है, अन्य मार्गोंमे आत्म-निवेदन नही सुशोभित होता है। क्योकि वहाँ अहंता, ममता आदि कुत्सित भावनाये बनी रहती हैं ॥ ५४ ॥

एतत्समीक्ष्यैव च लोकशङ्कर आचार्यपादो भगवांश्च शङ्करः ।
नारायणेति प्रजगौ भवच्छिदं तां षट्पदीं संस्तुतिमस्य चान्तिमे ॥५५॥

ऐसा विचारकर ही लोक कल्याणकारी आचार्यपाद भगवान् शङ्करने अपनी अन्तिम अवस्थामे 'नारायण ! करुणामय !' इत्यादि पद्यों द्वारा भगवान्‌की षट्पदी स्तुति गाई थी, जो भव-बन्धनका उच्छेद करनेवाली है ॥ ५५ ॥

तदस्त्वथाऽसौ भगवान् परेश्वरो मायाशिशुर्मोहमयीं दृशं निजाम् ।
तस्यां विनिक्षिप्य रुदन्निमां तदा प्रसादयामास विमोक्तुमञ्जसा ॥५६॥

अस्तु, मायासे शिशुरूप धारण करनेवाले उन भगवान् परमेश्वरने मातापर अपनी मोहमयी दृष्टि डालकर रोते हुए उस समय उन्हे अपनेको जल्दी खोल देनेके लिए प्रसन्न किया ॥ ५६ ॥

सोपद्रवस्त्वमसि चञ्चल! नित्यमित्थं धार्ष्ट्यं करोषि सदने सदने समेषाम् ।
तद्भुङ्क्ष्व तस्य फलमित्यभिधाय माता याता विहाय सुतमद्य तथाऽत्र बद्धम् ॥५७॥

'ओ चचल ! तू बड़ा उपद्रवकारी है। नित्य इसी प्रकार सबके घर-घरमे जाकर ढिठाई किया करता है। उसका फल आज भोग !' ऐसा कहकर माता यशोदा पुत्रको वही बँधा छोड़कर चली गई ॥ ५७ ॥

दाम्ना निबद्ध उदरे तदुलूखलस्य कट्यन्तरे च परिबद्धतदन्यभागः ।
सोऽयं शिशुर्व्रजजनैर्निभृतं विदृष्टो दामोदरेति कथितो भवतान्मुदे नः ॥५८॥

रस्सी इस शिशुके उदरमे बँधी थी और उसका दूसरा छोर ओखलीके कटिप्रदेशमे बँधा था। इस प्रकार व्रजजनोने जब उस शिशुको उदरमे दाम (रस्सी) से भली भाँति बँधा देखा, तब उसका नाम 'दामोदर' रख दिया। वे दामोदर हमलोगोका आनन्द बढ़ावें ॥५८॥

दामोदरेतिसन्नामप्राप्तनाथ ! कृपामय ! ।
विजयस्व सदैवेत्थं पाहि देवर्षिभिः स्तुतः ॥५९॥

'दामोदर' यह सुन्दर नाम प्राप्त करनेवाले नाथ ! कृपामय ! आप सदा ही इसी प्रकार विजयी हो। देवर्षियो द्वारा अपनी स्तुति सुनकर आप हमारी रक्षा करें॥ ५९॥

आत्मस्तुतिमयं वाक्यं श्रुत्वाऽसौ गुञ्जितं ततः ।
साश्चर्यं कुत आयातमित्यपश्यदितस्ततः ॥६०॥

अपनी स्तुतिसे युक्त इस गूँजते हुए वाक्यको सुनकर श्रीकृष्णने आश्चर्यपूर्वक इधर-उधर देखा और मन ही मन कहा—'अहो ! यह शब्द किस ओरसे आया है ?' ॥ ६० ॥

तदाऽपश्यद्देवः स्वरुचिरगृहात् पश्चिमदिशि
विसंस्थूलावुच्चावमलयमलावर्जुनतरू ।
तयोरन्तर्गर्भे सुविहितनती सिद्धपुरुषौ
महात्मानौ युग्मौ ह्यथ हरिरभूत् संस्मृतकथः ॥६१॥

उसी समय भगवान्ने देखा—मेरे सुन्दर घरसे पश्चिम दिशामे दो बडे ऊँचे और मोटे निर्मल अर्जुन वृक्ष हैं। उनके भीतरी गर्भमे दो सिद्ध-पुरुष महात्मा हैं जो प्रणाम कर रहे हैं। यह देखकर श्रीहरिको उनके पूर्व जन्मकी वार्ताका स्मरण हो आया॥ ६१॥

संप्रगृह्यैकहस्तेन तां रज्जूं स्वोदरस्थिताम् ।
अन्येनोलूखले बद्धामाकर्षन् स स्थितः क्षणम् ॥६२॥

उन्होने एक हाथसे अपने कमरमे बँधी हुई रस्सी पकड कर और दूसरे हाथसे ओखलीमे बँधी हुई रस्सी थामकर वे एक क्षण उसीको खीचते हुए खडे रहे ॥ ६२॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
षट्त्रिंशोऽयमगात्सर्गो महाकाव्ये स्तवात्मके ॥६३॥

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमें यह छत्तीसवाँ सर्ग पूरा हुआ॥ ६३॥



## सप्तत्रिंशः सर्गः

[ देवर्षेरनुग्रहात् स्थावरता गतयोर्नलकूबरमणिग्रीवयोस्तदवस्थादर्शनम् ।
भगवतस्तदुद्धारणार्थं तत्र गमनञ्च । ]

( शिखरिणीवृत्तम् )

महात्मा देवर्षिर्ह्यतुलगुणधाम द्रुतगति-
नराणां तन्नारं द्यति जगति यो नारद इति ।
प्रसिद्धो धन्योऽसौ जयति च सदैवेत्थमतुलं
कथाऽखेलत् तस्याऽखिलभवपतेश्चेतसि तदा ॥१॥

देवर्षि महात्मा नारद अनुपम गुणोके धाम है । वे बडी तीव्र-गतिसे चलते हैं । नरोके नार ( पाप ) का दमन करनेसे वे जगत्मे 'नारद' नामसे विख्यात हैं । देवर्षि धन्य हैं । उनकी सदा ही इस प्रकार विजय होती है, जिसकी कही तुलना नही है । उस समय अखिल जगदीश्वर भगवान्‌के हृदयमे नारदजीकी पुरानी यह कथा खेलने लगी ॥ १ ॥

विविक्तेऽस्मिंस्तिष्ठन्नुदरगतदामा प्रभुरयं
स्मरन् प्रत्नां वार्तां विदितसकलार्थोऽप्यसमदृक् ।
अभूद् ध्याने मग्नो मुकुरविमले तस्य मनसि
तदैवाऽऽविर्भूता सुखदमुनिगाथाऽमृतमयी ॥२॥

उस एकान्त स्थानमे खडे और उदरमे रस्सीसे बँधे ये प्रभु सर्वज्ञ होनेपर भी असम ( अनुपम ) दृष्टिवाले होकर पुरानी बातका स्मरण करते-करते ध्यानमग्न हो गये । उसी समय उनके दर्पणके समान निर्मल अन्त करणमे सुखदायी मुनि नारदकी अमृतमयी-गाथा प्रकट हो गई ॥ २ ॥

शिवस्याऽसौ मित्रं धनद इति वित्तो गुणगणै-
रतुल्यो ब्रह्माण्डे प्रथितधनराशिर्बहुयशाः ।
कुबेरो यक्षाणामधिपतिरुमेशे कृतरतिः
पुराऽऽसीत्ता दिव्याः शरद उपयाताः शतमहो ! ॥३॥

हम जिसे धनदके नामसे जानते हैं, वे कुवेर भगवान् शिवके मित्र हैं । गुण-गणोके द्वारा उनकी कही तुलना नही है । उनकी धनराशि ब्रह्माण्डमे विख्यात है । वे बहुत यशस्वी, यक्षोके राजा और उमावल्लभ भगवान् शिवमे अनुरक्त हैं । सैकडो दिव्य-वर्ष व्यतीत हो गये, कुवेर पूर्वकालसे ही धनाध्यक्षके पदपर प्रतिष्ठित हैं ॥ ३ ॥

पुरी तस्याऽऽसीत्सा सुकृतिरलका नाम महिता
सखिप्रेम्णा नित्यं ह्यधिवसति यां शम्भुरतुलः।
विभोः सेवार्थं तेऽसुरसुरवरेण्या गतभया-
स्तदस्याः कैलासोपवनमधितिष्ठन्ति सततम् ॥४॥

सुन्दर निर्माण-कार्यसे सुशोभित उनकी पुरी अलका नामसे प्रसिद्ध है। वह समस्त देवताओं द्वारा सम्मानित है। अपने सखा कुबेरके प्रेमसे विवश हो, अनुपम शक्तिशाली भगवान् शङ्कर उस पुरीमे नित्य निवास करते हैं। वहाँके कैलाश-समीपवर्ती उपवनमे भगवान् शिवकी सेवाके लिए असुरो और देवताओमे वरिष्ठ पुरुष सदा निर्भय होकर रहते हैं॥ ४॥

सुरम्येऽस्मिन् प्रान्ते सुरभितजला कल्मषहरा
च्युता विष्णोः पादादसुरसुरवर्यैश्च महिता।
गुणाढ्या गङ्गाऽऽसीदतुलजलधिं प्राप्तुमनसा
प्रवृत्ता संरुद्धा परमतुलितैरस्य सुगुणैः ॥५॥

उस सुरम्य प्रान्तमे भगवान् विष्णुके चरणारविन्दसे प्रकट हुई सुरभित जलवाली कल्मषहारिणी, गुणवती गङ्गा प्रवाहित होती हैं, जो असुरो तथा सुरेश्वरो द्वारा भी पूजित हैं। वे अनुपम महासागरमे मिलनेके लिए जाती थी, परन्तु भगवान् शिवके अनुपम सद्‌गुणोने उन्हे वहाँ मानो रोक लिया॥ ५॥

तदस्यां गङ्गायां धनदतनयौ गर्वितधियौ
मणिग्रीवौ तौ द्वौ शिवपदरतौ पीतमदिरौ।
कदाचित् ग्रीष्मर्तौ सह युवतिभिश्चेरतुरहो!
मदैः कामैमूढौ विगतवसनौ प्राकृतसमौ ॥६॥

उन्ही गङ्गाके तटपर कुबेरके दो गर्बीले पुत्र, नलकूबर और मणिग्रीव, जो शिवके चरणोमे अनुरक्त रहनेवाले थे, किसी दिन ग्रीष्म ऋतुमे मदिरा पान करके मद और कामसे विवेकशून्य हो, निम्नकोटिके पुरुषोके समान नग्न हो युवतियोके साथ विचरने लगे। यह कैसे आश्चर्यकी बात है?॥ ६॥

यदृच्छातो नारायण! शिव! विभो! पाहि कृपणान्
ब्रुवन् गायँल्लीला अखिलभुवनेश्या भवहराः।
समायातो वीणां श्रुतिसुखरवैः सन्मुखरितां
प्रकुर्वंस्तेनैव प्रमृजितपथा नारदमुनिः ॥७॥

उसी समय उस विशुद्ध-पथसे देवर्षि नारद-मुनि श्रुति-सुखद रवसे अपनी वीणाको निनादित करते हुए आ निकले। वे स्वेच्छासे 'हे नारायण, हे शिव, हे विभो! दीन-जनोकी

रक्षा कीजिए।' ऐसा बोलते और अखिल भुवनेश्वरी उमा देवीकी भव-भयहा लीलाओंका गान करते आ रहे थे ॥ ७ ॥

समायान्तं ह्येनं समधिगततत्त्वं मुनिवरं
समीक्ष्य ह्रीणाः सुरयुवतयो नग्नतनवः ।
स्ववासांसि त्रासाल्लघु परिदधुस्ता गतमदा
विवस्त्रौ तौ नैवं स्मरमदवशाच्चक्रतुरहो ! ॥८॥

इन तत्त्वज्ञ मुनि श्रेष्ठको आते देख नग्न शरीरवाली देवाङ्गनाओंने लज्जित हो, तुरन्त अपने-अपने वस्त्र पहन लिए। उनका नशा उतर गया था। परन्तु आश्चर्यकी है कि वे दोनो वस्त्रहीन कुबेर-पुत्र काम और मदके वशीभूत होनेके कारण ऐसा न सके ॥ ८ ॥

विलोक्य क्षीवौ तौ धनदतनयौ द्राविव ऋषि-
र्ह्ययोग्यौ मन्वानौ मृडचरणयोः सेवनविधौ ।
कृपां कर्तुं सम्यग् व्यपगतमदौ तौश्च दयितुं
जगावित्थं योगी स्मृतहरिचरित्रोऽसमगिरा ॥९॥

उन दोनो कुबेर पुत्रोको मद-मत्त देख देवर्षि नारदने उन्हे शिवके चरणोकी लिए अयोग्य माना। तब उनपर उत्तम कृपा करने और उन्हे मदरहित बनानेके भगवच्चरित्रका चिन्तन करनेवाले योगी नारदने अपनी अनुपमवाणी द्वारा इस कहा—॥ ९ ॥

शरीरेऽस्मिन् पुंसोऽसुलभविषयानेव जुषतो
ह्यवश्यं सद्बुद्धेर्भवति रजसा भ्रंश इह तु ।
विशेषस्तत्राऽपि प्रचुरमद एवाऽयमतुलः
श्रियां मोहाज्जन्यो नयति यमधो नित्यमहहा ! ॥१०॥

इस शरीरमे रहकर दुर्लभ अथवा प्राणपणसे जुटाए गये विषयोका ही सेवन वाले पुरुषकी उत्तम बुद्धिका रजोगुणके प्रभावसे अवश्य ही नाश हो जाता है। उस विशेष बात यह है कि यह लक्ष्मीका मोह-जन्य प्रचुर मद ही, जिसकी कही तुलना न पुरुषकी सदा अधोगतिको पहुँचा देता है। यह कितने खेदकी बात है ॥ १० ॥

ममाऽहं मन्वानो नर इह विशेषेण बहुधा
मदेनाऽस्या मत्तो भ्रमति जटिले विश्वविवरे ।
भवन्ति स्त्री द्यूतं विषयमदिरा चैवमनिशं

लक्ष्मीके मदसे मत्त-पुरुष, विशेषत मनुष्य 'मै और मेरा' की भावना करता हुआ इस जटिल विश्व-विवरमे बहुधा भ्रमण करता रहता है। उसके पास स्त्री, जुआ विषय-भाग, मदिरा-पान आदि व्यसन नित्य बने रहते हैं और इन्हीसे मार्ग भ्रष्ट होकर वह मनुष्य नरकमे गिरता है ॥ ११ ॥

त एते संमूढास्तदतुलमदेनैवमभितो
ह्यकार्यं कुर्वन्ति प्रचुरमदया हन्त ! जगति ।
हृषीकैराकृष्टा विषयविषमापीय बहुधा
प्रमत्ता निघ्नन्ति क्षितितलभवाञ्जीवनिवहान् ॥१२॥

वे ही ये सम्पत्तिके अतुलमदसे अत्यन्त मूढ हुए लोग ससारमे सबओर निर्दयता पूर्वक प्रचुरमात्रामे न करने योग्य कार्य करते हैं। इन्द्रियोसे आकृष्ट हो, विषय-विषका पान करके बहुधा प्रमत्त हो, भूतलके जीवसमूहोका सहार करते हैं ॥ १२ ॥

कथं कल्याणं स्यात् परतरममीषां हतधियां
विमन्यन्ते देहान् सततममरान् येऽत्र कुधियः ।
धिगेतान् दुर्वृत्तान् भवकुपथगाञ्छुद्धहृदया-
नपीत्थं संक्षुब्धानिव गतभयं कुर्वत इह ॥१३॥

जो कुबुद्धि लोग यहाँ अपने शरीरोको सदा अमर मानते हैं, इस प्रकार जिनकी बुद्धि मारी गई है, ऐसे लोगोका परम कल्याण कैसे हो सकता है। ससारमे रहकर कुपथपर चलनेवाले तथा शुद्धहृदय होकर भी क्षुब्धकी भाँति निर्भय हो यहाँ कुकर्म करनेवाले इन दुराचारियोको धिक्कार है ! ॥ १३ ॥

शरीरं नामैतद्विनशनपरं देवकथितं
भवेत् किं वा नेदं भवति पतितं प्राणरहितम् ।
तदेतस्याऽनित्या भसितकृमिविट्स्वास्थितगति-
र्भवत्येव स्वार्थेऽथ क इह विमुह्येद् बुधजनः ॥१४॥

यह शरीर देवतानामधारी ही क्यो न हो, अन्तमे विनष्ट होनेवाला है। क्या यह प्राणहीन होकर एकदिन गिर नही जाता है ? अत इस पाञ्चभौतिक शरीरकी स्थिति अनित्य है। इसे एक दिन जलकर राख होना है अथवा इसमे कीडे पड जायँगे अथवा यह किसी जन्तुका भोजन बनकर उसके बिष्ठाके रूपमे परिणत हो जायगा। ऐसी दशामे कौन विद्वान् पुरुष होगा, जो परमकल्याणमय स्वार्थ-साधनके विषयमे यहाँ प्रमोद करेगा ॥ १४ ॥

मृतस्येमं देहं दहति यदि कश्चित् प्रियजनो
भवत्येवं तूर्णं भसितमवशिष्टः परिणतौ ।
तथा त्यक्ते क्षिप्ते तत इह भवन्त्येव कृमयः
श्वभिर्भुक्ते सोऽयं भवति च पुरीष स्थितिरियम् ॥१५॥

मृतककी इस देहका यदि कोई प्रिय जन दाह-सस्कार करता है, तो यह परिणाममे तुरन्त भस्ममात्र होकर शेष रह जाता है। यदि इसे त्याग या फेक दिया जाय तो इसमे कीडे हो जायेगे तथा यदि इसे कुत्ते आदि हिंस्र-जीव खा जांय तो यह उनका विष्ठा बन जायेगा। यही स्थिति है ॥ १५ ॥

पितुः स्यात् किं वाऽयं य इह सुतबीजं प्रवपते
जनन्याः स्यात् किं वा यमिह निजगर्भे प्रदधते।
स्वमातुः पित्रोर्वा भवति किमुताऽन्नादिकरसान्
प्रदायाऽस्मै मिष्टान् कुरुत इह यौ पुष्टमनिशम् ॥१६॥

क्या यह शरीर पिताका है, जो यहाँ पुत्रके बीजका वपन करता है अथवा यह उस माताका है, जो इसे दश मासतक गर्भमे धारण करती है या माताके भी माँ-बापका है अथवा उन दो व्यक्तियोका है ? जो इसे मीठे अन्न रसादि देकर निरन्तर पुष्ट करते है ॥ १६ ॥

बलीयान् कोऽपि स्याद् गतबलमहो ! स्वात्मवशगं
करोत्येवं तस्माद्भवति किमुताऽस्यैव य इह।
भवेत् क्रेतुर्वाऽयं दहति दहनो यं परिणतौ
शुनः स्याद् किञ्चेमं ससुखमिह यश्चाऽत्ति बहुधा ॥१७॥

अहो ? कोई बलिष्ठ-पुरुष निर्बल-मनुष्यको अपने वशमे कर लेता है, इस दृष्टिसे इस देह पर क्या उस बलवान्‌का ही स्वत्व होता है ? अथवा यदि किसीने इसे खरीद लिया तो उस खरीददारका है अथवा अन्तमे इसे आग जला देती है तो इसपर उसीका अधिकार माना जाय ? कि वा उसे उस कुत्तेकी सम्पत्ति समझी जाय जो बडे सुखसे बहुधा अपना आहार बना लेता है ॥ १७ ॥

समुत्पन्नोऽव्यक्तात्प्रकृतगुणलिङ्गोऽस्थिरतरो
विभात्येवं देहः सरस इव साधारण इव।
समाश्रित्येमं को व्यपगतसुखानात्मविमुखान्
मृतप्रायाञ्जीवान् व्यथयति वृथा दुर्जनमृते ॥१८॥

अव्यक्त-तत्त्वसे उत्पन्न हुआ प्राकृतिक गुण-लिङ्गवाला यह शरीर सरस-सा प्रतीत होने पर भी अत्यन्त अस्थिर एवं साधारण है। इस शरीरका आश्रय लेकर दुर्जनके सिवा दूसरा कौन सुखरहित, आत्मविमुख तथा मृतप्राय-जीवोको व्यर्थ पीडा देगा ? ॥ १८ ॥

श्रियामत्तान् मूढानसत इह चोद्धर्तुमनिश
प्रदेयं प्राज्ञेनाऽपरहितकरं ह्यञ्जनमपि।
तदेतद् दारिद्र्यं विलसति शुभं त्यागमहितं
सतां श्रेष्ठं श्रेष्ठं बहुगुणयुतं चाऽऽयतिसुखम् ॥१९॥

जो लक्ष्मीके मदसे मत्त हो, अपना विवेक खो बैठे हैं, उन दुष्टोका उद्धार करनेके लिए विद्वान् पुरुषको उन्हे सदा परहितकारी अञ्जन-प्रदान करना चाहिये। यह शुभ अञ्जन दरिद्रता ही है, जो त्यागसे पूजित, सत्पुरुषोका परम प्रिय, श्रेष्ठ, बहुगुण सम्पन्न तथा भविष्यमे सुख देनेवाला है ॥ १९ ॥

दरिद्रः संसारे भवति विमदो विश्वविषयै-
विंहीनः संत्यक्तो विषविषयिभिर्लाञ्छित इह ।
स्मरंस्तेषां कृत्यं तदितरजनान् पश्यति सदा
तदात्मौपम्येन स्वहितमिव कर्तुं च यतते ॥२०॥

दरिद्र-पुरुष इस ससारमे मदरहित, सम्पूर्ण विषयोसे हीन, विषमय-विषयी पुरुषोसे परित्यक्त तथा लाञ्छित होता है। धनियोके बर्तावका स्मरण करके वह उनसे भिन्न लोगोको अपने ही समान देखता है और अपना ही हित मानकर उनका हित करनेके लिए यत्न करता है ॥ २० ॥

दरिद्रान् संपश्यंस्तदनु दयमानोऽत्र बहुधा
करोत्येवं श्रेयो भवति सफलो यत्र स ततः ।
दृढै रोगैर्विद्धो जन इव परानात्मसदृशां-
स्तथाभूतान् द्रष्टुं कथमपि च नेच्छत्यविकलः ॥२१॥

वह दरिद्रोको देखकर उनके प्रति बहुधा दया दिखाता है और जहाँ वह सफल होता है, वहाँ उनकी भलाई करता रहता है। जैसे सुदृढ रोगोसे पीडित मनुष्य दूसरोको अपने ही समान देखता है और उनके रोग मिटानेकी इच्छा करता है। परन्तु जो रोगसे व्याकुल नही है, वह कदापि किसी तरह भी दूसरोको अपने समान नही देखना चाहता।२१।

अहङ्कारान्मुक्तो व्यपगतमदो नष्टविषयो
दरिद्रो दिष्ट्यैवं प्रभवति फलं भोक्तुमिह यत् ।
तपस्तस्यैतत् स्यात् क्षुधितमनसश्चान्नमपि तत्
सुदुष्प्राप्यं यस्माद् भवति परहिंसा कथमतः ॥२२॥

दरिद्र-मनुष्य अहकार शून्य तथा सब प्रकारके मदोसे मुक्त होता है। उसे भाग्यसे जो कुछ मिल जाता है, उसी फलको भोगनेमे समर्थ होता है। यह उसकी तपस्या है। जिसको भूखे होने पर मुट्ठीभर अन्न भी दुर्लभ रहता है, वह धनियोकी भाँति दूसरेकी हिंसा कैसे कर सकता है ॥ २२ ॥

दरिद्राः सच्छीलास्तदनु विमदाः शान्तमनसो
विहिंसा युज्यन्ते परमगुणिभिः साधुचरणैः ।
दयार्द्रास्ते येभ्यो हृदयगततर्षानपि भृशं
प्रपूर्णान् कुर्वन्ति द्रुतमथ विशुध्यन्ति च ततः ॥२३॥

दरिद्र-मानव सुशील, मद-मानसे रहित, शान्तचित्त और हिंसासे दूर रहनेवाले होते है। वे परम गुणवान् साधु-चरणोका सङ्ग करते है और दयाके पात्र होते है। वे उन साधु पुरुषोके सङ्गसे अपनी हार्दिक अभिलाषाओको भी विशेषरूपसे पूर्ण कर लेते है और उन इच्छाओको त्यागकर विशुद्ध हो जाते हैं ॥ २३ ॥

दरिद्रेभ्यस्तेभ्यः परमकृपणेभ्यो गुणधना
महात्मानः सन्ति ह्यतुलसुखदातार इह ये।
त एव क्षिप्रं तान् भवविषयमुक्तान् स्वकृपया
प्रसङ्गं दत्वेतः परमुपनयन्ति प्रविधिभिः ॥२४॥

उन परम दीन-दरिद्रोको गुणके धनी महात्मा जन इस ससारमे अनुपम सुख देनेवाले होते हैं। वे ही उन्हे शीघ्र ही अपनी कृपासे साधु-सङ्ग देकर सासारिक विषयोसे मुक्त करके उत्तम साधनो द्वारा परमात्माकी प्राप्ति करा देते है ॥ २४ ॥

धनस्तम्भा दुष्टा न ददति गुणिभ्योऽपि वसु यत्
तदेभिर्हन्यन्ते धनदयशसस्ते च समये।
भवेत् कोऽर्थोऽस्माकं दृढतरमुपेक्ष्यैः कुपुरुषै-
स्तथाप्येतान् हिंस्रानपि दयितुमर्हन्ति सुधियः ॥२५॥

जो धनके अभिमानसे अकडे हुए रहते है और गुणवानोको भी धन नही देते हैं, वे कुबेरका यश लेनेवाले धनीलोग समय आने पर उन गरीबोके ही हाथसे मारे जाते हैं। ऐसे दुष्ट पुरुष दृढताके साथ उपेक्षा करने योग्य हैं। उनसे हमारा क्या प्रयोजन सिद्ध हो सकता है। तथापि जो शुद्ध बुद्धिवाले सन्त हैं,. वे इन हिसकोपर भी दया करते हैं ॥ २५ ॥

वयं संसारेऽस्मिन् हरिचरणसेवामृतरसान्
निपीयैवं मग्नास्तदतुलसुखे चैत्यपुरुषे।
परं भग्नान् मग्नान् कुविषयविषाब्धौ प्रतिदिनं
त्विमान् दृष्ट्वा हन्त! व्यथितहृदयाः स्याम सततम् ॥२६॥

हमलोग इस ससारमे भगवच्चरणोकी सेवाके अमृतमय-रसका पान करके अनुपम सुख-स्वरूप, चैतन्यमय, परम-पुरुषमे मग्न रहते है। परन्तु हाय! कुत्सित विषयरूपी विषके सागरमे डूबे हुये इन हताश जीवोको प्रतिदिन देखकर हमारा हृदय सदा व्यथित होता रहता है ॥ २६ ॥

तदेतौ संस्कर्तुं दयितुमनयोर्वृद्धमदयो-
र्मदं मोहं हर्तुं परिणतिसुखं कर्तुमसमम्।
यतेऽहं शान्त्येति व्यवसितमतिः सोऽथ मुनिराड्
विचार्येदं तौ द्वौ तदनुहितमाहेत्थमतुलम् ॥२७॥

इसलिए जिनका मद बढा हुआ है, उन इन कुबेर-पुत्रोका चित्त शुद्ध करने, इनपर दया दिखाते, इनके मद और मोहको हर लेने तथा अन्ततोगत्वा इनको अनुपम सुख प्रदान करनेके लिए मैं शान्तिपूर्वक प्रयत्न करूँगा। ऐसा निश्चित विचार करके मुनिराज नारदने कुछ सोचकर उन दोनोके प्रति यह अतुलनीय हितकर बात कही—॥ २७ ॥

**मणिग्रीवौ ! स्त्रैणौ ! धनदतनयावत्र शृणुतं**
**युवां नैव स्यातं युवतिमदिरादौ गतमती।**
**भवेतां वां नैव स्मरवशगतौ पीतमदिरौ**
**विनिर्लज्जावित्थं पुनरिह सतां हेलनकरौ ॥२८॥**

'स्त्रियोके वशमे रहनेवाले कुबेरपुत्र नलकूबर और मणिग्रीव! तुम दोनो यहाँ मेरी बात सुनो। तुम्हारी बुद्धि युवती एव मदिरा आदिमे लगी हुई है। आजसे तुम दोनो कामदेवके वशीभूत हो मदिरा पीकर निर्लज्ज हो, इस प्रकार यहाँ पुन सत्पुरुषोकी अवहेलना करनेवाले नही हो सकोगे ॥ २८ ॥

**युवां योग्यौ तस्माद्भवितुमगतां भ्रंशितमदौ**
**तथैव स्यातं चाऽवनितलगतावर्जुनतरू।**
**दयेयं जानीतं मम हितकरी चाऽऽयतिसुखा**
**न शापोऽयं तत्राऽपि च भवतु कृष्णस्मृतिरपि ॥२९॥**

'तुम दोनो मद-भ्रष्ट होकर वृक्षयोनिमे जानेके योग्य हो। अत भूतलपर अर्जुन-वृक्षके रूपमे उत्पन्न होओ। तुम्हे जानना चाहिए कि यह शाप नही है, मेरी हितकारिणी दया है, जो भविष्यमे सुख देनेवाली होगी। उस वृक्ष-योनिमे भी तुम्हे श्रीकृष्णकी स्मृति बनी रहेगी ॥ २९ ॥

**शते दिव्ये वर्षे व्यपगतवतीत्थं स्थितवतोः**
**सुतापेनाऽस्मिन् भो ! मृजितमनसोस्तत्र युवयोः।**
**विभोः पादस्पर्शं समधिगतयोस्तत्त्वविदुषो-**
**र्भवेन्मुक्तिस्तस्माद्धरिचरणयोर्भक्तिरपि च ॥३०॥**

'सौ दिव्य-वर्ष बीत जानेतक भी तुम इसी तरह वृक्ष-रूपमे खड़े रहोगे और अत्यन्त अनुतापके कारण वहाँ तुम दोनोका चित्त शुद्ध हो जावेगा। तदनन्तर भगवान् श्रीकृष्णके चरणोका स्पर्श पाकर तुम तत्त्वज्ञ हो जाओगे, वृक्ष शरीरसे तुम्हे छुटकारा मिल जायेगा और श्रीहरिके चरणोमे तुम्हारी भक्ति भी हो जायेगी' ॥ ३० ॥

**तावेवमुक्त्वा मुनिराज उच्चधीर्नारायणस्थानमगात्ततो द्रुतम्।**
**विचार्य दामोदर इत्थमत्रतत्स्मरन्नपश्यद्यमलार्जुनावमू ॥३१॥**

उन दोनोसे ऐसा कहकर उच्च विचारवाले मुनिराज नारद वहाँसे तुरन्त ही नारायण स्थान ( बदरिकाश्रम ) को चले गए। इधर ऐसा विचारकर दामोदरने पुरानी बातका स्मरण करते हुए उन यमलार्जुन वृक्षोको देखा ॥ ३१ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**सर्गोऽगात् सप्तत्रिंशोऽयं महाकाव्ये स्तवात्मके ॥३२॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे सैतीसवाँ सर्ग पूरा हुआ ॥ ३२ ॥



# अष्टत्रिंशः सर्गः

[ भगवता स्वोदरनिबद्धोलूखलेन तयोरुन्मूलनम् । ताभ्यां कृता तत्स्तुतिः ।
तयोः स्वधामगमनञ्च ]

( वसन्ततिलकावृत्तम् )

दामोदरस्तदनु तस्य मुनेर्महर्द्धेर्वक्त्रारविन्दगलितं वचनं विमृश्य ।
सत्यं विधातुमिदमस्य कृपालुरेष तत्राऽगमन्मृजितनेत्रजलो विविक्ते ॥१॥

तदनन्तर महान् ऐश्वर्यसे सम्पन्न मुनिवर नारदके मुखारविन्दसे निकले हुए वचन-पर विचार करके इसे सत्य करनेके लिए ये कृपालु भगवान् दामोदर एकान्तमे आँसू पोछते हुए वहाँ गए ॥ १ ॥

आकृष्य रज्जुममुया स उलूखलञ्च ह्यानाय्य सार्धमसमां तत आत्मलीलाम् ।
पुण्यां प्रदर्श्य शिशुरूपमयीं सुधीषु चोद्धर्तुमर्जुनतरू तरुमूलमागात् ॥२॥

वे रस्सी खीचकर उसके साथ ओखली भी खीच लाये । और जिसकी कही तुलना नही है, ऐसी अपनी शिशुरूपमयी पवित्र लीलाका सुधी-जनोमे प्रदर्शन करते हुए दोनो अर्जुन वृक्षोके उद्धारके हेतु उनके मूलभागमे गए ॥ २ ॥

संप्रेक्ष्य तौ तत उपेन्द्रशिशुः सुखेन मध्येन वृक्षयुगलस्य गतस्तदानीम् ।
स्थौल्येन किन्त्ववहितं तदुलूखलन्तु नान्तर्विवेश किल तिर्यगभूत् क्षणेन ॥३॥

उन वृक्षोको देखकर वह उपेन्द्र-स्वरूप शिशु उस समय अनायास ही दोनोंके बीचसे निकल गया । परन्तु स्थूल होनेके कारण वहाँ खीचकर लाई हुई ओखली वृक्षोके बीचमे प्रविष्ट न हो सकी । क्षण भरमे टेढी होकर अटक गई ॥ ३ ॥

दामोदरोऽयमतुलो बलवान् विनोदी चित्ते महद्भिरनुचिन्त्यपदारविन्दः ।
तद्दामभागमवगृह्य करेण किञ्चिदाकृष्टवान् स्वसखिभिः स तदा विदृष्टः ॥४॥

अतुल्य बलवान् और विनोदी दामोदरने, जिसके चरणारविन्दोका बडे-बडे महात्मा अपने चित्तमे निरन्तर चिन्तन करते हैं, ओखलीकी रस्सीके एक छोरको हाथसे पकडकर कुछ खीचा । उसे ऐसा करते उसीके सखाओने देखा ॥ ४ ॥

आश्चर्यमत्र सुमहत् समभूत्तदानीं तावर्जुनद्रुमवरौ कृतचण्डशब्दौ ।
आमूलवेपितशिखौ सदलप्रकाण्डौ संपेततुश्च सहसोत्कलिताङ्घ्रिबन्धौ ॥५॥

उस समय वहाँ बडे भारी आश्चर्यकी बात यह हुई कि वे दोनो श्रेष्ठ अर्जुन-वृक्ष मूलसे लेकर शिखापर्यन्त हिल गए और पत्तो तथा शाखाओ सहित प्रचण्ड शब्द करके गिर पडे। उनकी जडे सहसा उखड गईं ॥ ५ ॥

**कान्त्या ततस्तु ककुभः परिदीपयन्तौ सिद्धौ कुबेरतनयौ नलकूबरौ तौ ।**
**निष्क्रम्य वृक्षयुगलाच्छिरसा प्रणम्य दामोदरं तमिदमूचतुरत्र चेत्थम् ॥६॥**

तदनन्तर अपनी कान्तिसे दिशाओको प्रकाशित करते हुए सिद्ध-स्वरूप दोनो कुबेरपुत्र नलकूबर और मणिग्रीव उन युगल-वृक्षोसे निकले और भगवान् दामोदरको झुके हुए शिरसे प्रणाम करके उनसे इस प्रकार बोले—॥ ६ ॥

**योगेश्वरेश्वर! विभो! स भवान् परात्मा ह्यात्मा च सर्वजगतामिह तस्थुषाञ्च ।**
**यस्मादिदं भवति तिष्ठति नाशमेति स त्वं परः पुरुष ईश ! तथाऽऽद्य एकः ॥७॥**

'योगेश्वरेश्वर ! विभो ! आप सम्पूर्ण जङ्गम तथा स्थावर जगत्के आत्मा एवं परमात्मा है। हे ईश ! जिससे यह ससार उत्पन्न होता, जिसके आधारपर टिकता और जिसमे लीन हो जाता है, वह एक आदि परम-पुरुष आप ही हैं ॥ ७ ॥

**त्वद्रूपमेतदखिलं सदसद्विभाति दृश्यं ह्यदृश्यमपि तन्महतः प्रसूतम् ।**
**यद् ब्रह्मतत्त्वविद उत्तमपूरुषास्ते जानन्ति नाथ ! बहुधाऽऽप्य परां कृपां ते ॥८॥**

'यह सत् असत् जो कुछ प्रतीत होता है, वह सब आपका ही रूप है। महत्तत्त्वसे उत्पन्न दृश्य और अदृश्य जगत् भी आपका ही स्वरूप है। नाथ ! जो ब्रह्मतत्त्वके ज्ञाता श्रेष्ठ-पुरुष हैं, वे बहुधा आपकी कृपा प्राप्तकरके सब कुछ जानते हैं' ॥ ८ ॥

**त्वद्वीक्षिता प्रकृतिरेव गुणत्रयेषु संक्षोभमाप्य सृजतीश्वर ! विश्वमेतत् ।**
**यत्प्रेरकस्त्वमसि काल उपात्तलीलोऽध्यक्षस्तथा प्रकृतिपूरुषयोर्निदानम् ॥६॥**

'हे ईश्वर ! आपके द्वारा देखी गई प्रकृति ही तीनो गुणोमे क्षोभको प्राप्त होकर इस विश्वकी सृष्टि करती है। उसके प्रेरक काल भी आप ही हैं। अनेक प्रकारकी लीलाये करनेवाले आप ही प्रकृति और पुरुषके स्वामी तथा आदि कारण हैं' ॥ ९ ॥

**त्वं प्राकृतैर्गुणगणैरिह गृह्यमाणैरर्थैश्च विश्वविकृतैर्विततैः पदार्थैः ।**
**अग्राह्य एव भगवन्नसि तत्त्वतस्त्वां ज्ञातुं समर्थ उरुगाय ! भवे भवेत् कः ? ॥१०॥**

'भगवन् ! आप प्राकृत गुण-समूहोसे, गृहीत होनेवाले विषयोसे, समस्त विकारोसे और विस्तृत पदार्थोसे भी अग्राह्य ही है। प्रभो ! आप उरुगाय है—बहुतसे भक्त और ज्ञानी आपके यशका गान किया करते हैं। आपको तत्त्वत जाननेके लिए कौन समर्थ हो सकता है ?' ॥ १० ॥

धन्यास्त एव भगवन् ! भगवन्तमारात् प्रेम्णा विगृह्य हृदये प्रभवन्ति रोद्धुम् ।
येऽन्येष्वपि स्वहृदि सन्तमनाथनाथं पश्यन्ति चैत्यपुरुषस्य धियाऽऽत्मनैव ॥११॥

'भगवन् ! जो आपको समीपसे प्रेमपूवक हृदयमे स्थापित करके वही रोक रखनेमे समर्थ होते है, वे ही लोग धन्य हैं। वे अपने हृदयमे सदा विद्यमान आप अनाथ-नाथको चैतन्य-पुरुषकी बुद्धिसे स्वय ही अन्य प्राणियोके भी भीतर देखते हैं' ॥ ११ ॥

ब्रह्मत्वशक्तिपरिपूर्णगुणा विकारास्त्वां तादृशं अपि पिधाय निजैः स्वभावैः ।
ईदृग्विधं परिनिदर्श्य भवन्महत्त्वं स्वामिन्निमां प्रकटयन्ति दयालुताञ्च ॥१२॥

'स्वामिन् ! ससारके सारे विकार वास्तवमे आपकी ब्रह्मत्व-शक्तिसे परिपूर्ण गुणवाले हैं। तो भी अपने ही सृष्टिकर्ता आपको अपने स्वभावोसे ढँक कर आपको ऐसे महत्त्वको दिखाकर आपकी दयालुताको ही प्रकट करते हैं' ॥ १२ ॥

नानाशरीरगतरूपमनेकवारं धत्ते भवानिह विनोदकृतावतारम् ।
तज्ज्ञायतेऽसुरमनुष्यसुरेष्वभूतैर्लोकोत्तरैः सुचरितैर्भवता कृतैस्तैः ॥१३॥

'आप इस जगत्मे नाना प्रकारके शरीरगत-रूप अनेकबार धारण करते हैं, लीला-विनोदके लिए अवतार ग्रहण करते हैं। देवताओ, असुरो और मनुष्योमे जो कभी हुए नही ऐसे आपकेद्वारा किये गए लोकोत्तर चरित्रोसे आपके उस अवतारका पता चलता है' ॥१३॥

स त्वं प्रभोऽखिलजगत्परिपालनाय त्राणाय वेदविदुषामसतां क्षयाय ।
ऐश्वर्यराशिरपि भासि कृतावतारो मायाब्धितीर्ण ऋषिवर्य इहाऽवतीर्णः ॥१४॥

'प्रभो ! वे आप सपूर्ण जगत्के परिपालन, वेदवेत्ताओके परित्राण तथा दुष्टोके सहारके लिए ऐश्वर्य-राशि होते हुए भी अवतार लेकर सुशोभित होते हैं। आप माया-सागरसे पार हुए ऋषिवर्य नारायण ही यहाँ अवतीर्ण हुए हैं ॥ १४ ॥

निःश्रेयसाय परतत्वमयाय तुभ्यं नारायणाय यदुवंशसुखोदयाय ।
दिव्याय चैत्यपुरुषाय सुमङ्गलाय शान्ताय चेष्टगतये प्रभवे नमोऽस्तु ॥१५॥

'आप परम कल्याणरूप, परतत्त्वमय नारायण हैं। यदुवशको सुख देनेके लिए उसमे प्रकट हुए है, आपको नमस्कार है। आप दिव्य चैतन्यपुरुष, परम मङ्गलमय, शान्त-स्वरूप, अभीष्ट-गतिप्रद और सबके प्रभु हैं। आपको नमस्कार है ॥ १५ ॥

ब्रह्म स्वयं त्वमसि देव ! मुनेः कृपायाः प्राप्तं फलं सुकृतिभिश्च सुदुर्लभं यत् ।
गच्छाव आत्मभवनं भगवन्ननुज्ञां काङ्क्षाव ईश ! जय दामनिबद्ध नाथ ! ॥१६॥

'देव ! आप साक्षात् ब्रह्म है, जो पुण्यात्माओके लिए भी अत्यन्त दुर्लभ है, वह फल हमे देवर्षि नारदकी कृपासे प्राप्त हो गया । भगवन् ! अब हम अपने धामको जा रहे है और उसके लिए आपकी आज्ञा चाहते हैं । ईश ! दामोदर ! नाथ ! आपकी जय हो ।। १६ ।।

**आवां सुरेतरसमौ कृततुच्छलीलौ युष्मत्सुसेवककुबेरसुतौ धनाढ्यौ ।**
**मत्तौ यदा स्व उरुगाय ! तदैव दण्डो हीदृग्विधोऽत्र विहितः स्वकृतैः कुभावैः ।।१७।।**

'हम आपके सेवक कुबेरके पुत्र है । हमने दूसरे देवताओके समान निम्नकोटिकी क्रीडाएँ की थी । उरुगाय ! हम धनाढय होनेके कारण जब मदमत्त हो रहे थे, उसी समय अपने द्वारा किये गए दुर्भावोके कारण हमे यहाँ ऐसा दण्ड प्राप्त हुआ ।। १७ ।।

**वाणी गुणानुकथने श्रवणौ कथायां हस्तौ च कर्मसु मनस्तवपादयोर्नः ।**
**स्मृत्यां शिरस्तव निवासजगत्प्रणामे दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम् ❀ ।।१८।।**

'हमारी वाणी आपके गुणोके वर्णनमे, कान आपकी कथा सुननेमे, दोनो हाथ आपके लिए कर्म करनेमे, मन आपके युगल चरणारविन्दोके चिन्तनमे, मस्तक आपके निवासभूत जगत्को प्रणाम करनेमे तथा दृष्टि भगवत्-स्वरूप सन्त-महात्माओके दर्शनमे सलग्न रहे १८।।

**ताभ्यां स्तुतः स भगवान् परिपूर्णकामो दामोदरस्तत उलूखलबद्ध इत्थम् ।**
**आह स्म बाहुयुगलेन विगृह्य दाम क्रीडंश्च तेन विहसन् प्रियगुह्यकौ तौ ।।१९।।**

उनके इस प्रकार स्तुति करने पर ओखलीमे बँधे हुए पूर्णकाम भगवान् दामोदर जो दोनो हाथोसे रस्सी पकडकर खेल रहे थे, हँसते हुए उन दोनो प्रिय गुह्यकोसे इस प्रकार बोले—।। १९ ।।

**ज्ञात्वैतदस्म्यहमुपागत इत्थमत्र भो गुह्यकौ ! शृणुतमद्य युवां सुसिद्धौ ।**
**मत्तौ श्रिया मदिरया युवतीभिरेवं क्षीवौ कृतौ गतमदौ मुनिना तथेति ।।२०।।**

'कुबेरपुत्र गुह्यको ! ये सारी बातें जानकर मै यहाँ इस रूपमे आया । तुम मेरी यह बात सुनो । आजसे तुम दोनो परम सिद्ध हो गये । तुम्हे धन-लक्ष्मीने मत्त और मदिरा तथा युवतियोने उन्मत्त बना दिया था परन्तु देवर्षि-नारदने तुम्हे इस प्रकार मदरहित कर दिया ।। २० ।।

**तद्वित्तमस्य सुकृपां महतीं समाप्तां ज्ञानं ययाऽभवदिहाऽऽत्मगतं प्रपूर्णम् ।**
**मद्दर्शनं ह्यधिगतं ससुखं युवाभ्यां पूर्णावतः शिवपदाब्जरतौ भवेतम् ।।२१।।**

---

❀ श्लोकोऽयं श्रीमद्भागवतस्थ एव । ससिद्धमन्त्रमयत्वान्मयाऽपि तथैवाऽत्र संस्थापित । अतोऽत्रस्था आर्षा प्रयोगा अपि पाणिनिपिङ्गलादीनां नियमान्नापेक्षन्त इति चाऽवधारणीयं विद्वद्भि· ।

'अतः मुनिके शापको उनकी महती कृपा प्राप्त हुई समझो। जिससे तुम्हे यहाँ पूर्ण आत्मज्ञान हो गया है। तुमने सुखपूर्वक मेरा दर्शन पाया है, इसलिये पूर्णकाम हो गए। अब भगवान् शिवके चरणारविन्दोमे रत रहो ॥ २१ ॥

**सूर्योदये सति घटादिपदार्थकानां ज्ञानं यथा भवति तद्वदिहाऽपि वित्तम् ।**
**आत्मैव सर्वमिति बोधवतामृषीणां संदर्शनं धवि जगद्गतकल्मषं यत् ॥२२॥**

'जैसे सूर्योदय होनेपर घट-पटादि पदार्थोका ज्ञान होता है, उसी प्रकार यहाँ भी समझो। यह सब कुछ आत्मा ही है, ऐसे बोधवाले ऋषियोका दर्शन जगत्के पाप-तापका खण्डन कर देता है ॥ २२ ॥

**तत्राऽपि मच्चरणयोर्मननप्रियाणां दत्तात्मनां मयि सतां समदर्शनानाम् ।**
**संदर्शनं तु शृणुतं प्रददाति सर्वान् कामान् परत्वमपि मोक्षपदाभिधं तत् ॥२३॥**

'उसमे भी जिन्हे मेरे चरणोका चिन्तन और मनन-प्रिय है, जिन्होने मुझे अपने आपको समर्पित कर दिया है, उन समदर्शी सन्तोका दर्शन तो सम्पूर्ण कामनाओको पूर्ण कर देता है तथा मोक्षनामक परम तत्त्व भी उपलब्ध करा देता है ॥ २३ ॥

**तद् गच्छतं स्वसदनं परमं स्वधाम्ना मां पश्यतं स्वजनबद्धमिहैव दाम्ना ।**
**मद्भक्तिभाव उदितो हृदये युवाभ्यां यः काङ्क्षितोऽत्र युवयोः प्रिय एष मोक्षः ॥२४॥**

'अत अब तुम अपने घरको लौट जाओ। स्वजनो द्वारा दाम ( रस्सी )से यहाँ बँधे हुए मुझको अपने तेजसे युक्त परमात्मा देखना। तुमने जिसको इच्छा की थी, वह मेरा भक्ति-भाव तुम्हारे हृदयमे उदित हो गया है। यही तुमलोगोका प्रिय-मोक्ष है' ॥ २४ ॥

**दाम्ना सुबद्धं ह्युदरे तदैनं भक्त्या प्रणम्याऽथ हृदि प्रवेश्य ।**
**प्रदक्षिणीकृत्य कुबेरपुत्रौ गृहं गतौ द्राग् तत औत्तरं स्वम् ॥२५॥**

उदरमे दामसे बँधे हुए इन भगवान्को हृदयमे रखकर भक्तिभावसे प्रणाम करके उनकी परिक्रमा करनेके पश्चात् वे दोनो कुबेर पुत्र तत्काल उत्तर दिशावर्ती अलकापुरीमे स्थित अपने भवनको लौट गए ॥ २५ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**अष्टत्रिंशोऽपि सर्गोऽगान्महाकाव्ये स्तवात्मके ॥२६॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे अडतीसवाँ सर्ग पूरा हुआ ॥ २६ ॥



# एकोनचत्वारिंशः सर्गः

[ नन्दादीनां तत्राऽऽगमनम् । तत्रत्यबालकमुखाद्भगवद्वृत्तान्तश्रवणम् ।
तेषां विचिकित्सा । भगवतः स्वधामनयनञ्च । ]

( वंशस्थेन्द्रवंशयोरुपजातिवृत्तम् )

आकारिता राजगृहे महोत्सवे समागता गोकुलराजबान्धवाः ।
आसन् व्रजस्था मुनयश्च भिक्षुकाः संन्यासिनस्तेऽप्यभितो गृहं श्रिताः ॥१॥

राजकीय-सदनके महोत्सवमे बुलाये गए गोकुलराज-नन्दके भाई-बन्धु तो आये ही थे, व्रजवासी मुनि, भिक्षुक और सन्यासी भी चारोओरसे उनके घरपर पधारे थे ॥ १ ॥

क्रियामयं मन्त्रवशं तमीश्वरं ब्रह्मज्ञविप्रैर्निगमागमात्मकैः ।
राजोपचारैः प्रहुतं यथाविधि निरीक्ष्य चाऽऽसन् सकलास्त आस्थिताः ॥२॥

ब्रह्मज्ञ ब्राह्मणोने, जो निगम और आगमके मूर्तिमान् स्वरूप थे, उन सत्क्रियामय, मन्त्राधीन परमेश्वरके निमित्त विधिपूर्वक राजोपचारोद्वारा हवन, पूजन किया। यह देखते हुए सब लोग वहाँ चुपचाप बैठे थे ॥ २ ॥

मुग्धे जनौघेऽत्र सुखं व्यवस्थिते तथाऽघटत्संघटना पुरोदिता ।
विश्रुत्य यस्या रवमार्तिकारकं तत्राऽऽगमंस्त्रासविमोहिता जनाः ॥३॥

सारा जन-समुदाय मुग्ध होकर वहाँ सुखपूर्वक विराजमान था। उसी समय वह पूर्वोक्त घटना घटित हुई थी। वृक्षोके गिरनेका क्लेशदायक शब्द सुनकर भयसे मोहित हुए बहुतसे लोग वहाँ आ पहुँचे ॥ ३ ॥

नन्दादयो गोपवृषाः समाकुलाः सञ्जातमेतत्किमिति प्रभाषिणः ।
प्रधावमानास्त्वरिताः समाययुः शब्दानुसारेण तदाऽत्र वेपिताः ॥४॥

नन्द आदि श्रेष्ठ गोप व्याकुल हो 'यह क्या हुआ, क्या हुआ' ऐसा कहते और उस शब्दका अनुसरण करते हुए तुरन्त दौड़े गये। वे सब कांप उठे थे ॥ ४ ॥

आकस्मिकं ह्यर्जुनवृक्षयुग्मयोरामूलचूडं पतनं भयङ्करम् ।
तदन्तिकस्थं शिशुमक्षतं च ते समीक्ष्य संभ्रान्तधियोऽवतस्थिरे ॥५॥

अकस्मात् दोनो अर्जुन-वृक्षोका जडसे शिखातक उखडकर गिरना बडा भयकर था। उसके निकट खडे हुए शिशु नन्द-नन्दनको कोई क्षति नही पहुँची है, यह देखकर मन ही मन घबराये हुए वे सब वहाँ जा खडे हुए ॥ ५ ॥

**तमद्भुतं बालकमग्रतः स्थितं दाम्नाऽत्र खेलन्तमथो निरूप्य च ।**
**अन्योन्यमाजल्पुरिदं जनास्तत उत्पात ईदृग् समभूत् कथं त्विति ॥६॥**

वह अद्भुत बालक सामने खडा वहाँ रस्सीसे खेल रहा था। उसे देखकर सब लोग आपसमे कहने लगे—'अहो! ऐसा उत्पात कैसे हुआ ?॥ ६ ॥

**अप्राप्य किञ्चित् पतनस्य कारणं विमृश्य दीर्घं सुधियोऽपि गोदुहः ।**
**विपृच्छया तस्य जगत्पतेः प्रियांस्तानन्तरङ्गान् पृथुकान् व्यलोकयन् ॥७॥**

उत्तम बुद्धिवाले गोपोने दीर्घ कालतक विचार करके भी वृक्षोके गिरनेका कोई कारण नही पाया, तब इसके विषयमे पूछ-ताछके लिए उन जगदीश्वर श्रीकृष्णके प्रिय अन्तरङ्ग-सखा ग्वालबालोकी ओर दृष्टिपात किया ॥ ७ ॥

**उलूखले बद्ध उदारविक्रमो महानुभावो विभुबालकस्त्वितः ।**
**पश्यन् सखींस्तद्गदितुं यथार्थतः प्राचोदयत् स्वात्मगतैः शुभेङ्गितैः ॥८॥**

ओखलमे बँधे हुए महान् पराक्रमी महानुभाव भगवत्स्वरूप बालकने सखाओकी ओर देखकर अपने शुभ-सकेतो द्वारा उन्हे सच्ची बात कहनेके लिए प्रेरणा दी ॥ ८ ॥

**बालास्तदोचुः सभया गलद्गिरो वृद्धान् समाभाष्य सुतथ्यमत्र भोः! ।**
**उलूखलं कर्षयताऽमुनाऽधुना ह्युन्मूलितं चार्जुनवृक्षयोर्युगम् ॥९॥**

उस समय भयभीत हुए बालकोने लडखडाती आवाजमे बड़े-बूढोको सम्बोधित करके सच्ची बात बतायी—'गुरुजनो! इस समय यहाँ ओखली खीचते हुए कन्हैयाने ही दोनो अर्जुन-वृक्षोको जड-मूलसहित उखाड़ दिया है ॥ ९ ॥

**तावन्तराऽयं तु यदागतस्त्वित उलूखलं तिर्यगभूद् बृहत्तया ।**
**तदैव तेनाऽपि च सत्त्वशालिना ह्याकर्षितं तत्स्वबलप्रयोगतः ॥१०॥**

'उन दोनो वृक्षोके बीचमे जब यह आकर खडा हुआ, तो ओखली बडी होनेके कारण टेढी हो गई। उसी समय इस महान् बलशाली श्यामने भी अपने बलका प्रयोग करके उसे खीचा ॥ १० ॥

**सखाऽस्मदीयो व्रजराजनन्दनो ह्यतर्क्यशक्तिर्बहुधा विराजते ।**
**येनाऽत्र मान्यास्तरुयुग्ममध्यतो निष्कासितौ द्वौ पुरुषावलौकिकौ ॥११॥**

'माननीय जनो! हमारा सखा व्रजराज-नन्दन बहुधा अतर्क्य-शक्तिसे सम्पन्न होकर शोभा पाता है। जिसने दोनो वृक्षोके बीचसे दो अलौकिक पुरुषोको भी प्रकट कर दिया था ॥ ११ ॥

अदृश्यरूपेण वयं स्थितास्तदा सर्वं ह्यपश्याम चरित्रमस्य भोः ! ।
तस्माद्भवेत् प्रत्यय एव सर्वथा सर्वेष्वथो मान्यजनेषु सत्स्वहो ! ॥१२॥

'गुरुजनो ! उस समय हम सब लोग यहाँ छिपे हुए खडे थे और इसका सारा चरित्र देखते थे। अत हमारी बातपर आप समस्त माननीय-जनोको सर्वथा विश्वास होना चाहिए। अहो ! बडी अद्भुत घटना घटित हुई थी' ॥ १२ ॥

श्रुत्वा शिशूनां वचनं तथाविधं तन्मायया मुग्धधियो व्रजौकसः ।
असम्भवं चैतदिति प्रभाष्य ते परस्परं भ्रान्तमति व्यलोकयन् ॥१३॥

शिशुओका ऐसा वचन सुनकर भगवान्‌की मायासे मुग्ध चित्त हुए व्रजवासी 'यह असम्भव बात है', ऐसा कहकर परस्पर घबडाये हुए-से देखने लगे॥ १३ ॥

तदाहुरेते शिशुमेनमद्भुतं दोषज्ञदृष्टयाऽत्र विभाव्य सस्मितम् ।
कथं घटेताऽस्य दिविस्पृशोरहो ! ह्युत्पादनं तत्तरुवर्ययोरिह ॥१४॥

तब वे दोषज्ञ-दृष्टिसे 'यह अद्भुत बालक है' ऐसा सोचकर मुस्कुराते हुए बोले— 'अहो ! इन गगन-चुम्बी महान् वृक्षोका यहाँ इस बालकके द्वारा उत्पादन कैसे सम्भव हो सकता है' ॥ १४ ॥

क्वेदृग्विधं चाऽर्जुनवृक्षयुग्मकं क्वाऽयं शिशुर्दुग्धमुखः सुकोमलः ।
किं स्पर्श एतस्य तथाविधोऽस्ति भो ! वज्रोपमो येन विपाटितावमू ॥१५॥

'कहाँ ऐसे विशाल दो अर्जुन-वृक्ष और कहाँ यह दुधमुँहा सुकोमल शिशु ? । क्या इसका स्पर्श ऐसा वज्रके समान कठोर हो सकता है ? जिससे ये वृक्ष उखड़ जाते' ॥ १५ ॥

केचिद्वदन्ति स्म बुधास्तदाऽत्र ते संदिग्धचित्तास्तदमुष्य कर्मणि ।
बालो विचित्रोऽस्ति समर्थ ईदृशं वक्तुं ह्ययोग्यश्च विचारयन्त्वहो ! ॥१६॥

उस समय वहाँ कुछ विद्वान् पुरुष उस बालकके इस अलौकिक कर्मके विषयमे सन्दिग्धचित्त हो इस प्रकार बोलने लगे—'भइया ! यह बालक बडा विचित्र और सामर्थ्य-शाली है। अत. इन गोपबालकोके प्रति ऐसी अविश्वास भरी बात कहना उचित न होगा। इसलिए आप लोग इसपर विचार करे। यह बडी आश्चर्यजनक घटना घटित हुई है।१६।

स्पृष्टं ह्यनो यत्प्रपदा सुखं पुरा रराज निष्कास्य महासुरं ह्यपि ।
किमस्य चित्रं तु करावमर्शनान्निष्कासनं तत्तरुतो नृसिद्धयोः ॥१७॥

'पहले इसने अपने पैरके पजसे सुखपूर्वक छकडेका स्पर्श किया था। परन्तु उसके भीतरसे बड़े भारी असुरको निकालकर सुशोभित हुआ। फिर इसके लिए यह क्या

विचित्र बात है कि इसके हाथका स्पर्श होनेसे वृक्षोके मध्यसे दो सिद्ध-पुरुषोका प्राकट्य हो गया' ॥ १७ ॥

**इत्थं प्रजल्पत्सु जनेषु वस्तुतो मज्जत्सु तर्कामृतसागरेष्वथ ।**
**पश्यन् सुतं स्नेहभरेण यन्त्रितो गोपालराजोऽस्य समीपमाययौ ॥१८॥**

इस तरह लोग तरह तरहकी बाते कर रहे थे और तर्कके अमृनमय-सागरमे गोते लगा रहे थे। इतनेमे अपने पुत्रको देखकर स्नेहाधिक्यसे बँधे हुए गोपराज-नन्द उसके समीप आ गए ॥ १८ ॥

**स्वोदरस्थं बृहद्दाम विकर्षन्तममुं तदा ।**
**प्रेम्णोत्थाप्य स्वबाहुभ्यां विमुमोच ततः स्वयम् ॥१९॥**

वह अपने उदरमे बँधी हुई लम्बी रस्सीको खीच रहा था। उस समय नन्दने अपने दोनो हाथोसे उसको प्रेमपूर्वक उठा लिया और स्वय उसका बन्धन खोल डाला ॥ १९ ॥

**प्रहसन्नस्य सत्कृत्ये लोकविभ्रामके हिते ।**
**तं समुह्य हृदा सार्धं स सर्वैः गृहमागमत् ॥२०॥**

उस बालकका सत्कर्म लोगोको आश्चर्यमे डालनेवाला और हितकर था। उसपर विचार करके हँसते हुए नन्दजी उसे गोदमे लिए सबके साथ अपने घर लौट आए ॥ २० ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**सर्ग एकोनचत्वारिंशत्तमोऽगात् स्तवात्मके ॥२१॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे यह उनतालीसवाँ सर्ग पूरा हुआ ॥ २१ ॥



# चत्वारिंशः सर्गः

[ मातृकल्पाभिर्गोपीभिर्भगवतो नर्तन-गायने । तेन तासां विनोदनञ्च । ]

( भुजङ्गप्रयातं वृत्तम् )

**षडैश्वर्यसम्पन्न एषोऽव्ययात्मा त्रिवर्षात्मको लोकदृष्ट्याऽर्भकः सन् ।**
**विशेषेण भक्तैर्गृहीतोऽपि चित्ते विनिष्क्रम्य तस्माद्रराजाङ्गणे स्वे ॥१॥**

छ प्रकारके ऐश्वर्यसे सम्पन्न यह अविनाशी बालक लोक-दृष्टिसे तीन वर्षका शिशु था। विशेषत भक्तोने उसे अपने चित्तमे पकड रखा था तो भी वह वहाँसे निकलकर अपने आँगनमे शोभा पाने लगा ॥ १ ॥

**तदा तं समेताः स्त्रियो मातरस्ताः समालम्ब्य हस्ते मनोज्ञैः सुकृत्यैः ।**
**प्रलोभ्याऽत्र नानाकथाभिर्मुनीनां चरित्रैश्च संनर्तयामासुरित्थम् ॥२॥**

उस समय मातृस्थानीया बहुत-सी स्त्रियां एकत्र हो गईं और उसे हाथका सहारा देकर सुन्दर सुकृत्यो, नाना प्रकारकी कथाओ तथा मुनियोके चरित्रो द्वारा लुभाकर नचाने लगी ॥ २ ॥

( कज्जली-गीतिरियं, भाषायां गजल इति चोच्यते )

**"त्वमात्मा कृष्ण ! सर्वेषां सुखैकस्थानमाद्योऽसि ।**
**अतस्त्वं नृत्य सानन्दं वयं पश्येम धन्योऽसि ॥३॥**

'कृष्ण ! तुम सबके आत्मा हो, सुखके एकमात्र स्थान हो, आदि पुरुष हो और धन्य हो, इसलिए आनन्दपूर्वक नृत्य करो। हम सब देखेगी ॥ ३ ॥

**प्रियस्त्वं श्याम ! सर्वेषां प्रियं कर्तुं त्वमर्होऽसि ।**
**वयं हैयङ्गवीनं तत् प्रदद्माऽत्तुं त्वमर्होऽसि" ॥४॥**

'श्याम ! तुम प्रिय हो और सबका प्रिय करनेके योग्य हो। हम तुम्हे माखन देती हैं, तुम इसे खानेके योग्य हो' ॥ ४ ॥

**निशम्येदृशीं वाचमुद्गीतिपूर्णां जगन्नर्तकः सूत्रधारो मुकुन्दः ।**
**सुकुन्दप्रभांश्चारुदन्तान् प्रदर्श्य बभूवाऽत्र सज्जो मनोरञ्जनार्थम् ॥५॥**

इस प्रकार गीत-पूर्ण वाणी सुनकर जगत्को नचानेवाले सूत्रधार मुकुन्द, कुन्दकी-सी कान्तिवाले, मनोहर दांतोको दिखाकर वहां उन सबका मनोरञ्जन करनेके लिए तैयार हो गए ॥ ५ ॥

समुत्क्षिप्य पादौ भुजावुन्नमय्य कला दर्शयन् नृत्यमातृस्वरूपाः ।
इमाः कारयित्वा विमुग्धाः स्वकृत्ये ननर्ताऽव्ययो बालवद्धन्त ! तत्र ॥६॥

दोनो बाहे ऊँची करके पैर फेंक-फेंक कर, नृत्यकी जननी स्वरूपा कलाओका प्रदर्शन करते हुए उन अविनाशी प्रभुने वहाँ बालककी भाँति नाचना आरम्भ किया। उन्होने अपने कार्यद्वारा उन सब स्त्रियोको विमुग्ध कर दिया ॥ ६ ॥

महाभाग्यवत्यः स्त्रियो गोकुलस्थास्तदानीं लयाढ्यं सुगीतं प्रगाय ।
प्रशस्यैनमीशं मुदा साधु ! साधु ! वदन्त्योऽत्र रेजुः करास्फोटनेन ॥७॥

उस समय परम सौभाग्यवती गोकुलवासिनी स्त्रियाँ लयसे युक्त सुन्दर गीत गाकर इस ईश्वर स्वरूप बालककी प्रशसा करके आनन्दसे वाह्-वाह ! करती और ताली बजाती हुई शोभा पा रही थी ॥ ७ ॥

क्षणाद्देव्य आहुः पुनर्गीयतां भो ! भवद्गीतमिष्टं च शृण्मो वयं यत् ।
फलं दीयते तुभ्यमस्माभिरस्मिन्नपूपो घृताक्तः सुधाभश्च कृष्ण ! ॥८॥

क्षणभरमे व्रज-देवियोने कहा—'लाला ! फिर गाओ। तुम्हारा गीत बड़ा प्यारा लगता है। हम उसे सुनेगी। कृष्ण ! हम उसके लिए तुम्हे फल दे रही हैं—सुधाके समान मधुर और घी-से तर मालपूआ भेट कर रही हैं' ॥ ८ ॥

ततो दिव्यशक्तिर्मुकुन्दो वरेण्या इमाः सत्स्त्रियोऽवोचदित्थं भवत्यः ।
ददत्वत्र गायामि पश्चात्सुगीतं बुभुक्षैव मां बाधते यत्तदद्मि ॥९॥

तब दिव्य-शक्तिशाली मुकुन्दने इन माननीया साध्वी स्त्रियोसे इस प्रकार कहा—'आप लोग जो कहती हैं, उसे पहले यहाँ दे दे ! । उसके वाद मैं सुन्दर गीत गाऊँगा। अभी तो मुझे भूख सता रही है। आप लोग जो देगी उसे खाऊँगा' ॥ ९ ॥

तदानीय गेहात्प्रदायाऽथ तस्मै पुनस्ता अवोचन्मुकुन्दाऽप्रमेय ! ।
द्रुतं गीयतां भो ! प्लुतं षड्जयुक्तं भवेद् यद्वयं तत्र मग्ना भवेम ॥१०॥

तब अपने-अपने घरसे उक्त वस्तुये लाकर कृष्णको अर्पित करनेके पश्चात् वे फिर बोली—'अप्रमेय शक्तिशाली मुकुन्द ! तुम षड्ज-स्वरसे युक्त ऊँची आवाजमे शीघ्र गीत गाओ। जिसे सुनकर हमलोग उसीमे मग्न हो जांय' ॥ १० ॥

ततोऽसाऽवगायच्च दत्तावधानः स्मरन् योगिभिर्वीतरागैः प्रगीतम् ।
विचार्यं सदैवाऽत्र विद्वद्वरिष्ठैर्विमृश्यं यदेतद्वितृष्णैश्च सद्भिः ॥११॥

तब सावधान हो वीतराग योगियोद्वारा गाये गए गीतका स्मरण करके श्रीकृष्णने गाया। वह गीत बडे-बडे विद्वानोके लिए विचारणीय तथा तृष्णा-रहित सन्तोके लिए भी विशेष मननीय था ॥ ११ ॥

( मालिनीयं छन्दः )

जयति जयति विश्वव्यापिनी भूरितृष्णा
नयति नयति नित्यं निन्दितांस्तानधः सा।
हरति हरति कालो देहिनां जीवनाशां
सरति सरति चायुर्भिन्धि तद्वृत्तिगाशाम् ॥१२॥

सम्पूर्ण विश्वमे व्याप्त हुई अधिकाधिक तृष्णाकी ही जीत हो रही है। वही सबके ऊपर सवार है। यह उन निन्दित मनुष्योको नित्य अधोगतिकी ओर ले जा रही है—नीचे गिरा रही है। काल देह-धारियोके जीवनकी आशाको हर ले रहा है—नष्ट कर रहा है। आयु प्रतिक्षण बीत रही है—क्षीण हो रही है। अत तृष्णा-वृत्तिसे बँधी हुई आशाको त्याग दो—नष्ट कर दो ॥ १२ ॥

जगन्नायकोऽयं व्रजस्थाभिराभिर्वशे स्थापितः स्नेह-भक्त्या तदानीम्।
ननर्ताऽत्र भूयोऽपि तच्चेष्टयैव स्वयं दारुयन्त्रं यथोक्तं प्रकुर्वन् ॥१३॥

ये जगदीश्वर श्रीकृष्ण इन व्रजवासिनी देवियोके द्वारा उस समय उनकी स्नेह-भक्तिसे वशमे कर लिए गये थे। अत. कठपुतलीकी भाँति उनकी आज्ञाका पालन करते हुए स्वय उनकी चेष्टासे ही यहाँ नृत्य करने लगे ॥ १३ ॥

विलोक्यैवमीशं तु नृत्यन्तमत्र विमुग्धा मनोवृत्तिहीना महान्तः।
महानन्दमग्नाः स्वचैत्यावशिष्टा जगु—"दीव्यतादेष वेदान्तसारः" ॥१४॥

सर्वेश्वर श्रीकृष्णको यहाँ इस प्रकार नृत्य करते देख मुग्ध एवं मनोवृत्तियोसे शून्य हुए महात्मा-जन महान् आनन्दमे मग्न हो, अपने चिदानन्द-स्वरूपमात्रसे अवशिष्ट रह गए। और बोल उठे—'यह वेदान्तका सारभूत सिद्धान्त, इसी प्रकार सदा प्रकाशित होता रहे ॥ १४ ॥

दरिद्रा यथा प्राप्य राशिं धनस्य न मुञ्चन्ति मग्ना भवन्त्यत्र लौल्यात्।
इमे बालरूपं परात्मस्वरूपं विभुं प्राप्य तद्वत्त्यजन्ति स्म नैव ॥१५॥

जैसे दरिद्र मनुष्य धनकी राशि पाकर उसे छोडते नही हैं, लोभवश उसीमे मग्न हो जाते हैं, उसी प्रकार ये महात्मा लोग परमात्मस्वरूप सर्वव्यापी भगवान्को बालरूपमे पाकर उन्हे छोड़ नही पा रहे थे। उन्हीके चिन्तनमे मग्न हो गए थे ॥ १५ ॥

ततोऽसौ कयाचित्तदाऽऽज्ञप्त इत्थं तदानीयतां चेति वस्तु प्रदर्श्य ।
स्पृशंस्तत्र गत्वा समर्थोऽप्यशक्तो यथा नाटयामास किञ्चित् समुह्य ॥१६॥

तदनन्तर किसी गोपीने कोई वस्तु दिखाकर आज्ञा दी—'लाला ! उसे उठा लाओ !' । तब समर्थ होने पर भी असमर्थकी भाँति वहाँ जाकर किसी वस्तुका स्पर्श करके उसे थोडा उठाकर वे न ला सकनेकी चेष्टाका नाट्य करने लगे ॥ १६ ॥

तदन्यत् समानीय तासां पुरस्ताद्विनिक्षिप्य पश्चाद्धठात् पीठकादि ।
तथा मानपात्रं गुरोः पादुकां च समुह्याऽऽगतोऽयं बभौ मातृमध्ये ॥१७॥

जिस वस्तुको लानेके लिए वे स्त्रियाँ कह चुकी थी, उससे भिन्न वस्तुको लाकर उसके सामने पटक देते । पीछे हठपूर्वक पीढा आदि आसन, अनाज मापनेका पात्र तथा पिताजीकी खडाउँ उठा कर लाते हुए वे उस मातृ-मण्डलीमे सुशोभित होते थे ॥ १७ ॥

यथा तत्र तासां भवत्येव हर्षो महाहास एवं विनोदोऽप्यतर्क्यः ।
तथैवाऽकरोद्विश्वनाथः सनाथा विकुर्वन्निमा "धन्य ईशोऽव्ययोऽसौ" ॥१८॥

जिस प्रकार वहाँ उन व्रज-देवियोको हर्ष होता, बडे जोरसे हँसी आती और अतर्कनीय विनोद ( मनोरजन ) प्राप्त होता, उसी प्रकार वे विश्वनाथ श्रीहरि लीलाये करते थे । वे इन सबको सनाथ कर देते थे । वे अविनाशी ईश्वर धन्य हैं ! ॥ १८ ॥

कयाचित् पुनस्तत्र चाज्ञप्त एष विचिक्षेप बाहू तदन्यां विगर्ह्य ।
तदास्ताः प्रिया गोप्य आनन्दमग्नाः प्रियं मन्यमानाः स्वमेवाऽस्य हृष्टाः ॥१९॥

फिर किसी गोपीने वहाँ आज्ञा दी—'लाला ! उस गोपीको पीटो , वह बडी ढीठ है' । तब वे उससे भिन्न दूसरी ही गोपीकी निन्दा करके उसके ऊपर अपनी दोनो बाँहे पटक देते थे । उस समय वे सारी प्यारी गोपियाँ अनिर्वचनीय आनन्दमे मग्न हो जाती और अपनेको ही उस बालकका प्रीति-पात्र मान कर हर्षमे उत्फुल्ल हो उठती थी ॥ १९ ॥

महात्मान एतद्विदो भक्तवर्या विलोक्याऽस्य कृत्यं विमुग्धाश्चरित्रैः ।
अशंसुर्यमुं भक्तवश्योऽयमीशः परात्मात्मरूपो जयत्यत्र नित्यम् ॥२०॥

इसको जाननेवाले भक्तप्रवर महात्मा-जन उसकी लीला देखकर उसके चरित्रोसे मुग्ध हो गए और उसके विषयमे बोले—'ये भक्त-परवश परमात्मा एव आत्मारूप ईश्वर यहाँ सदा विजयी हो रहे हैं—सर्वोपरि विराजमान है' ॥ २० ॥

इत्थं व्रजस्य जगतामथ तस्थुषां च प्रीतिं विधाय चरितैः स्वविनोदरूपैः ।
आनन्दधाम परतत्त्वमयस्वरूपं तांश्चानयन् स विरराज सुवीतभासु ॥२१॥

इस प्रकार अपने लीला-विनोद-रूप चरित्रोद्वारा व्रजके स्थावर और जङ्गम प्राणियोको प्रसन्न करके उन्हे परतत्त्वमय आनन्द धामको पहुँचाते हुए वे बालरूप भगवान् सुधी-समाजमे सुशोभित होते थे ॥ २१ ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
चत्वारिंशोऽप्यगात् सर्गो महाकाव्ये स्तवात्मके ॥२२॥

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे चालीसवां सर्ग पूरा हुआ ॥ २२ ॥



# एकचत्वारिंशः सर्गः

[ फलविक्रयिण्या: फलविक्रयणार्थं भगवतो भाम्न्यागमनम् । तथा तदाकारणम् । ततो भगवता फलग्रहणम् । स्वाञ्जलिच्युतैर्मणिमयैर्धान्याशैस्तत्फलभाण्डपूरणम् । ]

( द्रुतविलम्बितं छन्दः )

विजयते मथुरा मुनिसेविता सुरवरैरवरैश्च समेधिता ।
वसति यत्र समं बहुधाऽऽश्रितैः सकलया कलयाऽऽत्तपदो हरिः ॥१॥

जो अनेकानेक मुनियोसे सेवित और श्रेष्ठ देवताओ तथा उनसे छोटी श्रेणीके लोगोसे भी समृद्धशालिनी है, उस मथुरापुरीकी सदा ही विजय है । जहाँ अनेकानेक आश्रित-जनोके साथ सकल कलाओसे समलङ्कृत चरणवाले भगवान् श्रीहरि निवास करते हैं ॥ १ ॥

बहुगुणेऽप्यथ माथुरमण्डले परिवृते यदुवृष्णिसुधीजनैः ।
नृपतिकंसकुकर्मनिपीडिता सुजनता जनता व्यथिता भृशम् ॥२॥

बहुगुण सम्पन्न तथा यदुकुल एव वृष्णवशके सुधीजनोसे घिरे हुए उस मथुरा-जनपदमे भी राजा कसके कुकर्मसे सुजनता पीडित थी और जनता अधिक क्लेश उठा रही थी ॥ २ ॥

परमिदं च निरीक्ष्य कुकर्म तामधिवसञ्जनतापहरो हरिः ।
तदुपशान्तिमवाप्तुमयं बभौ समयदो मयदोहदनाशकृत् ॥३॥

इस महान् कुकर्मको देखकर मथुरापुरीमे निवास करनेवाले जनतापहारी, सबको उन्नतिका अवसर देनेवाले तथा मयासुरकी आसुरी अभिलाषाका नाश करनेवाले श्रीहरि सर्वदा इसकी शान्ति चाहते थे ॥ ३ ॥

तदिह वैश्यकुलोद्भवसुन्दरी सुजनशान्तिकरी महिलैकिका ।
सुखमुवास शिवं दधती हृदा शमफलाऽऽमफलाश्रमपंक्तिषु ॥४॥

उस मथुरापुरीमे वैश्यकुलमे उत्पन्न एक सुन्दरी महिला सुखपूर्वक निवास करती थी । जो सज्जनोको शान्ति प्रदान करनेवाली थी । शम ( शान्ति ) ही उसके लिए प्राप्तव्य फल था । वह कच्चे फलोके आश्रयभूत वृक्षोकी पक्तियोमे बैठकर मन ही मन भगवान् शङ्करका ध्यान करती थी ॥ ४ ॥

निशि निजं शयनं श्रितया तया शिशुरलोकि गुणोज्ज्वल एककः ।
तत इयं गुणतोऽस्य विमोहिता व्रजगताऽजगताऽखिलहृद्गतिः ॥५॥

एक समय रातमे जब वह अपनी शय्यापर सोई थी। उस समय उसने एक शिशुको देखा, जो अपने गुणोसे प्रकाशित हो रहा था। फिर तो वह उसके गुणोसे मोहित हो गई। उसके हृदयकी सारी गति अजन्मा भगवान्के साथ एकाकार हो गई और वह आकर्षित होकर व्रजमे गई ॥ ५ ॥

**पथि फलान्यवचित्य कियन्त्यसौ शुभमुपायनमस्य कृते ततः ।**
**समवगृह्य निधाय सुपात्रके व्रजजनेऽजजने मिलिता सुखम् ॥६॥**

मार्गमे कुछ फल चुनकर उसने उस शिशुके लिए सुन्दर उपायनके रूपमे संग्रह किया और उत्तम पात्रमे रखकर सुखपूर्वक व्रजके लोगोसे आ मिली, जो वास्तवमे भगवान्के ही जन थे ॥ ६ ॥

**व्रजजनेश्वरधामगता ततोऽप्यवसरं च समीक्ष्य बहिः स्थिता ।**
**सदयमाह्वयदत्र जगत्पतिं सुकृतिभिः कृतिभिश्च कृताश्रयम् ॥७॥**

व्रजेश्वर नन्दके भवनके निकट जाकर वह अवसरकी प्रतीक्षामे बाहर ही बैठ गई और उन दयालु जगदीश्वरका आवाहन किया, जो पुण्यात्माओ तथा विद्वानोके भी आश्रय हैं ॥ ७ ॥

**सुखमिमानि फलानि विगृह्य भो रुचिरबालक ! बालकदम्बकैः ।**
**सममिहैत्य फलानि च देहि मे सुसमताऽसमता च फलेन्मयि ॥८॥**

हे सुन्दर बालक ! तुम अपने सखा बाल-समूहोके साथ यहाँ आकर सुखपूर्वक इन फलोको ले लो और मुझे भी उत्तम फल दो। मुझमे उत्तम समता तथा असमता फलित हो अर्थात् मुझमे समत्व-भाव जाग्रत हो और मेरी स्थिति अनुपम हो ! ॥ ८ ॥

**इति तया गदितं वचनामृतं लघु निपीय फलक्रयणेच्छया ।**
**हरिरभूदचलोऽपि चलस्तदा सुवरदो वरदोहदपूर्तिकृत् ॥९॥**

उस फल बेचनेवालीके कहे हुए इस वचनामृतको शीघ्र ही कानो द्वारा पीकर उत्तम वर देनेवाले तथा श्रेष्ठ-अभिलाषाकी पूर्ति करनेवाले श्रीहरि अचल होकर भी फल खरीदनेकी इच्छासे उस समय चञ्चल हो उठे ॥ ९ ॥

**स्वलघुनाऽञ्जलिनाऽङ्गणसंस्थितं दिनकरद्युतितापितधान्यकम् ।**
**समवगृह्य फलेच्छुरिमां ययौ श्रुतनयस्तनयो जननीं यथा ॥१०॥**

सूर्यकी धूपमे सुखाये गए धान्यको, जो आँगनमे फैलाया गया था अपनी छोटी-सी अञ्जलिमे लेकर वे फलकी इच्छासे उसके पास उसी तरह गए, जैसे नय-वेत्ता पुत्र अपनी माँके पास जाता है ॥ १० ॥

तत उपेत्य समीपमसौ प्रभुः सुफलदोऽपि फलग्रहलालसः ।
प्रियमुवाच फलानि ददातु मे विनिमयो नियमोऽस्तु स आवयोः ॥११॥

सबको उत्तम फल देनेवाले होनेपर भी स्वय फल-ग्रहणकी लालसा लेकर उसके समीप जाकर प्रभुने यह प्रिय बात कही—'आप मुझे फल दे। हम दोनोमे विनिमय-रूप नियम लागू हो। आप हमारा धान्य ले ले और हमे अपना फल दे दें' ॥ ११ ॥

श्रुतगुणं हृदयस्थितमीश्वरं समवलोक्य तथाविधमव्ययम् ।
ससुखमस्य वचश्च निशम्य सा भुवनपावनपादमभाषत ॥१२॥

जिनके गुणोको उसने सुन रखा था तथा जो उसके हृदयमे सदा विद्यमान रहते थे, उन अविनाशी ईश्वरको उस रूपमे सामने देख और सुखपूर्वक उनकी बात सुनकर वह फल बेचनेवाली सुन्दरी त्रिभुवन-पावन-चरणवाले उन भगवान्से बोली—॥ १२ ॥

अयि जगज्जनचित्तहर! प्रभो! परिमितानि फलानि भवन्ति मे।
तव तु सन्त्यमितानि हितान्यहो! विनिमयो नियमोऽत्र नयज्ञ! कः? ॥१३॥

'हे जगत्के सब लोगोका चित्त हर लेनेवाले प्रभो! मेरे फल तो परिमित ( थोडे-से ) हैं, किन्तु अहो! आपसे प्राप्त होनेवाले फल अमित और हितकारी हैं। फिर हे नयज्ञ! इसमे विनिमयरूप नियम क्या लागू होगा?' ॥ १३ ॥

तव मनो यदि लब्धुमथाऽपि तान्यसमधि त्वरतेऽस्तु ददान्यहम् ।
प्रिय! गृहाण निजाञ्जलिपात्रके भुवनभावन! भातु भवद्रतिः ॥१४॥

'हे भुवन-भावन प्रियतम! यदि मेरे इन फलोको पानेके लिए असमबुद्धि होकर उतावला हो उठे हैं, तो अपने अञ्जलि-पात्रमे ये फल ग्रहण कीजिये। मेरे हृदयमे आपके प्रति अनुराग प्रकाशित हो' ॥ १४ ॥

इति तयोदितमक्षरमक्षरं लघु निपीय पिपासुरिवाऽमृतम् ।
पथि जवच्युतधान्यशुभाञ्जलिं प्रसृतवाञ्छ्रितवान् स परां गतिम् ॥१५॥

जैसे प्यासा मनुष्य अमृतपान करे, उसी प्रकार उस फल बेचनेवालीके द्वारा कहे हुए अक्षर-अक्षरको शीघ्र ही पीकर रास्तेमे अपनी शुभ-अजलिसे वेगपूर्वक धान्य बिखराए हुए उन्होने उसके आगे दोनो हाथ फैला दिये और अपनी उत्तम गति ( उत्कृष्ट योगशक्ति ) का आश्रय लिया ॥ १५ ॥

तत इयं मधुरैः सुफलैश्च तच्छुभकराञ्जलिमेतमपूरयत् ।
इत उपायविदा हरिणाऽप्यहो! सुमणिभिः फलभाण्डमपूरि च ॥१६॥

तदनन्तर उस फल बेचनेवालीने सुन्दर-सुन्दर मधुर फलोसे उनकी इस शुभ अञ्जलिको भर दिया। इधर उपायवेत्ता श्रीहरिने भी उसके फल-पात्रको उत्तम मणि-रत्नोसे पूर्ण कर दिया। यह कैसा आश्चर्य है ?॥ १६॥

**गतोऽसौ ततः स्वालयं दिव्यमूर्त्या गुणज्ञामिमां चित्रवत् स्थापयित्वा।**
**चिरेणाऽत्र संप्राप्तसंज्ञाऽथ साऽपि सकामा ययौ माथुरं स्वं निवासम् ॥१७॥**

तत्पश्चात् इस गुणज्ञा-सुन्दरीको चित्रवत्-स्थापित करके वे अपनी दिव्यमूर्तिसे घरमे चले गए। चिरकालके बाद होशमे आनेपर वह फल-विक्रयिणी भी सफल मनोरथ हो, मथुरामे अपने निवासस्थानको चली गई॥ १७॥

**प्राणिनां कर्मणो युक्तं फलदोऽयं जगत्प्रभुः।**
**अग्रहीत् सुफलान्यस्या यद्दृष्ट्वा जहसुर्बुधाः ॥१८॥**

प्राणियोके कर्मका उचितफल देनेवाले इन जगदीश्वरने उस स्त्रीसे सुन्दर फल ग्रहण किए। जिसे देखकर समझदार लोग हँसने लगे॥ १८॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते।**
**चत्वारिंशोऽप्यगात्सर्गो महाकाव्ये स्तवात्मके ॥१९॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्ण चरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे एकतालीसवाँ सर्ग पूरा हुआ॥ १९॥



# द्विचत्वारिंशः सर्गः

[ क्रीडनपरस्य भागवतो रोहिणीयशोदाभ्या स्वगृहाऽऽगमनार्थमाह्वानम् ]

( स्वागतावृत्तम् )

स्वागतं तव सदाऽस्तु वदन्ती भास्करस्य तनयाऽथ कदाचित् ।
ऊर्मिभिः स्वचपलैर्भुजरूपैर्नर्तयन्त्यमुमहो ! विरराज ॥१॥

एक समयकी बात है—सूर्यकन्या कालिन्दी 'आपका सदा स्वागत हो' यह कहती हुई अनेक चञ्चल-बाहुरूप तरङ्गोद्वारा श्यामसुन्दरको नचाती हुई अद्भुत शोभा पा रही थी ॥ १ ॥

प्रातरेव सखिभिः प्रियकृत्यैः सार्धमागत इहाऽद्य मुकुन्दः ।
क्रीडति स्म बहुधा स्वविलासैः साग्रजः शुचितरे तटबन्धे ॥२॥

आज प्रात कालसे ही प्रिय करनेवाले सखाओके साथ मुकुन्द यहाँ आ गए थे और यमुनाके पवित्र तटपर अपने बहुविध लीला-विलासोद्वारा भाई बलरामके साथ खेल रहे थे ॥ २ ॥

इत्थमत्र सुचिरं कृतलीलो ह्यत्यवाहयदसौ समयं तु ।
गोकुलेशसदनेऽस्य विमाता रोहिणी स्मृतसुता व्यथिताऽभूत् ॥३॥

इस प्रकार बहुत देरतक क्रीडा करते हुए उन्होने अधिक समय व्यतीत कर दिया। उधर गोकुलेश्वरके भवनमे श्रीकृष्णकी सौतेली-माँ रोहिणी अपने पुत्रोका स्मरण करके व्यथित होने लगी ॥ ३ ॥

आजुहाव तनयौ तत उच्चैः साऽधिश्रित्य गृहमभ्रलिहं तत् ।
एहि तात बल ! कृष्ण ! गृहं स्वं पश्य ! पश्य ! समयो बहु यातः ॥४॥

वे गगनचुम्बी भवनके छतपर चढकर उच्च स्वरसे दोनो पुत्रोको बुलाने लगी—'तात बलराम और कृष्ण ! देखो, देखो ! बहुत समय बीत गया। अब तुम अपने घर आ जाओ' ॥ ४ ॥

रोहिणीमुखसरोरुहनीडान्निर्गतो ध्वनिरयं द्रुतमिष्टः ।
वायुना समभिहैत्य खगाले पक्षिवद्भ्रममितो विरराज ॥५॥

रोहिणी-देवीके मुखारविन्दरूपी नीडसे निकली हुई यह प्रिय-ध्वनि पक्षीकी भाँति वायुके साथ ही नभोमण्डलमे पहुँचकर सुशोभित होने लगी ॥ ५ ॥

**त्वं त्विहाऽप्यसफलं परिचिन्त्य सा द्रुतं तत उपेत्य यशोदाम् ।**
**अभ्यभाषत तदाह्वयनार्थं त्वं समाह्वय सुताविति देवि ! ॥६॥**

यहाँ भी अपनेको असफल मानकर रोहिणीजी तुरन्त यशोदाके पास गईं और उन दोनोको बुलानेके लिए उन्हीसे कहा—'देवि ! अब तुम्ही दोनो बच्चोको बुलाओ ॥ ६ ॥

**बालकैः स्वसखिभिर्व्रजराज्ञि ! क्रीडनेऽतिसुखदे गतचित्तौ ।**
**श्यामरामतनयौ शुभदौ तौ नाऽऽगतौ त्वमिह चाऽऽनय गत्वा ॥७॥**

'व्रजरानी ! अपने सभी ग्वाल-बालोके साथ वे दोनो बालक अत्यन्त सुखदायिनी क्रीड़ामें दत्तचित्त हो रहे हैं । इसीलिए वे श्याम और राम, दोनो पुत्र अब तक नही लौटे । अब तुम्ही जाकर उन दोनोको यहाँ बुला लाओ' ॥ ७ ॥

**रोहिणीगदितमात्महितं तच्चाऽऽकलय्य मधुरं तत एषा ।**
**आजगाम सुखदं तटबन्धं यामुनं युवतिभिः कृतरक्षा ॥८॥**

रोहिणीके कहे हुए मधुर वचनको अपने लिए हितकर मानकर ये यशोदा यमुनाजीके सुखद तट-बन्ध पर आईं । उस समय बहुत सी युवतियाँ उनकी रक्षा कर रही थी ॥ ८ ॥

**तौ समीक्ष्य सुचिरं श्रमयुक्तौ स्वेदबिन्दुपरिपूरितगात्रौ ।**
**स्वैः प्रियैः शिशुजनैः कृतलीलौ साऽऽजुहाव किल दूरत एव ॥९॥**

वहाँ उन्होने देखा—दोनो बालक देरसे खेलते-खेलते थक गये हैं । उनके शरीर पसीने-पसीने हो गये हैं । अपने प्रिय सखा ग्वाल-बालोके साथ खेलमे लगे हुए उन दोनोको यशोदाने दूरसे ही पुकारा ॥ ९ ॥

**लोकराम ! बलराम ! गुणज्ञ ! कृष्ण ! खेलनसतृष्ण ! नयज्ञ ! ।**
**क्रीडथः किमिति साधु युवामाऽऽगच्छतं च सदनं सखिभिः स्वैः ॥१०॥**

'लोगोको आनन्द देनेवाले बलराम ! और खेलनेके लिए सदा प्यासे रहनेवाले गुणज्ञ एव नयज्ञ कृष्ण ! तुम दोनो क्यो इस तरह खेल रहे हो ? । अब अपने सखाओके साथ घर आओ ॥ १० ॥

**क्षुच्च पीडयति राम ! भवन्तं कृष्ण ! चैहि पिब दुग्धमितस्त्वम् ।**
**खेलनैरलमलं श्रमयुक्तौ नार्हथो भवितुमत्र युवां तु ॥११॥**

'राम ! तुम्हे भूख सता रही होगी । कृष्ण ! आओ और दूध पीओ । अब खेलना बन्द करो । तुम दोनो थक गये हो । अब तुम्हे यहाँ नही ठहरना चाहिए ॥ ११ ॥

प्रातरेव कृतभोजन इत्थं क्रीडने विहितचित्त ! मुकुन्द ! ।
कुन्दपुष्पनिभदन्त ! वितृष्ण ! कृष्ण ! मातृगदितं शृणु चैहि ॥१२॥

'प्रात काल ही भोजन करके इस तरह खेल-कूदमे मन लगानेवाले मुकुन्द ! तुम्हारे दाँत कुन्द-पुष्पके समान चमक रहे हैं। कृष्ण ! अब खेलकी तृष्णा छाड़ो। माताकी बात सुनो और आओ ॥ १२ ॥

भ्रातरं समवगृह्य विकाम ! त्वं च राम ! सुखमेहि गृहं स्वम् ।
भोक्तुमर्हसि समं परिवारैर्बाधतेऽहहह ! साऽतिबुभुक्षा ॥१३॥

'कामनारहित बलराम ! तुम अपने भाईको लेकर सुखपूर्वक घर चलो। हाय, हाय ! तुम्हे बडी भूख सताती होगी। अत परिवारके साथ तुम्हे भोजन करना चाहिए ॥ १३ ॥

भोक्ष्यमाण उरुगाय ! पिताऽपि त्वां प्रतीक्षत उपस्थितमाशु ।
तत्त्वमेहि बलराम ! सकृष्णः कृष्ण ! चैहि सबलस्त्वमपीह ॥१४॥

'उरुगाय कृष्ण ! तुम्हारे पिताजी भोजन करेगे। अत वे भी तुम्हारे शीघ्र उपस्थित होनेकी प्रतीक्षा करते हैं। इस लिए बलराम ! तुम कृष्णके साथ आओ और कृष्ण ? तुम भी भैया-बलरामके साथ यहाँ चले आओ ॥ १४ ॥

यात यात शिशवः ! स्वगृहाणि मातरोऽपि भवतां प्रतिसद्म ।
मार्गयन्ति व इहाऽप्यतिवेलं क्रीडनाद् गतबलाः श्रमिताः स्थ ॥१५॥

'बालको ! जाओ-जाओ अपने घरोको। तुम्हारी माताये घर-घरमे तुम्हारी राह देखती हैं। तुम यहाँ बहुत देरतक खेल कूदमे लगे रहनेके कारण थक गये होगे। तुम्हारा बल क्षीण हो गया होगा ॥ १५ ॥

पश्य कृष्ण ! शबलं निजगात्रं धूलिधूसरितमित्थमनर्हम् ।
एहि तत्त्वमसि वेदविगीतः पूर्णकाम उरुगाय उपेन्द्रः ॥१६॥

'कृष्ण ! देखो, तुम्हारा शरीर धूलि-धूसरित होकर चितकबरा हो गया है। यह शरीर ऐसा होने योग्य नही है। अत आओ, तुम वह वेद-वर्णित परमात्मा हो। पूर्णकाम हो, बहुतसे लोग तुम्हारे यशका गान करते हैं। तुम साक्षात् उपेन्द्र हो ॥ १६ ॥

वर्तते शृणु मुकुन्द ! तवाऽद्य जन्मनः शुभदमृक्षमनर्हम् ।
एहि तात ! सदनं गुरुभक्त्या देहि गा द्विजवरेभ्य ऋषीश ! ॥१७॥

'मुकुन्द ! सुनो। आज तुम्हारे जन्मका शुभ एवं प्रशस्त नक्षत्र है। तात ! घर आओ और भारी भक्ति-भावसे श्रेष्ठ ब्राह्मणोको गौओका दान करो। तुम ऋषियोके ईश्वर साक्षात् नारायण हो ॥ १७ ॥

**पश्य ! पश्य !! सकलान् स्ववयस्यान् मातृमृष्टसुतनून् रुचिरांश्च ।**
**तद्भवानपि कृतार्थ इहैत्य कृष्ण ! खेलतु यथेप्सितमेवम् ॥१८॥**

'कृष्ण ! देखो-देखो, तुम्हारे सारे मित्रोको उनकी माताओने नहला-धुलाकर सुन्दर एव रुचिर वेष-भूषासे सम्पन्न बना दिया है। अत. तुम भी स्नान-दान आदि कर्म करके कृतार्थ हो फिर यहाँ आकर इच्छानुसार खेलना' ॥ १८ ॥

**सेत्थं तमुक्त्वा शिशुरूपधारिणं जगत्पतिं भक्तभयापहारिणम् ।**
**समीपमेत्याऽस्य करं विगृह्य तं नीत्वा गृहं कृत्यमकारयत्ततः ॥१९॥**

इस प्रकार शिशुरूप-धारी, भक्त-भयहारी जगदीश्वर श्रीकृष्णसे कहकर यशोदा निकट आ उनका हाथ पकडकर उन्हे घर ले गई और वहाँ उनसे सारा आवश्यक कृत्य करवाया ॥ १९ ॥

**समाप्य विधिवत् कृत्यं भुक्त्वा पीत्वा सुखं हरिः ।**
**सरामो मोदयामास व्रजौकस उपस्थितान् ॥२०॥**

सारा कार्य विधिवत् सम्पन्न करके सुख-पूर्वक भोजन-पानके पश्चात् बलराम सहित श्रीकृष्ण वहाँ उपस्थित हुए व्रजवासियोको आनन्दित करने लगे ॥ २० ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**द्विचत्वारिंशसर्गोऽगान्महाकाव्ये स्तवात्मके ॥२१॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक स्तोत्रात्मक महाकाव्यमे यह बयालीसवाँ सर्ग पूरा हुआ ॥ २१ ॥



# त्रिचत्वारिंशः सर्गः

गोपसभायां गोकुल परित्यज्य वृन्दावनमधिवस्तु याम इत्युपनन्दप्रस्तावः।
तत्स्वीकरणपूर्वक नन्दादीना शकटैस्तत्र गमनम्।

( वसन्ततिलकावृत्तम् )

**ब्रह्माश्रयं सततपूज्यममोघलीलं स्वानन्ददं भयहरं व्रजमण्डलं तत्।**
**इत्थं रराज परमेतदभूदनन्यत् त्रासस्थलं तदनभिज्ञसुधीजनानाम् ॥१॥**

जो साक्षात् परब्रह्म परमात्माका आश्रयस्थल है, अतएव सबके लिए परम-पूजनीय है जहाँ भगवान्‌की अमोघलीलाये होती रहती हैं, जो आत्मानन्द प्रदान करनेवाला और सबका भय हर लेनेवाला है, वह व्रजमण्डल सदा इसी रूपमे शोभायमान है। परन्तु जो लोग उसके इस स्वरूपसे परिचित नही हैं, ऐसे सुधीजनोके लिए यह एकमात्र त्रासका स्थान बन गया था ॥ १ ॥

**उत्पातहेतुभिरनेकविधैरनिष्टैर्भ्रान्ता व्रजौकस इमे तत आत्मनीनम्।**
**श्रेयःप्रदं ह्यभयधाम विगन्तुकामा भव्यां सभां समधितस्थुरतो व्रजस्थैः ॥२॥**

वहाँ अनेक प्रकारके अनिष्ट-सूचक उत्पातके कारण बनते जा रहे थे। इसीलिए ये व्रजवासी भ्रान्त चित्त हो गये थे। अब वे ऐसे स्थानपर जानेके लिए उत्सुक हो गए जो उनके अपने लिए हितकर, कल्याणकारी तथा अभयदायक हो। तब उन्होने तत्क्षण एक भव्य-सभाका आयोजन किया और वे सबके सब अन्यान्य व्रजवासियोके साथ उसमे बैठे ॥ २ ॥

**संबोध्य तानथ महानुपनन्दनामा गोपो वयोधिक उवाच सभाधिराजः।**
**संमन्त्रयन् प्रियहितं व्रजकार्यमेवं श्रीकृष्णरामचरणप्रिय ईशरक्तः ॥३॥**

उस सभामे सभापतिका आसन ग्रहण किया महान् गोप-उपनन्दने। वे ही सबसे अधिक अवस्थाके थे। श्रीकृष्ण और बलरामके चरणोमे उनका बडा प्रेम था और वे ईश्वरमे अनुरक्त भक्त थे। उन्होने व्रजके प्रिय एवं हितकर कार्यके विषयमे सलाह देते हुए इस प्रकार कहा—॥ ३ ॥

**सभ्या सुखं शृणुत ! नैकावधा महान्तोऽनिष्टा भवन्त्यविरतं भयदाः शिशूनाम्।**
**तद्गोकुलस्य हितकृद्भिरुपायविद्भिरन्यत्र गन्तुमुचितं स्वजनैश्च वस्तुम् ॥४॥**

'सभासदो ! सुख साथ मेरी बात सुनो। इन दिनो यहाँ नित्य-निरन्तर अनेक प्रकारके बड़े-बड़े अनिष्टकारी उत्पात हो रहे है, जो हमारे बालकोके लिए भयदायक हैं। अत जो

गोकुलके हितकारी और उपायवेत्ता लोग है, उन्हे स्वजनोके साथ निवास करनेके लिए यहांसे अन्यत्र जाना उचित होगा' ॥ ४ ॥

अस्माकमक्षयधनं व्रजराजपुत्रो दामोदरोऽयमतुलो जगति प्रसिद्धः ।
हन्तुं यमत्र धृतसुन्दरदिव्यरूपा सा राक्षसी प्रथममेव तदाऽऽजगाम ॥५॥

'यह व्रजराजनन्दन दामोदर, जो अपने अतुल्यबलके लिए जगत्मे प्रसिद्ध हैं हमारा अक्षय-धन हैं। सबसे पहले इसको मारनेके लिए सुन्दर दिव्य-रूप धारण करके वह पूतना नामवाली राक्षसी यहाँ आई थी' ॥ ५ ॥

बालघ्न्यसौ सुखदगोकुलराजधाम्नि ह्यागत्य तं कपटपूर्णहृदा समुह्य ।
स्वाङ्के निधाय विषलेपितचूचुकं स्वं संपाययन्त्यहह ! यत्र मृतेशदृष्ट्या ॥६॥

'वह बालघातिनी थी और गोकुलराजके सुखदायक धाममे आकर कपट-पूर्ण हृदयसे उसे गोदमे लेकर अपना विषयुक्त-स्तन पिलाने लगी। अहा हा ! भगवान्की कृपादृष्टिसे वह स्वयं यहाँ मर गई' ॥ ६ ॥

त्रैमासिकस्य सकलेशगुणाश्रितस्य संशायितस्य पुनरस्य शिशोरनोऽधः ।
यद्वचासुरं शकटमप्यपतत्तदूर्ध्वं तच्चाऽपि चूर्णमभवद्भगवत्कृपातः ॥७॥

'सम्पूर्ण ईश्वरीय गुणोका आश्रयभूत, यह बालक जब तीन महीनेका था और छकडेके नीचे सुला दिया गया था, तब एक असुरके आवेशसे युक्त वह छकडा इसके ऊपर ही गिर पडा था। किन्तु भगवान्की ऐसी कृपा हुई कि वह स्वय चूर चूर हो गया और इस बालकका बाल बाँका भी नही हुआ' ॥ ७ ॥

यच्चक्रवात इह चैत्य सुखेन सुप्तं बालं त्वमुं वियति सिद्धपथं च नीत्वा ।
तत्याज किन्तु पतितोऽपि शिलासु देवैस्त्रातो भुजैर्विधृत एष ममार दैत्यः ॥८॥

'तदनन्तर जो यहां बवण्डर-रूपधारी तृणावर्त नामका दैत्य आया और सुखसे सोये हुए इस बालकको आकाशमे उडाकर सिद्धपथमे ले गया और वहीसे उसने इसे नीचे डाल दिया। यद्यपि यह पत्थरपर गिरा था, तथापि देवताओने इसकी रक्षा कर ली। उन्होने अपने हाथमे लेकर इसे बचा लिया। उल्टे वह दैत्य हो कालके गालमे चला गया' ॥ ८ ॥

भूयोऽपि यः पतितयोर्द्रुमवर्ययोस्तत्प्राप्याऽन्तरं न च ममार तदेव भव्यम् ।
नारायणस्य सुकृपैव निदानमत्र यद्रक्षणं समभवत् सुकृतैः कृतैर्नः ॥९॥

'इसके बाद पुन दो बडे-बडे अर्जुन-वृक्ष अकस्मात् गिरे और उनके बीचमे पहुँचकर भी, जो यह बालक नही मरा, वही हमारे लिए मङ्गलकी बात हुई। इसमे भगवान् नारायणकी उत्तम कृपा ही कारण है। जिससे हमारे द्वारा किये गए पुण्योके प्रभावसे इसकी रक्षा सम्भव हुई' ॥ ९ ॥

**तस्माद्भवन्त इह गोकुलराज्यकृत्यं संचिन्त्य संददतु भव्यतमां स्वबुद्धिम् ।**
**कर्तव्यमस्ति किमथाऽव्ययमात्मनीनं प्रस्ताव एष निहितोऽत्र मया विचार्य ॥१०॥**

'इसलिए यहाँ गोकुलराज्यका क्या कर्तव्य है ? इसपर भली-भाँति विचार करके आप-लोग हमे अपनी भव्य सलाह दे। क्या किया जाय, जो हमारे लिए अक्षय एवं हितकर हो। यह प्रस्ताव मैने यहाँ बहुत सोच-विचारकर रखा है' ॥ १० ॥

**मन्ये ह्यहं तु शुभमेतदिहाऽस्मदीयैः सत्साधनैर्धनजनैः शिशुभिः समेताः ।**
**सर्वे वयं हितकरं सुखदप्रदेशं गच्छेम वस्तुमित उन्नतवीर्यशौर्याः ॥११॥**

'मै तो यह शुभ-कर्तव्य मानता हूँ कि हम सब लोग यहाँसे अपने समस्त उत्तम साधन, धन-वैभव, स्वजन और शिशुओके साथ किसी सुखद एव हितकर प्रदेशमे निवास करनेके लिए चले। हमारा बल-विक्रम और शौर्य बढा-चढा है' ॥ ११ ॥

**उत्पातका अहितशंसिन एत्य यावन्नो पीडयन्ति न इहस्थशिशून् विगृह्य ।**
**तावद्वयं गतभयं हितकृत्समेषां वृन्दावनं रुचिरधाम सुखेन यामः ॥१२॥**

'अहितसूचक उत्पात यहाँ प्रकट होकर हमारे इन शिशुओको जबतक पीड़ा नही पहुँचाते, तबतक ही हम इन्हे लेकर निर्भय एव सर्वहितकारी रुचिर धाम वृन्दावनमे सुख-पूर्वक चले चले' ॥ १२ ॥

**वत्स्यन्ति तत्र ससुता व्रजमातरोऽपि प्राप्याऽस्मदीयशुभरक्षणमात्मतन्त्रम् ।**
**गोप्यश्च गोपनिवहैः सह गोगणैस्तै रंस्यन्त एव शिशवश्च सुखेन यत्र ॥१३॥**

'वही हमारा स्वतन्त्र शुभ सरक्षण प्राप्त करके व्रजबालकोकी माताये भी अपने पुत्रो सहित निवास करेगी। गोपो और गौओके साथ गोपाङ्गनाये और गोपबालक भी वहाँ सुखसे क्रीडा-विहार करेगे' ॥ १३ ॥

**नद्यः प्रसन्नसलिला रुचिरद्रुमाग्राः शैलाश्च सन्ति लघुदीर्घगुहावरोधाः ।**
**शष्पं प्रशस्यमभितो विलसत्यजस्रं गन्तव्यमाशु सकलैरिदमात्मनीनम् ॥१४॥**

'वहाँ नदियोके स्वच्छ-जल सुलभ होगे। वहाँके वृक्षोके अग्रभाग बडे सुन्दर हैं। वहाँके पर्वत भी छोटी-छोटी विस्तृत गुहारूप गृहोसे सुशोभित होते हैं। वहाँ सबओर सदा अच्छी घास शोभा पाती है। यह वृन्दावन ही हमारे लिए हितकर है। अत हम सबको शीघ्र वही चलना चाहिए' ॥ १४ ॥

**गच्छेम तत्र वयमद्य सुखं व्रजस्था आदाय सर्वविधसुन्दरवस्तुजातम् ।**
**सज्जीकुरुध्वमखिलान् वृषभाननःसु संस्थाप्य बालसहिताः स्त्रिय उच्चभावाः ॥१५॥**

'हम सब व्रजवासी सब प्रकारकी सुन्दर वस्तुये लेकर आज सुखपूर्वक वहाँ चले। सारे बैलोको गाडियोमे जोतो और बालको सहित स्त्रियोको उनपर बैठाकर उत्तम भावनाके साथ यात्रा करो' ॥ १५ ॥

**किं रोचते हितमिदं वचनं भवद्भ्यो मा भूद्विलम्ब इह तद्यदि भावुकं चेत् ।**
**मुञ्चन्तु गोकुलधनानि सुखं पुरस्ताद् गच्छन्तु तानि च वयं ह्यनुगा भवेम ॥१६॥**

'क्या, मेरी यह हितकर बात आपलोगोको अच्छी लगती है ! यदि यह भली बात है, तब यहाँ विलम्ब नही होना चाहिए । गोकुलके समस्त गो-धनोको खोल दो, वे आगे-आगे चले और हमलोग उनके पीछे पीछे चलेगे' ॥ १६ ॥

**श्रुत्वा तदस्य वचनं हितकृन्मनोज्ञं गोपाः प्रसन्नतरचेतस उत्सुकाश्च ।**
**श्रेयस्तदेतदतिसाधु वदन्त उच्चैरन्यत्र गन्तुमथ तीव्रतरा अभूवन् ॥१७॥**

उपनन्दका वचन सबके लिए हितकारी और मनोरम था। उसे सुनकर सभी गोप प्रसन्नचित्त और उत्कण्ठित हो गए । 'यह अत्यन्त कल्याणकारी और सुन्दर सुझाव है' ऐसा कहते हुए वे सब अन्यत्र जानेके लिए उतावले हो उठे ॥ १७ ॥

**उन्मुच्य गोकुलमिमे प्रथमं रथाभां स्वां सुन्दरीं शकटराजिमपि प्रयुज्य ।**
**निक्षिप्य तत्र सकलं गृहवस्तुजातं वृन्दावनं समगमंस्त्वरया व्रजस्थाः ॥१८॥**

'फिर तो ये सब व्रजवासी गोसमुदायोको खोलकर पहले अपनी रथ जैसी सुन्दर शकट-पक्तिको जोतकर और उसीपर घरकी सारी वस्तुये रखकर बडी शीघ्रताके साथ वृन्दावनकी ओर चल दिये ॥ १८ ॥

**संचोदयन्त उरुगायहितान् वृषान् स्वान् हो ! हो !! वदन्त ऋषिचित्तनिभाः पवित्राः ।**
**ते संययुस्तदनु गोकुलतः स्त्रियः स्वा आवार्य बालसहिता धृतयष्टिशस्त्राः ॥१९॥**

भगवान्के हितैषी वे सब अपने बैलोको हाँकते हुए और 'हो-हो' कहते हुए वे ऋषियोके चित्तकी भाँति पवित्र-गोप बालको सहित अपने स्त्रियोको चारोओरसे घेरकर गोकुलसे चले । उन्होने हाथोमे लम्बी लाठी और शस्त्र भी ले रखे थे ॥ १९ ॥

**जग्मुः पुरोहितगणाः पुरतो द्विजाश्च नन्दादयः समगमंस्तत उच्चभावाः ।**
**शृङ्गध्वनिं समवकीर्य रवैरमुष्य तौर्यत्रिकैश्च विदिशोऽपि विनाद्य गोपाः ॥२०॥**

सबके आगे पुरोहितगण और ब्राह्मण चले । तदनन्तर उच्च विचारवाले नन्द आदि प्रधान गोप चले । तत्पश्चात् शृङ्गनामक वाद्यकी ध्वनि बिखेरते और नृत्य, वाद्य एव गीतके सम्मिलित-रवसे दिशाओ एव विदिशाओको निनादित करते हुए समस्त गोपगण चलने लगे ॥ २० ॥

**मध्ये स्त्रियः स्वशकटैः प्रययुर्गुणाढ्याः सौन्दर्यदीप्ततनवोऽस्य कथाः प्रगाय ।**
**हारैस्ततो व्यथितसुन्दरचूचुकास्ता जग्मुर्व्रजेशवनिता अपि निष्ककण्ठ्यः ॥२१॥**

बीचमे स्त्रियाँ अपने-अपने छकडोसे यात्रा कर रही थी। वे सभी सद्गुणवती थी और उनका अंग-अंग सौन्दर्यकी आभासे दीप्तिमान् दिखाई देता था। वे श्रीकृष्णकी कथाओका गान करती चल रही थी। तदनन्तर जिनके सुन्दर-कुचाग्र हारोसे दबे हुए थे। वे व्रजेश्वरके व्रजकी वनिताये कंठमे सोनेकी कंठी पहनकर जा रही थी॥ २१॥

**ता देशिकं लयसमन्विततालपूर्णं गीतं प्रगाय मधुरं सुखदं ह्यधःस्थम् ।**
**आराधयन्त्य इममद्भुतमादिदेवं शान्त्या ययुस्तदनु वर्त्मनि तौ निरीक्ष्य ॥२२॥**

वे गोपाङ्गनाये देशी लय और तालसे युक्त निम्नलिखित सुखद, मधुर-गीत गाती हुई, इन अद्भुत आदिदेवकी आराधनामे संलग्न हो, इन दोनो भाईयोकी ओर देख-देखकर शान्तिपूर्वक उन मार्गपर जा रही थी॥ २२॥

( ललितं छन्दः )

**जयत एव तौ नन्दबालकौ गुणगणैर्धितौ शान्तिदायकौ ।**
**स्वचरितप्रियौ दुष्टनाशकौ स्वजनदेहिनां चित्तमोहकौ ॥२३॥**

[ वह गीत इस प्रकार है—जयत एव इत्यादि ] गुणसमूहोसे बढे-चढे तथा परम-शान्तिदायक वे दोनो नन्दबालक सदा ही विजयी हो, जिन्हे अपनी लीला-चरित्र बहुत प्रिय है, जो दुष्टोके नाशक हैं तथा स्वजनो और देहधारियोके चित्तको मोह लेनेवाले हैं॥ २३॥

**आस्थाय चैकशकटं सुतरामकृष्णौ स्वाङ्के सगृह्य वसुदेवकनन्दपत्न्यौ ।**
**विश्रुत्य गीतमुभयोः ससुखं व्रजन्त्यौ मुग्धे बभूवतुरलं पथि ताः समीक्ष्य ॥२४॥**

वसुदेवजी तथा नन्दरायकी पत्नी रोहिणी और यशोदा एक छकडेपर बैठकर अपने पुत्र बलराम और कृष्णको गोदमे लिए, उन दोनोके सम्बन्धमे, मधुर-गीत सुनकर मुग्ध हो जाती थी और उन गानेवाली स्त्रियोकी ओर देखती हुई मार्गमे सुख-पूर्वक यात्रा कर रही थी॥ २४॥

**पश्चाज्जगाम मुनिसंहतिरप्यनिन्द्या गायन्त्यमुष्य सुगुणानतिमानुषांश्च ।**
**नृत्यन्त्यहो ! विविधभावमयैर्विलासैस्तौ हासयन्त्यनुययुस्तदनु व्रजस्थाः ॥२५॥**

इनके पीछे अनिन्द्य मुनिमण्डली श्रीकृष्णके अलौकिक सद्गुणोका गान करती, नाचती और विविध भावमय-विलासोद्वारा, उन दोनो भाईयोको हँसाती हुई चल रही थी। उनके पीछे अन्य व्रजवासी थे॥ २५॥

**इत्थं जगाम सकलं व्रजमण्डलं तद्वृन्दावनं सुखदमत्र सदैव रम्यम् ।**
**सर्वर्तुसौख्यदमचिन्त्यगुणप्रकाशं यत्स्थावरोपचितजङ्गमपूर्णमासीत् ॥२६॥**

इसप्रकार समस्त व्रजमण्डलके लोग सदैव रमणीय तथा सुखद वृन्दावनमे गए। जो सभी ऋतुओमे सुखदायक तथा अचिन्त्य गुणोको प्रकाशित करनेवाला था। वह वन स्थावर-जगम सभी प्राणियोसे परिपूर्ण था ॥ २६ ॥

**तत्र प्रविश्य सकलाः कलया समेता आवासमत्र शकटैश्च विचक्रुरेवम् ।**
**यद्वीक्षणेऽर्धविधुवत्परमोज्ज्वलश्च संदृश्यते स्म नृपदुर्ग इवाऽप्रवेश्यः ॥२७॥**

उस वनमे प्रवेश करके सभी गोपोने विविध कलाओसे युक्त छकडोद्वारा आवास-स्थानका निर्माण किया। जो देखनेमे अर्द्धचन्द्राकार तथा परम उज्वल दीखता था। राजाके दुर्गकी भाँति उस शकट-दुर्गमे किसी दूसरेका प्रवेश नही हो सकता था ॥ २७ ॥

**वृन्दावनं स्वगुणरम्यमतीवधन्यं गोवर्धनं गिरिवरं यमुनातटं च ।**
**संवीक्ष्य तद्गुणविलोभितचित्तवृत्तिरीशोऽपि साग्रज इहाऽवसदार्यगोपैः ॥२८॥**

अपने गुणोसे रमणीय और अतिशय धन्य वृन्दावन, गिरिराज-गोवर्धन तथा यमुना-पुलिनको देखकर उनके गुणोसे लुभाई हुई चित्त वृत्तिवाले ईश्वर श्रीकृष्ण भी अपने बडे भाईके साथ वहाँ सुखपूर्वक रहने लगे। श्रेष्ठ गोपगण उनका साथ देते थे ॥ २८ ॥

**वृन्दावनं जयति यत्र जगन्निवासो लीलाश्चकार विविधा बुधचित्तगम्याः ।**
**संदृश्य या अनुगता ऋषयोऽपि हन्त ! स्वां स्वां क्रियामपि विसस्मरुरुच्चभावाम् ॥२९॥**

उस वृन्दावनकी जय हो, जहाँ जगन्निवास भगवान् श्रीकृष्ण विविध लीलाये करते हैं, जो विद्वद्जनोके हृदयमे ही अनुभवके योग्य हैं। जिनको देखकर अनुगत मुनिजन भी अपनी-अपनी उच्च भाव-युक्त क्रियाओको भी भूल गए हैं ॥ २९ ॥

**तत्रेत्थं तिष्ठता तेन गोपबालेन यत्कृतम् ।**
**तत्सर्वं वर्ण्यतेऽनेन सज्जनानां मुदे त्विह ॥३०॥**

इसप्रकार वृन्दावनमे रहते हुए उन गोपराज-कुमारने जो कुछ किया, उस सब लीलाका वर्णन यहाँ सज्जनोकी प्रसन्नताके लिए कविद्वारा किया जाता है ॥ ३० ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**त्रिचत्वारिंशसर्गोऽयमगात्काव्ये स्तवात्मके ॥३१॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे यह तैतालीसवाँ सर्ग पूरा हुआ ॥ ३१ ॥

—:०:—

# चतुश्चत्वारिंशः सर्गः

[ वृन्दावने भगवतो गोवत्सादिचारणम् । विविधक्रीडा च ]

( चम्पकमालावृत्तम् )

घोरवनेऽस्मिन् बालचरित्रैः सज्जनचिन्त्यैरात्मविनोदैः ।
गोकुलगोपीगोपगणांस्तान् संरमयञ्छ्रीशोऽथ रराज ॥१॥

उस घोर वनमे सज्जनोके द्वारा चिन्तनीय एवं आत्मविनोदकारी अपने बाल-चरित्रोसे गौओ, गोपियो और गोपगणोको आनन्द प्रदान करते हुए श्रीपति भगवान् श्रीकृष्ण अब बडी शोभा पाने लगे ॥ १ ॥

गोपवरेण्यानात्मचरित्रैर्ज्ञातमहत्वान् संविदधत् सः ।
दर्शितशक्तिर्भक्तवरेभ्यो बालमुकुन्दः संववृधेऽत्र ॥२॥

अपने चरित्रोद्वारा श्रेष्ठ गोपोको अपनी महिमाके ज्ञानसे सम्पन्न बनाते तथा श्रेष्ठ-भक्तोको अपनी शक्तिका दर्शन कराते हुए, वे भगवान् बालमुकुन्द वहाँ बढ़ने लगे ॥ २ ॥

वत्सगणान् स्वान् बालवयस्यैः सार्धमथाऽसौ चारयितुश्च ।
आत्मन इच्छां मान्यजनेष्वस्थापयदेवं वाक्यपरिपाट्या ॥३॥

अपने बाल-सखाओके साथ बछड़े चरानेकी इच्छाको उन्होने मान्य-जनोके समक्ष निम्नाङ्कित वाक्य-परिपाटीद्वारा स्थापित किया—॥ ३ ॥

तात ! समर्था गोवृषवत्सांश्चारयितुं नूनं वयमत्र ।
युष्मदनुज्ञां प्राप्तुमनिन्द्यां चाऽभिलषामो देहि ततस्ताम् ॥४॥

'तात ! अब हमलोग निश्चय ही यहाँ गौओ, बैलो और बछडोको चरानेमे समर्थ हो गये हैं और इसके लिए आपकी अभिनन्दनीय-आज्ञा प्राप्त करना चाहते हैं। अत. आप वह आज्ञा हमे दे' ॥ ४ ॥

कृष्णमुखोत्थं सद्वचनं तत्कर्णपुटाभ्यां तत्र निपीय ।
स्नेहनिबद्धो नन्द उवाच तद्भवदुःखं द्रागनुभूय ॥५॥

श्रीकृष्णके मुखसे प्रकट हुए इस उत्तम वचनामृतको .दोनो कर्णपुटोसे वहाँ पीकर स्नेहसे बँधे हुए नन्दरायजी गोचारण-जनित क्लेशका शीघ्र ही स्मरण करके बोले ॥ ५ ॥

तात ! किमेषा ह्युत्सुकता ते चारयितुं तान् गोवृषवत्सान् ।
सन्ति गृहे स्वेऽस्मद्गतचित्ता भृत्यवरिष्ठास्तत्र नियुक्ताः ॥६॥

'वत्स ! आज गौओ, बैलो और बछडोको चरानेके लिए यह अधिक उत्कण्ठा तुम्हे क्यो हो रही है ? । अपने घरमे इस कार्यकी ओर ध्यान देनेवाले बहुत-से उत्तम भृत्य है, जो गोचारण-कर्ममे लगाए गए हैं ॥ ६ ॥

नोचितमेवं तत्कथनं ते क्रीड यथार्हं स्वे गृह एव ।
अल्पतरस्त्वं कोमलगात्रश्चारयसीत्थं गा अचिरेण ॥७॥

'अत तुम्हारा ऐसा कथन उचित नही है । तुम अपने घरपर ही यथोचित क्रीडा करो । अभी तो तुम बहुत छोटे हो । तुम्हारा शरीर कोमल है । थोडे ही दिनोमे सयाने होनेपर तुम इस प्रकार गौये चराने लगोगे' ॥ ७ ॥

तत्र ममेयं सद्रुचिरस्ति हृच्च ममेदं रंस्यत एव ।
गोवृषवत्सा हृष्टतराश्च तात ! भवन्तीत्थं करणे हि ॥८॥

[ श्रीकृष्ण बोले— ] 'पिताजी ! इस कार्यमे मेरी अच्छी रुचि है । और इसमे मेरा मन भी लगेगा । ऐसा करनेसे हमारे गाय, बैल और बछडे खूब हृष्ट-पुष्ट हो जायेगे ॥ ८ ॥

देहि शुभाज्ञां देहि वदन् स उक्त उपायैर्गोपवृषेण ।
चारय वत्सांस्त्वं ह्यविदूरे चाऽस्तु सदिच्छा ते परिपूर्णा ॥९॥

'इस कार्यके लिए अपनी शुभ-आज्ञा दे दीजिए, दे दीजिए' । ऐसा कहते हुए श्रीकृष्णसे गोपराजने कहा—'अच्छा, तुम आस-पास ही बछड़े चराया करो । तुम्हारी यह शुभ इच्छा परिपूर्ण हो' ॥ ९ ॥

प्राप्य तदाज्ञां गोकुलवर्यो बालमुकुन्दो हृष्टहृदाऽथ ।
साग्रज एवाऽचारयदत्र वत्सगणान् स्वैर्दत्तसुदृष्टिः ॥१०॥

पिताकी यह आज्ञा पाकर गोकुल-प्रवर बालमुकुन्द प्रफुल्ल-चित्तसे बडे भाई बलरामके साथ वहाँ आस-पास बछड़े चराने लगे । आत्मीय-जन उनपर सदा उत्तम दृष्टि रखते थे ॥ १० ॥

कृष्णबलौ तावत्र समं स्वैर्बालकवत्सैः संवृतगात्रौ ।
चक्रतुरेवं प्राकृतरूपैः क्रीडनकार्यैस्तांश्च कृतार्थान् ॥११॥

वे दोनो भाई श्रीकृष्ण और बलराम बालको और बछडोसे घिरे रहकर प्राकृत खेल-कूदोके द्वारा उन सबको कृतार्थ करने लगे ॥ ११ ॥

साधनमासीन्मुख्यमिहाऽपि गानमनिन्द्यं वाद्यमनेकम् ।
भृङ्गसुवेणू सुन्दररूपौ यौ धृतवन्तौ चक्रतुरित्थम् ॥१२॥

यहाँ भी उनकी क्रीडाका मुख्य साधन था, उत्तम गान और अनेक प्रकारका वाद्य। शृङ्ग और सुन्दर वशी-ये दोनो सुन्दर वाद्य थे, जिन्हे हाथमे लेकर वे दोनो भाई इस प्रकार मनोरंजन करते थे॥ १२॥

ततो रामश्यामौ सखिभिरिह चिक्रीडतुरलं
क्वचित् क्षेप्यान् क्षिप्त्वा क्वचिदपि च पादान् मृदुतरान् ।
क्वचिच्छृङ्गं वेणुं ललितमधुरं श्वासपवनैः
प्रपूर्याऽरण्यं तद्विदधतुरनिन्द्यं सुखमयम् ॥१३॥

तदनन्तर राम और श्याम सखाओके साथ यहाँ पर्याप्त खेल-कूद करने लगे। वे कही फेंकने योग्य ढेले फेकते और कही अपने कोमल चरणोको नृत्यको मुद्रामे सचालित करते थे। कही सीगें बजाते कभी ललित मधुर वेणुको श्वासवायुसे भरकर उस अनिन्द्य वृन्दावनको सुखमय बना देते थे॥ १३॥

वृषायमाणौ क्वचिदत्र तावुभौ चिक्रीडतुर्गोकुलबालकैर्मुदा ।
अन्योन्यमासीद्रण एव कृत्रिमो यत्सिंहनादोऽपि सुगुञ्जितस्तदा ॥१४॥

कभी वे दोनो यहाँ बैलका-सा नाटय करते हुए गोकुलके बालकोके साथ क्रीडा करते थे और कभी उन दोनोमे परस्पर कृत्रिम-युद्ध ही छिड जाता था, जिसका सिंहनाद भी वहाँ उस समय गूँज उठता था॥ १४॥

क्वचित् कदाचित्तदरण्यवासिनां श्रुत्वा हितान्यत्र रुतानि पक्षिणाम् ।
तौ तैः समं तान्यनुकृत्य सुन्दरं प्रगायतां तद्गतमानसावमू ॥१५॥

कही कभी उस वनमे रहनेवाले पक्षियोके हितकर कलरव सुनकर वे दोनो भाई उन्हीके समान उनको बोलियोकी नकल करके तद्गत-चित्त हो, सुन्दर गीत गाने लगते थे॥ १५॥

इत्थं भक्तहिताप्तये धृततनू अप्राकृतौ प्राकृतैः
स्वैर्मित्रैर्व्रजवासिबालकगणैर्भूत्वा तदा तत्समौ ।
ब्रह्माद्यैर्मुनिभिस्तथर्षिविबुधैः साश्चर्यमालोकितौ
क्रीडन्तौ परमेश्वरौ शुभमयीं क्रीडास्थलीं चक्रतुः ॥१६॥

इस प्रकार भक्तोको हितकी प्राप्ति करानेके लिए शरीर धारण करनेवाले अप्राकृत श्याम और राम अपने प्राकृत सखा व्रजवासी-बालकोके साथ उस समय उन्हीके समान

होकर खेलते और ब्रह्मज्ञ-मुनियो तथा देवर्षियोसे साश्चर्य देखे जाते हुए वे दोनो परमेश्वर-बन्धु क्रीडा करके उस वनको शुभमयी क्रीडास्थली बनाने लगे ॥ १६ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**विगतोऽयं चतुश्चत्वारिंशः सर्गस्तवात्मके ॥१७॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे यह चौवालीसवाँ सर्ग पूरा हुआ ॥ १७ ॥



# पञ्चचत्वारिंशः सर्गः

[ भगवतो यमुनातटे वत्सासुरवधः । ]

( भुजङ्गप्रयातवृत्तम् )

कदाचिद् व्रजेशस्य पुत्रो गुणज्ञो विमुच्याऽऽत्मवत्सान् गतश्चारणार्थम् ।
सुरम्यं तटं यामुनं शृङ्गशब्दैः समाहूय मित्राणि सार्धं बलेन ॥१॥

एक समयकी बात है—व्रजराज नन्दके गुणज्ञ पुत्र श्रीकृष्ण सीगेके शब्दोसे बलराम सहित अपने मित्रोको बुलाकर तथा बछडोको खोलकर उन्हे चरानेके लिए यमुनाके सुरम्य तटपर गए ॥ १ ॥

शिशोर्वैश्यजातेरमुष्याऽद्भुतस्य शुभौष्ठद्वयान्निःसृतोऽतर्क्यरूपः ।
रुरोः शृङ्गशब्दोऽप्यमुच्चैः प्रधावन् क्षणेनाऽकरोद्विश्वमाकृष्टसत्त्वम् ॥२॥

वैश्य-जातिके उस अद्भुत शिशुके शुभ-ओष्ठद्वयसे निकला हुआ वह अतर्क्य रुरु-शृङ्गका शब्द उच्चस्वरसे चारो ओर फैलने लगा। उसने क्षणभरमे सम्पूर्ण विश्वके जीव-जन्तुओको अपनी ओर आकृष्ट कर लिया ॥ २ ॥

भ्रमन् प्राक् पृथिव्यां मुनीनामृषीणां श्रुतिद्वारतोऽन्तर्विलं ब्रह्मसंस्थम् ।
प्रविश्यैव तान् सोत्सुकान् संप्रकुर्वन् समागन्तुमस्यैव पार्श्वे रराज ॥३॥

पहले भूतलपर भ्रमण करते हुए उस शृङ्ग-नादने कानोके द्वारसे ऋषि-मुनियोके अन्त करणके दहराकाशमे प्रवेश करके उन सबको इन बाल-कृष्णके ही पास आ जानेके लिए उत्सुक कर दिया और वह सबओर अनुपम शोभा पाने लगा ॥ ३ ॥

प्रभिन्दन् धरायास्तलं तत् स्वशक्त्या सुखेनैव पातालमाविश्य भूयः ।
इहस्थांश्च तांस्तान् मुमुक्षुन् प्रबुद्धान् तथैवाऽत्र चागन्तुकामांश्चकार ॥४॥

तदनन्तर अपनी शक्तिसे भूतलका भेदन करके वह अनायास ही पातालमे भी प्रविष्ट हो गया। फिर वहांके मुमुक्षुओ और प्रबुद्ध-पुरुषोको उसी प्रकार श्रीकृष्णके पास आ पहुँचनेके लिए उसने उत्कण्ठित कर दिया ॥ ४ ॥

गृहीत्वैव दिव्यां गतिं स्वां ततोऽसौ गतः स्वर्गलोकं क्षणादेव भूयः ।
स्वरूपेण नित्येन चेतोहरेण गुणाढ्यानिहस्थांश्च मुग्धानकार्षीत् ॥५॥

तत्पश्चात् वहांसे दिव्य-गति धारण करके वह शब्द क्षणभरमे स्वर्ग लोक जा पहुँचा। और अपने नित्य मनोहर-रूपसे वहांके गुणवान् लोगोको भी मुग्ध बनाने लगा ॥ ५ ॥

ततोऽप्यङ्ग ! सत्यं परं ब्रह्मलोकं प्रविष्टोऽस्य धातुः प्रपश्यंश्च सर्गान् ।
सहैवाऽऽत्मना ज्ञाततत्त्वेन तेन क्षणादुद्भवस्थानमानीत एषः ॥६॥

अहो ! वहाँसे भी आगे बढकर वह शब्द परम-सत्य ब्रह्मलोकमे जा पहुँचा और विधाताके सर्गोका साक्षात्कार करने लगा। वहाँ उसके रहस्यको जानकर तत्त्वज्ञ उस शृङ्गरव साक्षात् विधाताको भी क्षण-भरमे साथ ही अपने उद्भवस्थानतक ले आया ॥ ६ ॥

स इत्थं समस्तं जगद् योगिचित्तं विशुद्धं यथैव भ्रमित्वेच्छयाऽस्य ।
भवस्थांश्च सर्वान् विशिष्टान् वनेऽस्मिन् समागन्तुकामान् विधायाऽऽत्मलीनः ॥७॥

इस प्रकार योगियोके विशुद्ध-चित्तकी भाँति वह शब्द श्रीकृष्णकी इच्छासे समस्त जगत्मे घूमकर तीनो लोकोमे रहनेवाले समस्त विशिष्ट-पुरुषोको उस वृन्दावनमे आनेके लिए उत्सुक बनाकर फिर भगवान्मे ही लीन हो गया ॥ ७ ॥

तदाश्रुत्य कर्णप्रियं स्वात्मनादं प्रपूर्णं मनोज्ञं रुरोःशृङ्गशब्दम् ।
क्षणं तद्गता गोपबालाः समन्ताद्विमुच्याऽऽययुर्वत्ससङ्घानथ स्वान् ॥८॥

रुरु-मृगके सीगसे प्रकट हुए उस मनोहर, श्रवणप्रिय तथा आत्मनादसे पूर्ण शब्दको सुनकर व्रजके समस्त ग्वाल-बाल अपने-अपने बछड़ोको खोलकर चारोओरसे क्षण-भरमे उनके पास जा पहुँचे ॥ ८ ॥

मिलित्वा ततो मार्गमध्ये प्रियेण समालिङ्गितास्तेन दामोदरेण ।
त आजग्मुरेवाऽत्र तांश्चारयन्तो मनोज्ञं तटं यामुनं द्रष्टुकामाः ॥९॥

तदनन्दर बीचमार्गमे मिलकर वे ग्वाल-बाल अपने प्रिय सखा दामोदरका आलिङ्गन प्राप्त करके बछडे चराते हुए मनोहर यमुना तटका दर्शन करनेके लिए वहाँ आ गए ॥ ९ ॥

निरीक्ष्याऽस्य सौन्दर्यमानन्ददायि विमुग्धा भृशं सैकतैस्तत्प्रदेशैः ।
समाकृष्टचित्ताश्च चिक्रीडुरस्मिन् समं तेन विश्वात्मना शान्तिमाप्ताः ॥१०॥

उस प्रदेशका आनन्ददायक सौन्दर्य देखकर वे सबके सब अत्यन्त मुग्ध हो उठे वहाँके सिकतामय-स्थलोने उनका चित्त आकृष्ट कर लिया था। वे वहाँ शान्ति पाकर उन्ही विश्वात्मा भगवान्के साथ खेलने लगे ॥ १० ॥

इतो वत्ससङ्घास्तदानीममुष्याः सुरम्ये तटप्रान्तदेशे प्रशष्पे ।
समुत्सृज्यमानाश्चरित्वाऽत्र तेषां निरीक्ष्यैव खेला मुदाऽऽसन् स्थिताश्च ॥११॥

यमुनाके अत्यन्त रमणीय तटप्रान्तमे उत्कृष्ट घास जमी हुई थी। अत उस समय वे छोडे गये बछडे वहाँ चरकर उन सब बालकोका खेल देखते हुए सानन्द खडे हो गये ॥ ११ ॥

**तदैवाऽऽगतो दैत्य एको विशिष्टः सखा भोजराजस्य भव्यं विधित्सुः ।**
**उभौ श्यामरामौ निहन्तुं चिरेण भ्रमित्वा व्रजं तत्र न प्राप्य चाऽत्र ॥१२॥**

उसी समय एक दैत्य आया, जो भोजराज कसका विशिष्ट सखा था और उसका कल्याण करना चाहता था। वह श्याम और राम दोनो बालकोका वध करनेके लिए चिरकालसे व्रजमे घूम रहा था। परन्तु उन्हे अन्यत्र न पाकर वहाँ आया ॥ १२ ॥

**समीक्ष्याऽथ संक्रीडमानावुभौ तु परीक्ष्यैव गाढं विचार्याऽत्र भूयः ।**
**बभूवैष वत्सः स्वयं कामरूपो निगूह्य स्वमेवं ह्युभौ हन्तुकामः ॥१३॥**

वहाँ खेलते हुए उन दोनो पर दृष्टिपात कर उनकी भली-भाँति परीक्षा ले बार-बार विचार करके वह स्वय भी बछडा बन गया। क्योकि उसमे इच्छानुसार रूपधारण करनेकी शक्ति थी। इस प्रकार अपनेको बछडोमे छिपाकर वह असुर इन दोनो भाइयोके वधकी इच्छा करने लगा ॥ १३ ॥

**विभिन्नोऽभवत् किन्तु वत्सेभ्य एभ्यः प्रकृत्यैव हिंस्रस्तमःपूर्णशक्तिः ।**
**प्रवृद्धं स्वकीयाऽऽसुरं तेज इत्थं छलाद्गूहमानोऽमिलत् वत्सयूथे ॥१४॥**

किन्तु वह दैत्य इन बछडोसे भिन्न प्रतीत होने लगा। क्योकि वह स्वभावसे ही हिसक तथा तमोगुणी-शक्तिसे युक्त था। तथापि अपने असुर सम्बन्धी बढे हुए तेजको इस प्रकार छलसे छिपाता हुआ वह बछडोके झुण्डमे मिल ही गया था ॥ १४ ॥

**ततो भक्षयन् शष्पमेभिः समं स प्रतीक्ष्यैव कालं स्थितस्तौ प्रपश्यन् ।**
**इतोऽमोघबोधो मुकुन्दः स्ववत्सान् प्रपश्यन्नपश्यद्धयमुं वत्सरूपम् ॥१५॥**

इसके बाद इन्ही बछड़ोके साथ घास चरता हुआ वह दैत्य समयकी प्रतीक्षामे उन्ही दोनोकी ओर देखता हुआ खडा रहा। इधर अमोघबोध सम्पन्न भगवान् मुकुन्दने अपने बछडोको देखते समय उस वत्सरूपधारी असुरको भी देख लिया ॥१५ ॥

**तदैवाऽत्र तं वीक्ष्य तादृक्स्वरूपं तथा कंसमित्रं च विज्ञाय चैनम् ।**
**निहन्तुं सुखेनैष रामं प्रदर्श्य तदग्रे जगामाऽस्य भावं च बुद्ध्वा ॥१६॥**

उस समय उसके वैसे स्वरूपका निरीक्षण करके तथा उसे कसका मित्र जानकर अनायास ही मार डालनेके लिए इस श्याम बालकने बलरामजीको सकेतसे दिखाया फिर वह उस दैत्यके अभिप्रायको जानते हुए उसके सामने गया ॥ १६ ॥

**ममाऽयं महाञ्छत्रुरेकोऽल्पवीर्यो ह्यजानन्नसावागतो मत्समीपम् ।**
**मुहूर्तार्द्धनिष्याम्यहं संविचार्य सरोषः स्थितो दैत्य एनं जिघांसुः ॥१७॥**

उसे आते देख दैत्यने मन ही सोचा—'यह मेरा एक शत्रु है। इसमे बहुत थोडा बल है। यह मुझे न पहचानकर मेरे समीप आया है। अब मै इसे एक ही मूहूर्तमे मार डालूँगा'। ऐसा विचार कर वह दैत्य श्रीकृष्णको मार डालनेकी इच्छासे सरोष खड़ा हो गया ॥ १७ ॥

**ततस्तत्र खेलत्सु बालेषु भूयः समीपं गतो दुष्टवत्साऽसुरस्य ।**
**सपुच्छौ गृहीत्वाऽपरावस्य पादौ रराजैष बालो भृशं भ्रामयंस्तम् ॥१८॥**

तदनन्तर जब अन्य ग्वाल-बाल वहाँ खेल रहे थे, तब पुन· श्रीकृष्ण वत्सरूपधारी उस दुष्ट असुरके समीप गए। उन्होने पूँछ सहित उसके दोनो पिछले पैर पकड लिये और उसे घुमाना आरम्भ किया। उस समय उस बाल-कृष्णकी बडी शोभा हो रही थी ॥ १८ ॥

**तदा दृष्टवांस्तत्र कापित्थवृक्षान् फलैः पूरिताग्रान् स्वखेलोपयुक्तान् ।**
**सुखं पातनार्थं च तेषां फलानि मृतं भ्रामणेनैनमेष्वाक्षिपत् सः ॥१९॥**

उस समय श्रीकृष्णने वहाँ बहुतसे कपित्थ ( कैथके ) वृक्ष देखे, जिनके अग्रभाग फलोसे भरे थे और जो उनके इस खेलके उपयुक्त थे। तब उन्होने उन वृक्षोके फलोको असानीसे गिरानेके लिए उस दत्यको जो घुमानेसे ही प्राणहीन हो गया था, उन वृक्षोपर दे मारा ॥ १९ ॥

**समं स्वात्मना पात्यमानैः फलैस्तैर्बभौ पूर्णगात्रः स दैत्यः पतित्वा ।**
**धृतं स्वासुरं रूपमुग्रं विशालं मृतं तं ह्यपश्यंस्तदा गोपबालाः ॥२०॥**

वह दैत्य वहाँ गिरकर अपने साथ ही धराशायी होनेवाले उन वृक्षो और फलोके द्वारा पूरित होकर बड़ी शोभा पाने लगा। मरते समय उसने अपने भयङ्कर एव विशाल असुररूपको धारण कर लिया था। गोप बालकोने उसे मरनेपर ही देखा ॥ २० ॥

**तदस्य प्रसन्नाः सखायः सरामा अमुं दर्शितस्वात्मशक्तिं सखायम् ।**
**समालिङ्ग्य गाढं शशंसुस्तदानीं मुदा साधु कृष्णेति चोक्त्वाऽऽत्मपावम् ॥२१॥**

तब बलराम सहित उस कृष्णके सखा प्रसन्न हो गए। उन्होने आत्मशक्तिका प्रदर्शन करनेवाले अपने सखा श्यामका गाढ आलिङ्गन करके उस समय प्रसन्नतापूर्वक कहा—साधु कृष्ण। साधु!' ऐसा कहकर उनकी भूरि-भूरि प्रशसा की। वे हर्षके मारे गिर-गिर पड़ते थे ॥ २१ ॥

देवा दृष्ट्वाऽसुरवरममुं शैलकल्पं करालं
सत्त्वोद्रेकादसमशिशुना पातितं घातितं च ।
स्वोद्यानस्थैः कुसुमनिवहैश्छादयन्तोऽन्तरिक्षात्
प्रेम्णा पूज्यं तमथ चकिताः पूजयाञ्चक्रुरत्र ॥२२॥

देवताओंने देखा—वह श्रेष्ठ असुर पर्वतके समान विकराल है। परन्तु सत्त्वके उद्रेकसे एक ऐसे शिशुने उसे मार गिराया है, जो शरीरमें कदापि उसके समान नहीं है। तब वे अपने उद्यान नन्दन वनके कुसुमस-मूहोंको आकाशसे वर्षा करते हुए उसे आच्छादित करने लगे। उन देवताओंने चकित होकर उस पूजनीय शिशुका पूजन किया ॥ २२ ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
सर्गोऽगमदयं पञ्चचत्वारिंशः स्तवात्मके ॥२३॥

कृष्णप्रसाद घिमिरेको कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमें यह पैंतालीसवाँ सर्ग पूर्ण हुआ ॥ २३ ॥



# षट्चत्वारिंशः सर्गः

[ भगवतो बकासुरवधलीला ]

( उपजातिवृत्तम् )

**अथैकदा सर्वजगत्प्रपालकौ भूत्वा च तौ सुन्दरवत्सपालकौ ।**
**विमुच्य वत्सान् सह गोपबालकैः प्रभात एवाऽऽययतुर्वनं स्वकैः ॥१॥**

एक दिन सम्पूर्ण जगत्के प्रतिपालक वे दोनो श्रीकृष्ण और बलराम सुन्दर वत्सपाल होकर प्रात काल ही बछडोको खोलकर अपने साथी ग्वाल-बालोके साथ वनमे आ गए ॥ १ ॥

**चिरं भ्रमित्वा विपिनं नवे नवे प्रान्ते निरीक्ष्याऽस्य सुदृश्यमद्भुतम् ।**
**क्षुत्तृड्भिरेतौ व्यथितौ भृशं तदा ह्यागच्छतां तद्यमुनातटेऽमले ॥२॥**

चिरकालतक वनमे भ्रमण करके नये-नये वन-प्रान्तमे उसके सुन्दर एव अद्भुत दृश्य देखकर वे दोनो भाई भूख-प्याससे अत्यन्त पीडित हो उस समय वहाँके निर्मल यमुना तट पर आए ॥ २ ॥

**वत्सेषु शष्पाणि चरत्सु बालकाः विधाय तान् दृष्टिपथाश्रितांस्ततः ।**
**तौ श्यामरामौ परिवार्य सुन्दरं निषेदुरन्योन्यमुखावलोकनैः ॥३॥**

बछडे घास चरने लगे। ग्वाल-बालोने उन्हे ऐसे स्थानपर कर दिया, जहाँसे वे बराबर दृष्टिपथमे बने रहे। ऐसा करके वे सारे गोपबालक श्रीकृष्ण और बलरामको चारोओरसे घेरकर एक स्थानपर ऐसे सुन्दर ढगसे बैठ गए, जिससे उन्हे एक दूसरेका मुख दिखाई देता रहे ॥ ३ ॥

**ताभ्यां समं पोटलिका विमुच्य ते शिक्याद्विनिष्कास्य पयस्यमन्ततः ।**
**गृहात्समानीतममोघतृप्तिदं तं प्रातराशं जघसुर्मुदान्विताः ॥४॥**

उन दोनो भाइयोके साथ अपनी-अपनी पोटली खोलकर छीकेसे गोरस निकालकर घरसे लाए हुए अमोघ तृप्तिदायक कलेवेको वे सबके सब प्रसन्नता पूर्वक खाने लगे ॥ ४ ॥

**ततः समुत्थाय पिपासयान्विताः प्रेम्णा स्ववत्सान् परिगृह्य हूतिभिः ।**
**समागमन् निर्मलवारिशोभितं तद्यामुनं तीरमिमे समन्ततः ॥५॥**

तदनन्तर प्यास लगने पर वे सब उठे और प्रेमसे पुकार कर अपने-अपने बछडोको साथ ले सबओरसे उस यमुनाके तटपर आए, जो निर्मल जलसे शोभा पा रहा था ॥ ५ ॥

तान् पाययित्वा प्रथमं सुधोज्ज्वलं जलं तदस्याः शिशवोऽत्र दुर्धराः ।
प्रमार्ज्य वक्त्रं करपादमेकधा भृशं पपुस्तज्जलमन्ततो हितम् ॥६॥

सुधाके समान उज्वल यमुना-जल पहले उन बछडोको पिलाकर उन दुर्धर्ष गोप-बालकोने एक बार हाथ-पैर और मुँह धोया, अन्तमे उस हितकर जलमे ही क्रीडा करने लगे ॥ ६ ॥

व्रजत्सु वत्सेषु शनैरितस्ततः क्रीडत्सु बालेषु जलेषु केषुचित् ।
अदर्शि कैश्चिद्बक एक उन्नतो जलाशयाऽभ्यर्णमवस्थितो महान् ॥७॥

उसी समय कुछ लोगोने जलाशयके पास ही बैठे हुए एक बगुलेको देखा, जो बहुत ही ऊँचा था ॥ ७ ॥

शृङ्गं हिमाद्रेरिव चोच्छ्रितं महत्तदुच्चसत्वं समवीक्ष्य वेपिताः ।
वितत्रसुर्हेति वदन्त उन्मदा निरीक्षणेनैव गलद्गिरोऽर्भकाः ॥८॥

हिमालयके शिखर-से अत्यन्त ऊँचे उस जानवरको देखकर वे गोपबालक भयसे कांप उठे और 'हाय, हाय' करने लगे। उसे देखनेमात्रसे वे पागल हो गए और उनकी वाणी लडखडाने लगी ॥ ८ ॥

भयावहं तद्रवमार्तिदां स्थितिं विश्रुत्य दृष्ट्वाऽथ तदन्यबालकाः ।
यावद्विपश्यन्ति तदैव सोऽग्रसत् तमेव कृष्णं शिशुमागतोऽन्तिकम् ॥९॥

उनके भयानक आर्तनादको सुनकर और क्लेशदायिनी परिस्थितिका अवलोकनकर दूसरे बालक ज्योही एक दूसरेकी ओर देखने लगे, त्योही उस बगुलेने निकट आकर शिशु-स्वरूप श्रीकृष्णको निगल लिया ॥ ९ ॥

सखा स आसी यदुभोजवंशिनां राज्ञः प्रभोः कंसदुरात्मनः प्रियः ।
नाम्ना बको दैत्य उपायविद्बहु बकस्वरूपं परिगृह्य चाऽऽगतः ॥१०॥

वह यदु-भोजवशी लोगोके प्रभावशाली राजा दुरात्मा कंसका प्रिय सखा बक-नामक दैत्य था। उसे अनेक प्रकारके उपाय ज्ञात थे। वह वहाँ बगुलेका रूप धारण करके आया था ॥ १० ॥

निहन्तुमेनं कृतधीर्दुराग्रहो ह्यप्राकृतं प्राकृतबालवत्स्थितम् ।
अमुं तदैवाऽगिलदात्मघातिनं यदाऽग्रसच्चञ्चुपुटेन निर्भयः ॥११॥

उसने श्रीकृष्णको मार डालनेका निश्चय किया था। उस दुराग्रही दैत्यने प्राकृत बालककी भांति खडे हुए उस अप्राकृत शिशुको, जो उसके शरीरका घात करनेमे समर्थ था, तत्काल निर्भय हो अपनी चोचसे पकडकर निगलना आरम्भ किया ॥ ११ ॥

दृष्ट्वा तमित्थं बकदैत्यभक्षितं तदस्य मित्राणि विमुग्धबालकाः ।
देहेन्द्रियाणीव विनात्मनः कृतान्यत्राऽभवंस्ते गतचेतसस्तदा ॥१२॥

श्रीकृष्णको इसप्रकार बक दैत्यका ग्रास बना देख उनके भोले-भाले मित्र ग्वाल-बाल वहाँ उसी तरह अचेत हो गए, जैसे, आत्माके बिना देह और इन्द्रियाँ अपनी जीवनी-शक्ति खो बैठती है ॥ १२ ॥

तस्योदरं प्राप्त इतोऽद्भुतः शिशुर्ममार नैवाऽत्र परं स्वयोगतः ।
विबुध्य भावं च तदस्य हृद्गतं ह्याविश्चकाराऽऽत्मनि वह्निमुल्बणम् ॥१३॥

इधर यह अद्भुत-शिशु बकासुरके उदारमे पहुँचकर भी अपनी योगशक्तिके प्रभावसे मरा नही । उस दैत्यके हार्दिक अभिप्रायको समझकर उसने अपने शरीरमे भयानक अग्नि प्रकट की ॥ १३ ॥

विशुद्धया धारणया प्रवर्धिता परात्मगा तत्त्वपरीक्षणक्षमा ।
सद्बुद्धिरेषाऽरणिकाष्ठवत्सुखं सृजत्यहो ! वन्हिमुपायमद्भुतम् ॥१४॥

विशुद्ध धारणासे बढ़ी हुई तथा तत्त्व-परीक्षणमे समर्थ परमात्माकी इस सत्-बुद्धिने उस अग्निस्वरूप अद्भुत उपायको उसी तरह प्रकट किया, जैसे अरणि-काष्ठ अनायास ही अग्निको उत्पन्न कर देता है । यह कैसा आश्चर्य हुआ ? ॥ १४ ॥

इत्थं कृते तत्र महात्मनाऽमुना प्रज्ज्वालितेऽग्नावुदरेऽस्य दाहके ।
स्वं तालुमूलं प्रदहन्तमक्षतं चच्छर्द तं तुण्डविलाद् द्रुतं बकः ॥१५॥

वहाँ उस परमात्माने जब ऐसा किया और उस दैत्यके उदरमे दाहक-अग्नि प्रज्वलित कर दी, तब उसके तालूका मूलभाग जलने लगा । फिर तो उस बगुलेने उस दाहक शिशुको तुरन्त ही अपने मुखके छिद्रसे उगल दिया । उसे किसी प्रकारकी क्षति नही पहुँची थी ॥१५॥

समीक्ष्य स स्वोदरतो विनिर्गतं तथाऽक्षतं तं पितरं विधेरपि ।
रुषाज्ज्वलन्नभ्यपतन्महाबली दैत्योऽत्र भूयोऽपि निहन्तुमीश्वरम् ॥१६॥

अपने उदरसे निकलकर अक्षत-भावसे स्थित उस विधाताके भी पिता शिशुको देखकर वह महाबली दैत्य रोषसे जल उठा । उसने पुन ईश्वररूप शिशुको मार डालनेके लिए उसपर आक्रमण किया ॥ १६ ॥

तमापतन्तं तत उग्रपौरुषं तुण्डायुधं कंससखं बकं हरिः ।
प्रगृह्य तत्तुण्डममोघकार्यसौ वशीचकाराऽहिमिवाऽस्य वाहनम् ॥१७॥

उसका पराक्रम भयानक था। चोच ही उसके लिए आयुध थी। कंसके मित्र उस बगुलेको अपने ऊपर आक्रमण करते देख अमोघ-कार्य करनेवाले श्रीहरिने उसकी चोच पकड ली और जैसे गरुड किसी सर्पको काबूमे कर लेता है, उसी प्रकार उसे वशीभूत कर लिया ॥ १७ ॥

**तुण्डस्य तस्याऽथ सतां गतिः पतिः पूर्वापरावंशवरौ विगृह्य तौ ।**
**ददार दोर्भ्यां ससुखं सखिष्वथो पश्यत्सु देवेषु मृतोऽयमुद्धतः ॥१८॥**

सत्पुरुषोके आश्रय तथा पालक श्रीहरिने उसकी चोचके ऊपर और नीचेके भागोको दोनो हाथोसे पकडकर अनायास ही चीर डाला। फिर उसके सखाओ तथा देवताओके देखते-देखते वह उद्दण्ड असुर मर गया ॥ १८ ॥

**तदाऽन्तरिक्षात्सुरलोकवासिनस्तदस्य सत्कर्म समीक्ष्य विस्मिताः ।**
**शिशुं बकारिं निजनन्दनोद्भवैः पुष्पैः समाकीर्य मुदाऽत्र तुष्टुवुः ॥१९॥**

उस समय देवलोक निवासी देवता आकाशसे भगवान्‌के उस सत्कर्मको देखकर आश्चर्य-चकित हो उठे। उन्होने शिशुस्वरूप, बक-नाशक, श्रीहरिके ऊपर अपने नन्दन-वनके फूल बरसाकर सानन्द उनकी स्तुति की ॥ १९ ॥

**वाद्यान्यवाद्यन्त तदानकादयः शङ्खाः प्रदध्मुः सुरहस्तवादिताः ।**
**स्तवैरनेकैश्च सुरर्षिभिः कृतैर्व्याप्तं च वृन्दाविपिनं व्यशोभत ॥२०॥**

उस दैत्यके मारे जानेपर नगाडे आदि बाजे बज उठे। देवताओके हाथ और मुख-द्वारा बजाये गये शख अपनी ध्वनि फैलाने लगे। अनेकानेक देवर्षियो द्वारा किये गए स्तोत्रो-द्वारा व्याप्त हुआ वह वृन्दावन बड़ी शोभा पाने लगा ॥ २० ॥

**तत्कालकल्पाद्बकदैत्यदुर्मुखान्मुक्तं सखायं शिशुरूपमीश्वरम् ।**
**संप्राप्य गत्वाऽस्य समीपमर्भकाः प्रेम्णा समालिङ्ग्य मुदाऽभिरेभिरे ॥२१॥**

उस कालसदृश बक दैत्यके भयकर मुखसे छूटे हुए सखा शिशुरूपधारी ईश्वरको पाकर ग्वाल-बालोने उनके समीप जा प्रेम और प्रसन्नतासे उनको हृदयसे लगा लिया ॥ २१ ॥

**यथाभवत्यत्र गतिर्गतात्मनां देहेन्द्रियाणां कलुषा घृणास्पदा ।**
**भूत्वाऽथ तेषामपि तत्र तत्स्थितिस्तं प्राप्य भूयोऽपि रराज शान्तिदा ॥२२॥**

आत्माको विना शवस्वरूप देह और इन्द्रियोकी जैसी कलुषित और घृणास्पद स्थिति हो जाती है, वैसी ही स्थिति पहले उन बालकोकी भी हो गई थी। परन्तु भगवान्‌को पुन. प्राप्त करके फिर उनकी शान्तिदायिनी स्थिति सुशोभित होने लगी ॥ २२ ॥

शष्पाणि सम्यक् चरतः स्वकान् स्वकान् वत्सान् समाहूय ततस्त्विमेऽर्भकाः ।
अभ्यागमन् साग्रजमेनमद्भुतं शिशुं पुरस्कृत्य गृहान् सुखान्विताः ॥२३॥

तदनन्तर सुखपूर्वक घास चरनेमे लगे हुए अपने-अपने बछडोको बुलाकर ये गोप-बालक बड़े भाई बलराम सहित श्रीकृष्णको आगे करके सानन्द घरोको लौटे ॥ २३ ॥

तदैव ते नन्दगृहाङ्गणं श्रिताः प्रेम्णाऽस्य सद्वीर्यगुणोपबृंहितम् ।
अथोऽङ्कितं गानमयं सुकर्म तज्जगुर्मुदा तद्गतकायमानसाः ॥२४॥

उस समय नन्द-भवनके आँगनमे वे सब ग्वाल-बाल एकत्र हो गए और श्रीकृष्णके उत्तम बल पराक्रम एव सद्गुणोसे बढे-चढे निम्नाकित गीतमय सत्कर्मको सानन्द गाने लगे। उन सबके शरीर और मन श्रीकृष्णमे ही लगे थे ॥ २४ ॥

जयति जयति शक्तिः सद्गतेरस्य नित्यं भवति भवति भव्यं ह्याश्रितानां तदस्य ।
दिनकरदुहितुस्तत्तीरदेशं समेत्य बकमसुरममेयं यो जघानाऽद्य भूयः ॥२५॥

'सत्पुरुषोके आश्रयभूत उन भगवान्‌की शक्तिकी सदा ही जय हो, जय हो ! । जिनकी शरणमे आये हुए लोगोका नित्य ही मङ्गल होता है, मङ्गल होता है तथा जिन्होने सूर्य-कन्या यमुनाके तट-प्रान्तमे पहुँचकर अमेय-शक्तिशाली बकासुर नामक एक दैत्यका आज फिर वध किया है' ॥ २५ ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
षट्चत्वारिंशसर्गोऽयमगात्काव्ये स्तवात्मके ॥२६॥

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्ण चरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे यह छियालीसवाँ सर्ग पूरा हुआ ॥ २६ ॥



# सप्तचत्वारिंशः सर्गः

[ भगवत कर्मणि गोपवर्याणा विचिकित्सा । ]

( स्रग्विणीवृत्तम् )

तैःप्रगीतं तथाभूतमाश्चर्यकृद्गोपकैर्विश्रुतं गीतमेतत् क्षणात् ।
पूरितं तद्वनं वासभूतं गवां शोभते स्माऽव्ययं सत्सु हृद्यं सदा ॥१॥

उन गोपबालको द्वारा गाया गया वह पूर्वोक्त आश्चर्यजनक विख्यात गीत क्षण-भरमे गोपोके निवास-स्थान उस वृन्दावनमे व्याप्त हो गया। सत्पुरुषोको प्रिय लगनेवाला वह अक्षय गीत वहाँ निरन्तर शोभा पाने लगा ॥ १ ॥

ते ततो विस्मितास्तन्निशम्य क्षणं गोपवृद्धाः शिशुस्त्रीभिरेवाऽन्विताः ।
उत्सुकाः सर्वथाऽऽलोकनैः सद्गतिं तं पिबन्तो बभुर्नेत्रपात्रैर्निजैः ॥२॥

उसको सुनकर चकित हुए बडे बूढे गोप-बालको और स्त्रियोके साथ क्षण-भरमे उत्कण्ठित हो, सज्जनोके आश्रयभूत उन भगवान्‌का सर्वथा अवलोकन करके उनकी रूप-माधुरीका अपने नेत्र-पुटोद्वारा पान करते हुए बडी शोभा पाने लगे ॥ २ ॥

आदराद्बालकं प्रेक्ष्य भूयोऽपि तेऽतृप्ततर्षाः पुनर्जीवितं भाग्यतः ।
मन्यमानाः सुखं नन्दगोपाङ्गणे सत्सभां कारयित्वाऽऽवसंस्तेऽथ ताम् ॥३॥

भाग्यसे पुनर्जीवित हुए उस बालकको आदर पूर्वक देखकर उनकी दर्शन-पिपासा शान्त नही होती थी। वे मन ही मन सुख मानते हुए नन्दगोपके आँगनमे सज्जनोकी सभाका आयोजन करके उसमे बैठे ॥ ३ ॥

तत्र कैश्चित्ततः स्वाङ्क आधाय तं स्नेहतोऽभाणि सभ्या ! वयं वस्तुतः ।
भाग्यवन्तोऽनिशं गोपकाः स्माऽत्र यत् प्रापितोऽतर्क्यशक्तिः शिशुः शान्तिदः ॥४॥

वहाँ कुछ लोगोने श्याम-शिशुको बडे स्नेहसे अपनी गोदमे बिठाकर कहा—'सभामे बैठे हुए गोपगण ! हमलोग वस्तुत सदा ही यहाँ बडे भाग्यवान हैं, जोकि हमे यह अतर्क्य-शक्तिशाली शान्तिदायक शिशु प्राप्त हो गया है ॥ ४ ॥

पश्यताऽस्य व्रजेशस्य पुत्रस्य यन्मृत्युदा हेतवोऽसंख्यकाश्चाऽभवन् ।
दृष्टमस्माभिरादौ व्रजेऽत्राऽपि भो क्षेममेवाऽभवत् किन्तु भाग्यैर्हि नः ॥५॥

'देखो, व्रजराजके इस पुत्रके लिए असंख्य मृत्युदायक कारण प्रकट हुए। हमने पहले भी देखा है और यहाँ भी हम देख रहे हैं। परन्तु हमारे भाग्यसे इस शिशुका सदा कल्याण ही हुआ है ॥ ५ ॥

शत्रुभिर्दुष्टकैस्तैः पुरा दुष्कृतं यत्कृतं तत्फलं प्राप्तमेतद्विधम् ।
येन तेषामभूद्विप्रियं सर्वथा दुष्टता भक्षयत्येव तान् पश्यत ! ॥६॥

उन दुष्ट-शत्रुओने पहले जो दुष्कर्म किया उसका फल उन्हे उनके कर्मानुसार मिल गया। जिससे सर्वथा उनका अप्रिय ही हुआ है। देखो, उनकी दुष्टता उन्हे ही खाए जा रही है ॥ ६ ॥

आगता यं निहन्तुं हि दुष्टाः स्वयं ते पतङ्गा यथाऽग्नौ विनश्यन्ति च ।
क्रूररूपा इमे नैनमाक्रामितुं शक्नुवन्त्यागताः किन्तु चाऽऽयान्ति च ॥७॥

इसे मारनेके लिए जो दुष्ट लोग आए, वे स्वयं ही आगमे गिरे हुए पतगोके समान नष्ट हो गए। आने पर वे क्रूर-रूपधारी असुर इसको दबा तो नही पाते हैं, परन्तु इसपर आक्रमण करनेके लिए आते अवश्य हैं ॥ ७ ॥

ब्रह्मकल्पा महान्तोऽपि धन्या हि ते भावि ये संवदन्त्यत्र सत्यं सदा ।
गर्ग एवाऽवदत् यत्पुरा नोऽत्र भो ! तत्तथैवाऽभवद् दुर्हृदस्ते मृताः ॥८॥

'ब्रह्माके समान सर्वज्ञ वे महात्मा भी धन्य हैं, जो यहाँ सदा सत्य-भविष्य बताते हैं गर्गजीने ही यहाँ पहले हमलोगोसे जो कुछ कहा था वह सब ज्यो का त्यो घटित हुआ है। अन्तमे वे शत्रु ही मारे गए हैं' ॥ ८ ॥

तद्वयं त्रासमुत्सृज्य दुष्टोद्भवं शङ्करं शङ्करं चिन्तयन्तः सदा ।
तद्गुणानेव गीत्वा सुखं स्वैर्जनैः सार्धमत्रापि तिष्ठेम तद्वीक्षिताः ॥९॥

'अत' हमलोग दुष्टोसे प्राप्त होनेवाले भयको छोड़कर सदा कल्याणकारी भगवान् शङ्करका चिन्तन करते हुए स्वजनोके साथ सुखपूर्वक उन्हींके गुण गा-गाकर यहाँ भी उनकी कृपा दृष्टिसे सुरक्षित रहे' ॥ ९ ॥

सन्नन्दनन्दा उपनन्दमुख्या इत्थं हरेः कीर्तिकथां प्रगाय ।
आनन्दमग्ना भववेदनां च नैवाऽस्मरन्नस्य दयेद्धचित्ताः ॥१०॥

सन्नन्द, नन्द और उपनन्द आदि गोप इस प्रकार श्रीहरिकी कीर्ति-कथा गाकर आनन्दमग्न हो, उन्हीकी दयासे समृद्धचित्त होकर कभी सासारिक वेदनाका स्मरण नही करते थे ॥ १० ॥

**गोप्यस्तथैवाऽर्भकसंयुतास्ता गृहे गृहे तच्छिशुकृत्यचर्चाम् ।**
**कुर्वन्त आसन् मुदिताः सुखाब्धौ निमज्जमाना हृदयं समर्प्य ॥११॥**

इसीप्रकार गोपाङ्गनायें घर-घरमे अपने बालको सहित उस नन्द-शिशुके चरित्रोकी चर्चा करती हुई उन्हीको अपना हृदय समर्पित कर सुखके सागरमे निमग्न हो प्रसन्न रहा करती थी ॥ ११ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**अगात्सर्गोऽप्ययं सप्तचत्वारिंशः स्तवात्मके ॥१२॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्ण चरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे यह सैतालीसवाँ सर्ग पूरा हुआ ॥ १२ ॥



# अष्टचत्वारिंशः सर्गः

[ भगवतो वृन्दावनविहार । तत्र सखिभि सम नानाविधाभि. खेलाभि खेलनम् ]

( वसन्ततिलकावृत्तम् )

**गोपालराजतनयः स्वविनोदधन्यो जागर्ति नित्यमसमो निजकालशक्त्या ।**
**यस्मिन्नमूर्ते इह मूतजगद्विकारा भावाश्च तेऽपि जलबुद्बुदवद्भवन्ति ॥१॥**

गोपालराज-कुमार श्रीकृष्ण अपने लीला-विनोदके कारण धन्य हो रहे हैं। उनकी समता नही है। वे अपनी कालशक्तिद्वारा सतत जागरूक रहते हैं। यद्यपि वे अमूर्त हैं, तथापि उनमे मूर्त जगत्‌के भाव-विकार जलमे बुलबुलेके समान प्रकट होते रहते है ॥ १ ॥

**वृन्दावने स्वसखिभिर्वृत एष तिष्ठन् कुर्वंश्च सज्जनहृदाऽप्यवितर्क्यं कर्म ।**
**आविश्चकार बहुधा सुरसाधुवर्गेष्वात्मानमग्निरिव दारुषु हन्त ! योऽत्र ॥२॥**

वृन्दावनमे अपने सखाओसे घिरे रहकर वे श्याम ऐसे ऐसे कर्म करते थे जो सत-महात्माओके चित्तके लिए भी अतर्क्य थे। उन्होने देवताओ तथा साधु-समुदायमे अपने आपको बहुविध रूपोमे प्रकट किया था। ठीक वैसे ही, जैसे एक ही अग्नितत्त्व अपनेको विविध काष्ठोमे प्रकट करता है ॥ २ ॥

**सोऽयं कदाचिदुषसि प्रतिबुध्य गोष्ठाद्वत्सान् विमुच्य सुविभूषित आत्मतन्त्रः ।**
**आदाय शिक्यनिहितं हितमात्मभक्ष्यं तद्भक्षणार्थमिह चारयितुं जगाम ॥३॥**

वे ही ये स्वतन्त्र भगवान् श्रीकृष्ण एक दिन प्रात काल ब्रह्म-वेलामे जाग उठे और वस्त्राभूषणोसे विभूषित हो गोष्ठसे बछडोको खोलकर छीकेमे रखे हुए अपने लिए हितकर कलेवेको वनमे ही ग्रहण करनेके उद्देश्यसे लेकर उन्हे चरानेके लिए गये ॥ ३ ॥

**किन्त्वग्रजस्य तदमुष्य बलस्य पुण्यं जन्मर्क्षमापतितमद्य तदर्थमेषः ।**
**नैवागमत् सममिहाऽनुजवत्सपेन संरुद्ध एव जननीभिरसौ गृहेषु ॥४॥**

किन्तु उस दिन उनके बडे भाई बलरामका पुण्यमय जन्मनक्षत्र आ गया था, उसके कारण वे अपने छोटे भाई वत्सपाल कृष्णके साथ वनमे नही गए। माताओने उन्हे घरमे ही रोक लिया था ॥ ४ ॥

**आस्तां ! तदात्मभवनप्रतिहारमेत्य निष्कास्य कक्षगतशृङ्गमुदार एषः ।**
**श्वासानिलैर्विधिनिषेधमयैर्जगद्वत् तत्पूरयन् प्रियसखांस्तत आजुहाव ॥५॥**

अस्तु, ये उदार श्रीकृष्ण अपने घरके दरवाजेपर आकर कक्षमे रखे हुए सिंगेको निकालकर, जैसे विधि-निषेधमय वेद वाक्यरूप-निश्वसितसे जगत्को पूरित करते हैं, उसी प्रकार अपनी श्वास-वायुसे उस वाद्ययन्त्रको पूरित करके प्रिय-सखाओको पुकारने लगे ॥ ५ ॥

**तच्छृङ्गनाद उषषि प्रथिमानमेत्य बभ्राम हन्त ! भुवनान्यभितो विधाय ।**
**आब्रह्मकीटभवजीवगतान् गुणज्ञांस्तद्वादकस्य कृतिदर्शनलुब्धवृत्तीन् ॥६॥**

उस कालमे प्रकट हो प्रथिमा ( वृद्धि ) को प्राप्त होकर वह शृङ्गनाद सारे भुवनमे सबओर फैलने लगा। उसने ब्रह्मासे लेकर कीटपर्यन्त समस्त गुणज्ञ सासारिक जीवोको उसके बजानेवाले कला-कारके चरित्रोको देखनेके लिए लुब्ध कर दिया ॥ ६ ॥

**आकर्षितास्तत इमेऽद्य भृशं विमुग्धा आजग्मुरित्थमसमं तमरण्यभागम् ।**
**स्थित्वाऽन्तरिक्ष इह तेऽपि शिशोरमुष्य लीलां विलोकयितुमुत्सुकतामगृह्णन् ॥७॥**

उस शृङ्गनादसे इसप्रकार आकर्षित तथा अत्यन्त मुग्ध हुए वे दिव्यलोकोके प्राणी उस अनुपम वन प्रान्तमे आये और आकाशमे स्थित हो उस श्याम-शिशुकी लीलाका अव-लोकन करनेके लिए उन्होने अतीव उत्कण्ठा ग्रहण की ॥ ७ ॥

**संश्रुत्य तद्रवमितोऽस्य वयस्यबाला गोवत्सपास्तदनु संस्मृतगोपकृत्याः ।**
**स्वं प्रातराशममृतं जननीप्रदत्तं संगृह्य चान्वगुरमुं परिमुच्य वत्सान् ॥८॥**

सिंगेकी उस ध्वनिको सुनकर बछडे चरानेवाले श्याम-सखा ग्वाल-बाल अपने गोपकृत्यका स्मरण करके माताओके दिये हुए अपने अमृतोपमा कलेवेको लेकर उसके पीछे बछडे खोल चल दिये ॥ ८ ॥

**आगत्य चाऽस्य चरणद्वयसन्निधिं तं सम्प्राप्य योगिमुनिभिश्च सुखादलभ्यम् ।**
**आश्लिष्य तत्प्रणयभारनता वयस्या नेत्रैः पिबन्त इव कृष्णममुं विरेजुः ॥९॥**

योगी-जन भी जिसे सरलतासे नही पा सकते उस श्यामके युगल चरणारविन्दोके सामीप्यको पाकर वे अपने नेत्रपुटोसे श्रीकृष्णकी रूप-माधुरीका पान करते हुए सुशोभित होने लगे ॥ ९ ॥

**वत्सा गता इत उपेन्द्रमिमं निरीक्ष्य तद्वत्सवर्गमभितो मिलितुं गुणाढ्याः ।**
**इत्थं ममज्जुरिह बालकवत्सवर्गाः संख्यामतीत्य तदरण्यनिभे सुखाब्धौ ॥१०॥**

गुणवान् बछडे इन उपेन्द्रका दर्शन करके उनके वत्स-समुदायमे मिलनेके लिए चले गए। इस प्रकार बालको और बछडोके समूह, जो असख्य थे, उस वनके सुखके तुल्य सागरमे निमग्न हो गये ॥ १० ॥

तद्ब्रह्म केवलमनन्तमनेकरूपैरंशैः स्वजीवनिवहैः पशुबालकैस्तैः ।
चिक्रीड तत्र वयमत्र यथा कुभावैः क्रीडाम इत्थमनिशं त इव स्वभावैः ॥११॥

वह केवल ( अद्वितीय ) अनन्त ब्रह्म अपने अनेक रूपवाले अशभूत जीव-समुदायोके प्रत्येक उन गोपबालकोके साथ उसी प्रकार क्रीडा करने लगा, जैसे यहाँ हमलोग कुभावोके साथ अपने स्वभावानुसार खेला करते हैं ॥ ११ ॥

तस्येच्छया तत इमे स्फुरदात्मरूपाः प्राग्भूषिता अपि गृहे जननीभिरेषाम् ।
आत्मानमत्र च पुनर्विविधैरुपायैः संभूष्य तेन सममद्य बभुर्निकामम् ॥१२॥

तदनन्तर भगवान्की इच्छासे प्रेरित हो ये आत्मस्वरूपसे प्रकाशित होनेवाले ग्वाल-बाल, यद्यपि घरपर अपनी माताओ द्वारा विभूषित किये गए थे, तथापि पुन विविध उपायो-द्वारा अपने आपको अलकृत करके उन श्यामसुन्दरके साथ आज विशेष शोभा पाने लगे ॥१२॥

प्रागेष आत्मनिधिरव्यय ईशकृष्णो गुञ्जावतंसकृतभूषणधातुचित्रः ।
स्वं कृष्णमेघनिभगात्रमपि स्वयुक्त्या श्वेतं यथा परिनिदर्श्य सखीन् रराज ॥१३॥

ये अविनाशी ईश्वर कृष्ण समस्त जीवात्माओकी निधि हैं। पहले इन्होने ही गुञ्जा-का कर्णभूषण धारण करके विविध धातुओसे अपनेको चित्रित किया। यद्यपि उनका श्रीविग्रह मेघके समान श्याम था, तथापि ये युक्तिसे अपने-स्वरूपको सखाओके समक्ष श्वेत-रूपमे दिखाकर सुशोभित हुए ॥ १३ ॥

पश्चाद् भ्रमन् स इह बालकमण्डलीषु संदृश्य तत्र च कलापिकलापमुक्तम् ।
पिच्छांशमेकमवगृह्य मुदा तमेष आधात् स्वमूर्धनि समीड्यपदो महात्मा ॥१४॥

तत्पश्चात् बालमण्डलीमे रहकर इस वनमे भ्रमण करते हुए श्यामसुन्दरने वहाँ मोरसमूहोके द्वारा परित्यक्त एक पख देखा और उसे प्रसन्नतापूर्वक लेकर अपने शिर-पर धारण कर लिया। वे भगवान् परमात्मा है और बड़े-बड़े ऋषि-मुनियोके द्वारा उनके चरणारविन्दोकी स्तुति की जाती है ॥ १४ ॥

ध्यानायनं भवदवानलपीडितानामाब्रह्मकीटगतजीवसमूहकानाम् ।
शान्तिप्रदं स्ववपुरद्य मलघ्नमेवं सम्पाद्य सोऽत्र शुशुभे कृतदिव्यलीलः ॥१५॥

ससाररूपी दावाग्निसे पीडित जो ब्रह्मासे लेकर कीटपर्यन्तके जीव-समूह हैं, उनके लिए ध्येय, शान्तिप्रद तथा मलविक्षेप आदिके नाशक अपने श्रीविग्रहको ऐसे सुन्दर रूपसे विभूषित करके दिव्यलीलाका आविष्कार करनेवाले वे भगवान् मुकुन्द वहाँ वृन्दावनमे अद्भुत शोभा पा रहे थे ॥ १५ ॥

दृष्ट्वा तथाविधममुं प्रियबालकास्ते ह्यात्मानमप्यतिमनोज्ञमभूषयंश्च ।
पुष्पैः प्रबालफलकैः स्तवकैश्च पिच्छैर्गुञ्जासुवर्णमणिधातुभिरिष्टकाचैः ॥१६॥

उन श्याम-सुन्दरको इस प्रकार विभूषित हुआ देख उनके प्रिय सखा ग्वाल-बालोने भी अपने आपको विभूषित करके अत्यन्त मनोरम बना लिया। उन्होने फूलो, नूतन-पल्लवो, फलो, पुष्पगुच्छो, मोरपखो, गुञ्जाओ, सुवर्णो, मणि-रत्नो, धातुओ तथा अपनी पसन्दके काँचो ( शीशो ) द्वारा अपना शृङ्गार किया था ॥ १६ ॥

ते तद्विधाः सुकविनाटकहास्यपात्राणीवाऽऽबभुस्तदनु खेलन उत्सुकाश्च ।
अन्योन्यवस्तुहरणे दृढदत्तचित्ताश्चिक्रीडुरेवममुना सममत्र कामम् ॥१७॥

वे उस प्रकार सजकर श्रेष्ठ-कविके द्वारा निर्मित नाटकोके हास्य अभिनेताकी भाँति शोभा पाने लगे। तत्पश्चात् खेलनेके लिए उत्सुक हो, वे एक दूसरेकी वस्तुओके अपहरणमे दृढतापूर्वक दत्तचित्त हो गए और श्यामसुन्दरके साथ वहाँ इच्छानुसार खेलने लगे ॥ १७ ॥

केनाऽपि कस्यचिदहो! प्रियशिक्यमेव प्रेम्णा ह्यहारि तत एष हरन्तमेनम् ।
विज्ञाय तं त्वभिगतो लघु तद्ग्रहीतुं चिक्षेप तत् स पुनरन्य इतो जहार ॥१८॥

अहो! किसी बालकने किसी दूसरे बालकके प्रिय छीकेको प्रेमसे ही हर लिया। तब उसने उस अपहरण करनेवालेको पहचान कर तुरन्त उसे वापस लेनेके लिए उसका पीछा किया। यह देख उसने उस छीकेको फेंक दिया। फिर वहाँसे दूसरा ही उसे उठा ले गया ॥ १८ ॥

एवं भ्रमन् हृतपदार्थक एष बालो दीनो यदाऽभवदिमे तदिमं प्रदर्श्य ।
संल्लोभ्य तं पुनरिह प्रविहस्य तावत्तस्मै ददुः स्वहृतवस्तु सुखेन भूयः ॥१९॥

इस प्रकार जिसकी वस्तु चोरी गई थी वह बालक भटकता हुआ, जब दु खी होने लगा, तब इन बालकोने वह वस्तु उसे दिखाकर और उसके लिए फिर बार-बार उसे लुभाकर जोर-जोरसे हँसते हुए वह अपहृत-वस्तु फिर उसे सुखपूर्वक लौटा दी ॥ १९ ॥

द्रष्टुं यदैव भगवांस्तदरण्यशोभां याति स्म दूरममुमत्र निरीक्ष्य बालाः ।
तत्स्पर्शने स्थिरधियो धृततीव्रकामाः संस्पृश्य तं मुमुदिरे परिधावमानाः ॥२०॥

जब भगवान् वनकी शोभा देखनेके लिए दूर निकल जाते तब उन्हे देखकर वे ग्वाल बाल उन्हे छूनेका विचार करके उनके स्पर्शकी तीव्र कामना मनमे लिए दौडते और उन्हे छूकर आनन्दित होते थे ॥ २० ॥

वेणून् प्रवाद्य मधुरं ससुखं प्रगाय चिक्रीडुरत्र बहुधा व्रजगोपबालाः ।
आध्माय शृङ्गमपि केचिदिमे सहर्षं तद्गुञ्जितं वनमकार्षु रहो! तदानीम् ॥२१॥

वेणु बजाकर और सुखपूर्वक मधुर गीत गाकर वे व्रजगोप-बालक वहाँ नाना प्रकारकी क्रीडाये करने लगे। कितने ही बालक सहर्ष सीगे बजाकर उस समय उस वनको गुञ्जायमान कर देते थे ॥ २१ ॥

**भृङ्गैः समं तदनुकृत्य जगुश्च केचित् केचिद् द्रुतं परभृतैः कुहुरित्यगायन् ।**
**केश्चित् खगानभिविलक्ष्य खगांस्तथैव कृत्वा प्रसार्य भुजयुग्ममिमेऽप्यधावन् ॥२२॥**

कुछ बालक भ्रमरोके साथ उनकी बोलीका अनुकरण करके गुनगुनाते थे। कुछ कोकिलोके साथ उनकी कूककी नकल करते हुए कुहू, कुहूके, स्वरमे गाते थे। कुछ ग्वाल-बाल आकाशमे उडते हुए पक्षियोको लक्ष्य करके वैसी ही चेष्टा करते हुए अपनी दोनो भुजाये पख सी फैलाकर दौडते थे ॥ २२ ॥

**दृष्ट्वा स्थलेऽपि च जलेऽपि च संचरन्तं कैलासशृङ्गधवल कलहंसवृन्दम् ।**
**प्रेम्णा स्वयं तदनुकृत्य विलासहासैर्गत्या च जग्मुरिह तच्च विहस्य केचित् ॥२३॥**

स्थल और जलमे भी विचरते हुए हिमाच्छादित कैलाश-शिखरके समान श्वेतवर्णवाले कलहस समूहको देखकर कुछ ग्वाल-बाल हास विलास और गतिके द्वारा प्रेमपूर्वक स्वय उसकी नकल करके हँसते हुए उसके पीछे-पीछे जाते थे ॥ २३ ॥

**दृष्ट्वा बकान् सततलक्ष्यनिबद्धचित्तान् गत्वा च तत्र निभृतं धृतधैर्यसाराः ।**
**बालास्तु तांश्च परिहस्य तथैव शान्त्या तत्राऽवसंस्तदनुकृत्य हरिं स्मरन्तः ॥२४॥**

बगुलोको सदा लक्ष्यमे निबद्ध-चित्त देख वहाँ जाकर एकान्तमे धैर्यधारण करके गोपबालक उन बगुलोकी हँसी उडाकर उन्हीके समान उनके ध्यानका अनुकरण करते हुए वहाँ भगवान् हरिके स्मरणमे सलग्न होकर बैठ जाते थे ॥ २४ ॥

**नृत्यन्तमत्र विधिवत् सकलं कलापं सम्यक् प्रसार्य खगवर्यकलापिनं तम् ।**
**संप्रेक्ष्य केचिदमुमेव हसन्त उच्चैर्बाहू प्रसार्य ननृतुर्ह्यनुकृत्य तद्वत् ॥२५॥**

उस वनमे अपनी सारी पाँखे भली-भाँति फैलाकर विधिवत् नृत्य करते हुए श्रेष्ठ पक्षी मयूरको देखकर कुछ बालक उसीकी हँसी उड़ाते दोनो बाँहे ऊपर फैलाकर उसीका अनुकरण करते हुए वैसा ही नृत्य करने लगते थे ॥ २५ ॥

**शाखामृगानथ विलोक्य तदर्भकांश्च लाङ्गूलमध्यमवगृह्य विकृष्य चेमान् ।**
**आक्रष्टुमन्तिकमशक्ततयाऽऽत्मसत्वात्तैरेव सार्धमभवंस्तरुगाश्च केचित् ॥२६॥**

कोई कोई गोपबालक बन्दरो और उनके बच्चोको देखकर उनकी पूँछ पकड लेते और अपनी शक्तिसे उन्हे पास खीच लानेमे असमर्थ होनेके कारण स्वय ही उनके साथ खीचकर वृक्षपर चले जाते थे ॥ २६ ॥

स्वांस्तादृशानभिविलक्ष्य निजैर्विकारैः क्रोधात्कृतैरुपहसन्त इमान् कपींश्च ।
केचित् क्षणात्तदनुकृत्य हसन्त उच्चैरुत्पेतुरत्र विटपाद्विटप तथैव ॥२७॥

अपने बच्चोको इस प्रकार सताए जाते देख वे बानर जब क्रोधपूर्वक कटकटाते और मुँह बनाते तो उन विकारोसे युक्त इन कपियोका उपहास करते हुए कुछ ग्वाल-बाल जोर जोरसे हँसते और उनकी नकल करके क्षण-भरमे ऊँचे उछलकर एक शाखासे दूसरी शाखा पर पहुँच जाते थे ॥ २७ ॥

दृष्ट्वाऽथ केचिदिह भेकगणां सुदूरमुल्लङ्घ्य यान्तमनुकृत्य तथा ह्यकुर्वन् ।
केचित्तु निर्झरजलेषु सरित्सु चैव स्नात्वा विशुद्धतनवो रुचिरा अभूवन् ॥२८॥

कुछ ग्वाल-बाल मेढकोके समूहको बहुत दूरतककी भूमिको कूदकर लाँघते और जाते देख उनका अनुकरण करके स्वय भी वैसा ही करते थे। कोई-कोई गोप-शिशु झरनो और नदियोके जलोमे नहाकर शुद्ध हो, सुन्दर हो जाते थे ॥ २८ ॥

छायां निरीक्ष्य विधृतात्मगतिं शुभां स्वां केचित्तु तामपि हसन्त इमे त्वखेलन् ।
कस्त्वं निगद्य तदिमं प्रतिनादमस्य श्रुत्वा पुनस्तमपि शेपुरमीषु केचित् ॥२९॥

इनमेसे कोई बालक अपनी गतिका अनुसरण करने वाली अपनी ही सुन्दर परछाईं देखकर उसकी भी हँसी उडाते हुए खेलते थे। कोई पूछ बैठते—'तुम कौन हो'? फिर जब वनमे अपनी ही शब्दकी प्रतिध्वनि सुनते तो उस ध्वनि करने वालेको ही कोसते थे ॥ २९ ॥

इत्थं विशुद्धमनसो व्रजबालकास्ते यैः पूर्वजन्मनि कृतं तप आत्मनीनम् ।
चिक्रीडुरत्र हरिणा सममस्य दास्यं सम्पाद्य दुर्लभतरं सुभगत्वमाप्य ॥३०॥

इस प्रकार वे विशुद्ध चित्तवाले व्रजबालक, जिन्होने पूर्वजन्ममे अपने लिए हितकर तप किया था, भगवान्के साथ क्रीडा करते थे। वे उसका दास्य-भाव प्राप्त करके अत्यन्त दुर्लभ सौभाग्यके भागी हो गए थे ॥ ३० ॥

तत्क्रीडनं भुवनवन्द्यममोघमासीदानन्दधाम वचसा मनसाप्यतर्क्यम् ।
यद्ब्रह्म चिन्मयमुशन्ति बुधास्तदेव चिक्रीड यैः सममिहाऽपि सखिस्वरूपम् ॥३१॥

उनकी वह भुवनवन्द्य क्रीडा अमोघ थी। आनन्दका धाम हो गई थी और वाणी तथा मनके लिए भी अतर्क्य थी। विद्वानलोग जिस चिन्मय ब्रह्मकी कामना करते है, वही वहाँ उन बालकोके साथ उन्हीका सखा बनकर क्रीड़ा कर रहा था ॥ ३१ ॥

अनेकजन्मोपचितैः शुभैः शिवैर्ब्रह्मर्षिभिश्चाऽपि यदस्य पद्रजः ।
न लभ्यते ध्यानपथस्थितैरपि तदेभिरेवं व्यतनोत् स्वकं यशः ॥३२॥

अनेक जन्मोके उपार्जित शुभ-कर्मोके फलस्वरूप शिव, ब्रह्मा तथा ऋषि, मुनि ध्यानस्थ होकर भी जिसके चरणोकी धूल नही उपलब्ध कर पाते, वही ब्रह्म इन बालकोके साथ अपने यशका विस्तार कर रहा था ॥ ३२ ॥

**व्रजगोपालबालानां तस्मादत्र कथैव का ।**
**तल्लीलावक्तृश्रोतृणां साभवेद्भक्तिवर्धिका ॥३३॥**

अत व्रजके गोप-बालकोकी यहाँ कथा ही क्या कही जाय । जो उनकी लीला ही वक्ता और श्रोताओकी उत्तम-भक्तिको बढ़ानेवाली है ॥ ३३ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**अगात् सर्गोऽप्ययं चाऽष्टचत्वारिंशः स्तवात्मके ॥३४॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे यह अडतालीसवाँ सर्ग पूरा हुआ ॥ ३४ ॥



# एकोनपञ्चाशः सर्गः

[ श्रीरामेण विना गोवत्साश्चारयितु गतस्याऽस्य भगवतो हिंसनार्थं तत्राऽघासुरस्याऽऽगमनम् । तस्याऽजगररूपधारणम् । तन्मुखे गोवत्सपाना तेषां श्रीकृष्णस्य च प्रवेश । ]

( भुजङ्गप्रयातवृत्तम् )

प्रसिद्धो धरायामघो नाम दुष्टस्तदासीन्महान् दैत्य एको विशिष्टः ।
बलिष्ठश्च हिंस्रस्तथा कामरूपः प्रियो भोजराजस्य मित्रं कुलघ्नम् ॥१॥

पृथ्वीपर अघासुर नामसे प्रसिद्ध एक दुष्ट महान् दैत्य रहता था, जिसका असुरोमे विशिष्ट स्थान था । वह जैसा बलिष्ठ था, वैसा ही हिसक भी था । उसमे इच्छानुसार रूप-धारण करनेकी शक्ति थी । वह भोजराज कसका कुलघातक मित्र था ॥ १ ॥

भयेनैव यस्य प्रसिद्धाः सुराश्च समुद्विग्नचित्ता भवन्ति स्म सर्वे ।
कदाऽयं म्रियेतेति पीतामृतास्ते शपन्ति स्म तं यस्य वीर्येण पिष्टाः ॥२॥

उसके भयसे ही समस्त सुप्रसिद्ध देवता भी उद्विग्न चित्त रहते थे । वे उसके बल-पराक्रमसे ऐसे पीसे गये थे कि अमृत पीनेके बाद भी अपना जीवन सुरक्षित नही मानते थे और 'यह दुष्ट कब मर जायेगा' इस प्रकार उसे शाप दिया करते थे ॥ २ ॥

गतोऽसौ कदाचित् स्वमित्रस्य सद्म सुखं कंसराजेन संस्थापितश्च ।
कथास्तत्र शुश्राव तस्याऽग्रजौ द्वौ हतौ गोपबालेन कृष्णेन चेति ॥३॥

एक दिन वह अपने मित्र कंसके भवनमे गया । राजा कंसने बडे सुखसे अपने पास बिठाया । वहाँ उसे यह चर्चा सुननेको मिली कि उसके दो अग्रज, बहिन और भाई, गोपबालक कृष्णके हाथसे मारे गये हैं ।। ३ ॥

जगत्ख्यातवीर्याऽग्रजा पूतना सा बकश्चाऽग्रजो घोरवीर्यो ममाऽसौ ।
कथं वा मृतौ तस्य बालस्य हस्ताद्विचार्याऽघ एवं बभूद् ध्यानमग्नः ॥४॥

'मेरी बडी बहिन वह पूतना थी, जिसका बल, पराक्रम संसारमे विख्यात था तथा मेरा बडा भाई वह बकासुर था, जिसका बल, विक्रम भयकर था । वे दोनो उस गोप-बालकके हाथसे किस तरह मरे ? यह विचार कर अघासुर ध्यानमग्न हो गया ॥ ४ ॥

तदा तस्य दुष्टस्य नेत्रान्तराले स्फुरज्जोतिरेकोऽर्भकश्चित्स्वरूपः ।
सदानन्ददातोदभूदेष तस्मै प्रदायाऽतुलं सौख्यमक्रीडदत्र ॥५॥

इसी समय उस दुष्टके नेत्रोके बीच एक सच्चिदानन्दमय बालक प्रकट हुआ, जिसका तेज प्रकाशित हो रहा था। वह सदानन्ददाता गोप-किशोर उसे अनुपम सौख्य प्रदान करके वहाँ क्रीडा करने लगा ॥ ५ ॥

**अपश्यच्च दिष्ट्याऽऽद्यमद्याऽघ एष स्वपूर्णोऽऽसुरेणाऽपि भावेन पूर्णम् ।**
**तथाऽप्यत्र संरम्भयुक्तेन तेन न किञ्चिद्विमृष्टं न वा हृत् प्रदत्तम् ॥६॥**

सौभाग्यकी बात है कि आज अघासुरने उन पूर्णतम आदिपुरुषका दर्शन किया। यद्यपि यह दर्शन उसने अपने परिपूर्ण आसुर-भावसे ही किया था। दर्शन कर लेनेपर भी रोषावेशसे युक्त हुए उस असुरने, न तो कुछ विचार किया, और न उठा और न भगवान्‌को अपना हृदय ही अर्पित किया ॥ ६ ॥

**किमेतन्मया दृश्यते सत्स्वरूपं महानन्दपूर्णं शिशोरद्‌भुतं यत् ।**
**असौ कः पुनः स्यात् ममात्माऽपि येन तथाऽऽकृष्यते मोहयित्वा यथेह ॥७॥**

सोचने लगा—'यह मै क्या देख रहा हूँ ? शिशुका जो अद्भुत एवं परमानन्दसे परिपूर्ण सत्स्वरूप है, वह क्या है ? वह कौन हो सकता है ? जिसने, मानो मुझे मोहमे डालकर मेरी अन्तरात्माको भी अपनीओर खीचना आरम्भ कर दिया है ॥ ७ ॥

**विरुद्धं तदेतत्तमोज्योतिषोर्यत्तथाऽऽस्ते स्वभावो ममाऽस्याऽर्भकस्य ।**
**तथापीह मां कर्षतेऽयं ममात्मा स्वयं गन्तुकामोऽस्मि तत्रैव किं स्यात् ? ॥८॥**

'जैसे अन्धकार और प्रकाशका विरोधी स्वभाव है, उसी प्रकार मेरा और इस बालकका स्वभाव एक दूसरेके विपरीत है। तथापि यह मुझे यहाँ इस तरह आकर्षित कर रहा है, मानो मेरा आत्मा हो। मैं स्वयं भी इसकीओर जानेके लिए उत्सुक हो रहा हूँ। यह क्या हो सकता है' ? ॥ ८ ॥

**ततोऽभाणि कंसेन मध्ये स दैत्यो विचारे निमग्नोऽपि भो ! रामकृष्णौ ।**
**तथाऽऽसात एतौ निहन्तुं व्रजं त्वमितो गच्छ शीघ्रं सहैभिः स्वभृत्यैः ॥९॥**

तब विचारमे डूबे हुए उस असुरसे कंस बीचमे ही बोल उठा—'प्रिय मित्र ! सुनो ! बलराम और कृष्ण वनमे ही रहते हैं। तुम इन दोनोको मार डालनेके लिए यहाँसे अपने इन सेवकोके साथ शीघ्र ही व्रजको जाओ' ॥ ९ ॥

**निशम्याऽस्य वाक्यं प्रियं दैत्यवर्यस्तृणेऽग्निर्यथा प्रज्ज्वलन् क्रोधवेगात् ।**
**मृतौ स्वाग्रजौ संस्मरन् खिन्नचित्तो जगामाऽथ वृन्दावनं तौ निहन्तुम् ॥१०॥**

कंसकी यह प्रिय लगनेवाली बात सुनकर वह महान् दैत्य तिनकेमे लगी हुई आगके समान क्रोधके वेगसे जल उठा। अपने मरे हुए ज्येष्ठ भाई और बहनोको याद करके उसका

चित्त खिन्न हो उठा और वह राम और कृष्ण, दोनोका वध करनेके लिए वृन्दावनको चल दिया ॥ १० ॥

भ्रमित्वा चिरं तद्वनं प्रेक्ष्य सर्वं ह्यदृष्ट्वाऽत्र तावेष तत्राऽऽजगाम ।
समं स्वांशभूतैः प्रियैर्गोपबालैर्हरिर्यत्र चाऽऽसीत्तथारूप ईशः ॥११॥

सारे वनमे चिरकाल तक भ्रमण करनेके बाद उसने सब कुछ देखा, परन्तु वहाँ कृष्ण नही दिखाई दिए। तब वह उस स्थानपर आया, जहाँ अपने अशभूत प्रिय ग्वाल-बालोके साथ पूर्वोक्त-रूपवाले वे ईश्वर श्रीहरि विराजमान थे ॥ ११ ॥

निरीक्ष्याऽत्र तं दृष्टपूर्वं स्वदेहे विशुद्धाख्यचक्रे समुद्भूतरूपम् ।
प्रसन्नोऽभवद् दैत्यवयस्तदानीं स एवेत्यसौ मन्यमानो विमृश्य ॥१२॥

उसने अपने शरीरके विशुद्ध-चक्रमे पहले प्रकट हुए जिनके रूपको देखा था, उन्हीको यहाँ देखकर उस दैत्यराजको बडी प्रसन्नता हुई। उसने उस समय सोच-विचार कर यह निश्चय किया कि 'वह यही है' ॥ १२ ॥

ततः सोऽत्र संचिन्तयामास भूयो द्वयोरेक एवाऽस्त्यसौ कृष्णबालः ।
यमाश्रित्य बालाः स्वखेलाभिरित्थं रमन्तेऽस्य शक्त्यैव विस्मृत्य विश्वम् ॥१३॥

फिर उसने विचार किया कि यहाँ तो दोनोमेसे एक ही बालक है, जो कृष्ण-वर्णका है। उसीका आश्रय लेकर सारे ग्वाल-बाल इसकी योग-शक्तिके प्रभावसे सम्पूर्ण विश्वको भूलकर अपने खेल-कूदमे इस प्रकार रमे हुए हैं ॥ १३ ॥

ममाऽसौ महाञ्छत्रुरेको विशिष्टो मया तूर्णमेवाऽत्र हन्तव्य एषः ।
यदा हन्यतेऽयं तदैवाऽस्य हृद्याः सखायश्च नश्यन्ति नो चेन्निहन्मि ॥१४॥

यह एक ही मेरा सबसे महान् और विशिष्ट शत्रु है। अत मुझे तुरन्त ही यहाँ इसका वध कर देना चाहिए। ज्योही यह मारा जायेगा, त्योही इसके सारे मनोरम सखा भी नष्ट हो जायेंगे। यदि नही नष्ट हुए तो मै उनको भी मार डालूँगा ॥ १४ ॥

हृतेष्वेषु बालेषु रक्तैः समांसैरमीषां जलाक्तैस्तिलैश्चैव सार्धम् ।
मया दीयते पिण्ड आभ्यां सवारि तदा शान्तिमाप्नोम्यहं शोधितर्णः ॥१५॥

इन बालकोके मारे जाने पर इनके जलसे भीगे हुए रक्त और माससे तिलके साथ मै अपने भाई-बहनोको जलसहित पिण्ड दूँगा। ऐसा करनेपर ही उनके ऋणसे उऋण हो, मै शान्ति प्राप्त करूँगा ॥ १५ ॥

इतो नाशमायान्ति सर्वे व्रजस्था विनष्टे शिशूनां गणे चैकवारम् ।
प्रजाः प्राणतुल्या हि तेषां यतस्ते विनश्यन्ति काया यथाऽऽत्मप्रयाणे ॥१६॥

इधर इन बालक-समुदायोके एक साथ ही नष्ट हो जानेपर समस्त व्रजवासी स्वय ही नष्ट हो जायेगे। क्योकि उनके लिए उनकी सन्तति प्राणोके समान है जैसे जीवात्माके निकल जानेपर शरीर नष्ट हो जाते हैं, यही दशा उनकी भी होगी ॥ १६ ॥

**बलाढ्यः स्वतः कामरूपोऽहमस्मि विधृत्येष्टरूपं तदेनं निहन्मि ।**
**व्यवस्येत्थमादावघः क्रूरभावो बभूवाऽथ दुष्टः शयुर्भीमरूपः ॥१७॥**

मै स्वत इच्छानुसार रूपधारण करनेमे समर्थ तथा बलवान् हूँ। अत जो मुझे प्रिय होगा, वैसा रूप-धारण करके इस कृष्ण-शिशुको मार डालूँगा। ऐसा निश्चय करके क्रूरभावनासे युक्त दुष्ट अघासुर भयानक अजगर बन गया ॥ १७ ॥

**विचित्रोऽस्य भोगस्तदैवं रराज चतुःक्रोशविस्तारयुक्तो विशालः ।**
**महाशैलपीनो महेच्छो विषाक्तस्तदङ्गैरुपाङ्गैश्च संपन्न ईदृक् ॥१८॥**

उसका विचित्र एव विशाल शरीर चार कोस लम्बा होकर अद्भुत शोभा पाने लगा। उसकी मोटाई महान् पर्वतके समान थी। वह महत्वाकाङ्क्षा रखनेवाला था। विषसे तो भरा था ही वह अजगर अपने समस्त अङ्गो और उपाङ्गोसे सम्पन्न था ॥ १८ ॥

**तदाऽशोभताऽसौ गुहाव्यात्तवक्त्रो धराभ्रे गतं चौष्ठयुग्मं दधानः ।**
**गिरेः शृङ्गकल्पस्वदंष्ट्राभिराभिर्विरूपो विशिष्टो ह्यतर्क्यश्च सर्वैः ॥१९॥**

उस समय पर्वतकी कन्दराके समान मुँह फैलाकर वह सुशोभित हुआ। उसका एक ओष्ठ पृथ्वीपर और दूसरा आकाशमे स्थापित हो गया था। उसकी दाढे पर्वतके शिखरो-सी जान पडती थी। उनके कारण वह बडा ही वीभत्स-रूपवाला और विलक्षण जान पडता था। उसका स्वरूप सबके लिए अतर्कनीय था ॥ १९ ॥

**विगाढ़ाऽन्धकाराननो मार्गजिह्वः खरश्वासगर्भो ज्वलद्दावनेत्रः ।**
**तथाकृत्य चाऽऽत्मानमेषां पुरस्तात् स सुष्वाप पथ्यैव तद्भक्षणार्थम् ॥२०॥**

उसके मुखमे घनान्धकार भरा हुआ था। उसकी जिह्वा मार्गके समान प्रतीत होती थी। भीतरसे प्रचण्ड साँस चलती थी और उसके दोनो नेत्र दावानलके समान जल रहे थे। ऐसा स्वरूप बनाकर अघासुर इन सबका भक्षण करनेके लिए सामने ही रास्तेपर सो गया ॥ २० ॥

**ततो बालकास्तत्र खेलन्त एवं तदाऽऽजग्मुरत्राऽप्यजानन्त इत्थम् ।**
**स्थितस्याऽस्य दुष्टस्य पार्श्वे भ्रमन्तो ह्यपश्यंश्च सर्वे तथाभूतमेनम् ॥२१॥**

तदनन्तर खेलते हुए बालक तत्काल वहाँ आ पहुँचे। 'यहाँ ऐसी माया की गई है' इसका ज्ञान उन्हे नही था वे वहाँ पडे हुए दुष्ट अजगरके पास घूमते-घामते चले आए। फिर उन सबने उसका वैसा रूप देखा ॥ २१ ॥

तदा तर्कयामासुरुत्प्रेक्ष्य सर्वे भ्रमेणैव सत्येऽप्यसत्यं निरूप्य ।
श्रियं मन्यमाना वनस्याऽस्य भव्यां समाकर्षिता व्यात्ततुण्डेन तेन ॥२२॥

वे सब उत्प्रेक्षापूर्वक वहाँ तर्क करने लगे। भ्रमसे ही सत्यमे भी उनकी असत्य बुद्धि हो गई थी। वे उस अजगरको वृन्दावनकी कोई भव्य-शोभा मानने लगे। खुले मुँह-वाले अजगरने उन्हे आकर्षित कर लिया था ॥ २२ ॥

अहो! पश्यतेदं महासत्त्वकूटं पुरस्ताद्दरीवर्ति चाऽस्माकमित्थम् ।
किमस्माकमाश्वेव संभक्षणार्थं शयोर्व्यात्ततुण्डायते नैतदत्र ? ॥२३॥

अहो मित्रो! देखो तो सही। यह किसी विशाल जन्तुका पर्वत-शिखर-सा आकार हम लोगोके सामने इस प्रकार विद्यमान है। क्या हम लोगोको शीघ्र ही निगल जानेके लिए यह अजगरके खुले हुए मुख-सा जान पडता है या नही ?॥ २३ ॥

यदा केचिदित्थं वदन्ति स्म तत्र तदैवाऽवदन्नेवमन्येऽर्भकाश्च ।
वयस्या! भवद्भिः सदुक्तं यदत्र महासर्पमुत्प्रेक्ष्य वृन्दाश्रियं तु ॥२४॥

जब कुछ बालक वहाँ ऐसा कह रहे थे, तब उसी समय दूसरे बालक यो बोले— 'साथियो! तुमने ठीक ही कहा है, जो कि यहाँ वृन्दावनकी उस शोभाको एक विशाल सर्पके रूपमे उत्प्रेक्षा की है ॥ २४ ॥

प्रभातार्करक्तप्रभायुक्तमेघो यथा शोभते चोर्ध्वमोष्ठस्तदस्य ।
अधःस्थाऽधरेणाऽपि तद्बिम्बितेन विभात्येष तीरं यथा शैवलिन्याः ॥२५॥

'इसका ऊपरवाला ओष्ठ उसी प्रकार शोभा पाता है, जैसे प्रात:कालके सूर्यकी अरुण-प्रभासे युक्त बादल हो। अपने नीचले अधरसे भी यह उसी तरह सुशोभित होता है, जैसे प्रात.कालिक सूर्यसे प्रतिबिम्बित सरिताका तट शोभा पाता हो ॥ २५ ॥

उभे सृक्किणी यच्छुभे चाऽप्यपूर्वे प्रतिस्पर्धमाने तु दर्याविवाऽऽस्ताम् ।
इमास्तस्य दंष्ट्रा गिरेः शृङ्गकल्पाः समुत्तुङ्गरूपाश्च पश्यन्तु सर्वे ॥२६॥

'सब लोग देखो! इसके दोनो सुन्दर जबडे भी अपूर्व ही प्रतीत होते हैं। मानो, दो गुफाओसे होड ले रहे हो। उसकी ये दाढे इतनी ऊँची है कि पर्वतके शिखरको भी लज्जित कर रही हैं ॥ २६ ॥

स्वजिह्वां विनिष्कास्य विस्तीर्य सम्यक् तयैष प्रतिस्पर्धते राजमार्गम् ।
स्वदंष्ट्रान्तरालस्थिताऽधस्तमोभिर्निरुद्धं समुज्जृम्भतेऽस्याऽन्तरास्यम् ॥२७॥

'अपनी जिह्वाको मुँहसे बाहर निकाल और फैलाकर उसकेद्वारा यह किसी राज-मार्गका मुकाबला कर रहा है। इसकी दाढ़ोके बीचमे स्थित घोर अन्धकारसे इसके मुँहका भीतरी भाग अवरुद्ध जान पड़ता है' ॥ २७ ॥

सुखं भक्षितारण्यसत्वैरपक्वैः समुद्भूतदुर्गन्धपूर्णोऽन्तरस्थैः ।
दवाग्नेः सुमित्रं यथा तीव्रवायुर्ययं श्वास एवाऽस्य कृत्यं तनोति ॥२८॥

'इसने सुखपूर्वक जो जङ्गली जीवोको खा लिया है, वे अभी पचे नही हैं। पेटमे पडे हुए उन जन्तुओसे ही निकली हुई दुर्गन्धसे यह भरा हुआ है। दावानलका मित्ररूप जो तीव्र वायु बह रहो है, यही इस अजगरके प्रचण्ड श्वासका काम कर रही है' ॥ २८ ॥

मिलित्वाऽऽहुरेवं ततः सर्व एव निविष्टा वयं चेत्तदस्याऽऽस्यगर्भे ।
करिष्यत्यसौ किं ! किमस्मान् प्रविष्टान् ग्रसिष्यत्ययं वा सखायो ब्रुवन्तु ! ॥२९॥

फिर सबने मिलकर ऐसी बात कही—'यदि हमलोग इसके मुखके भीतर प्रविष्ट हो जाँय तो यह क्या करेगा ? सखाओ ! बताओ तो सही, क्या ? अपने भीतर घुसनेपर हमलोग-को यह निगल जायेगा ? ॥ २९ ॥

करोतीह धाष्टर्य यदाऽयोग्यमेतत्तदा नाशमायात्यसौ पूर्णशक्तेः ।
वयस्यस्य कृष्णस्य कृत्यात् क्षणेन बको दैत्यवन्नष्टशक्तिः समन्तात् ॥३०॥

'यदि यहां यह ऐसी अनुचित घृष्टता करेगा तो तत्काल हमारे पूर्ण शक्तिशाली सखा-कृष्णके प्रयत्नसे बकासुरकी भांति सब ओरसे क्षीण-शक्ति हो क्षणभरमे नष्ट हो जायेगा' ॥ ३० ॥

समुक्त्वा त इत्थं बकारेः प्रसन्नं मुखं वीक्ष्य कान्तं स्वपार्श्वस्थितस्य ।
करास्फोटनैर्गोपबालाः सवत्साः क्षणादेव तस्याऽऽननान्तः प्रविष्टाः ॥३१॥

ऐसा कहकर अपने पास ही विद्यमान् बकारिके प्रसन्न एव कान्तिमान् मुखकीओर देखकर ताली पीटते हुए वे ग्वाल-बाल बछड़ोके साथ ही क्षण-भरमे उसके मुखके भीतर घुस गए ॥ ३१ ॥

इतो दृष्टवान् पूर्णबोधो महात्मा प्रविष्टानिमांस्तस्य वक्त्रेऽन्तकाभे ।
तथा सत्यतत्त्वेऽप्यसत्यं प्रकल्प्य मिथः कथ्यमानं वचश्चाऽशृणोत् सः ॥३२॥

इधर पूर्ण बोधशाली परमात्मा श्रीहरिने देखा कि ये बालक इस अजगरके यमराजके सदृश मुखमे प्रविष्ट हो गये। वे जो सत्यमे असत्यकी कल्पना करके परस्पर बातचीत करते थे, उसे भगवान्ने सुन लिया था ॥ ३२ ॥

समेषां जगत्तस्थुषां प्राणिनां यः परात्मा तथाऽन्तःस्थितो भाति नित्यम् ।
तदत्राऽप्यसौ ज्ञानपूर्णोऽन्तरात्मा ह्यजानात्तमस्याऽपि चैत्यं कुभावम् ॥३३॥

जो परमात्मा समस्त स्थावर एव जंगम प्राणियोके भीतर नित्य विराजमान रहकर शोभा पाते हैं, वे ही सबके ज्ञानस्वरूप अन्तरात्मा श्रीहरि वहां उस अजगरके आन्तरिक दुर्भावको समझ गए ॥ ३३ ॥

ततश्चैष रोद्धुं शयोर्वक्त्रपातादनाथानिमान् बालवत्सान् स्वकीयान् ।
इयेषाऽत्र यावत्तदैवाऽसुरस्य निपेतुस्त एत्याऽन्तकस्येव वक्त्रे ॥३४॥

तदनन्तर ये श्रीहरि जबतक इन अपने सखा अनाथ ग्वाल बालो और बछडोको उस अजगरके मुखमे पडनेसे रोकनेकी इच्छा करते हैं, तबतक ही वे सबके सब उस असुरके काल-समान मुखमे जा पडे ॥ ३४ ॥

तदेषां कुभाग्याद्विनष्टस्मृतीनां विलोक्याऽत्र धाष्ट्र्यं प्रसन्नोऽघदैत्यः ।
समं शत्रुकृष्णेन तद्भक्षणार्थं प्रतीक्ष्य स्थितस्तत्प्रवेशं स्ववक्त्रे ॥३५॥

दुर्भाग्यसे जिनकी विचार-शक्ति मारी गई थी, उन ग्वालबालोकी यह धृष्टता देखकर अघासुरको बडी प्रसन्नता हुई। वह अपने शत्रुभूत कृष्णके साथ ही उन सबका भक्षण करना चाहता था। अत उनका भी उसके मुखमे प्रवेश हो जाय, इसकी प्रतीक्षामे ज्योंका त्यो पड़ा रहा ॥ ३५ ॥

न गीर्णाः परं तेऽर्भकास्तेन तस्मान्मृतौ स्वाग्रजौ ध्यायता स्वेन दुःखात् ।
इतोऽसौ हरिश्चिन्तयामास भूयः सुदूरं गतानात्मनाथान् वयस्यान् ॥३६॥

अघासुर अपने मरे हुए भाई-बहनोको बड़े दु खसे याद कर रहा था। अत वह उन बालकोको तत्काल निगल नही गया। इधर श्रीहरि अपने अनाथ-मित्रोके विषयमे जो उनके हाथसे दूर निकल गए थे, फिर इस प्रकार चिन्ता करने लगे—॥ ३६ ॥

इमे मद्वयस्याः प्रियाः शुद्धचित्ता अनन्याश्च मत्पादपद्माम्बुसिक्ताः ।
अजानन्त एवं शयुं सत्यरूपं ह्यसत्यं समुत्प्रेक्ष्य वक्त्रे निविष्टाः ॥३७॥

'ये मेरे सखा मुझे बहुत प्रिय हैं। इनका चित्त शुद्ध है। ये अनन्य-भावसे मेरा भजन करते हैं और मेरे चरण-कमलोके जलसे अपनेको सीचते हैं। ये अनजानेमे ही सच्चे अजगर-को असत्य मानकर इसके मुँहमे घुस गए हैं' ॥ ३७ ॥

भविष्यन्ति दुष्टोदराग्नेः सुभक्ष्याः क्षणादेव मृत्युश्च संतिष्ठतेऽत्र ।
किमेषामिदं ह्यन्तकृद्दिष्टमेवं समायातमाहोस्विदद्यैव नो वा ॥३८॥

'अब ये क्षण-भरमे ही इस दुष्टकी जठराग्निके लिए उत्तम भक्ष्य बन जायेगे। इन सबकी मृत्यु यहाँ खड़ी है। क्या ? इन सबका आज ही अन्त कर देनेवाला दुर्दैव आ पहुँचा है या नही' ? ॥ ३८ ॥

किमस्त्यत्र मत्कर्म योग्यं भवेत् यन्म्रियेताऽघदैत्यश्च येनेह भूयः ।
सुखं पूर्ववद्दीर्घजीवित्वमाप्ताः सखायश्च मे न म्रियेरन् द्वयं स्यात् ॥३९॥

'यहाँ मेरे लिए कौन-सा कार्य उचित होगा ? जिससे यहाँ आज फिर इस दैत्यका संहार हो जाय और मेरे सखा पहलेको ही भाँति सुखपूर्वक दीर्घ-जीवन प्राप्त करके मृत्युके अधीन न हो। ये दोनो बातें कैसे सम्भव होगी' ॥ ३९ ॥

**इत्थं विचिन्त्य भगवानिह जातबोधस्तस्याऽऽननान्तरुपविश्य रराज नैभिः।**
**तत्कृष्णमेघवदनं सजलं सशम्पं संविश्य चन्द्र इव तैः खगणैरुपेतः ॥४०॥**

ऐसा सोचकर पूर्णबोध-स्वरूप भगवान् उस अजगरके मुखमे प्रविष्ट होकर अपने उन सखाओके साथ उसी तरह शोभित नही हुए, जैसे नक्षत्रगणो सहित चन्द्रमा जल और विद्युतसे युक्त काले-मेघके मुखमे जाकर शोभारहित हो जाते है ॥ ४० ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते।**
**अगात्सर्गोऽयमेकोनपञ्चाशत्तत्स्तवात्मके ॥४१॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे यह उनचासवाँ सर्ग पूरा हुआ ॥ ४१ ॥



# पञ्चाशः सर्गः

[ शयोरात्मानं तन्मृतशरीराद्विनिर्गतस्याऽस्य भगवतश्चरणारविन्दे मिलित दृष्ट्वा श्रुत्वा चाऽन्तरिक्षस्थितैः सिद्धादिभिः कृता स्वस्स्तुतीर्भगवतश्चतुर्मुखस्याऽत्राऽऽगमनम् । ]

( प्रहर्षिणीछन्दः )

एतस्मिन्नवसर एत्य कंसभृत्यैरालोकि व्यपगततृष्ण एष कृष्णः ।
स्वैर्मित्रैः सममसमं वयस्यवत्सैर्दैत्याहेः कपटमुखप्रविष्ट इत्थम् ॥१॥

इस अवसर पर कसके सेवकोने आकर देखा कि तृष्णारहित श्रीकृष्ण अपने मित्र ग्वालबालो और बछड़ोके साथ अनुचित-रूपसे उस सर्पाकर दैत्यके कपट मुखमे प्रविष्ट हो गए हैं ॥ १ ॥

ते गत्वा तदनु सुखेन कामवेगा आचख्युः सकलमिदं हितं तु राज्ञे ।
यच्छ्रुत्वा नृपतिरसौ च भोजवीरः सन्तुष्टोऽभवदघदुष्टबन्धुमित्रैः ॥२॥

तत्पश्चात् इच्छानुसार वेगसे चलनेवाले उन सेवकोने सुखसे जाकर यह सारा हितकर समाचार राजा कससे कह सुनाया। उसे सुनकर वह भोजवंशी वीर राजा कंस अघासुरके दुष्ट-बन्धुओ और मित्रोके साथ सन्तुष्ट हो गया ॥ २ ॥

तद्वृन्दावन इह चाऽन्तरिक्षमाप्ताः पूर्वोक्ताः सुरमुनयः समेत्य सिद्धाः ।
संप्रेक्ष्याऽजगरमुखप्रविष्टमेनं त्रासेनाऽतुलमथ चुक्रुशुश्च हेति ! ॥३॥

यहाँ उस वृन्दावनके आकाशमे एकत्र हुए पूर्वोक्त देवता, मुनि और सिद्ध भगवान्का अजगरके मुखमे प्रवेश देखकर त्रासके मारे अनुपम हाहाकार कर उठे ॥ ३ ॥

श्रुत्वैतत् सकलमुदन्तमाकलय्य स्वैर्वत्सैः प्रियसखिभिश्च सार्धमेषः ।
स्वं हन्तुर्दितितनयस्य कण्ठ एव योगस्थो धृतमहिमा व्यवर्धत द्राक् ॥४॥

यह सारा समाचार सुनकर और उसपर सोच-विचार करके अपने प्रिय सखाओ और बछडोके साथ ये श्रीकृष्ण अपनेको मारनेके लिए आये हुए उस दैत्यके कण्ठमें ही योगस्थ हो, महिमा नामवाली सिद्धिको धारण कर तत्काळ बढ़ने लगे ॥ ४ ॥

तद्देहेऽसुरबलिभूमिदानलब्धौ वृद्धेऽत्राऽदितिसुतवर्ष्मवत्तदानीम् ।
दैत्यात्माऽनिलपथरोधमाप्य पश्चात् स्वस्थानाद्विचलित आत्मपातमिच्छन् ॥५॥

जैसे असुरराज बलीसे तीन पग भूमि प्राप्त हो जानेपर अदितिनन्दन उपेन्द्र ( वामन ) बढकर विराट हो गए थे, उसी प्रकार उस समय श्रीकृष्णके शरीरके बढ जानेपर उस दैत्यका जीवात्मा श्वासमार्गका तत्काल अवरोध हो जानेसे निष्क्रमण की इच्छा रखकर अपने स्थानसे विचलित हो गया ॥ ५ ॥

**अप्राप्य स्थितिमिह कुत्रचित्तदस्य पादाब्जं शरणमितोऽपि पीडितात्मा ।
निर्यातस्तदनु बहिस्तदुत्तमाङ्गं विष्फोट्याऽसमगतिमाप्य चाऽन्तरिक्षम् ॥६॥**

फिर इस शरीरमे कही भी ठहरनेका स्थान न पाकर उस दैत्यका पीडित जीवात्मा श्रीकृष्णके चरणारविन्दकी शरण लेकर अनुपम गतिका आश्रय ले उस सर्प-शरीरके मस्तकको विदीर्ण करके बाहर आकाशमे निकल गया ॥ ६ ॥

**आश्चर्यमहदभवच्छयोस्तदात्मा जज्वालाऽतुलमिह चाऽस्य तेजसेद्धः ।
यत्प्राप्याऽनलसहितौ प्रभाकरौ तौ सूर्येन्दू ज्वलत उभौस्त्व एवमिद्धौ ॥७॥**

उस समय महान् आश्चर्यकी बात यह हुई कि इस अजगरका जीव भगवान्के तेज-से समिद्ध होकर इस तरह प्रज्वलित हो उठा जिसकी यहाँ कही तुलना ही नही है । भगवान्के उसी तेजको पाकर अग्निसहित सूर्य और चन्द्रमा, जो प्रभाके आकर माने जाते हैं, सदा इसी प्रकार प्रज्वलित एव प्रकाशित होते हैं ॥ ७ ॥

**श्रीकृष्णस्तदनु तदुत्तमाङ्गरन्ध्रान्निष्क्रम्य प्रकृतगतिं विधृत्य भूयः ।
संत्यज्याऽमृतनयनं मृतान् सखींस्तान् स्वैर्वत्सैः सममसमं व्यजीवयच्च ॥८॥**

तदनन्तर उस अजगरके मस्तक रन्ध्रसे निकल कर श्रीकृष्णने पुन प्राकृत-गोपबालकके स्वरूपको धारण कर लिया और अपनी अमृतमयी दृष्टि डालकर मरे हुए सखाओको अपने बछड़ो सहित जीवित कर दिया । यह असाधारण घटना हुई ॥ ८ ॥

**संपश्यन्नमुमुरगांस्थितांशमेष विश्वात्मा क्षितितलमेत्य संरराज ।
तस्यात्मा तत इत आगतोऽस्य पादे लीनोऽभून्मिषति दिवौकसां गणेऽत्र ॥९॥**

उस सर्पके आकाशस्थित अश-जीवात्माको देखते हुए ये विश्वात्मा श्रीकृष्ण पूर्ववत् भूतलपर आकर सुशोभित होने लगे । तत्पश्चात् अघासुरका जीवात्मा इधर आकर देव-समुदायके देखते-देखते इन भगवान्के चरणोमे लीन हो गया ॥ ९ ॥

**तद्दृश्यं सुरमुनयोऽप्सरोगणाश्च साश्चर्या नभसि निरीक्ष्य संनिविष्टाः ।
तं दुष्टक्षयकरमस्तुवन्मुकुन्दं सद्भक्त्या प्रणयभरान्नतोत्तमाङ्गाः ॥१०॥**

वह अद्भुत दृश्य देखकर आकाशमे स्थित हुए देवता मुनि और अप्सराओके समुदाय आश्चर्य चकित हो उत्तम भक्तिभावसे उन दुष्ट-सहारक भगवान् मुकुन्दकी स्तुति करने लगे । उस समय प्रेमके भारसे उन सबके मस्तक झुक गए थे ॥ १० ॥

स्वोद्यानाद्भवकुसुमैरमुं प्रसन्ना इन्द्राद्या अदितिसुता अवाकिरन् प्राक् ।
ब्रह्मज्ञा ऋषिमुनयोऽनुबज्जयेति गीत्वा तत्स्तुतिमयगीतमेनदत्र ॥११॥

इन्द्र आदि अदिति पुत्रोने प्रसन्न होकर उनके ऊपर अपने उद्यान नन्दनवनके फूल बरसाए । ब्रह्मज्ञ ऋषि-मुनियोंने उनकी स्तुतिसे पूर्ण गीत गाकर जय-जयकार की ॥११॥

संभूय श्रुतिसुखवाद्यवादकास्ते वाद्यानि प्रचुरगुणान्यवादयंश्च ।
आसन् ये परभृतकण्ठकल्पशब्दास्तेऽगायन्निह ननृतुः स्त्रियश्च तेषाम् ॥१२॥

सङ्घबद्ध होकर श्रवण-सुखद वाद्य बजानेवाले देवताओने विशेष गुणशाली वाद्य बजाए । उनमे जो कोकिल-कण्ठके समान मधुर-रागसे गानेवाले लोग थे, उन्होने यहाँ गीत गाए और उनकी स्त्रियोने नृत्य किया ॥ १२ ॥

तत्तौर्यत्रिकमिदमुच्चरूपमाप्य ब्रह्माण्डं सुखमकरोत् सुविस्मितं यत् ।
आकृष्टा दृढममुना तदागतास्ते ब्रह्मज्ञा ऋषिमुनयो विधिश्च साक्षात् ॥१३॥

इस प्रकार उत्कृष्टरूपको पाकर उस तौर्यत्रिक गीत, वाद्य और नृत्यने सारे ब्रह्माण्डको अत्यन्त विस्मित और आनन्दमग्न कर दिया । उससे अत्यन्त आकृष्ट होकर ब्रह्मज्ञ ऋषि-मुनि और साक्षात् ब्रह्माजी भी उस समय वहाँ आ गए ॥ १३ ॥

दृष्ट्वैतानथ समुदोऽत्र मग्नचित्तान् ब्रह्मज्ञानपि मृदु गायतोऽस्य शक्तीः ।
ब्रह्माऽभूद्विचलितवृत्तिरीशमायाकृष्टत्वादितरजनैः समो विमूढः ॥१४॥

तदनन्तर इन सबको वहाँ प्रमुदित और मग्नचित्त देख तथा ब्रह्म-ज्ञानियोको भी भगवान्‌की शक्तिका मधुर गान करते पाकर ब्रह्माजी भी भगवान्‌की मायासे आकृष्ट होनेके कारण इतर-जनोके समान मोहको प्राप्त हो गए । उनकी चित्तवृत्ति चचल हो उठी ॥ १४ ॥

गोवत्सैः सममभितो निशम्य गीतं देवादीन् सुखददृशा निरीक्षमाणम् ।
श्रीकृष्णं तदनु मुदा वयस्यबालैराश्लिष्य स्थितमिह सोऽप्यपश्यदित्थम् ॥१५॥

गो-वत्सोके साथ सब ओर गूँजते हुए गीतको सुनकर श्रीकृष्ण देवता-आदिको सुखद-दृष्टिसे देखने लगे । उनके सखा ग्वाल-बाल प्रसन्नतापूर्वक उन्हे हृदयसे लगा रहे थे । इस स्थितिमे ब्रह्माजीने भी श्रीहरिको देखा ॥ १५ ॥

श्रुत्वाऽधःस्थितमृदुगानमस्य तत्र ब्रह्माण्डप्रथिततरं महत्त्वपूर्णम् ।
ब्रह्मज्ञैरपि रुचिरं प्रगीयमानं तद्गानं तदनु विधिः सुविस्मितोऽभूत् ॥१६॥

इसके बाद भगवान्की महिमासे युक्त निम्नाङ्कित मधुर गान गाया जाने लगा। जो अखिल ब्रह्माण्डमे अत्यन्त प्रसिद्ध और महत्त्वपूर्ण है। ब्रह्मज्ञ-लोग भी सुन्दर ढगसे इसे गा रहे थे। उसे सुननेके बाद ब्रह्माजी भी अत्यन्त विस्मित हो गए॥ १६॥

तवेयं चिच्छक्तिर्जयति भगवन्! विश्वसुखदा
स्वभक्तेभ्यो भव्या विहितखलसंहाररुचिरा।
चिदानन्दं सत्यं पदमकथनीयं नयति या
विशाले तृष्णाब्धौ कुसृतिपथिकान् मज्जत इह ॥१७॥

भगवन्! अपनी इस विश्वसुख-दायिनी चिच्छक्तिकी जय हो, जो अपने भक्तोके लिए कल्याणमयी है और दुष्टोका सहार करनेके कारण रुचिर प्रतीत होती है। जो लोग तृष्णाके विशाल सागरमे कुपथगामी होकर डूब रहे है, उन्हे आपकी वह शक्ति अनिर्वचनीय सच्चिदानन्दमय रूपको पहुँचा देती है॥ १७॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते।
गतः सुखेन पञ्चाशः सर्गोऽप्यत्र स्तवात्मके ॥१८॥

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे यह पचासवां सर्ग पूरा हुआ॥ १८॥



# एकपञ्चाशः सर्गः

[ भगवतो वयस्यैः सम वार्तालाप. ]

( स्वागतावृत्तम् )

**स्वागतं प्रियसखे ! इत एहि नित्यधन्य उरुशक्तियुतस्त्वम् ।**
**इच्छयैव कुरुषेऽतिमनुष्यं कर्म शङ्करमहो ! भगवांस्त्वम् ॥१॥**

इस प्रकार अजगरके मुखसे निकलकर वहाँ एकत्र मिले हुए प्रिय ग्वाल-बाल श्रीकृष्णसे कहने लगे—'प्रिय मित्र ! तुम्हारा स्वागत है। इधर आओ। तुम सदा धन्य हो और विशेष-शक्तिसे सम्पन्न हो ॥ १ ॥

**अद्य दृष्टमसमं तव कृत्यं यन्मृतोऽजगर ईशगुणाढ्यः ।**
**यत्र तुष्टहृदयाः सुरसिद्धास्त्वां स्तुवन्ति कुसुमैरवकीर्य ॥२॥**

तुम अपनी इच्छासे ही लोक कल्याणकारी अलौकिक कर्म करते हो। अहो ! तुम साक्षात् भगवान् हो। आज हमने तुम्हारा अनुपम-कर्म देखा है। जिससे यह ऐश्वर्य-गुणसे सम्पन्न अजगर मारा गया ॥ २ ॥

**तद्वयस्य ! विजयस्व सदैवं पूर्णमस्तु तव कृत्यममेयम् ।**
**इत्थमत्र मिलिताः प्रियबालाः कृष्णमेनमवदंस्तत एत्य ॥३॥**

इससे सन्तुष्ट चित्त हुए देवता और सिद्ध गण फूलोकी वरसा करके तुम्हारी स्तुति करते हैं। इसलिए हमारे मित्र तुम सदा इसी प्रकार विजयी होते रहो। तुम्हारा अप्रमेय-कर्म नित्य परिपूर्ण हो' ॥ ३ ॥

**तान्निरीक्ष्य गदतो गतकाम एष तत्र विहरन् सखिभिः स्वैः ।**
**अत्यवाहयदहो ! तदरण्य एकहायनमितं समयञ्च ॥४॥**

ऐसा कहनेवाले उन सखाओकी ओर देखकर वे निष्काम परमेश्वर उन सबके साथ वहाँ विहार करने लगे। अहो ! उन्होने उस बनमे ही उनके साथ एक वर्षका समय व्यतीत कर दिया ॥ ४ ॥

**नित्यतृप्त उरुगायविभुः स दर्शयञ्जगदभावमिमान् स्वान् ।**
**क्रीडति स्म पुनरत्र विधाय स्वात्मयोगपरमान् स्मृततत्त्वान् ॥५॥**

भगवान् नित्य-तृप्त हैं। बहुत लोग उनकी कीर्तिका गान करते हैं और वे सर्वत्र हैं। उन्होने इन अपने मित्रोको जगत्के अभावका ज्ञान कराते हुए उनके साथ यहाँ क्रीड़ा की। इससे पहले उन्हे आत्मयोग-परायण तथा तत्त्वज्ञानसे सम्पन्न बना दिया था ॥५॥

विस्मयः किमपि नाऽत्र विधेयश्चित्रमस्य चरितं तु विचित्रम् ।
गोपबालकनिभो हरिरेष स्वेच्छया जगदिदं वितनोति ॥६॥

यहाँ तनिक भी आश्चर्य नही करना चाहिए। भगवान्‌का विचित्र-चरित्र ही आश्चर्यमय है। गोपबालकके रूपमे प्रकट हुए ये श्रीहरि अपनी इच्छासे इस जगत्‌का विस्तार करते हैं॥ ६॥

मूर्तिमान् कलुष एष शयुश्च प्राप साम्यमिह यस्य दयेद्धः।
विस्मयः किल महानवितर्क्य एष एव मुनिभिर्हृदि चिन्त्यः ॥७॥

यह अजगर मूर्तिमान् पाप था। तो भी जिनकी दयासे समृद्ध होकर उसने उन्हीकी समता प्राप्त कर ली। यही महान् विस्मय है, जो तर्कसे परे है। ये भगवान् ही ऋषि-मुनियो-द्वारा हृदयमे चिन्तन करने योग्य हैं॥ ७॥

नित्यमात्महितमेनमुशन्ति स्वात्मतत्वविद आत्मनि लीनम् ।
ब्रह्म सत्यसुखपूर्णमनन्तं स्वानुभूतिसुखतृप्तममेयम् ॥८॥

सदा अपने हित करनेवाले और अन्त करणमे स्थित रहनेवाले इन परमात्माको आत्म-तत्त्ववेत्ता मुनि प्राप्त करना चाहते हैं। ये ही सत्य, सुखसे परिपूर्ण, अनन्त, आत्मज्ञानानन्दसे तृप्त एव अमेय ब्रह्म हैं॥ ८॥

सोऽव्ययस्तदुरगोदरगर्ते यत्प्रविष्ट इह किं कथनीयम् ! ।
यस्य मूर्तिरपि मानसिकी सा हृद्गता लघु निहन्ति विवर्तम् ॥९॥

वे अविनाशी परमात्मा जो उस अजगरके उदरगर्तमे प्रविष्ट हो गए, उसके माहात्म्यके विषयमे यहाँ क्या कहना है? उनकी मन.कल्पित मूर्ति भी यदि हृदयमे आ जाय तो वह शीघ्र ही समस्त विवर्त ( संसारभ्रम ) का नाश कर देती है॥ ९॥

एकहायनमिते समये सा गोदुहां श्रुतिमिताऽच्युतलीला ।
ब्रह्मणा कृतमिहैव विचित्रं द्रष्टुमव्ययममुष्य सुकर्म ॥१०॥

भगवान्‌की वह लीला एक वर्षका समय बीत जानेपर व्रजवासी गोपोके कानोमे पडी। उनके अविनाशी सत्कर्मको देखनेके लिए ब्रह्माजीने यही एक विचित्र कार्यकर डाला॥ १०॥

वर्ण्यते तदिह गोपशिशुत्वं प्राकृतत्वमनघं च विधृत्य ।
आत्मभिर्विहरतोऽस्य गुणाब्धेर्दृक्पथागतमुमेशकृपाढ्यम् ॥११॥

गोपशिशुत्व तथा निष्पाप प्राकृतभावको धारण करके जीवात्माओके साथ विहार करनेवाले इन गुण-सागर भगवान्‌की जो लीला भगवान् शङ्करकी कृपासे मेरे दृष्टिपथ ( ध्यान ) मे आयी है, उसीका यहाँ वर्णन किया जाता है॥ ११॥

प्रार्थयेऽहमितरांश्च गुणाढ्यान् सन्ति येऽत्र सुधियोऽस्य गुणार्द्राः ।
तेऽप्यनूद्य कथितं परतत्त्वं सन्निरीक्ष्य मुदिताश्च भवेयुः ॥१२॥

मैं अन्य गुणवान् पुरुषोसे भी प्रार्थना करता हूँ कि यहाँ जो सुधीजन भगवान्‌के गुणचिन्तनसे प्रेमार्द्र हृदयवाले हैं, वे भी अनुवाद करके कहे गए इस परम तत्त्वपर दृष्टिपात करके आनन्दित हो ॥ १२ ॥

कृष्ण कृत्यमखिलं धृतदीक्षास्तद्बुधाः सुगुणिनश्च पठेयुः ।
ये विशेषत उपायविदः स्युस्तेऽपि काव्यरसमत्र पिबेयुः ॥१३॥

भक्तकी दीक्षा ग्रहण करनेवाले जो विद्वान् तथा सद्‌गुणशाली महात्मा हैं, वे इस सारे श्रीकृष्ण-चरित्रको पढे । जो विशेष-रूपसे उपायवेत्ता साधक हैं, वे भी इस काव्यरसका पान करे ॥ १३ ॥

तदस्तु, विद्वांस ! इह प्रजापतिः सुविस्मितोऽभूत् कथमद्य तद्गतिः ।
स्वान्तः सुखायैव महात्मनां सतां तद्दर्शयत्येष ऋषित्वमाश्रयन् ॥१४॥

अस्तु, विद्वानो ! प्रजापति-ब्रह्मा, जिनकी भगवान् ही एकमात्र गति हैं, आज कैसे उक्त-लीलाको देखकर अत्यन्त विस्मित हो गये। इस बातको यहाँ ऋषि-दृष्टिका आश्रय लेनेवाला यह कवि सन्तो और महात्माओके स्वान्त: सुखके लिए दिखा रहा है ॥ १४ ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
गतोऽयमेकपञ्चाशः सर्गोऽप्यत्र स्तवात्मके ॥१५॥

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्ण चरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे यह इक्यावनवाँ सर्ग समाप्त हुआ ॥ १५ ॥



# द्विपञ्चाशः सर्गः

[ भगवतो वयस्यै सह वनभोजनम् ]

( चम्पकमालावृत्तम् )

मृत्युनिभात्तद्वाहसवक्त्राद्वत्सवयस्यान् प्राग् गमयित्वा ।
संस्तुत एभिर्बालमुकुन्दो द्राक् शुशुभेऽघं स्वात्मनि धृत्वा ॥१॥

मृत्युके समान विकराल उस अजगरके मुखसे पहले बछडो और सखाओको निकाल-कर उनके द्वारा की गई स्तुति सुनते हुए भगवान् बालमुकुन्द अघासुरको अपने हृदयमे धारण करके शीघ्र शोभा पाने लगे ॥ १ ॥

एत्य ततस्तद्यामुनतीरं सार्धममीभिर्वत्सवयस्यैः ।
आह परात्मा श्रीहरिरेष तद्दयमानः संस्मृतलीलः ॥२॥

वहांसे इन बछड़ो और ग्वाल-बालोके साथ ये परमात्मा श्रीहरि यमुना-तटपर आये और पूर्वकृत लीलाका स्मरण करके जीवोके प्रति दया दिखाते हुए इस प्रकार बोले—॥ २ ॥

पश्यत मित्राण्यत्र मनोज्ञं सैकतरम्यं यामुनतीरम् ।
केलिषु मह्यं दत्तसहायं शोभत इत्थं सम्भृतसम्पत् ॥३॥

'मित्रो ! देखो यहाँ यमुनाजीका तट कैसा मनोरम है । बालुकामय पुलिनके कारण इसकी रम्यता और बढ गई है । यह क्रीड़ाओके लिए मुझे सदा सहायता देता है । शोभा-सम्पत्ति धारण करनेवाला यह तट इस तरह सुशोभित होता है' ॥ ३ ॥

पद्मसुगन्धै रम्यसरोभिः संहृतचित्ता षट्पदरालिः ।
लौकिकभोगेषूद्गतचित्ता योगिदशावद् यत्र विभाति ॥४॥

'यहाँके रमणीय सरोवरोमे कमलकी सुगन्ध छाई है । जिससे अन्यत्रसे चित्त हटाकर भ्रमरोकी पंक्ति वहाँ मँडरा रही है । जैसे लौकिक भोगोसे ऊपर उठे चित्तवाली योगियोकी दशा होती है, वैसी ही इन भ्रमरोकी भी जान पडता है' ॥ ४ ॥

पश्यत भृङ्गाश्चाटुषु दक्षाः कुर्वत इत्थं गुञ्जनमत्र ।
यत्प्रतिनादैर्नादितदिक्का यामुनवृक्षा भान्त्यधितीरम् ॥५॥

'देखो, चिकनी-चुपड़ी बाते बनानेमे चतुर ये चपल चञ्चरीक यहाँ इस प्रकार गुञ्जारवकर रहे हैं, जिसकी प्रतिध्वनिसे सम्पूर्ण दिशाओको निनादित करनेवाले यमुनाके निकटवर्ती वृक्ष तटपर सुशोभित होते हैं ॥ ५ ॥

**भास्कररूपं ब्रह्म विशुद्धं शोभत एत्याऽऽकाशतलं यत्।**
**तद्वयमत्राऽऽस्थाय वयस्या भुञ्ज्महे एतद्भक्ष्यमनर्हम् ॥६॥**

'सूर्यरूपधारी विशुद्ध ब्रह्म आकाशतलमे आकर शोभायमान है। इसलिए मित्रो! हमलोग भी यहाँ बैठकर अपनी इस बहुमूल्य-भक्ष्य पदार्थका भोजन करें' ॥ ६ ॥

**प्राणसमा नो वत्सगणास्ते यामुननीरं संपरिपीय।**
**शष्पमदन्तः सर्वसमक्षं स्वात्मनि मग्नास्तत्र चरन्तु ॥७॥**

'हमलोगोको प्राणोके समान प्यारे बछड़े यमुनाजीका जल पीकर हम सबके समक्ष घास चरते हुए अपने-आपमे मग्न हो, वहाँ विचरण करें' ॥ ७ ॥

**कृष्ण! सदुक्तं तद्ध्युपयुक्तं प्राणनिभस्त्वं नो गतिरेका।**
**तिष्ठ सुखं भो तद्वयमीश! कुर्महे इत्थं प्रागचिरेण ॥८॥**

[ यह सुनकर बालकोने कहा— ] 'कृष्ण! तुमने बहुत अच्छी बात कही। वह हमे ठीक लगी है। तुम प्राणोके समान प्रिय हो। हमारी एकमात्र गति हो। हमारे स्वामी! तुम सुखपूर्वक बैठ जाओ। फिर हमलोग पहले शीघ्रतापूर्वक इस भोजनका ही कार्य निपटा लें' ॥ ८ ॥

**कृष्णशरीरं कृष्णमथैनं वाक्यमिदं ते स्नेहत उक्त्वा।**
**स्वप्रियवत्सांस्तज्जलतृप्तान् क्षिप्रमकार्षुस्तानथ धृत्वा ॥९॥**

श्याम-शरीरवाले श्रीकृष्णसे स्नेहपूर्वक ऐसा कहकर उन ग्वाल-बालोने अपने-अपने प्रिय-बछडोको पकडकर शीघ्र ही यमुनाजीके जलसे तृप्त किया ॥ ९ ॥

**शाद्वलभूमिं तॉल्लघु नीत्वा दृष्टिपथेष्वारुद्ध्य समन्तात्।**
**एत्य पुनस्ते कृष्णसमीपं देह्यवदन् भो! नोंऽशमुपेन्द्र! ॥१०॥**

फिर तुरन्त ही घाससे भरी हुई भूमिमे ले जाकर सबओर अपने दृष्टि-पथमे रखते हुए उन्हे चरनेके लिए छोड दिया। फिर श्रीकृष्णके समीप लौटकर वे बोले—'हे उपेन्द्र! हमारे हिस्सेका भोजन हमे दो' ॥ १० ॥

**तिष्ठत मित्राण्यत्र यथेच्छं भुङ्ध्वमिहस्थं तृप्तिकरं तत्।**
**शिक्यघटस्थं दिव्यपयस्यं भोज्यमनेकं सद्घृतयुक्तम् ॥११॥**

[ श्रीकृष्ण बोले— ] 'मित्रो! यहाँ बैठो। यहाँ भी तृप्तिकर भोजन है। उसे इच्छानुसार खाओ। छीकेपर कलशमे दिव्य दही-दूध माखन रखा है। घीमे पकाया हुआ अनेक प्रकारका उत्तम भोजन भी है' ॥ ११ ॥

श्रीहरिणैवं प्रेमत उक्ता वत्सपबालाः सन्मुखमत्र ।
तस्थुरिदानीं पद्मदलानीवाऽथ विरेजुर्विश्वगमुष्य ॥१२॥

श्रीहरिके प्रेमपूर्वक ऐसा कहनेपर बछडे चरानेवाले ग्वाल-बाल वहाँ श्रीकृष्णके सामने बैठ गये। इस समय वे भगवान्‌के चारोओर उसी प्रकार शोभित हुए, जैसे कमलकी कर्णिकाके सबओर खिले हुए दल शोभा पाते हैं ॥ १२ ॥

बालकराजिर्मध्यगतेन तेन रराजाऽतर्क्यमहिम्ना ।
खेचरराजिः शीतकरेणाऽह्लादमयेनेवाऽऽश्रितधाम्ना ॥१३॥

भगवान् श्रीकृष्ण सबके बीचमे विराजमान थे। उनके चारोओर बैठी हुई बालकोकी पक्ति उन अतक्यं-महिमावाले श्रीहरिसे उसी प्रकार सुशोभित होती थी, जैसे आह्लादमय तेजस्वी चन्द्रमाके बीचमे होनेसे उनके चारोओर फैली हुई ताराओकी पाँत शोभा पाती है ॥ १३ ॥

भक्ष्यसमूहं पोटलिकास्थं पद्ममृदुभ्यां स्वात्मभुजाभ्याम् ।
प्राक् परिगृह्योपेन्द्र इमान् स्वान् द्राक् वितरंस्तद्वन्त ! रराज ॥१४॥

पोटलीमे रखे हुए भोजन-समूहको कमलके समान कोमल हाथोसे उठा-उठाकर उपेन्द्र श्रीकृष्ण अपने उन सखाओको बाँटते हुए अद्भुत छवि पा रहे थे ॥ १४ ॥

भोजनपात्राऽभावभयेन भ्रामितचित्ता वत्सपबालाः ।
स्वाञ्जलिपात्राण्यत्र विधाय भक्ष्यमथादंस्तत्र निधाय ॥१५॥

भोजनपात्रकी कमी न हो जाय, इस भयसे भ्रान्त चित्तवाले वत्सपाल ग्वाल-बाल अपनी अजलिको ही वहाँ पात्र बनाकर भक्ष्य पदार्थको उसीमे रखकर खाने लगे ॥ १५ ॥

केचिदमीषां वृक्षवराणां स्थूलदलौघैः साधनभूतैः ।
ते कृतपात्राः पुष्पसमूहैस्तूर्णमखादन् स्वप्रियदत्तम् ॥१६॥

इनमेसे कुछ बालक बडे-बडे वृक्षोके स्थूल पत्तोको लाकर, उन्हीके द्वारा पत्तल बना लेते तथा कुछ बालक चौडे-फूलोसे ही पात्रका काम लेकर अपने प्रिय-सखाके दिये हुए भोजनको चटपट खाने लगे ॥ १६ ॥

पात्रमलब्ध्वा केचिदितस्तु स्थूलदृषद्भिस्त्वग्भिरगानाम् ।
पल्लवसङ्घैः सत्फलवृन्दैः संस्कृतपात्रास्तेऽभ्यवजह्रुः ॥१७॥

कितने ही गोप-बालक कोई पात्र न पाकर इधर-उधरसे स्थूल पत्थर उठा लाते, कुछ वृक्षोकी छाले छुडा लाते, कितने ही लोग पल्लव-समूह तथा उत्तम फलोका सग्रह करके उन्हीसे पात्रका काम लेते हुए भोजन कर रहे थे ॥ १७ ॥

भोज्यरुचिं स्वां मित्रगणेषु संकथयन्तो दिव्यचरित्राः ।
तेऽत्र हसन्तस्तेन तदानीं सार्धमखादन् कर्मफलं स्वम् ॥१८॥

वे दिव्य-चरित्रवाले बालक अपनेको मिले हुए भोज्य पदार्थका स्वाद मित्रोसे बताते हुए खाते थे। वे हँसते हुए वहाँ श्रीकृष्णके साथ उस समय भोजनके व्याजसे अपने पुण्य-कर्म-फलका ही उपभोग कर रहे थे ॥ १८ ॥

विन्यस्य वेणुमुदराम्बरमध्यभागे शृङ्गं रुरोः शुचितरं लघुवेत्रयष्टिम् ।
कक्षे विधृत्य कवलं दधिभक्तयोस्तत् सव्याञ्जलौ विपरिगृह्य मखेश आद ॥१९॥

मुरलीको कमरके फेटेमे खोसकर और परम पवित्र रुरुशृङ्ग एव बेतकी छोटी-सी छडीको काँखमे दबाकर दही-भातके कौरको बाँयी अजलिमे रखकर यज्ञेश्वर भगवान् स्वय भोजन कर रहे थे ॥ १९ ॥

तिष्ठन् स्ववत्सपवयस्यगणस्य मध्ये तान् हासयंश्च कृतकैः प्रियनर्मभिः स्वैः ।
ध्यानायनं स्मितशुभं स्वमिमान् प्रदर्श्य खादन् स दृष्ट इह सिद्धजनैर्नभस्थैः ॥२०॥

अपने वत्सपाल-सखाओके बीचमे बैठकर उन सबको किये गए प्रिय-परिहास वचनो द्वारा हँसाते हुए तथा अपने हास-शोभित सुन्दर ध्येय-स्वरूपका इन सखाओको दर्शन कराते हुए श्रीहरि भोजन करते थे। इस अवस्थामे उस समय आकाशमे स्थित सिद्धजनोने उन्हे देखा ॥ २० ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
गतः सर्गो द्विपञ्चाशो महाकाव्ये स्तवात्मके ॥२१॥

कृष्णप्रसाद घिमिरेकी कृति ‘श्रीकृष्ण चरितामृत’ नामक इस स्तोत्रात्मक महा-काव्यमे यह बावनवाँ सर्ग पूरा हुआ ॥ २१ ॥



# त्रिपञ्चाशः सर्गः

[ भोजनव्यग्रेषु तेषु सुदूरं विगतान् गोवत्सान् प्रत्यानयनार्थं ततो भगवतो गमनम् ।
तदन्तरा विरिञ्चिकृत गोवत्सवयस्यहरणम् । भगवता च तत्तद्वयस्यवत्स-
स्वरूपग्रहणपूर्वकं स्वस्वगृहागमनञ्च ]

( वसन्ततिलकावृत्तम् )

**तत्सिद्धमार्गमवलम्ब्य निरीक्षमाणेष्वाकाशचारिषु विमुग्धमनःसु तेषु ।**
**आसीत् परात्मगतिरुन्नतहंसयानस्तत्रैक उच्चपुरुषोऽपि विलोकमानः ॥१॥**

आकाशमार्गका अवलम्बन करके समस्त आकाशचारी देवता जब मुग्ध-चित्त होकर वहाँका दृश्य देख रहे थे। उस समय ऊँचे हंस-यानपर आरूढ एक उच्च-पुरुष भी जिनकी परमात्मतत्वमे गति थी, वहाँकी स्थितिका अवलोकन कर रहे थे ॥ १ ॥

**हंसस्थ एष भगवानपि सोऽहमेवं जाताभिमान इह लोककृदस्मि चेति ।**
**अध्यास्य चात्मनि परात्मगतिं तमीशं विस्मृत्य कोऽयमितिरूढदुराग्रहोऽभूत् ॥२॥**

हंसपर बैठे हुए वे पुरुष साक्षात् भगवान् ब्रह्मा ही थे तो भी उन्हे यह अभिमान हो गया था कि मै ही समस्त लोकोका निर्माता हूँ। वे अपनेमे ही परमात्मा-पनका आरोप करके उन परमेश्वरको भुलाकर मेरे सिवा ईश्वर कौन है ? इस दुराग्रहको उन्होने मनमे भर लिया था ॥ २ ॥

**गोवत्सपालकशिशोः परमेशितुस्तद्दृष्ट्वाऽघदैत्यहननं स्वत आत्मशक्तिम् ।**
**सम्भाव्य चाऽस्य महिमोपनतां विरिञ्चिर्जज्वाल हन्त ! मनसीश्वरताविमूढः ॥३॥**

वह गोवत्सपालक शिशु साक्षात् परमेश्वर था। उसने जो अघासुरका वध किया, उसे देखकर उसमे स्वय प्रकट एव उसकी महिमासे सम्पन्न आत्मशक्तिकी सम्भावना करके ईश्वरताके अभिमानसे मूढ हुए विधाता, मन ही मन ईर्ष्यासे जल उठे। यह कितने खेदकी बात है ? ॥ ३ ॥

**दीर्घं विमृश्य चकितोऽयममुष्य कृत्येषूच्चेष्वतर्क्यमहिमान्वित एष बालः ।**
**कः स्यात् किमेष जगदीश्वर एव साक्षात् स्याद्वेति तत्र विचिकित्सनतत्परोऽभूत् ॥४॥**

दीर्घकाल तक विचार करके उसके उच्चकोटिके कर्मोके विषयमे चकित हुए ब्रह्माजी वहाँ इस सशयमे पड गए कि अतर्क्य-महिमासे सम्पन्न यह बालक कौन हो सकता है ? क्या यह साक्षात् जगदीश्वर ही होगा ? ॥ ४ ॥

**स्यात् कोऽप्यमुष्य जगदुत्तरकर्मकर्तुः किं शक्तिरस्त्यविहिता सफला सदैवम् ।**
**किं वैष मय्यपि समर्थ इहाऽस्य शक्तिं ज्ञातुं मयेश्वरतया क्रियतेऽत्र किञ्चित् ? ॥५॥**

कोई भी क्यो न हो ! क्या लोकोत्तर कर्म करनेवाले इस बालककी शक्ति सदा इसी प्रकार अप्रतिहत और सफल होती है ? क्या यह मुझपर भी शासन करनेमे समर्थ है ? ईश्वर होनेके कारण मुझे यहाँ उसकी शक्तिको समझनेके लिए कुछ करना ही होगा ॥ ५ ॥

**तस्मादिहाऽवसरमेव समीक्ष्य सज्जस्तिष्ठन्नहं विगतभीश्छलमाश्रितः स्वम् ।**
**अन्विष्य रन्ध्रमतुलं तदमुष्य वत्सान् बालान् सखीनपहराम्यसमक्षमद्य ॥६॥**

इसलिए यहाँ अवसरकी प्रतीक्षामे ही मैं तैयार होकर बठा हूँ । इसके किसी अनुपम छिद्रका अन्वेषण करके मे निडर हो, छलपूर्वक परोक्षमे आज इसके बछड़ो और सखा-ग्वाल-बालोका अपहरण कर लूँगा ॥ ६ ॥

**इत्थं विचिन्त्य परमात्मनि दत्तदृष्टौ तस्मिन् स्थितेऽत्र शिशुराडपि भक्तमश्नन् ।**
**तन्मायया तृणविलोभितचित्तवृत्तीन् वत्सानपश्यदसमं विगतान् सुदूरम् ॥७॥**

ऐसा सोचकर परमात्मा श्रीकृष्णपर दृष्टि गड़ाए ब्रह्माजी अपनी योजना कार्यान्वित करनेके लिए तैयार हो गए । उधर शिशुओंके राजा श्रीकृष्णने भी दही-भात खाते हुए देखा—ब्रह्माकी मायासे घासपर लुभाये हुए बछडे असाधारणरूपसे बहुत दूर चले गए हैं ॥ ७ ॥

**मित्राम्बुधावितरबालकवत्स्वमेव प्रेम्णा निमज्य विगतेश्वरभाव एषः ।**
**यावन्निरीक्षत इमान् स्वसखांस्तदैवाऽपश्यत्स्ववत्सगमनागतभीतिभग्नान् ॥८॥**

उन मित्रोके समुद्रमे साधारण बालककी भाँति अपने आपको ही प्रेमसे निमग्न करके ईश्वर-भावको छिपाये हुए नन्द-नन्दनने जब अपने इन सखाओपर दृष्टिपात किया, तब उन सबको अपने-अपने बछडोके दूर चले जानेसे प्राप्त हुए भयके कारण हतोत्साह पाया ॥ ८ ॥

**त्यक्त्वाऽशनं सकलवर्णकमार्गणार्थं यावत्स्वयं जिगमिषन्ति भयोत्कचित्ताः ।**
**ते चाप्यभाणिषत तत्वविदा सुखेन यस्माद्बिभेति भयमप्यभितो विभूम्नः ॥९॥**

वे सब भयोद्विग्नचित्त हो, सारे बछडोकी खोजके लिए ज्योही स्वयं भोजन छोड़कर जानेको उद्यत हुए, त्योही उन तत्त्वज्ञ एव सुख-स्वरूप प्रभुने, जिन सर्वव्यापी भगवान्से भय भी भय खाता है, सब ग्वाल-बालोंसे कहा—॥ ९ ॥

**भुङ्ध्वं भवन्त इह तृप्तिकरं तदेत-**
**द्भक्ष्यादिकं द्रुतमहं परितो भ्रमित्वा ।**
**वत्सान् वनादपि घनात् परिमृग्य सोऽत्राऽऽ-**
**नेष्ये सखाय इति संकथयंस्ततोऽगात् ॥१०॥**

'सखाओ ? तुम सब लोग यहाँ तृप्तिकारक भक्ष्य-भोज्यादि पदार्थ ग्रहण करो (खाओ) मै ही शीघ्रतापूर्वक चारो ओर घूमकर घने वनसे भी बछडोको ढूँढकर यहाँ ले आऊँगा'। ऐसा कहकर वे प्रभु चले गए ॥ १० ॥

दूरं गतः स भगवानित एककोऽपि
ह्यश्नन् स्ववामभुजसंस्थितमिष्टमन्नम् ।
सामान्यबालकमिवाऽभिनयन् मुकुन्दो
वृन्दावनाद्वनमहो ! विचरन् रराज ॥११॥

भगवान् मुकुन्द, अपने बाँये हाथमे विद्यमान अभीष्ट-अन्नको खाते हुए अकेले ही वहाँसे बहुत दूर चले गए। साधारण बालककी भाँति अभियन करते हुए वे वृन्दावनके एक बनसे दूसरे वनमे विचरने लगे। अहो ! ऐसा करते समय उनकी अद्भुत शोभा हो रही थी ॥ ११ ॥

प्राप्ताऽन्तरो विधिरिहैत्य ततः क्षणेन
वत्साञ्जहार सकलान्निजयोग शक्त्या ।
दृष्ट्वैकमेनमखिलेश्वरमादिदेवं
तत्रत्यमित्रनिवहांश्च तदस्य युक्त्या ॥१२॥

तब अवसर पाकर ब्रह्मा क्षण-भरमे यहाँ आ पहुँचे और अपनी योगशक्तिसे उन्होने सारे बछडोका अपहरण कर लिया। इतना ही नही उन अखिलेश्वर आदिदेवको अकेला देख वे वहाँ बैठे हुए उनके सखाओको भी युक्तिसे उडा ले गए॥ १२ ॥

कृत्वा स्वकृत्यमिदमुत्सुकताप्ररूढं
ज्ञातुं ह्यमुष्य गतिमात्महिताममेयाम् ।
नीत्वा हृषीकनिवहान्निजनेत्रमार्गं
सोऽतिष्ठदस्य चरितं च निरीक्षमाणः ॥१३॥

उत्सुकतापूर्वक ऐसा कार्य करके भगवान्की आत्महितकारिणी अमेय-गतिको जानने-के लिए ब्रह्माजी अपनी सम्पूर्ण इन्द्रियोको नेत्रके मार्गमे ले जाकर प्रभुके चरित्रको देखते हुए आकाशमे स्थित हो गए॥ १३ ॥

गोवत्सपालक इतो बहुषु स्थलेषु
गत्वा निरीक्ष्य च वनान्यभितो भ्रमित्वा ।
दृष्ट्वा च गह्वरदरीः पुलिनानि कुञ्जा-
न्यप्राप्य तांस्तु पुनरत्र निवृत्त एषः ॥१४॥

इधर गोवत्सपालक भगवान् श्रीकृष्ण बहुतसे स्थानोमे गए और सबओर घूमघाम-कर अनेकानेक बनोका निरीक्षण करके पर्वतके कन्दराओ, नदीके तटो, और वनके कुञ्जोकी भी छान-बोन करते रहे। परन्तु कही भी उन बछडोको न पाकर ये पुन पूर्वस्थानपर ही लौट आए ॥ १४ ॥

अत्राऽपि गोपशिशुकांञ्छरणागतांस्तां-
स्त्यक्तान् पुराऽन्नपरान् स्वसखानदृष्ट्वा ।
संभ्रान्त एष बहुधाऽऽश्रितवैश्यवृत्ति-
र्वत्सान् सखींश्च विचिकाय वने समन्तात् ॥१५॥

वहाँ भी अपने शरणागत सखा ग्वाल-बालोको, जिन्हे पहले भोजन करते छोड गए थे, न देखकर विशेषकर वैश्यवृत्तिका आश्रय लिए होनेसे घबरा उठे और वनमे चारोओर बार-बार बछडो और सखाओको ढूँढते फिरे ॥ १५ ॥

एवं मुहुर्मुहुरयं परिमार्गमाणो-
ऽप्यप्राप्य तानिह वने पुलिनेऽपि बालान् ।
स्वात्मानमेव तमपश्यदयं परात्मा
यस्माज्जगद्भवति बुद्बुदवज्जलेषु ॥१६॥

इसप्रकार बारम्बार अन्वेषण करने पर भी जब वे वनमे और यमुनाके तटपर भी उन बालको और बछडोको न पा सके, तब उन परमात्माने अपने-आपपर ही दृष्टिपात किया। जिससे कि पानीमे बुलबुलोके समान इस जगत्का प्रादुर्भाव होता है ॥ १६ ॥

आदर्शवद्विमल आत्मनि तेन तत्र
दृष्टं विरिञ्चिविहितं छलमात्मयोगात् ।
वैज्ञानिका ! विजयते जगति स्वशक्ति-
र्यांसद्व्रताः स्वत उपासत एव नित्यम् ॥१७॥

दर्पणके समान निर्मल आत्मामे उन्होने अपने योगसे छलपूर्वक की हुई ब्रह्माजीकी करतूत देखी। वैज्ञानिको! आत्मशक्ति ही जगत्मे सर्वोपरि विराजमान है। जिसकी उपासना यम-नियमादि उत्तम व्रतोका पालन करनेवाले साधु ही नित्य-निरन्तर स्वत किया करते हैं ॥ १७ ॥

आस्तां, तदत्र भगवानवगम्य कृत्यं
स्वात्मानमेवमसृजद्बहुधा गुणाक्तम् ।
रूपोज्जलं रुचिरमस्य विधेः सुकृत्ये
विस्मापनं तदितरैर्मनसाऽप्यतर्क्यम् ॥१८॥

अस्तु, यहाँ अब अपना कर्तव्य क्या है ? यह जानकर भगवान्ने अपने-आपको ही अनेक गुणवान् रूपोमे प्रकट कर लिया। उनका वह रुचिर उज्वल-रूप विधाताकी सृष्टिमे उनके लिए भी विस्मयोत्पादक था। उनके सिवा दूसरे लोग तो उसके विषयमे मनसे सोच भी नही सकते थे ॥ १८ ॥

**ब्रह्माणमेनमतदर्हकृतं स्वभक्तं रक्तांश्च गोकुलजनान् व्रजमातृगाश्च ।**
**संहर्षयन्नतिशयं मुदमात्मनीनामेभ्यः प्रदातुमयमत्र बभूव नाना ॥१९॥**

यह अयोग्य कर्म करनेवाले अपने भक्त ब्रह्माको, अपने प्रति अनुरक्त गोकुलके लोगोको तथा व्रजकी माताओ और गौओको अत्यन्त हर्षोत्फुल्ल करके एव इन सबको आत्मानन्दकी प्राप्ति करानेके लिए ये भगवान् स्वय वहाँ नाना-रूपोमे प्रकट हो गए ॥ १९ ॥

**एवं परात्मगतदिव्यगुणैः स्वशक्त्या योगेन गोपशिशुवत्सकपूर्वरूपम् ।**
**धृत्वा विभुः स उभयायितमात्मतत्वं पश्यन् बभावथ वने मधुरं विहस्य ॥२०॥**

इसप्रकार परमात्मसम्बन्धी दिव्य-गुणोसे, अपनी शक्तिसे और योग-बलसे गोपशिशुओ और बछडोका पूर्ववत् रूपधारण करके वे सर्वव्यापी भगवान् आत्मतत्त्वको उभय-रूपमे प्रकट देखते हुए वृन्दावनमे मधुर हास्यकी छटा विखेरकर अनुपम शोभा पाने लगे ॥ २० ॥

**आत्मेच्छयाऽपरिमितानि जगन्ति सृष्ट्वा**
**यः क्रीडतीह तदमीषु कृतावतारः ।**
**चित्रं किमस्य सुखदे चरितेऽमिते च**
**यान्यूर्णनाभिरिव संग्रसते च भूयः ॥२१॥**

जैसे मकड़ी अपने मुखसे जाले बुनती और पुनः उन्हे निगल जाती है। उसी प्रकार जा परमात्मा अपनी इच्छासे ही असख्य जगत्का निर्माण कर उन्हीमे अवतार धारण कर यहाँ क्रीडा करते हैं। उनके सुखदायक एव अपरिमित चरित्रके विषयमे क्या आश्चर्य की बात है ? ॥ २१ ॥

**एकोऽप्यनेक इव सोऽत्र विभू रराज गोवत्सपालकमिषेण विभिन्नमूर्तिः ।**
**तत्राऽपि यस्य शिशुवत्सगणस्य यद्यद्ध्यासीत्तथैव विधृताखिलनामरूपः ॥२२॥**

वे सर्वव्यापी महेश्वर एक होकर भी अनेककी भाँति यहाँ शोभा पाने लगे। उन्होने बछडो और चरवाहोंके व्याजसे भिन्न-भिन्न शरीर धारण कर लिए। उनमे भी जिस शिशु या बछडेका जैसा नाम-रूप था, वैसे ही नाम-रूप और लक्षणोसे युक्त अपना रूप बना लिया ॥ २२ ॥

**चिन्हानि च प्रतिहतात्मगतिस्तदेषां तान्येव संदध उपायविदात्मशक्त्या ।**
**आसीच्च यत्तु दलवेत्रविषाणवेणु यष्ट्यादिकं विधृतमेवमभूत् क्षणेन ॥२३॥**

उपायवेत्ता तथा अप्रतिहत आत्मगतिवाले उन भगवान्ने जिन बालकोके जैसे-जैसे चिन्ह थे, उनके उन्ही चिन्होको धारणकर लिया तथा जिनके पास जो पल्लव, बेत, शृङ्ग वेणु और छडी आदि वस्तुये थी, उनके रूपमे भगवान्ने क्षण-भरमे वैसी ही सारी वस्तुये ग्रहण कर ली ॥ २३ ॥

**तद्वद्राज पुनरेष वयस्यवत्सशीलस्वभावगुणरूपसुभूषणानि ।**
**संधृत्य तत्तदखिलं चरितं तदायुः संगृह्य वाक्यमिव वर्णपदक्रमाढ्यम् ॥२४॥**

प्रत्येक सखा और बछडेके जैसे शील, स्वभाव, गुण, रूप और आभूषण थे, वैसे ही वे सब धारण करके भगवान् श्रीकृष्ण सुशोभित होते थे। उन-उन बालको और बछड़ोके सारे चरित्र, आयु, तथा वर्ण, पद एव क्रमसे युक्त वाक्य भी भगवान्ने अपना लिए थे ॥२४॥

**प्रीतो गुरुः सुमतिशिष्यमिहाऽऽत्मतत्त्वं संदर्शयत्यखिलमेव यथैव तद्वत् ।**
**ब्रह्माणमेष विहितच्छलमात्मशक्तिं संदर्शयन् स्वविभुतां च बभौ भवात्मा ॥२५॥**

जैसे प्रसन्न गुरुदेव अपने शुद्ध-बुद्धिवाले शिष्यको यहाँ सम्पूर्ण आत्मतत्त्वका साक्षात्कार करा देते है, उसी प्रकार ये जगदात्मा श्रीकृष्ण छल करनेवाले ब्रह्माको भी अपनी शक्ति और सर्वव्यापकताका दर्शन कराते हुए सुशोभित हुए ॥ २५ ॥

**आत्मा स्वयंप्रभुरयं तत आत्मनोऽशांस्तानात्मनोऽर्भकगणांस्तदिमांश्च वत्सान् ।**
**स्वेनात्मना प्रतिनिवार्य वनात्सलीलं क्रीडन् ययौ व्रजमकुण्ठितपूर्णबोधः ॥२६॥**

जिनका पूर्णबोध कभी कुण्ठित नही होता तथा जो स्वय ही सबके आत्मा हैं, वे प्रभु ये श्रीकृष्ण अपने ही अशभूत जीवात्मस्वरूप ग्वाल-बालो और बछडोको अपने स्वरूपसे ही वनकी ओरसे लौटाकर लीलापूर्वक क्रीडा करते हुए व्रजमे गए ॥ २६ ॥

**विश्वं प्रपूर्णमद एतदपि प्रपूर्णं पूर्णात् प्रपूर्णतरमेतदुदच्यते च ।**
**पूर्णस्य पूर्णमवगृह्य तदत्र पूर्णे पूर्णं स्वतो विजयते ह्यवशिष्यते च ॥२७॥**

वह विश्वरूप ब्रह्म पूर्ण है और यह दृश्य प्रपञ्च भी पूर्ण है। पूर्ण ब्रह्मसे ही पूर्ण जगत्की उत्पत्ति होती है। पूर्णका पूर्ण लेकर भी उस पूर्ण-ब्रह्ममे पूर्ण ही शेष रहता है। अत. उस पूर्ण ब्रह्मकी सदा विजय हो ॥ २७ ॥

**एतां महोपनिषदं गिरमात्मनीनां चोद्घुष्य यत्र सुधियो विरमन्ति कृच्छ्रात् ।**
**तत्रैव तां श्रुतिहितात्मगतिं प्रदर्श्य वेणुं प्रवाद्य स ततो व्रजमध्यमायात् ॥२८॥**

महत्त्वपूर्ण उपनिषद्की यह आत्मकल्याणकारिणी वाणी है। इसका जहाँ उद्घोष करके सुधीजन इस क्लेशमय संसारसे विरत हो जाते हैं। वही श्रवणमात्रसे हितकारिणी आत्मगतिका प्रदर्शन करके वे भगवान् वनसे वेणु बजाते हुए व्रजमे लौट आए ॥ २८ ॥

वेणोः प्रवादनमिदं प्रथमं तदस्य लोकोत्तरं समभवच्छ्रवणाभिरामम् ।
विश्रुत्य यद्विधिरसौ तु निरीक्षमाणो व्यामोहमाप विगतेन्द्रियवृत्तिरत्र ॥२९॥

वेणुका यह प्रथम उत्कृष्ट वादन लोकोत्तर चमत्कारसे युक्त प्रकट हुआ। वह सुननेमे अत्यन्त अभिराम था। उसे सुनकर विधाताकी भी इन्द्रिय-वृत्तियाँ विलीन हो गईं और वे बाल-बछड़ो सहित भगवान्का वह लौटना देखकर व्यामोहमे पड गए ॥ २९ ॥

तं भूमिसात् ससुखमत्र विधाय चैतद् बभ्राम गोष्ठमभितो व्रजवासिकर्णे ।
श्रुत्वेह यत्तदितरे सुरसिद्धसङ्घैः साकं स्वतो मुमुदिरे स्वरतिं तदाप्य ॥३०॥

यह वेणुवादन ब्रह्माजीको आसानीसे भूमिपर खीच लाया और गोष्ठमे चारोओर फैलकर व्रजवासियोके कानोमे प्रविष्ट हुआ। जिसे सुनकर यहाँ ब्रह्माजीसे भिन्न जो भी भूतलनिवासी थे वे, सब देवताओ और सिद्धोके समुदायके साथ उस समय आत्मरति पाकर स्वत प्रमुदित हो उठे ॥ ३० ॥

नीत्वाऽऽमवत्सनिवहानथ तत्तदेषां गोष्ठं प्रवेश्य पृथगेव धृतस्वभावः ।
स्वात्मांशवत्सपशिशूनपि तत्तदेषां प्रावेशयश्च पृथगेव गृहाणि तत्र ॥३१॥

बछडोके समुदायको ले जाकर पृथक्-पृथक् गोष्ठमे भगवान्ने प्रवेश कराया। उन सबके रूपमे भगवान्ने अलग-अलग स्वभाव धारण कर रखा था। इसी तरह अपने अशभूत वत्सपाल गोपशिशुओको भी उन्होने पृथक्-पृथक् उनके घरोमे पहुँचाया ॥ ३१ ॥

सायं गतः स धृतबालकवत्सरूपः प्राग्वन्निदर्श्य रतिमुच्चतरां स्थितोऽत्र ।
तावत्समेत्य निजगोष्ठमरण्यतस्ता गावः स्ववत्सनिवहान् ददृशुः पुरेव ॥३२॥

ग्वाल-बाल और बछडोका रूप धारण करके सायंकाल घरको लौटे हुए भगवान्ने उन-उन घरोमे स्थित हो, पहलेकी ही भाँति स्वजनोके प्रति उत्कृष्ट प्रीति दिखाई। तबतक ही वनसे अपने गोष्ठमे लौटकर गौओने भी पूर्ववत् अपने बछड़ोको देखा ॥ ३२ ॥

किन्त्वद्य गाव इदमस्य महाचरित्रं ज्ञातुं स्वभावविवशाः परमात्ममात्रम् ।
हुङ्कारहूतिपरिसंगतवत्सकान् स्वान् स्तन्यं विलिह्य मुहुरेवमपाययंस्ताः ॥३३॥

परन्तु आज गौये भगवान्के इस परमात्ममय महाचरित्रको जाननेमे समर्थ न हो सकी। क्योकि वे अपने पशु स्वभावसे विवश थी। तथापि हुम्बा-रवसे पुकारे जाने पर आए हुए अपने उन बछडोको जो दूध छोड चुके थे बारम्बार चाटकर स्तनपान कराने लगी ॥३३॥

क्षीरं सुधामयमिमाः स्रवदौधसं तत् संपाय्य तानिह परात्मगतात्मकामाः ।
वात्सल्यतो हृदयखण्डनिभेषु चैषु सम्प्रापुरैक्यमधुनैव विलिह्य गात्रम् ॥३४॥

अपने स्तनोसे झरते हुए अमृतमय दूधको उन्हे पिलाकर वे ऐसी सन्तुष्ट हुई, मानो उनकी परमात्म-प्राप्ति विषयक अपनी इच्छा हो गई हो। वे बछडे उनके हृदयके टुकडे थे। उनके शरीरको वात्सल्यसे चाटकर वे उसी समय उनमे एकताको प्राप्त हो गई ॥ ३४ ॥

**तास्तादृशीरनुनयन् परिवृद्धसत्त्वात् स्नेहाद्विमुग्धमनसा च तथैव कुर्वन् ।**
**हन्ताऽयमत्र विरराज परात्मनिष्ठै रव्याकृतैरपि मनोभिरतर्क्यचेष्टः ॥३५॥**

सत्त्वगुणकी वृद्धि होनेके कारण उन, वैसे वात्सल्य रसमे डूबी हुई, गौओके अनुकूल चलते हुए स्नेह-विमुग्धचित्तसे तदनुरूप आचरण करते हुए ये भगवान् वहाँ विराजमान हुए। यह बडे हर्षकी बात है। उनकी तात्कालिक-चेष्टा परमात्मनिष्ठ, अव्याकृत, मनके लिए भी अतर्कणीय थी ॥ ३५ ॥

**गोपीष्वितस्तनयतां परिगृह्य तासां मायां विनैव परिवर्धिततत्स्वभावः ।**
**चिक्रीड हन्त ! जगदीश्वर एष तत्र तास्ता नयन् परमधाम पयः पिबंश्च ॥३६॥**

इधर गोपियोके पुत्रभावको प्राप्त होकर मायाका प्रयोग किए बिना ही उनके स्नेह शील-स्वभावको बढाकर ये जगदीश्वर श्रीकृष्ण उनके दूध पीते और उन्हे परमधाम पहुँचाते हुए वहाँ आनन्द-जनक क्रीडा करने लगे ॥ ३६ ॥

**ब्रह्मैव तं परिविभाव्य गलद्धृदस्ताः स्वाङ्के निधाय परिरभ्य शरीरमस्य ।**
**आघ्राय मूर्ध्नि परमां मुदमाप्य चैनं स्तन्यं सुधोपमममेयमपाययंश्च ॥३७॥**

उन्हे साक्षात् ब्रह्म ही समझकर उनका हृदय द्रवित होने लगा। वे उन्हे गोदमे लेकर उनके शरीरको हृदयसे लगाकर और उनका मस्तक सूँघकर परम-आनन्दका अनुभव करके इन्हे अपना अमृतोपम एव अमेय स्तन्य-रस पिलाने लगी ॥ ३७ ॥

**तास्तान् विशोध्य सुजलैः परिमार्ज्य गात्रं**
**संप्रोञ्छय वस्त्रशकलैश्च विलिप्य लेपैः ।**
**सम्भूष्य सतिलकभूषणवस्त्रबर्हैं**
**रक्षां विधाय मितलध्वशनं ददुश्च ॥३८॥**

उन्होने उन बालकोको शुद्ध जलसे नहला कर उनके शरीरका परिमार्जन करके, वस्त्रके टुकडे (गमछे) से पोछकर, अगराग लगाकर, तिलक, आभूषण, वस्त्र और मोरपंखसे विभूषित करके और रक्षा-विधान कर उन्हे भोजनके लिए हल्का एव परिमित अन्न दिया ॥ ३८ ॥

**गोपीभिरेवमसकृत् परिपालितोऽयं संलालितः सुपरिवर्धित आत्मभावात् ।**
**संवर्ध्य तासु परमात्मगतं स्वभावं तद्ब्रह्मतां च विपिनव्रजयोरखेलत् ॥३९॥**

इस प्रकार गोपियो द्वारा बारम्बार लालित, पालित और आत्मभावमे परिवर्धित होकर, उनमे परमात्म एव ब्रह्मभावका सम्बर्द्धन करते हुए, ये भगवान् वृन्दावन और व्रजमे खेलते रहे ।। ३९ ।।

**तद्वद् व्रजस्थजनतास्वखिलासु वृद्धं वात्सल्यमात्मतनयेष्वधिकं यदाऽऽसीत् ।**
**निःसीम तत्तु ववृधेऽविहतं गुरुत्वं चादाय गोकुलगताविह यावदब्दम् ।।४०।।**

उसी तरह व्रजकी सारी जनतामे, जो अपने पुत्रोके प्रति अधिक बढा हुआ वात्सल्य था, वह इन दिनो इतना बढा कि पराकाष्ठाको पहुँच गया। गोकुलके अवलम्ब-स्वरूप उन श्रीकृष्णमे अप्रतिहत गौरवको लेकर सबका वात्सल्यभाव एक वर्षतक निरन्तर बढ़ता रहा ।। ४० ।।

**इत्थं परात्मा परमात्मरूपकान् वत्सांश्च बालांश्च वने व्रजेऽपि च ।**
**नयन् सुखाब्धावपि तान्निमज्जयंश्चिक्रीड यावत्परिवत्सरं ततः ।।४१।।**

इस तरह परमात्मा श्रीकृष्णने परमात्मस्वरूप बछडो और ग्वाल बालोको व्रजसे वनमे और वनसे व्रजमे ले जाते हुए उन सबको सुखके समुद्रमे निमग्न करके पूरे एक वर्षतक वहाँ क्रीडा की ।। ४१ ।।

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**सर्गोऽप्यगात् त्रिपञ्चाशो महाकाव्ये स्तवात्मके ।।४२।।**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे यह तिरपनवाँ सर्ग पूरा हुआ ।। ४२ ।।



## चतुःपञ्चाशः सर्गः

[ श्रीरामेण सार्धं वनगतस्य, भगवतस्तद्विचिकित्साया विनिवारणं तत्रत्यस्थितिबोधकरणवर्णनञ्च । ]

( भुजङ्गप्रयातवृत्तम् )

तदेवंविधेऽज्ञाततत्त्वेऽस्य कृत्ये चलत्यत्र मुग्धेष्वथो गोकुलेषु ।
बलेनैकदा सार्धमेष स्वबालः प्रमुच्य स्ववत्सान् गतश्चारणार्थम् ॥१॥

जब इस प्रकार अज्ञात-रहस्यवाला श्रीकृष्णका लीला-चरित्र चल रहा था और गोकुलके सब लोग उसपर मुग्ध हो रहे थे, तब एक दिन ये जगदीश्वर श्रीकृष्ण, बलरामजी तथा अपने स्वरूपभूत ग्वाल-बालोके साथ बछडे खोलकर उन्हे चरानेके लिए वनमे गए ॥१॥

तदासंस्त्रियामास्तु पञ्चावशिष्टा भुवः कालमानेन वर्षस्य पूर्तौ ।
वनं तान् समानीय सानन्दमेष समं तैरखेलच्च गाश्चारयित्वा ॥२॥

उस समय पृथ्वीके कालमानसे एक वर्ष पूर्ण होनेमे केवल पाँच राते शेष रह गई थी। उन सबको वनमे ले आकर ये श्रीकृष्ण बछड़े चराते हुए उन सखाओ और बलरामजीके साथ खेलने लगे ॥ २ ॥

इतो गोपवर्याः समादाय गाः स्वाः पुरावद् गताश्चारणार्थं तदाऽऽसन् ।
चरन्त्यस्तृणं तास्तु गोवर्धनाद्रौ स्ववत्सानपश्यंस्तदद्रेरधस्तात् ॥३॥

इधर बडे-बडे गोप अपनी गौये साथ लेकर उन्हे चरानेके लिए पूर्ववत् वनमे आए थे। गोवर्धन पर्वतपर घास चरती हुई उन गौओने पर्वतके नीचे तराईमे चरते हुए अपने बछडोको दूरसे देखा ॥ ३ ॥

अगस्याऽस्य कूटादिमानात्मवत्सान् विलोक्यैव तद्गोपदुर्गाध्वतोऽत्र
अगाद् गोव्रजोऽतर्कयन्नात्मपातं स्ववात्सल्यतस्तत्समाकृष्टचेताः ॥४॥

उस गिरिराजके शिखरसे उन अपने बछडोपर दृष्टि पडते ही उनके प्रति वात्सल्यसे आकृष्टचित्त हो वह गौओका समुदाय ऐसे दुर्गम-मार्गसे, जिसपर चलना गोपोके लिए भी कठिन था, गिरनेकी कोई परवाह न करते हुए, दौडकर उनके पास जा पहुँचा ॥ ४ ॥

ककुद्ग्रीव एवं स्वहुङ्कारघोषैः कृताकारणो गोगणस्तांश्च मोहात् ।
स्रवत्स्तन्य ऊर्ध्वं गते वक्त्रपुच्छे विगृह्याऽध्वभागं प्रसिञ्चन् गतोऽत्र ॥५॥

उन गौओकी गर्दनें कोहानोंसे सट गई थी। वे अपने हुङ्कारघोषसे मानो बछडोको बुला रही थी। मोहवश उनके स्तनोसे दूध झर रहा था। उन्होने मुख और पूँछ ऊपरकी ओर उठा ली थी। इस प्रकार वे गौये रास्तेको दूधसे सीचती हुई वहाँ गईं ॥ ५ ॥

**समेत्याथ एभिस्त्विमा वत्सवत्यो मुदाऽपाययन्स्वात्मवत्सान् स्वदुग्धम् ।**
**गिलन्तीव मन्ये विलिह्याऽङ्गमेषां प्रवृद्धात्मभावं नयन्तीव तांश्च ॥६॥**

नीचे आकर ये गौएँ इन बछडोसे मिली। यद्यपि उनसे दूसरे बच्चे भी पैदा हो गये थे। तथापि उन बडे बछडोको प्रसन्नतापूर्वक अपना दूध पिलाने लगी। उनके सुन्दर अग मानो पिघले जा रहे थे। ऐसा जान पडता था, वे इन बछडोके अङ्गोको चाट-चाटकर मानो इन्हे निगली जाती हैं और परिपुष्ट-आत्मभावकी ओर ले जा रही हैं ॥ ६ ॥

**निरीक्ष्येदृशीं गोदशां ताश्च रोध्दुं ह्यकुर्वन् वृथाऽऽयासमत्राऽर्यगोपाः ।**
**परं मौघ्यमाप्ताः सलज्जास्तदानीं दधुः क्रोधमेष्वेव तच्चारणेऽत्र ॥७॥**

गौओकी ऐसी दशा देख बडे गोपोने उन सबको रोकनेका व्यर्थ प्रयास किया। वे भारी असफलता पाकर लज्जित हो उठे और उस समय गोचारण-कालमे वहाँ उन्हे इन गौओपर ही महान् क्रोध हुआ ॥ ७ ॥

**तथाप्यागता दुर्गमार्गाच्च तेऽत्र स्ववत्सैः समं वत्सपांश्चाऽप्यपश्यन् ।**
**तदैवं स्थिते गोधने दत्तभावास्तदात्म्यैक्यमालोक्य मुग्धा बभूवु ॥८॥**

तथापि वे गोप दुर्गम मार्गसे भी चलकर वहाँ तक आए। आनेपर उन्हे अपने बछडोके साथ वत्सपाल बालक भी दिखाई दिए। उस समय इस स्थितिमे जब उन्होने अपने गोधनपर ध्यान दिया, तब बछडोके साथ उनकी एकात्मता देखकर वे मुग्ध हो गए ॥ ८ ॥

**निरोद्धुं तदाऽऽत्मानमेवाऽसमर्था गतक्रोधवेगाः प्रवृद्धात्मभावाः ।**
**सुतान् वत्सपान् स्वांस्त आलिङ्ग्य गाढं ममज्जुस्तदात्माम्बुधावेकरूपे ॥९॥**

इनके क्रोधका वेग जाता रहा। उनमे आत्मभावना बढ गई। अब वे अपने-आपको भी रोकनेमे असमर्थ हो गए और बछडे चरानेवाले अपने पुत्रोका गाढ आलिङ्गन करके एकमात्र आत्मानन्द-सिन्धुमे डूब गये ॥ ९ ॥

**गतेष्वेषु तद्वैष्णवं स्वात्मधाम व्यतीतोऽत्र कालोऽपि किञ्चित् तथैव ।**
**इतोऽस्याऽग्रजो राम एष स्वयोगाद्विभुत्वादिमानेकरूपानपश्यत् ॥१०॥**

वे सब उस समय मानो वैष्णव-आत्मधाममे पहुँच गए थे। उसी स्थितिमे वहाँ कुछ काल व्यतीत हो गया। इधर श्रीकृष्णके बडे भाई बलरामने भी विभु होनेके कारण अपनी योग-शक्तिसे इन बछडो और बालकोको एकमात्र श्रीकृष्णरूप ही देखा ॥ १० ॥

**तदा तर्कयामास चैष स्वचित्ते किमेतत् ? परित्यक्तदुग्धप्रपानाः ।**
**इमे बालवत्सा इमा गोपगावो विकुर्वन्त्यपूर्वं मिथः प्रेम चैशम् ॥११॥**

तब उन्होने अपने चित्तमे तर्क-वितर्क किया यह क्या बात है ? जो बालक और बछडे माताका दूध पीना छोड चुके है, उनके प्रति ये गोप और गौये परस्पर ऐसा अपूर्व ईश्वरीय प्रेम कैसे करते हैं ? ॥ ११ ॥

**विचित्रं दरीदृश्यते ! मेऽनुजोऽयं परं ब्रह्म चात्मा जगत्स्थावराणाम् ।**
**तदस्मिन्निमे कुर्वते स्नेहमित्थं स्वपुत्रेष्विवाऽभूतपूर्वं कथं स्यात् ? ॥१२॥**

इस समय मेरा यह छोटा भाई विचित्र दिखाई देता है। यही सम्पूर्ण स्थावर-जङ्गम प्राणियोका आत्मा परब्रह्म है। अत. ये लोग मेरे इस भाईमे ही ऐसा अलौकिक प्रेम करते हैं—इन बछडो और बालकोके रूपमे मेरा भाई ही दृष्टिगोचर होता है। अन्यथा इन सबका अपने पुत्रोके प्रति यह अभूतपूर्व प्रेम कैसे होता ?॥ १२ ॥

**दृढं बर्धते प्रेम दिव्यं तदेषां मिथोऽभिन्नबुद्धयैक्यमाप्तं स्वतन्त्रम् ।**
**विवर्तः किमीदृक् ? किमेषाऽसुराणां विभात्यत्र मायाऽथवाऽमर्त्यमाया ? ॥१३॥**

इन सबका दिव्य-प्रेम दृढतापूर्वक बढ रहा है। जो परस्पर अभिन्न-बुद्धिसे एकत्व-को प्राप्त और स्वतन्त्र है। यह कैसा विवर्त ( भ्रम ) है ? क्या यह असुरो अथवा देवताओकी मायाका विलास है ॥ १३ ॥

**मया निश्चितैषा जगद्भर्तुरस्य परब्रह्मगा वैष्णवी भाति लीला ।**
**तदस्यैव माया न चेन्मय्यपीयं समर्था भवेद्वा कथं मोहनार्थम् ॥१४॥**

मुझे तो यही निश्चित जान पडता है कि यह इन जगदीश्वर श्रीकृष्णकी परब्रह्म-सम्बन्धिनी वैष्णवी-लीला प्रकट हुई है। अवश्य इन्हीकी माया है। अन्यथा यह मुझपर भी अपनी मोहिनी डालनेमे कैसे समर्थ हो सकती थी ?॥ १४ ॥

**विचिन्त्येदृशीं वाचमुच्चां स रामो यदा पश्यति स्माऽऽत्मभित्तिं स्वयोगात् ।**
**तदैवाऽमुनाऽऽलोकितास्तेऽपि सर्वे चिदानन्दसत्यात्मवैकुण्ठरूपाः ॥१५॥**

ऐसी ऊँची बातका विचार करके बलरामने अपने योगबलसे जब आत्म-भित्तिपर दृष्टिपात किया, तब तत्काल ही उन्हे वे सबके सब सत्य, चिदानन्दमय, वैकुण्ठरूप दिखाई दिए ॥ १५ ॥

**ततो ध्यानमग्नोऽयमस्मिन् स्वतत्त्वे स्फुरज्ज्ञानकोशोऽनुजेनाऽव्ययेन ।**
**सुखं पृष्ट इत्थं भवान् किङ्करोति किमर्थं धृतं ध्यानमार्येण चेति ॥१६॥**

तब वे इस आत्मतत्त्वमे ध्यानमग्न हो गए। उनका ज्ञान-कोश प्रकाशित हो उठा। तब उनके अविनाशी अनुज श्रीकृष्णने सुखपूर्वक पूछा—'आर्य ! आप ऐसा क्यो करते हैं ? आपने यह ध्यान किस लिए लगा लिया ?' ॥ १६ ॥

ज्ञातो मया परमतत्त्व ! भवान् परात्मा स्वात्मा च सर्वजगतां गतिरेकरूपा ।
पश्यामि चैतदपि चैत्य इमे सुरेशा नाऽत्रर्षयश्च विलसन्ति भवान् विभाति ॥१७॥

[ वे बोले— ] 'परमतत्त्वस्वरूप प्रभो ! मैने जान लिया कि एकमात्र आप परमात्मा ही सम्पूर्ण जगत्के आत्मा तथा एकमात्र अवलम्ब हैं। मै अपने चित्तमे यह भी देख रहा हूँ कि ये देवेश्वर इन्द्र आदि तथा ऋषि-मुनि यहाँ कोई नही है। सब रूपोमे एकमात्र आप ही प्रकाशित हो रहे हैं॥ १७ ॥

सर्वं भवान् विलसतीह परात्मरूपे सत्ये परे स्थित उभे भवनामरूपे ।
संधृत्य भाति च भवे बहुधाऽऽत्मयोगात् संमोह्य सिद्धपुरुषानपि पूर्णशक्त्या ॥१८॥

'आप ही इस दृश्य-जगत्मे विलास कर रहे हैं और परम सत्य परमात्मरूपमे स्थित हैं। ससारके नाम और रूप दोनोको धारण करके आप ही इस भवमे नाना-रूपसे प्रकाशमान हैं। आप अपने योगबल और सम्पूर्ण-शक्तिसे सिद्ध पुरुषोको भी मोहित करके विराजमान हैं॥ १८ ॥

तथापि सर्वं व्यवहारतः प्रभो ! विदृश्यते भिन्नमिदं स्वतः कथम् ।
कथं पृथक्त्वं च विभाति तत्त्वयि तन्नाथ ! मां बोधय शक्तिमैश्वरीम् ॥१९॥

'प्रभो ! तथापि व्यवहार-दृष्टिसे सब कुछ स्वत भिन्न-भिन्न कसे दिखाई देता है। आप एकमात्र अद्वितीय परमेश्वरमे यह पार्थक्य अथवा भेद-भाव क्यो प्रतीत होता है। ( अत. ) नाथ ! आप ही मुझे अपनी ईश्वरीय-शक्तिका बोध कराइये' ॥ १९ ॥

नतेन शीर्ष्णा गुरुभक्तिमत्तया बलेन चेत्थं विनिवेदितो विभुः ।
विहस्य किञ्चित् परमैश्वरं महः प्रदर्शयन्नात्ममहत्त्वमब्रवीत् ॥२०॥

अत्यन्त गौरवपूर्ण भक्ति-भावके कारण शिर झुकाकर जब बलरामजीने इस प्रकार निवेदन किया, तब भगवान् श्रीकृष्णने किञ्चित् मुस्कुराकर अपने परमेश्वरीय तेजको प्रदर्शित करते हुए अपनी महत्ताके विषयमे इस प्रकार बोले—॥ २० ॥

मदीया चिच्छक्तिर्विलसति विहायाऽर्थपदवीं
स्वतन्त्रेयं माया जगति सफलेयं विजयते ।
विनोदो मामित्थंकरण इह सञ्चोदयति च
तदात्माभिज्ञाने स्वत उपरतिः प्राप्यत इतः ॥२१॥

'आर्य ! मेरी चित्-शक्ति, यहाँ अर्थ-पदवीका परित्याग करके सर्वत्र विलास करती है। यही स्वतन्त्र मेरी माया है। जो जगत्मे इस प्रकार सफलता पूर्वक विजयिनी हो रही है। मेरा विनोदी स्वभाव ही मुझे ऐसे खेल करनेके लिए प्रेरित करता रहता है। अत मेरे आत्मस्वरूपके ज्ञान हो जानेपर इस संसारसे स्वत. उपरति प्राप्त होती है॥ २१ ॥

मायां द्रष्टुमिमामजोऽपि भगवान् ज्ञातात्मतत्त्वोऽप्ययं
विश्वेशो विधिरेत्य मित्रनिवहान् वत्सांश्च मेऽत्राऽहरत्।
तं तां दर्शयितुं मयाऽप्यधिकृता मायाऽऽत्मनैवाऽऽत्मनः
सृष्ट्वा स्वात्मनि रम्यतेऽग्रज ! ततः स्याल्लब्धबोधो भवान् ॥२२॥

'बडे भैया ! मेरी इस मायाको देखनेके लिए तत्त्ववेत्ता होनेपर भी इन अजन्मा-लोकेश्वर भगवान् ब्रह्माने यहाँ आकर मेरे सखाओ और बछड़ोको चुरा लिया। तब उन्हे उस मायाका दर्शन करानेके लिए मैने भी अपनेसे ही अपनी मायाका प्रकट की और अपने-आपमे ही बाल-बछडोकी सृष्टि करके मै यहाँ रमण करता हूँ। अत. आपको सब बातोका रहस्य ज्ञात हो जाय' ॥ २२ ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते।
चतुः पञ्चाशसर्गोऽगादेष काव्ये स्तवात्मके ॥२३॥

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महा-काव्यमे यह चौवनवाँ सर्ग पूरा हुआ ॥ २३ ॥



## पञ्चपञ्चाशः सर्गः

[ मनुष्यमानतो वर्षमितसमये ब्रह्मण. पुनस्तत्रागमनम् । सर्वानपि वत्सबालान् भगवत. स्वस्वरूपावस्थितानवलोक्य स्वाभिमानभङ्गपूर्वक तस्य तेभ्यो नमनम् । ]

( वंशस्थेन्द्रवंशयोरुपजातिवृत्तम् )

समीक्ष्य मूढोऽथ विधिः स्वयोगतः प्रभोर्महत्त्वं तदिदं गतव्यथः ।
चराचरात्मानममोघदर्शनं भूयोऽपि खेलन्तमपश्यदत्र तम् ॥१॥

तदनन्तर, अपने ही प्रयोगसे मूढ बने हुए विधाता भगवान्‌के इस महत्त्वका साक्षात्कार करके व्यथारहित ( मोहशून्य ) हो गए । उन्होने देखा, जिनका दर्शन कभी व्यर्थ नही जाता तथा जो चराचर जगत्‌के आत्मा हैं, वे प्रभु पुन. वहाँ ( वृन्दावनमे ) खेल रहे हैं ॥ १ ॥

त्रुट्यात्मकः काल इहाऽस्य मानत आसीद् गतः किन्तु स मर्त्यमानतः ।
बभूव वर्षात्मक एव लक्षितः स चाऽपि तेनाऽखिललोककारिणा ॥२॥

ब्रह्माजीके कालमानके अनुसार बछडो और बालकोके अपहरणसे लेकर अब तक केवल एक 'त्रुटि' ( पलभर ) का समय बीता था, किन्तु मानवीय कालमानसे वह समय उन अखिललोक-स्रष्टा ब्रह्माजीको एक वर्षके बराबर लक्षित हुआ ॥ २ ॥

अनन्तशक्त्याश्रयिणा महात्मनाऽनन्ताभिधानेन तथाऽगुणात्मना ।
रामेण तेनाऽप्यवितर्किता विभोस्तदात्ममाया जयतीह सर्वदा ॥३॥

जो अनन्त-शक्तिके आश्रय और 'अनन्त' नामसे अभिधेय हैं, उन निर्गुणात्मा महात्मा बलरामजीके लिए भी अतर्कणीया वह भगवान् श्रीकृष्णकी आत्ममाया सदा सर्वोपरि विराजमान है ॥ ३ ॥

मुहुर्महामोहतमो विनाशनमुद्भूतमात्मन्यखिलार्थदं महः ।
संलक्ष्य दीर्घं प्रविचिन्त्य योगिराण् ममज्ज तन्मोहमहाम्बुधौ पुनः ॥४॥

जो बारबार महान् मोहमय तमका विनाशक, एवम् सकल-वाञ्छित पदार्थ देनेमे समर्थ, प्रभुका अपने-आपमे प्रकट तेज है, उसे देखकर और दीर्घकालतक उसके विषयमे विचार करके योगिराज ब्रह्माजी पुन मोहके महासागरमे डूब गए ॥ ४ ॥

तदात्मना नोदित एष लोककृद्विचारयामास तदस्य कर्मणि ।
यावन्त आसन् व्रजबालवत्सकाः संमोह्य ते सन्ति मयैव शायिताः ॥५॥

फिर अपने आपसे ही प्रेरित हो इन लोकस्रष्टा ब्रह्माने भगवान्‌के उस कर्मके विषयमे इस प्रकार विचार आरम्भ किया—'यहाँ जितने भी व्रजके ग्वाल-बाल और बछड़े थे, उन सबको तो मैने ही मोहित करके सुला दिया है ॥ ५ ॥

माया मदीया सफलैव तेष्वहो ! ये शेरते मच्छयनेऽधुनाऽपि च ।
परन्तु दृश्यन्त इमेऽपि तादृशाः समागता अत्र कथं त एव वा ॥६॥

'अहो ! उनके प्रति किया हुआ मेरी मायाका प्रयोग तो सफल ही है। क्योकि वे इस समय भी मेरी दी हुई शय्यापर ही सो रहे हैं। परन्तु ये भी तो वैसे ही बालक दिखायी देते हैं, इनका यहाँ आगमन कैसे हुआ ! ये वे ही तो नही हैं ? ॥ ६ ॥

तावन्त एवाऽत्र यथावयःस्थिताः सर्वे समानाश्च तथाकृतिं श्रिताः ।
के ते क एते कुत आगता इह किमुत्थितास्तेऽत्र रमन्त एव यत् ॥७॥

'ये सब बालक भी, गिनतीमे उतने ही हैं, इन सबकी अवस्था भी उन्हीके समान है। सब समान ही दिखायी देते हैं, इनकी आकृति भी उनसे ठीक मिलती-जुलती है। वे कौन हैं ? और ये कौन है ? यहाँ कहाँसे आए है ? क्या वे निद्रासे उठकर आ गए हैं, जो यहाँ खेल रहे है ? ॥ ७ ॥

कालो व्यतीतोऽत्र मनुष्यमानत एकाब्दरूपः परमेष वत्सपः ।
आक्रीडतेऽमीभिरहो ! इमेऽपि च क्रीडन्ति मित्रेण सहामुनाऽऽत्मनः ॥८॥

'अहो ! मानवीय-मानसे यहाँ एक वर्षका समय व्यतीत हो गया, परन्तु यह वत्स-पालक श्याम-शिशु आज भी यहाँ उन्ही सखाओके साथ खेलता है और ये भी अपने उसी मित्रके साथ खेल रहे हैं' ॥ ८ ॥

सत्याः क एतासु विभिन्नतास्वथो सत्याश्च के तेषु ? विचारयन्नसौ ।
तांस्तान्निरूप्याऽप्युभयस्थलाश्रितान्छशाक न ज्ञातुमिदं यथार्थतः ॥९॥

'इन विभिन्नताओके होते हुए भी इन बालकोमे सच्चे कौन है और झूठे कौन हैं ?' इस तरह विचारते हुए वे बार-बार यहाँ-वहाँ दोनो स्थानोके बालकोको देखकर भी उनमे यथार्थ कौन हैं ? यह जाननेमे समर्थ न हो सके ॥ ९ ॥

दत्तावधानोऽत्र निरीक्ष्य चात्मभूर्ध्यात्वापि दीर्घं परमार्थलब्धये ।
स्वतोऽसमर्थोऽत्र विभोः सतां प्रिये लीलाह्रदेऽस्मिन् निममज्ज चाऽन्ततः ॥१०॥

फिर ब्रह्माजीने सावधान होकर दृष्टिपात किया, वे यथार्थ बातको जाननेके लिए देरतक ध्यानस्थ भी हुए, परन्तु स्वत. किसी निर्णयतक पहुँचनेमे असमर्थ हो गए, फिर वे भगवान्‌के उस लीला-सरोवरमे, जो सज्जनोको प्रिय है, अन्ततोगत्वा डूब गए ॥ १० ॥

संमोहयंस्तत्र जगद्विमोहनं स्वतोऽविमोहं विभुमेनमीश्वरम् ।
स्वयैव मायाऽऽश्रितया धियात्मभूर्विमोहितो हन्त ! तदैक्यरूपणे ॥११॥

जो स्वत मोहसे रहित हैं और सम्पूर्ण जगत्की मोहमे डालनेवाले है, उन सर्वव्यापी ईश्वर श्रीकृष्णको मोहित करनेकी चेष्टा करते हुए विधाता अपनी मायाश्रित-बुद्धिके द्वारा दोनो स्थानोके बाल-बछड़ोकी एकताका निरूपण करनेमे स्वय मोहित हो गए ॥ ११ ॥

युक्तं तदेतद्भवतीह का गतिः खद्योतकान्तेरधिसूर्यमह्नि सा ।
तमोऽपि नैहारमथाऽधिरात्रि तन्निर्दिशयेद्वा कथमात्मनो गतिम् ? ॥१२॥

यह ठीक ही तो है। दिनमे सूर्यके सन्निधानमे जुगनूकी प्रभाकी क्या गति होगी ? अथवा रातमे कुहरेका अन्धकार अपनी गतिका प्रदर्शन कैसे कर सकेगा ? ॥ १२ ॥ ॥

महाम्बुधौ तद्गतवारिबिन्दवः स्वे नामरूपे प्रविहाय सर्वथा ।
मिलन्ति यद्वत्त इवाऽस्य मोहकास्ते हेतवश्चैक्यमिहाऽऽपुरव्यये ॥१३॥

जैसे महासागरमे जलकी बूँदे अपने नाम और रूपको सर्वथा त्यागकर मिल जाती है, उसी प्रकार ब्रह्माजीके द्वारा प्रयुक्त भगवान्को मोहनेके लिए जितने भी हेतु थे, वे सब उन अविनाशी परत्मामामे मिलकर एकत्वको प्राप्त हो गए ॥ १३ ॥

यथा महावस्तुनि चाऽल्पवस्तुनो गतिर्भवत्येव हतात्मशक्तिका ।
तथाऽभवत्तत्र विभौ च तत्कृता व्यामोहिनी शक्तिरियं हतोदया ॥१४॥

- जैसे महावस्तुमे अल्प-वस्तुकी गति अपनी शक्तिको नष्ट करनेवाली होती है उसीप्रकार उन व्यापक परमात्माके प्रति ब्रह्माजीद्वारा की गयी यह व्यामोहिनी-शक्ति स्वत. नष्ट हो गयी ॥ १४ ॥

संपश्यतस्तस्य तदग्र एव ते ह्यासन् पुरा येऽस्य वयस्यवत्सपाः ।
विवर्तितास्तेन परात्मना स्वतो रूपान्तरेष्वप्रतिमप्रभावतः ॥१५॥

ब्रह्माजीके देखते-देखते उनके सामने ही वे श्रीहरिके सखा वत्सपाल उन परमात्मा श्रीकृष्णके द्वारा अपने अप्रतिम-प्रभावसे रूपान्तरमे परिणत कर दिये गए ॥ १५ ॥

कीटा विवर्त्यन्त इहाऽपि सुन्दरं पेशस्कृता प्राकृतशक्तिनाऽपि च ।
किमत्र चित्रं परशक्तिधारिणा स्वपूर्वरूपेष्वपि तद्विवर्तनम् ? ॥१६॥

पेशस्कृत् ( भ्रमरी ) नामक कीट-विशेष प्राकृत-शक्तिसे युक्त है तो भी वह इस जगत्के लघु-कीटोको प्रभावित करके सुन्दर ढगसे अपने रूपमे परिणत कर लेता है, फिर जो अपने रूपमे परिणत कर लेता है, फिर जो परम—अप्राकृत शक्तिधारी परमात्मा है, उनके द्वारा अपने ही पूर्वरूप उन बालकोमे रूप-विवर्तन किया जाना क्या आश्चर्यकी बात है ? ॥ १६ ॥

एते व्यदृश्यन्त तदा विरिञ्चिना नीलाम्बुदश्यामलविग्रहाः शुभाः ।
कौशेयपीताम्बरयुग्मभूषिता आपादशीर्षं परिशोभितास्तथा ॥१७॥

उस समय विरञ्ची ( ब्रह्माजी )ने देखा, वे सब बालक नीलमेघके समान अभिराम श्यामसुन्दर-विग्रह वाले हो गए। वे पैरसे लेकर सिरतक ( श्री कृष्णके समान ही परिशोभित हो उठे ) ॥ १७ ॥

किरीटिनः कुण्डलिनो लसन्मुखाश्चतुर्भुजाः शोभितनेत्रपङ्कजाः ।
हारैरनेकैस्तुलसीबिमिश्रितैर्विभूषिता नैकविधैश्च भूषणैः ॥१८॥

उनके मस्तकपर मोर-मकुट और कानोमे कुण्डल झलमलाने लगे। इससे उनके मुखकी शोभा होती थी। वे सबके सब चार भुजाओसे युक्त हो गए। उनके नेत्र कमलके समान शोभित होने लगे। तुलसी-मिश्रित अनेक प्रकारके पुष्पहार तथा भाँति-भाँतिके आभूषणोसे विभूषित हो वे चमक उठे ॥ १८ ॥

सशङ्खचक्राब्जगदादिभिः शुभैर्धृतैश्चतुर्बाहुषु भूषितास्तथा ।
श्रीवत्सचिह्नाङ्कितवक्षसो लसद्दिव्याङ्गदा नूपुरमेखलान्विताः ॥१९॥

वे चारो भुजाओमे, शङ्ख, चक्र, पद्म, और गदा आदि सुन्दर आयुध धारण करके विभूषित थे। वक्ष स्थल श्रीवत्सचिन्हसे सुशोभित थे। उनकी बाहोमे दिव्य-अंगद, पैरोमे नुपूर और कटिप्रदेशमे कर्धनीकी अपूर्व शोभा हो रही थी ॥ १९ ॥

तद्ब्रह्मसूत्रैश्च शुभाङ्गुलीयकै रत्नाञ्चितैः कुण्डलकङ्कणादिभिः ।
विरोचमाना बहुपुण्यकारिभिः पुष्पावलीभिर्बहुशः सुपूजिताः ॥२०॥

ब्रह्मसूत्रो, सुन्दर-अँगूठियो तथा रत्न-जटित कङ्कण, कुण्डल आदिसे वे प्रकाशमान थे। बहुतसे पुण्यात्माजन पुष्पमालाओ द्वारा उनकी अनेक प्रकारसे उत्तम पूजा करते थे ॥ २० ॥

स्मितैः शशाङ्कच्छविसुन्दरैः शुभैराह्लादकैः स्वैश्च कटाक्षवीक्षणैः ।
विनाशयन्तः प्रियभक्तहृद्गतान्यसत्तमान्यात्मतमांसि शन्तमैः ॥२१॥

उनके अधरोपर चन्द्रमाकी चाँदनीके समान सुन्दर मंद-हास छिटक रहे थे, उनके कटाक्षपूर्ण अवलोकन शुभ एवं आह्लादक थे। उन परम शान्तिदायक हासो और कटाक्ष-वीक्षणो द्वारा वे प्रिय भक्तोके हृदयगत अत्यन्त असत् अज्ञानान्धकारोका नाश करते थे ॥२१॥

स्वभक्तचित्तेष्वखिलेषु संस्थितांस्तानर्थकामान् रजसा गुणेन च ।
विसृज्य सत्त्वेन सुखं प्रपूर्य तान् संपालयन्तः स्वपरात्मतेजसा ॥२२॥

अखिल भक्तजनोके चित्तोमे टिके हुए उन-उन अर्थों एव कामनाओको रजोगुणसे सृष्ट करके विशुद्ध सत्त्वगुणद्वारा अनायास ही उन्हे पूर्णकर अपने परमात्म-तेजसे उन सबकी वे रक्षा करते थे ॥ २२ ॥

**आब्रह्मकीटात्मगतैस्तदात्मभि - श्चराचरैस्तैर्निजमूर्तिधारिभिः ।**
**उपास्यमानाः पृथगेव संस्थितैस्तौर्यत्रिकैर्गीतमहोदयास्तथा ॥२३॥**

ब्रह्मासे लेकर कीटपर्यन्त जितने भी चराचर प्राणी हैं, वे सब पृथक्-पृथक् मूर्ति-धारण करके उन सबकी उपासनामे सलग्न थे तथा नृत्य, गीत एवं वाद्योद्वारा उनके महान् अभ्युदयका गान करते थे ॥ २३ ॥

**सत्सिद्धिभिर्योगगताणिमादिभि - र्विद्यात्ममायादिमहाविभूतिभिः ।**
**स्वरूपमालम्ब्य विभिन्नया धिया गत्या च भक्त्या च पृथक् सुसेविताः ॥२४॥**

योगप्रसिद्ध अणिमा आदि सिद्धियाँ तथा विद्या, माया आदि महाविभूतियाँ मूर्तिमती होकर विभिन्न दृष्टि, गति तथा भक्तिके द्वारा पृथक्-पृथक् उनकी सेवा करती थी ॥ २४ ॥

**सत्साङ्ख्यतत्त्वैर्महदादिभिर्हितैः संख्यां चतुर्विंशतिमाश्रितैः स्वतः ।**
**धृत्वाऽऽत्ममूर्ति प्रणयाभिसंस्थितैरुपास्यमानाः ससुखं समन्ततः ॥२५॥**

चौबीसकी सख्याको प्राप्त जो साख्य-सम्मत महत् आदि तत्त्व हैं, वे मूर्तरूप धारण करके प्रेमपूर्वक स्थित हो सब ओरसे बडे सुखसे उनकी उपासना करते थे ॥ २५ ॥

**कालेन साक्षाद्गुणहेतुना तथा स्वभावसंस्कारमयेन कर्मणा ।**
**गुणैश्च कामैर्विधृतात्मरूपकैः शक्त्या महद्धर्या च पृथङ् निषेविताः ॥२६॥**

सत्त्व, रज और तम इन तीनो गुणोके साक्षात् कारण काल, स्वभाव, संस्कार, कर्म, गुण और काम ये सब पृथक् पृथक् देह धारण करके अपनी शक्ति तथा महती-समृद्धिके द्वारा पृथक् पृथक् उन सबकी सेवा करते थे ॥ २६ ॥

**प्रवृद्धमात्मीयमहत्त्वमाश्रितैस्तेनैव तेषां परिबाधितोदयाः ।**
**स्थित्या स्वयैवं परिपूर्णमानसाः सदिच्छया ध्वस्तजगत्प्रपञ्चकाः ॥२७॥**

अपनी बढी हुई महत्ताका आश्रय ले उसीके द्वारा अन्य सबके उदयका बाध करने-वाले वे सबके सब अपनी स्थितिसे ही परिपूर्ण मनोरथवाले थे तथा अपनी सदिच्छा ( या सत्सं-कल्प ) मात्रसे जगत्-प्रपञ्चका नाश करनेमे समर्थ थे ॥ २७ ॥

**सच्चित्प्रबोधाः स्फुरदात्मसद्रसा आनन्दमात्रा जगदेकहेतवः ।**
**सद्भक्तिगम्याः परतत्त्वरूपकारतैर्ज्ञानिभिश्चाऽऽस्मृतसद्गतिं श्रिताः ॥२८॥**

उनका स्वरूप सत्य, चैतन्य एव ज्ञानमय था। वे परिस्फुरित आत्मानन्द रसमय मूर्तिवाले थे। केवल आनन्दके पुञ्ज थे, जगत्के एक ही हेतु थे, एकमात्र उत्तम-भक्तिसे ही उनतक पहुँच हो सकती थी। वे सभी परमतत्त्वमय रूपवाले थे। उन्होने ऐसी सद्गति-का आश्रय ले रक्खा था, जो ज्ञानियोको भी समझमे आनेवाली नही है ॥ २८ ॥

**एवं ददर्शाऽज इमान्निरन्तरं ह्यतृप्तनेत्रैः परमात्मनोऽखिलान् ।**
**यद्ब्रह्म सत्यं कथयन्ति सद्बुधा स्तदेव नानात्वमितं स्वयोगतः ॥२९॥**

इस प्रकार ब्रह्माजीने उन सबको निरन्तर परमात्माके रूपमे ही देखा, उनके नेत्र उन सबके दर्शनसे तृप्त ही नही होते थे। ज्ञानी-जन जिसे सत्य ब्रह्म कहते हैं। मानो वही यहाँ अपनी योगशक्तिसे नानारूपोमे प्रकट हुआ था ॥ २९ ॥

**चराचरं विश्वमनन्तमप्यदोऽनन्तस्य यस्याऽऽत्मगतं विराजते ।**
**उद्भूतमप्यत्र विदृश्यते स्फुटं प्रकाशितं चाऽस्य परात्मतेजसा ॥३०॥**

यह चराचर एवं अनन्त विश्व ब्रह्माण्ड भी जिन अनन्त परमात्माके अपने भीतर ही प्रकाशमान है, जिनके परमात्म-तेजसे प्रकट होकर यह यहाँ भी स्पष्टरूपसे प्रकाशित दिखाई देता है। ( वह ब्रह्म ही यहाँ नानारूपोमे प्रकट हुआ है—ऐसा ब्रह्माजीको भान हुआ ) ॥ ३० ॥

**ततो विरिश्चिः परिवृद्धकौतुकात्स्तब्धेन्द्रियः स्थाणुरिवाऽभवत्तदा ।**
**अग्रे सुपर्णस्य भुजङ्गमो भयाद् यथा भवत्येव तथैव निश्चलः ॥३१॥**

तब ब्रह्माजीका कौतुक अत्यन्त बढ जानेसे उनकी इन्द्रियाँ स्तब्ध हो गयी। वे उस समय ठूँठ-काठके समान अचल हो गए। जैसे गरुडके सामने सर्प भयके कारण निश्चल हो जाता है, वही दशा ब्रह्माजीकी भी हुई ॥ ३१ ॥

**मूर्तस्वरूपात् परतत्त्वसंज्ञकादमूर्तरूपं परिगृह्य चिन्मयम् ।**
**पुरः स्फुरच्चाऽपरसंज्ञमक्षरं ह्यानन्दमात्रं तदिदं ददर्श सः ॥३२॥**

फिर उस परतत्त्व-सज्ञक मूर्तस्वरूपका त्याग कर वे सब चिन्मय अमूर्तरूपको धारण करके अपर सज्ञक अक्षर तत्त्वके रूपमे स्थित हो गए। अब वे केवल आनन्दमय रह गए थे ब्रह्माजीने उनके इस रूपका भी साक्षात्कार किया ॥ ३२ ॥

**स्वतो यदासीत्परिशुद्ध आत्मनि विभाव्यमानं मनसोऽप्यगोचरम् ।**
**अमेयसौख्यप्रदमव्ययाभिधं तथाऽप्यतर्क्यं महिमान्वितं परम् ॥३३॥**

जो विशुद्ध आत्मामे स्वत विभाव्यमान ( ध्यानका विषय ) था, जहाँतक मनकी भी पहुँच नही है, जो अमेयसौख्य-दायक अव्ययात्मा, अतर्क्य और महिमान्वित परम-पद है ( उसे ब्रह्माजीने देखा ) ॥ ३३ ॥

विभूषणं सद्वचसाऽप्यशान्तिहृन्महात्मनां चैत्यतमोविनाशकम् ।
व्यक्तात्परं केवलमात्मकारणं तत्स्वानुभूताविह सत्प्रकाशकम् ॥३४॥

वह उत्तम वाणी ( वेद )का भी भूषण है, अशान्तिको हर लेनेमे समर्थ है, महात्मा-जनोके चित्तगत अन्धकारको नष्ट करनेवाला है। दृश्यमान व्यक्त प्रपञ्चसे अतीत, केवल ( अद्वितीय ), जीवात्माओके भी आविर्भावका कारण तथा आत्मानुभूति-कालमे सत्तत्त्वका प्रकाशक है ॥ ३४ ॥

तदत्र पश्यन् विधिरेष तद्गतः पेशस्कृता रुद्धगतिः कृमिर्यथा ।
क्षणाद्बभूवाऽथ तदेव तन्मयो विमोहमाप्याऽपि भृशं भ्रमन्मतिः ॥३५॥

उसीका साक्षात्कार करते हुए वे विधाता तद्गतचित्त हो गए। 'पेशस्कृत्' ( कीट विशेषके ) द्वारा अवरुद्ध कीट जैसे उसीमे चित्त लगाए हुए क्षणभरमे तदाकार हो जाता है, उसीप्रकार वे ब्रह्मा भ्रान्त-बुद्धि हो विमोहको प्राप्त होकर भी उस तत्त्वके चिन्तनसे तद्रूप हो गए ॥ ३५ ॥

निरूप्य चैनं तदवस्थमक्षतं ततस्त्वसौ गोपशिशुर्दयार्णवः ।
स्वां योगमायां प्रतिगृह्य सर्वथा प्राग्वद्रराज प्रतिसीरिकां क्षिपन् ॥३६॥

तदनन्तर कृपाके अपार-पारावार उन गोपशिशुरूप श्रीहरिने जब ब्रह्माजीको उक्त अवस्थामे पहुँचकर निर्विकार स्थितिमे स्थित देखा तो अपनी योगमायाको सर्वथा समेटकर उसके पर्देको उठा लिया और पहलेकी भाँति एकाकी गोप-शिशुके रूपमे सुशोभित हो उठे ॥ ३६ ॥

इतो विरिञ्चिर्मृतवत्स्थितः क्षणं कृपां तदीयां समवाप्य चिन्मयीम् ।
सँल्लब्धबोधोऽथ भवे मतेन्द्रियः स्वं ज्ञातवानात्मपुरः स्थितं च तम् ॥६७॥

इधर ब्रह्माजी क्षणभर उनकी चिन्मयी-कृपाको पाकर मृतकतुल्य निष्पन्द-भावसे खडे रहे, तत्पश्चात् बाह्य वस्तुका भान होनेपर उनकी इन्द्रियाँ ससारकी ओर उन्मुख हुई और उन्होने अपनेको तथा सामने खडे हुए उन नन्द-नन्दनको भी जाना ॥ ३७ ॥

दिशो विलोक्यैव पुनः स योगिराट् प्रसन्नचेता अभितः स्फुरत्प्रभाः ।
वृन्दावनं जीवनिकायभास्वरं पुरो व्यपश्यत्तरुगुल्मसङ्कुलम् ॥३८॥

इसकेवाद सपूर्ण दिशाओको सब ओरसे प्रकाशमान देखकर योगिराज ब्रह्माजीका चित्त प्रसन्न हो गया। उन्होने अपने समक्ष वृक्षो, गुल्मो और लताओसे व्याप्त वृन्दावनको देखा, जो विविध जीवोके समुदायसे दीप्तिमान् जान पडता था ॥ ३८ ॥

आजीव्यभूतं जगतां मनोहरं तत्स्थावरैरप्यभितो निषेवितम् ।
प्रपूर्णरूपं ह्यणिमादिभिर्वृतं स्वान्तं यथा शान्ततरं मनस्विनः ॥३९॥

यह बहुत-से जङ्गम प्राणियोका उपजीव्य एवं मनोहर था, अचर प्राणियोद्वारा भी सबओरसे सुसेवित था। उसका रूप सभी गुणोसे पूर्ण और अणिमा आदि सिद्धियोद्वारा सम्पन्न था। मनस्वी-महात्माओके चित्तकी भाँति वह परमशान्त प्रतीत होता था ॥३९॥

**अन्योन्यवैरा अपि दुष्टहिंसका मृगा मृगादाश्च परस्परं श्रिताः।**
**क्रीडन्त आसन् बहुधा शरीरिणां स्वात्मांशभूता इव यत्र शान्तितः ॥४०॥**

उस वृन्दावनमे एक दूसरेसे स्वाभाविक वैरवाले मृग और दुष्ट हिंसक जीव सिंह आदि भी प्रेमसे परस्पर मिलकर देहधारियोमे अपने आत्माके अशसे प्रकट हुए की भाँति शान्तिसे आपसमे नानाप्रकारकी क्रीडाएँ करते थे ॥ ४० ॥

**सान्निध्यमाप्याऽस्य शिशोर्जगत्पतेरावासभूतं तदिदं वनं स्वतः।**
**विभ्राजतेऽस्माऽत्र च तर्षकादिभिः क्षुत्तृड्विकारैरहितं हितं श्रितम् ॥४१॥**

उन बालरूपधारी जगदीश्वरका सान्निध्य पाकर उन्हीका आवास स्थान बना हुआ यह वृन्दावन कामनाओ तथा भूख-प्यास आदि विकारोसे रहित था और सर्वहितकर-भावका आश्रय ले स्वत सुशोभित होता था ॥ ४१ ॥

**अत्राऽप्यपश्यद्भगवन्तमव्ययं गोपालनन्दस्य सुतत्वमाश्रितम्।**
**तत्राऽपि मुग्धाभिनयेन वस्तुतो निदर्शयन्तं च पृथक्त्वमात्मनः ॥४२॥**

उस वनमे ब्रह्माजीने नन्दगोपके पुत्रभावको प्राप्त हुए अविनाशी भगवान् श्रीकृष्णको देखा। वहाँ भी वे अपने भोलेपनके अभिनयसे वस्तुत औरोसे अपनी विलक्षणता प्रकट कर रहे थे ॥ ४२ ॥

**प्राग्वत् स्ववत्सान् स्वसखांश्च सर्वतो विमार्गमाणं परितोऽसमञ्जसम्।**
**स्ववामबाहौ दधिभक्तमञ्जसा स्वादन्तमद्धाऽप्यसमं तथास्थितम् ॥४३॥**

वे पहले ही की भाँति अपने बछडे और सखाओको सबओर खोजते हुए सर्वथा असमञ्जस स्थितिमे पडे हुए थे। अपने बाये हाथमे रखे हुए दही-भातको अनायास ही खाते जाते थे और असाधारण अवस्थामे दृष्टिगोचर होते थे ॥ ४३ ॥

**ततस्त्वसौ निश्चितधीः सदाग्रहो विभाव्य तद्ब्रह्ममयं जगत् स्वतः।**
**अगाधबोधं परितो लसत्प्रभं तं सत्यकामं समवैक्षताऽग्रतः ॥४४॥**

तदनन्तर, सत्-तत्त्वके प्रति आग्रह रखनेवाले ब्रह्माजीने अपना विचार निश्चित करके सम्पूर्ण जगत्को स्वत श्रीकृष्ण-ब्रह्ममय जानकर उन अगाधबोधसिन्धु, परित. प्रकाशमान, सत्यकाम पुरुषोत्तमको अपने सामने ही खडा देखा ॥ ४४ ॥

**सोऽहंस्वरूपादथ हंसवाहनात् सोऽद्धाऽवतीर्याऽथ इहाऽस्य सन्निधौ।**
**आपात्य हैमोज्ज्वलमात्मविग्रहं जग्राह पादाम्बुजमेष विश्वसृक् ॥४५॥**

विश्वविधाता ब्रह्माजीका वाहन हंस 'सोऽहं' स्वरूप था। उससे तत्काल उतरकर उन्होने इन भगवान् श्रीकृष्णके समीप अपने सुवर्णगौर दिव्य-विग्रहको प्रणत करके इनके चरणारविन्दको ही पकड़ लिया ॥ ४५ ॥

भक्त्या गलन्मोह उपेन्द्रपादयोर्लुठंश्च तत्राऽपि निरन्तरं विधिः ।
पृष्ट्वा चतुर्भिर्मुकुटैः शिरःस्थितै - र्हर्षाश्रुभिस्तावकृतार्द्ररूपकौ ॥४६॥

भक्तिभावके जागरणसे उनका मोह गल गया था। वे विधाता वहाँ उपेन्द्र ( श्रीकृष्ण ) के युगल चरणोमे निरन्तर लोटने लगे। उन्होने अपने मस्तकवर्ती चारो मुकुटोसे भगवच्चरणोका स्पर्श करके उन्हे हर्षके आंसुओसे नहला दिया ॥ ४६ ॥

समुन्नमय्य स्वशिरांसि भक्तितः पश्यन् कृपालुं विभुमस्य पादयोः ।
पुनः पुनश्चापि पतन्नमन्नयं दृष्ट्वा तदस्येश्वरतां स्मरन् बभौ ॥४७॥

भक्तिसे अपने मस्तकोको उठाकर वे उन कृपालु-प्रभुको देखते और उनके चरणोमे बार-बार प्रणाम करते थे। उस समय ये भगवान्की प्रत्यक्ष देखी हुई परमेश्वरताका स्मरण करते हुए सुशोभित होने लगे ॥ ४७ ॥

पश्चात् सुखं सविनयोऽत्र समुत्थितोऽसाऽवस्तौद्विधिर्मुहुरुपेन्द्रममुं समीक्ष्य ।
भक्त्या गलद्धृदय उत्पुलकः प्रमोदाद्बद्धाञ्जलिर्विधृतवेपथुरार्यवाण्या ॥४८॥

तत्पश्चात् वे विधाता सुखपूर्वक विनीत भावसे उठकर खडे हुए और उन उपेन्द्रकी ओर देखकर आर्यवाणी ( संस्कृतभाषा ) मे उनका स्तवन किया। उस समय भक्तिभावसे उनका हृदय द्रवीभूत हो गया था। शरीरमे रोगटे खड़े हो गये थे। उन्होने आनन्दातिरेकसे अपनी दोनो अञ्जलि बाँध रक्खी थी और उनके अङ्गमे 'कम्प' नामक सात्त्विक भावका उदय हो आया था ॥ ४८ ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
पञ्चपञ्चाशसर्गोऽगान्महाकाव्ये स्तवात्मके ॥४९॥

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे यह पचपनवाँ सर्ग पूरा हुआ है ॥ ४९ ॥



# षट्पञ्चाशः सर्गः

[ ब्रह्मकृता भगवत्स्तुतिः ]

( मन्दाक्रान्ता छन्दः )

नौमीड्य ! तेऽभ्रवपुषे तडिदम्बराय गुञ्जावतंसपरिपिच्छलसन्मुखाय ।
वन्यस्रजे कवलवेत्रविषाणवेणुलक्ष्मश्रिये मृदुपदे पशुपाङ्गजाय॥* ॥१॥

'हे स्तवनीय प्रभो ! आपका श्रीविग्रह नूतन जलधरके समान श्याम है, इसके ऊपर धारण किया हुआ पीताम्बर मेघमालामे विद्युत्के समान प्रकाशित होता है। गुञ्जाके कर्ण-भूषणसे आपके कान और मोरपखके मुकुटसे आपका मस्तक मण्डित हो रहा है। आपने वन्य पुष्पोकी माला धारण कर रक्खी है। आप दही-भातके कौर, बेत, सीग और मुरलीके चिह्नसे सुशोभित हैं, आपके चरण बड़े कोमल हैं, तथा आप गोप-नन्दन हैं, मै आपको नमन करता—आपके गुण गाता हूँ ॥ १ ॥

मूर्तं विश्वं तदिमघहन् ! मत्कृतं भ्राजते यत्
तच्चाऽमूर्तं विपरिघटयन्नात्मशक्त्याऽप्रमेय ।
तत्रापि स्वं जगति विततं दर्शयन्मां च भूय
इत्थंरूपो विलसति भवान् सच्चिदानन्द एकः ॥२॥

'पापहारी अथवा अघासुर-सहारी हरे ! मेरेद्वारा रचित जो यह मूर्त-जगत् प्रकाशित होता है, इसको भी अपनी शक्तिसे अमूर्तरूपमे परिणत कर देनेवाले आप अप्रमेय हैं। फिर उस जगत्मे अपने-आपको व्यापक दिखाते हुए तथा उसमे मुझको भी पृथक् प्रदर्शित करते हुए आप इस प्रकार एकमात्र सच्चिदानन्द-स्वरूपसे विलसित हो रहे हैं' ॥ २ ॥

ज्ञातं स्वामिन् ! भगवत इदं रूपमप्यात्महेतु
स्वात्मायत्तं किल विजयते सर्वतो व्याप्तिमत्त्वात् ।
वैराजाख्यं प्रभवति यतो यच्च सूक्ष्मं ह्यतर्क्यं
यस्मिन् सर्वं विपरिणमते तत्त्वमेवाऽसि नाथ ! ॥३॥

'स्वामिन् ! हमे यह ज्ञात है कि आप भगवान्का यह रूप आत्महेतुक है—किसी दूसरे कारणसे उद्भूत नही हुआ है तथा सर्वत्र व्याप्त होनेके कारण स्वतन्त्ररूपसे सर्वोपरि

---

* लोकगुरुणा ब्रह्मणा भगवत्स्वरूपस्याऽस्य कृतसाक्षात्कारोऽयं श्लोको रूपान्तरीकर्तुमयोग्यतया ध्यानपथमवगाहमानेन मयाऽप्यत्र तथैव स्थापितः । विदुषां विमर्शनीयो भवेदिति चाशास्ते । कविः ॥

विराजमान है। उससे ही वैराजसञ्ज्ञक-विराट्की उत्पत्ति हुई है। वह स्वरूप सूक्ष्म तथा अतर्क्य है। नाथ! जिसमे सबकी विपरिणति होती है, वह तत्त्व आप ही हैं' ॥ ३ ॥

दृष्टं चैतद्वपुरपि विभो! यत्त्वया स्वेच्छयाऽत्रा-
धारि स्वामिन्! मयि विधिवशान्मोहमाप्ते कुकृत्यात्।
उद्धर्तुं मां तत इह कृपां कर्तुमेतामवाच्यां
भूतैर्भिन्नं निखिलजगतां कारणं चित्स्वरूपम् ॥४॥

'स्वामिन्! विभो! यह जो आपका रूप दृष्टिगत हो रहा है, इसे, जब भाग्यवश अपने ही कुकृत्यसे मै मोहको प्राप्त हो गया था, तब मेरा ही उद्धार करने—मुझपर ही अकथनीय कृपा करनेके लिए अपने स्वेच्छासे स्वीकार किया है। यह पॉचो भूतोसे भिन्न है तथा निखिल जगत्का कारणभूत एव चैतन्यमय है' ॥ ४ ॥

एतस्याऽपि प्रथितवपुषः पूर्वकल्पादतोऽपि
गोपालस्याऽसमसुतमयस्याऽपि तत्त्वाश्रितस्य।
नेशे ज्ञातुं विधिरहमपि क्षेमदं तन्महत्त्वं
चेदानन्दाऽतुलसुखमयं तत्कथं शक्नुयां हा! ॥५॥

'जो पूर्वकल्पसे भी सुप्रसिद्ध आपका यह अनुपम गोपनन्दनरूप एव तत्त्वोका आश्रय-भूत श्रीविग्रह है, मै विधाता होकर भी इसकी भी महिमाको जाननेमे असमर्थ हो गया हूँ, फिर जो आपका आत्मानन्दस्वरूप असाधारण सुखमयरूप है, उसकी महत्ताको मै कैसे जान सकता हूँ। हा हन्त!' ॥ ५ ॥

ज्ञानं प्राप्तुं भवति विदुषामुग्ररूपः प्रयासो
नाऽयं योग्यो न च भवति तद्धेतुरप्यात्मलब्धौ।
तस्माद्भक्तिस्तव चरणयोः सिद्धिदा शन्तमेति
बुद्ध्वा चाऽन्ये बुधजनपदान्याश्रयन्ते तदाप्त्यै ॥६॥

'ज्ञान प्राप्त करनेके लिए विद्वानोद्वारा उग्र प्रयास किया जाता है, किन्तु यह उचित नही है। क्योकि वह प्रयास आत्माकी उपलब्धिमे हेतु नही है। आपके युगल-चरणोके प्रति की गयी कल्याणमयी भक्ति ही सिद्धिदायिनी है—यह जानकर अन्यान्य भक्तजन उसे पानेके लिए भक्ति-तत्त्वके ज्ञाता बुधजनोके चरणोका आश्रय लेते है' ॥ ६ ॥

श्रुत्वा तेभ्यः ससुखमिह ते त्वत्कथां कर्णमार्गै-
र्नीत्वा चान्तर्हृदयकुहरस्थं तमस्तद्विनाश्य।
साक्षात्कृत्याऽखिलभवमयं त्वां च तत्राऽऽत्मनैव
संहृत्यैतत्सकलमखिलान् भूषयन्त्यत्र सन्तः ॥७॥

'उनके मुखसे सुखपूर्वक यहाँ आपकी कथा-वार्ता सुनकर और कर्णमार्गसे उसे भीतर ले जाकर वे उसके द्वारा अपनी हृदयगुहामे स्थित अज्ञानान्धकारका नाश कर देते हैं। फिर अखिल-विश्वरूप आपका साक्षात्कार करके इस सारे प्रपञ्चका सहार कर देते हैं और इस प्रकार वे सत-जन सबके भूषण बन जाते हैं' ॥ ७॥

दत्त्वाऽऽत्मानं तव पदयुगायैव ये गीर्मनोभ्यां
कायैश्चैवं विगतविषयाः स्वेन्द्रियाणि प्रगृह्य।
जीवन्त्यत्र त्वयि सुखमये स्वांश्च ते जीवयन्ति
धन्या मन्येऽजित! विभुरपि त्वं जितस्तैस्त्रिलोक्याम् ॥८॥

'हे अजित परमात्मन्! जो मन, वाणी और शरीरके द्वारा अपने आपको आपके युगल-चरणारविन्दोमे अर्पित करके अपने इन्द्रियोको वशमे रखते हुए विषयोसे विरत हो गये हैं तथा आप-परमानन्दमय परमेश्वरका ही आश्रय लेकर जीवन धारण करते हैं, एव स्वजनोको भी आपमे ही लगाकर जीवित रखते हैं, वे सन्त पुरुष तीनो लोकोमे धन्य हैं। यद्यपि आप किसीसे पराजित नही होते, तथापि वे सन्त निश्चय ही आपको जीत लेते हैं॥ ८॥'

श्रेयो दात्रीमपरिगणयन्तश्च भक्तिं त्वदीयां
शिष्येभ्यो ये ददति शुभदं ज्ञानमप्यत्र केचित्।
आत्मानं ते सह निजजनैः केवलं क्लेशयन्ति
तेषामन्ते प्रभवति गतिर्क्लेशदा चाऽर्थहीना ॥९॥

'प्रभो! जो आपकी कल्याणदायिनी भक्तिको कुछ भी न गिनते हुए अपने शिष्योको केवल शुभदायक ज्ञानमात्रका उपदेश देते है, वे अपने उन शिष्यजनोके साथ स्वयंको भी क्लेशमे ही डालते हैं। अन्ततोगत्वा उन्हे परमार्थशून्य कष्टप्रद गति ही हाथ लगती है' ॥ ९॥

किं प्राप्स्यन्ते त इह भगवन्! ज्ञानमप्यात्मसंस्थं
सम्प्राप्याऽपि प्रचुरमहहा! भक्तिहीनं किलैते।
निःसारांश्चाऽवहितमनसस्तांस्तुषान् व्यर्थमेव
यत्नाद्यत्नादुपचितगुणा ये त्ववघ्नन्ति हन्त! ॥१०॥

'भगवन्! वे लोग भक्तिहीन, प्रचुर आत्मज्ञान पाकर भी क्या लाभ उठायेगे! जो सारहीन भूसोको सावधान होकर बडे यत्नसे कूटते है। हाय हाय! उनका वह कूटना व्यर्थ परिश्रममात्र ही तो है। उन्हे चावल थोड़े ही मिल सकता है॥ १०॥

अन्ये स्वामिन्निह्नतबहुगुणा योगिनः शुद्धचित्ता
विद्वद्वर्याद्बहुगुणयुतात् त्वत्कथा ध्यानगम्याः ।
श्रुत्वा श्रुत्वा हृदयकुहरे स्थापयित्वा सुखं ता
लब्ध्वाऽपूर्वास्त्वयि रतिततीस्त्वद्गतिं संलभन्ते ॥११॥

'स्वामिन्! उनसे भिन्न जो अनेक गुणोसे सम्पन्न शुद्ध चित्त योगी जन है, वे बहुगुणशाली बुध शिरोमणि महात्मासे आपकी ध्यानगम्य कथामे सुन-सुनकर उन्हे सुखपूर्वक अपने हृदयमे स्थापित करते हैं और आपके प्रति अपूर्व अनुराग पाकर अन्तमे आपके ही स्वरूपको प्राप्त कर लेते हैं ॥११॥

नित्यं पूर्णस्त्वमसि भगवन्! सच्चिदानन्दरूपो
जानीयात् कस्तव शुभगतिंताममेयामतर्क्याम् ।
ज्ञाने हेतुर्भवति च परं कर्म तेषां तदेव
यत्तैः सत्त्वाद्विदितमखिलं भासते नात्मभिन्नम् ॥१२॥

'भगवन्? आप नित्य परिपूर्ण हैं, सच्चिदानन्द स्वरूप हैं। आपकी कल्याणमयी गति अमेय और अतर्क्य है। उसे कौन जान सकता है। उसके ज्ञानमे हेतु होता है, उनका वह उच्चकोटिका निष्काम कर्म। जिससे अन्तःकरण शुद्ध हो जानेके कारण उन्हे यह सारा प्रपञ्च अपनेसे भिन्न नही प्रतीत होता है ॥१२॥'

येषामात्मा लगति नितरां निर्गुणं निर्विकारं
तत्त्वं ज्ञातुं तव शुभहितं स्वानुभूत्यैकलक्ष्यम् ।
धन्यास्तेऽपि प्रचुरगतिभिः कर्मभिः स्वैः परात्मन्!
प्राप्तुं तत्त्वां प्रमृजितपथा ये यतन्तेऽत्र नित्यम् ॥१३॥

'परमात्मन्! जिनकी बुद्धि निरन्तर आपके स्वानुभवैकगम्य परम-पूजित, निर्गुण निर्विकार तत्त्वके ज्ञानमे लगती है, वे महापुरुष धन्य हैं, वे प्रचुर गतिवाले अपने कर्मों द्वारा बिशुद्ध मार्गसे चलकर यहाँ आपको पानेके लिए सतत यत्नशील रहते हैं' ॥१३॥

मत्वाऽपि त्वाऽखिलगुणयुतं मूर्तमानन्दहेतुं
ब्रह्माण्डस्याऽसमहितकृत पूर्णरूपाऽवतीर्णम् ।
को वा भूयादिह च सफलो ज्ञातुमाद्य कवीनां
मातुं तत्त्वादपि तव गुणान् स्यात् समर्थश्च कोऽत्र ॥१४॥

'आप सम्पूर्ण ब्रह्माण्डके अनुपम हितकारी, पूर्णावतार, सकल कल्याणमय गुणोसे सम्पन्न, और आनन्दके मूर्तिमान हेतु हैं। ऐसा समझ लेनेपर भी कौन ऐसा माईका लाल होगा, जो आदि कवियोके भी आदि कारण आप परमेश्वरको पूर्णतः जान लेनेमे सफल हो

सके ? तथा इस जगत्मे कौन ऐसा पुरुष होगा, जो आपके गुणोकी तत्त्वत· गणना करनेमे समर्थ हो सकेगा ?' ॥ १४ ॥

रेणून् भूम्याः सुसमयमयो नैककल्पैः सुलब्धैः
कश्चित् स्वामिन् ! समधिगणयेद्यत्नशीलो मनस्वी ।
यद्वा मायादिह रविकरान् खोद्भवानात्मशक्त्या
संख्यातीतान्न तु तव गुणांस्तानमेयान् कदापि ॥ १५ ॥

'स्वामिन् ! उत्तम समय और बडी आयु पाकर कोई यत्नशील मनस्वी पुरुष अनेक कल्पोतक गिनते-गिनते सम्भव है कि भूमिके धूलिकणोकी गणना कर ले अथवा यह भी हो सकता है कि वह अपनी शक्तिसे आकाशमे प्रकट होनेवाली सूर्यदेवकी किरणोका माप कर ले । परन्तु आपके असख्य-गुणोकी कोई कदापि गणना नही कर सकता ॥ १५ ॥

तस्मात् स्वामिन्निह सुचरितो भक्तवर्यो महात्मा
शान्त्या तिष्ठन् स्वविहितफलं कर्मपाकं तदश्नन् ।
हृद्वाग्देहैर्भवगतगतिं त्वां नमंश्चैव भक्त्या
यो जीवत्यामरणमरणं त्वां स एवैति नूनम् ॥ १६ ॥

'अतः प्रभो ! जो उत्तम चरित्रवाला भक्तप्रवर महात्मा पुरुष, शान्तिपूर्वक रहकर अपने प्रारब्ध कर्मका फल भोगता हुआ, ससारी जीवोके एकमात्र आश्रय आपको मृत्युपर्यन्त मन, वाणी और शरीर द्वारा प्रणाम करते हुए जीवन धारण करता है, निश्चय ही वही सबके शरण्य आप भगवान्‌को प्राप्त कर लेता है ॥ १६ ॥

धिङ् माऽनार्यं य इह कुपथे क्षिप्तवानात्मशक्ती-
राश्चर्यं यत्तदपि भवति स्वात्मशक्त्यैव पूर्णे ।
यस्मात् सर्वं प्रभवति तथाऽनन्तमायश्च योऽस्ति
तस्मिन्नात्मन्यकरवमहं धाष्टर्यमेतद्धिधं धिक् ॥ १७ ॥

'नाथ ! जिसने यहाँ अपने शक्तियोको कुमार्गमें लगाया, उस मुझ अनार्यको धिक्कार है। उसमे भी आश्चर्यकी बात यह है कि जो आत्मशक्तिसे ही परिपूर्ण हैं, उनके प्रति मैने अपनी तुच्छ-शक्तिका प्रदर्शन किया । जिससे सबकी उत्पत्ति होती है, तथा जिनकी मायाका कही अन्त नही है, उन परमात्माके प्रति मैने ऐसी धृष्टता की है। मुझे बार-बार धिक्कार है' ॥१७॥

मायां द्रष्टुं भगवत इमां ते निजां मायिमिश्राऽ-
तर्क्यां तां च स्वत उपरतिप्रापिकां मोहिनीश्च ।
इच्छन् स्वामिन् ! पशुपशिशुकान् वत्सकांस्तांश्च सर्वान्
हृत्वाऽधां हाऽन्यत उभयतः स्वं प्रभुं मन्यमानः ॥ १८ ॥

'स्वामिन्! सर्वात्मन्! आपकी यह अपनी माया मायावियोके लिए भी अतर्क्य है। वह सबको मोहमे डालनेवाली तथा ससारसे उपरति ( वैराग्य ) की प्राप्ति करानेवाली है। उसे देखनेकी इच्छासे अपनेको प्रभु माननेवाले मैने इधर-उधर दोनो ओरसे ग्वाल-बालो और बछडोको चुराकर अन्यत्र रख दिया था। यह कितने खेदकी बात है' ॥ १८ ॥

**किं वा पश्यन्त्यहह! भगवन्! स्वां गतिं ते स्फुलिङ्गा**
**अग्नाविद्धेऽविहतगतयो ते भवन्त्येव किं वा?।**
**तद्वत्स्वेच्छाविधृतवपुषस्त्वत्स्थितिं ज्ञातुकामो**
**दुष्टो हृष्टोऽभवमहमिहाऽनन्तशक्तिं समीक्ष्य ॥ १९ ॥**

'अहह! भगवन्! क्या चिनगारियाँ प्रज्वलित अग्निमे अपनी गतिको देख सकती है। अथवा क्या वे अप्रतिहत गतिवाली हो सकती है? कदापि नही। उन्हीकी भाँति मेरी भी स्थिति है। आपने स्वेच्छासे शरीर धारण किया है, तो भी मुझ जैसे दुष्टने आपकी स्थितिको जाननेकी चेष्टा की। परन्तु यहाँ यह देखकर कि आपकी शक्तिका अन्त नही है, मैं हर्षसे उत्फुल्ल हो उठा हूँ' ॥ १९ ॥

**ब्रह्मा सोऽहं ह्यतुल इति चाऽऽरूढमोहोऽभिमाना-**
**दज्ञश्च स्वं भवगतधिया त्वत्पृथङ्मन्यमानः।**
**एषोऽभूवं चरणपतितोऽन्ते गतिं त्वां विभाव्य**
**क्षान्त्वा सर्वं तदिदमघहन्! मे दयस्वाऽत्र भूयः ॥ २० ॥**

'पापापहारी प्रभो? मै अजन्मा ब्रह्म हूँ' मेरी कही तुलना नही है। इस अभिमानसे मै मोहाच्छन्न हो गया था और अपनी सासारिक बुद्धिसे अपने आपको आपसे पृथक् ईश्वर मानने लगा था। मै कैसा अज्ञ हूँ। अन्तमे आप ही सबके गति हैं। यह सोचकर मै आपके चरणोमे पड़ा हूँ। मेरे इस समस्त अपराधको क्षमा करके आप पुनः मुझपर दया कीजिये ॥ २० ॥

**सोऽहं मूढः प्रकृतिविकृतोऽहंमहत्त्वादियुक्तो**
**भूम्यप्तेजोऽनिलखसहितः सार्धहस्तत्रयोऽङ्गः।**
**यद्ब्रह्माण्डं भवति भगवन्नेकरूपं विशालं**
**तद्वै जानाम्यहमिह विभो! न त्वनन्तानि तानि ॥ २१ ॥**

'भगवन्! प्रभो! प्रकृतिके विकार-भूत महत्तत्त्व, अहकार, भूमि, जल, तेज, वायु, और आकाशसे युक्त विराट्रूपी शरीरमे जो मेरे अपने मापसे साढे तीन हाथका है, अहंताका अभिमान रखनेवाला मैं मूढ, इस एक विशाल-ब्रह्माण्डको जानता हूँ। ऐसे-ऐसे जो अनन्त ब्रह्माण्ड हैं, उनका ज्ञान मुझको नही है' ॥ २१ ॥

क्वाऽहं चैतादृश इह हरे ! तान्यनन्तान्यमेय !
ब्रह्माण्डानि स्थिरतरतनोर्यस्य रोम्णि प्रभान्ति ।
क्व त्वं तादृक् क्व च तव विभो ! तन्महत्त्वं गवाक्षे
भूमौ दृष्टा अणव इव भो ! तानि यस्मिन्नतर्क्ये ॥ २२ ॥

'अप्रमेय हरे ! कहाँ तो मैं ऐसा तुच्छ जीव और कहाँ आप ? जिनके स्थिरतर शरीरके एक-एक रोममे असख्य ब्रह्माण्ड प्रकाशित होते है । विभो ! जैसे गवाक्षमे आयी हुई सूर्यकी किरणोमे बहुत-से परमाणु उडते देखे गये हैं, उसी प्रकार जिन आप अतर्क्य परमात्मामे, वे अनन्त-ब्रह्माण्ड विद्यमान है, उन्ही आपके महत्त्वका कहाँतक वर्णन किया जा सकता है ॥२२॥

गर्भान्तःस्थः शिशुरिह यदा मातरं स्वां कथञ्चित्
तत्पादाभ्यां प्रहरति यदि ज्ञानतोऽज्ञानतो वा ।
स्वामिंस्तस्य प्रहरणमिदं किं भवत्यागसेऽत्र
किं वा माता तमपि भगवन् ! मन्यते सापराधम् ? ॥ २३ ॥

'स्वामिन् ! भगवन् ! माँ के गर्भमे विद्यमान शिशु यदि किसी प्रकार जानकर या बिना जाने अपने पैरोसे मातापर प्रहार कर बैठता है—अपने पैर फेकता है, तो उसका यह प्रहार क्या अपराध माना जाता है ? अथवा क्या माता इसके लिए उस बालकको अपराधी मानती है ?' ॥ २३ ॥

तद्वत् सोऽहं विहितकुमतिस्तत्कुकृत्येऽत्र मोहाद्-
ध्यत्राऽकार्षं त्वनुचितमपि क्षम्यतां तत्तथैव ।
दिष्ट्या दृष्टं तदपि भगवन्नस्तिनास्तिप्रवादं
सर्वं कुक्षाविह विलसितं त्वय्यनन्ते(ऽ)वितर्क्ये ॥ २४ ॥

'उसी प्रकार मैने भी कुबुद्धिका आश्रय लेकर मोहवश जो यहाँ कुकृत्य कर डाला है, वह अनुचित होनेपर भी माताकी ही भाँति उसे क्षमाकर दे । भगवन् ! अस्ति और नास्ति ( है, और नही है ) इन शब्दोसे कहा जानेवाला सारा जगत् आप अनन्त एव अतर्क्य परमेश्वरकी कुक्षिमे ही तो विलसित हो रहा है, सौभाग्यवश यह बात मेरे ध्यानमे आ गयी है । अर्थात् जैसे गर्भगत बालकका पाद-सचालन माताकी दृष्टिमे अपराध नही है, उसी प्रकार आपके उदरमे विद्यमान समस्त जगत्की चेष्टाये, वे कैसी ही क्यो न हो, अपराधकी कोटिमें नही आनी चाहिए ॥ २४ ॥

स्वामिन् ! वेदाः प्रथितममृतं वाक्यमेतद्व्युदीर्य
सेवन्ते त्वामितरजनवद् ब्रह्म नारायणोऽसि ।
अम्भोजं तद् भवमथमहो प्राग् विसृज्याऽत्र भूयो
ब्रह्माणं मामपि लयजले सृष्टवान्नाभितस्त्वम् ॥ २५ ॥

'स्वामिन्! 'आप परब्रह्म परमात्मा है, नारायण हैं, इस सुप्रसिद्ध अमृतमय वचनका उच्चारण करके सम्पूर्ण वेद अन्य लोगोकी भांति आपकी आराधना करते हैं। आपने प्रलयके जलमे ब्रह्माण्डमय-कमलको प्रकट करके फिर मुझे भी वहीसे उत्पन्न किया था ॥ २५ ॥

किं वागेषा प्रभवतु मृषा तैस्तथा व्याहृताऽपि
यद्वा स्वामिंस्त्वदुदरतलान्निर्गतोऽस्मीह नाहम् ?।
क्षन्तव्योऽयं तव निजजनः सापराधोऽपि नाथ!
नो चेत् का मे गतिरिह भवेत् ? साऽनुकम्पा विधेया ॥ २६ ॥

'प्रभो! क्या यह बात वेदोक्त होनेपर भी मिथ्या हो सकती है? क्या मैं आपके उदरसे नही प्रकट हुआ हूँ। नाथ! आपका यह सेवक अपराधी होने पर भी सर्वथा क्षमाके योग्य है। अन्यथा मेरी क्या गति होगी। भगवन्! आपको मुझपर अवश्य कृपा करनी चाहिए' ॥ २६ ॥

मन्येऽहं त्वां स्थिरतरजगत्प्राणिनां बीजरूपं
ह्यात्मानञ्चाऽप्रतिहतगतिं स्वामिनं तं तदेषाम्।
तस्मान्नारायण इव भवान् भाति सत्यं न साऽपि
माया चैकां तव तदपि भो! आदिनारायणस्त्वम् ॥ २७ ॥

'मै ऐसा मानता हूँ कि आप स्थावर-जगम प्राणियोके बीज ( आदिकारण ) हैं, आत्मा हैं,। आपकी गति कही भी प्रतिहत नही होती। अत आप इन समस्त चराचर जीवोके स्वामी हैं। नरसे उत्पन्न जल, जिसका अयन ( आश्रय ) है, वह नारायण है। इस व्युत्पत्तिके अनुसार यद्यपि आप नारायण-तुल्य प्रतीत होते हैं। तथापि यह बात सत्य नही है। यह आपकी एक माया ही है। भगवन्! वास्तवमे आप आदिनारायण है ( पूर्वोक्त-व्युत्पत्तिके अनुसार नर-सम्भव जलका आश्रय लेनेके कारण नारायण नही हैं ) ॥ २७ ॥

नारा नीराण्यजित! भगवन्! यद्वदन्त्यत्र सन्तो
नैतत्सत्यं तदयनमपि त्वादृशस्याऽद्वयस्य।
सत्यं तत्स्यात् कथमिह विभो! मार्गमाणो जलेषु
त्वां नाऽद्राक्षं मम सदनतो यो गतोऽहं पुरा यत् ॥ २८ ॥

'किसीसे पराजित न होनेवाले भगवन्! सत्पुरुष जो यह कहते हैं कि नारका अर्थ है नीर और वह है आपका अयन, यह बात ठीक नही है। आप जैसे अद्वितीय परब्रह्म परमात्माका वह नार ( जल ) कैसे अयन हो सकता है? प्रभो! जल आपका आश्रय है, यह बात कैसे सत्य हो सकती है? क्योकि पूर्वकालमे मैने अपने निवासभूत कमलसे नीचे जाकर जलमे आपकी बहुत खोज की। परन्तु आप वहां मुझे दिखायी नही दिये ॥ २८ ॥

स्वस्थानं तत्त्वदुदरभवं भूय एवाऽऽगतोऽहं
श्रुत्वा शब्दं तप इति लयाब्धावकस्मादुदीर्णम् ।
धृत्वा श्रद्धामतपमिह यत्स्वात्मभित्तौ तदैव
दृष्टं लोकात्मकमथ तवाऽनन्तनारायणत्वम् ॥ २९ ॥

'तत्पश्चात् आपके उदरसे प्रकट हुए अपने निवासभूत कमल पर मै पुनः लौट आया। फिर सहसा उस प्रलय-कालिक महासागरमे 'तप' इन दो अक्षरोका शब्द प्रकट हुआ। जिसे सुनकर मैने श्रद्धापूर्वक तपस्या की। फिर तो तत्काल ही अपनी आत्मभित्तिपर मुझे आपके लोकमय अनन्त-नारायणत्वका साक्षात्कार हुआ' ॥ २९ ॥

माया स्वामिन्! भगवत इयं शक्तिरानन्दयित्री
दृष्टा यस्याः समभवदिदं चाऽत्र पूर्णाऽवतारे ।
स्वान्ते पूर्णं बहिरिव जगद्यशोदा त्वदास्येऽ-
पश्यन्मायाशबलितमहो! ब्रूहि सत्यं न तत् किम् ॥ ३० ॥

'स्वामिन्! आप भगवान्की इस आनन्ददायिनी शक्ति मायाका मुझे दर्शन हुआ। जिससे इस पूर्णावतारमे यह सब कुछ सम्भव हुआ है। यह जगत् जैसा बाहर है, वैसा ही आपके भीतर भी परिपूर्ण है। क्योकि माता यशोदाने आपके मुखारविन्दमे ही इसका दर्शन किया था। अहो! अब आप ही बताइये कि आपके भीतरका वह जगत् क्या माया शबलित था? क्या वह सत्य नही था! ॥ ३० ॥

भूयः स्वामिन्! मयि च कृपया दर्शयन् स्वं च सद्यः
पूर्णं स्वात्मप्रचुरमघहन्! रूपमास्थाय चाऽद्य ।
विक्रीडंस्त्वं सम्रुखमखिला बालवत्साश्च भूत्वा
वर्षं यावद् विहरसि विभुनैकरूपोऽपि चैकः ॥ ३१ ॥

'मेरे नाथ? फिर आपने मुझपर भी कृपा करके आज इसी क्षण आत्म-चैतन्यसे परिपूर्ण रूपधारण करके उसका दर्शन कराया है। पापापहारी प्रभो! आप खेल-खेलमे ही बिना किसी प्रयासके समस्त ग्वाल-बाल और बछड़े बन गए एव अपने विभु-स्वरूपसे एक वर्ष-तक बिहार करते आ रहे हैं। यो तो आपने अनेक रूपधारण किये है, तथापि हैं एक ही' ॥ ३१ ॥

दृष्टाः पूर्वं स्वगतकलुषोपूरिता नामरूप-
युक्ता ये ये विधृतवपुषो बालवत्सास्तथेड्य! ।
तावन्तस्ते पुनरिह मयाऽऽलोकिताः सर्व एव
सच्चिन्मात्रा विगतकलुषास्तुल्यरूपा इदानीम् ॥ ३२ ॥

'स्तवन करनेके योग्य परमेश्वर ! पहले मैने विभिन्न नाम और रूपोसे युक्त तथा स्वगत-कल्मषसे पूरित जो-जो देहधारी ग्वाल-बाल और बछडे यहाँ देखे थे इस समय उतने ही वे फिर मुझे इस स्थान पर सारेके सारे दृष्टिगोचर हो रहे है। इन सबके रूप भी पहलेवालोके ही समान हैं। अन्तर इतना ही है कि ये कल्मषरहित तथा सच्चिदानन्दमय है। ( और वे ऐसे नही थे। )' ॥ ३२ ॥

येऽपि स्वामिन् ! सह भगवता स्वैश्चतुर्भिर्भुजैस्तै-
युक्ता भक्त्या स्वगुरुतरया ये मयोपासिताश्च ।
तस्माद् ध्यायाम्यहमिह विभो ! विश्वसारं तदेकं
ब्रह्मात्मैक्यं विलसति भवे तत्त्वमेवाऽसि नाथ ! ॥ ३३ ॥

'स्वामिन् ! आपके साथ ही वे ग्वाल-बाल और बछडे भी मुझे अपनी चार भुजाओसे युक्त दिखायी दिये है और मैने गुरुतर भक्तिभावसे आपके साथ-साथ उनकी भी उपासना की है। अत सर्वव्यापी नाथ ! मै ऐसा सोचता हूँ कि यहाँ सम्पूर्ण संसारका सारभूत एकमात्र ब्रह्म और आत्माका एकत्व ही है। जगत्मे उसीका सर्वत्र विलास है। और वह आप ही हैं' ॥ ३३ ॥

ये त्वद्रूपं जगति विततं नैव जानन्ति सम्यक्
तेषामग्रे प्रभुरपि विभास्यन्यवत् केवलोऽपि ।
भ्रान्तेः पात्रं प्रकृतिषु रतं विश्वजीवत्वमाप्तं
स्वात्मानं तानपि च भगवन् ! दर्शयन् राजसेऽत्र ॥ ३४ ॥

'भगवन् ! जो आपके विश्वव्यापी रूपको अच्छी तरह नही जानते है, उनके सामने आप सर्व समर्थ एव अद्वितीय होकर भी अन्य साधारण जनोके समान प्रतीत होते है। आप उन अज्ञानियोको अपना रूप ऐसा दिखाते हैं, मानो आप भ्रान्तिके पात्र, प्रकृतिमे आसक्त तथा ससारी जीवभावको प्राप्त है। ऐसा दिखाते हुए आप यहाँ सर्वत्र विराजमान है' ॥ ३४ ॥

तैस्तै रूपैः प्रकृतिविकृतैस्तैर्महत्त्वादिभिस्त्वं
विश्वं सृष्ट्वा विधिरयमिति प्राप्तसंज्ञश्च तस्मिन् ।
लीलामात्रो विलससि विभो ! रक्षणे विष्णुरेवं
नाशे रुद्रो भवसि तदधि स्वात्ममायां वितत्य ॥ ३५ ॥

'विश्वव्यापी विभो ! प्रकृतिके विकासरूप महत्तत्व और अहकार आदि विभिन्न तत्त्वोसे ससारकी सृष्टि करके आप उसीमे 'यह ब्रह्मा है' ऐसी सज्ञा धारण करते हे। रक्षण-कार्यमे सलग्न हो विष्णु कहलाते है और सहार कार्यमे रुद्ररूप हो जाते हैं। फिर इनके ऊपर भी अपनी माया फैलाकर आप लीलामात्र रूपसे विलसित होते है ॥ ३५ ॥

नानायोनिष्वपि विहरतो दृश्यते जन्म यत्ते
तिर्यग्यादोनरसुरगणास्वत्र दैत्यादिकासु ।
स्वामिन् ! नित्यं जयति भवतस्तत्तु यैर्दुष्टघातः
साधूद्धारः प्रभवति तदा शान्तिमाप्नोति लोकः ॥ ३६ ॥

'पशु, जलचर जीव, देवता तथा दैत्य आदि नाना योनियोमे विहार करते हुए आपका जो प्राकट्य देखा जाता है, स्वामिन् ! आपके इस रूपकी सदा ही जय हो । आप उन्ही रूपोद्वारा जब दुष्टोका संहार और साधु-पुरुषोका उद्धार करते हैं, तभी जगत्मे शान्तिकी स्थापना होती है' ॥ ३६ ॥

शक्नोत्यत्राऽमितगुण ! तवाऽनन्तशक्तेर्विभूम्न-
श्चेष्टा वक्तुं क इह सफलो ज्ञातुमेवं विधा वा ।
विस्तार्यैवं कति कथमहो ! स्वात्ममायाः कदा नु
किं किं कुर्वन् विरमसि विभो ! तद्वदाऽनन्तकृत्यः ॥ ३७ ॥

'अनन्त गुणशाली प्रभो ! आपकी शक्ति अनन्त है । आप भूमा हैं । आपकी इस तरहकी चेष्टाओका कौन वर्णन कर सकता है ? अथवा कौन उन्हे जाननेमे सफल हो सकता है । विभो ! आप कितनी बार कैसे अपनी मायाका इस प्रकार विस्तार करके, अनन्त कृत्योका सम्पादन करके, कब क्या-क्या करते हुए विराम लेते हैं । यह कौन बता सकता है' ? ॥ ३७ ॥

एतद्विश्वं सकलमहितं तद्विभो ! स्वप्नतुल्यं
नष्टप्रज्ञं प्रचुरभयदं दुःखमात्रेण पूर्णम् ।
नित्यज्ञाने भवति भगवन् ! सच्चिदानन्दसौख्ये
मायामात्रादुदितमनृतं भाति सत्यं यथात्मन् ! ॥ ३८ ॥

'सर्वव्यापी प्रभो ! यह सारा संसार, अहितरूप स्वप्नतुल्य, ज्ञानशून्य, अत्यन्त भयदायक और दुःखमात्रसे भरा हुआ है । किन्तु भगवन् ! नित्य ज्ञानमय एवं सच्चिदानन्द स्वरूप सौख्यसे परिपूर्ण आपमे मायामात्रसे प्रकट हुआ है । सर्वात्मन् ! यह मिथ्या होनेपर भी सत्य-सा ही भासता है ॥ ३८ ॥

आत्मैकस्त्वं भवतनुभृतां तैरवाच्योऽवितर्क्यः
सत्यो नित्यः प्रथमपुरुषः स्वप्रकाशो ह्यनन्तः ।
आद्यः पूर्णो विरहितमलो मुक्त औपाधिकैश्च
ध्वस्तद्वैतोऽमृत इह सदा नामरूपैश्च भिन्नः ॥ ३९ ॥

'भगवन् ! आप ससारी देहधारियोके एकमात्र आत्मा है, तथापि उनके लिए अवर्णनीय और अतर्क्य हैं। सत्य, नित्य, स्वयंप्रकाश, अनन्त, आदिपुरुष, निर्मल, उपाधिरहित, सबका आदि कारण, द्वैतभावको नष्ट करके अद्वैतभावमे स्थित, अमृतस्वरूप, परिपूर्ण तथा सदा ही नाम और रूपोसे पृथक् है' ॥ ३९॥

विश्वस्वामिंस्तदुभयजगत्प्राणिनामात्मरूपं
त्वामात्मानं गुरुरविकरैर्ज्ञातवेदार्थदृष्टया ।
आत्मत्वेन स्वहृदि विततं येऽत्र पश्यन्ति धीरा
विश्वं तच्चाऽनृतजलनिधिं ते तरन्तीह तूर्णम् ॥ ४० ॥

'जगदीश्वर ! आप चराचर जगत्के प्राणियोके आत्मा है। जो लोग गुरुरूपी सूर्यकी ज्ञानमयी किरणोके प्रकाशमे वेदार्थका ज्ञान प्राप्त करके तदनुरूप दृष्टिसे आपको अपने हृदयमे आत्मा-रूपसे व्याप्त देखते है, वे धीर पुरुष ही इस ससाररूपी मिथ्या-महासागरको शीघ्र ही पार कर जाते हैं' ॥ ४० ॥

स्वात्मानं यैर्जगति भगवञ्ज्ञातमात्मत्वबुद्धया
विज्ञातं तैर्जगदिदमपि स्वप्रपञ्चप्रकाशम् ।
रज्जुज्ञाने प्रसरति यथा तद्भवा सर्पबुद्धि-
स्त्वद्वत्स्वामिन् ! प्रभवति सुधीर्ब्रह्मरूपः कृतार्थः ॥ ४१ ॥

'भगवन् ! जिन्होने अपने आत्माको जगत्मे व्यापक तथा सबके आत्मारूपसे जान लिया है, उन्होने इस जगत्को भी समझ लिया है। क्योकि वह प्रपञ्च आत्मासे ही प्रकाशित है। जैसे रस्सीका ज्ञान हो जानेपर उसमे होनेवाली सर्पबुद्धि दूर हो जाती है, उसीप्रकार स्वामिन् ! सबको ब्रह्मरूप जाननेवाला ज्ञानी पुरुष कृतार्थ हो जाता है ॥ ४१ ॥

अज्ञानाढ्यौ जगति कृतकौ नाथ ? तौ बन्धमोक्षौ
नाऽन्यौ तस्मात् विलसत इहर्तज्ञसत्त्वैव भाति ।
सूर्ये यद्वन्न भवति दिनं नैव रात्रिर्विचाराद्
तद्वद्द्वयेकीकृतमिदमपि ब्रह्म बुद्धं विशुद्धम् ॥ ४२ ॥

'नाथ ! ससारमे जो ये बन्ध और मोक्ष कहे गए है, वे अज्ञानरूप एवं बनावटी है। अज्ञानसे भिन्न नही है। यहाँ एकमात्र ऋतज्ञ ( सत्यस्वरूप ज्ञान ) की सत्ता ही प्रकाशित होती है। जैसे विचार करनेपर सूर्यमे न दिनकी पृथक् सत्ता है न रात्रिकी। वे दोनो सूर्यसे अभिन्न है। उसी प्रकार यह सारा प्रपञ्च एकीकृत विशुद्ध ब्रह्म ही है ॥ ४२ ॥

एवं स्वात्मस्फुरितमघहन्नात्मरूपं विभुं त्वां
भिन्नं मत्वा स्वत उपरतं त्वत्पृथक्त्वात्मभावम् ।
प्राप्तुं भूयस्तदितरपदार्थेषु तन्मार्गमाणं
लोकं दृष्ट्वाऽधिहृदयमहं मुग्धचित्तोऽद्य दूये ॥ ४३ ॥

'पापहारी परमेश्वर ! आप मेरे अन्तःकरणमे सर्वव्यापी आत्माके रूपमे स्फुरित हो रहे है। ऐसे सर्वात्मरूप आपको अपनेसे भिन्न मानकर उपरत हुए तथा आपसे पृथक् आत्मभावको इतर पदार्थोमे ढूँढते हुए लोगोको देखकर मै मुग्धचित्त हो दुःखका अनुभव कर रहा हूँ' ॥ ४३ ॥

विद्वांसस्त्वां जगति विततं तादृशं स्वात्मरूपं
सम्यग् ज्ञात्वा स्वहृदय इदं ब्रह्मरूपं विमृश्य ।
त्यक्त्वा सर्वं भवगतमदो वस्तुमात्रं परात्म-
न्नेकाकारा न जहति सुखं स्वान्तमेवाऽऽश्रयन्ते ॥ ४४ ॥

'परमात्मन् ! आप सम्पूर्ण जगत्मे व्याप्त है और सबके आत्मरूप हैं। इसप्रकार आपको भली-भाँति जानकर तथा अपने हृदयमे इस सम्पूर्ण प्रपञ्चको ब्रह्मरूप मानकर विद्वान् पुरुष ससारकी सारी वस्तुओको त्याग देते हैं और आपमे एकरूप हो सुख-स्वरूप आपको कदापि नही छोडते है। सदा आपके चिन्तनके लिए हृदयाकाशका ही आश्रय लेते हैं ॥ ४४ ॥

रज्जुज्ञाने सुखद भगवन् ! सर्पविभ्रान्तचित्ताः
किं मन्यन्ते त इह कतिनस्त्रासमायान्ति किं वा ? ।
तद्वन्नित्येऽमृत ऋतुमये सच्चिदानन्दधाम्नि
तत्त्वे ज्ञाते त्वयि जहति के ज्ञानिनस्त्वां वदाऽऽत्मन् ! ॥ ४५ ॥

'सबको सुख-देनेवाले भगवन् ! रस्सीमे सर्पके भ्रमसे विभ्रान्त चित्तवाले मनुष्य, जब रस्सीको जानते है, तब वे तत्त्वज्ञ-पुरुष क्या यहाँ उसे पुन सर्प मानते है अथवा क्या उससे त्रासका अनुभव करते हैं ? परमात्मन् ! उसी प्रकार नित्य, अमृत, सत्यमय, सच्चिदानन्द-धाम, एवं परम-तत्त्वरूप आपको जो जान लेते है, वे कौन ऐसे ज्ञानी पुरुष है, जो आपको छोड़ते है। ( कोई नही )' ॥ ४५ ॥

किन्तु स्वामिन् ! परमकृपया त्वत्प्रसादैर्गृहीता
धन्या भक्ताः सरलहृदया एव जानन्ति तत्तु ।
नान्ये, दृष्टा बहव इह चाऽनन्त ! ते ते मयाऽपि
तद्भिन्नत्वे भ्रमितसुधियो मार्गमाणाश्च दीर्घम् ॥ ४६ ॥

'स्वामिन् ! जिन्हे आपने अपनी परम-कृपा तथा प्रसादसे अनुगृहीत किया है, वे सरल हृदय धन्यातिधन्य भक्तजन ही उस परमतत्त्वको जान पाते है, दूसरे नही। हे अनन्त ? मैने इस जगत्मे ऐसे बहुतसे लोगोको देखा है, जिनकी बुद्धि आत्मातिरिक्त वस्तुमे ही भ्रमित हो रही है। और वे दीर्घकालतक उस अनात्म-पदार्थकी खोजमे ही भटकते रहते हैं' ॥ ४६ ॥

तस्मात् स्वामिन्नधिभवमिहैवाऽस्तु मे भूरिभाग्यं
जन्मन्यस्मिन्नुत तदितरस्मिन् कृपेयं मयि स्यात् ।
भूयासं कोऽप्यहमपि तिरश्चां तथाऽन्यान्ययोनौ
कस्यांश्चिद्वेतरजनसमो यस्त्वदङ्घ्रिं भजेयम् ॥ ४७ ॥

'अत नाथ ! इस ससारमे, इसी जन्ममे या किसी दूसरे जन्ममे मुझे ऐसा महान् सौभाग्य प्राप्त हो, मुझपर आपकी ऐसी कृपा हो जाय कि मै पशु-पक्षी आदिकी योनिमे अथवा किसी दूसरी ही योनिमे कोई देहधारी हो जाऊँ और अन्य भक्तजनोके समान मै भी आपके चरणारविन्दोका भजन करूँ' ॥ ४७ ॥

धन्या धन्या व्रजपशुगणास्ताश्च गोप्योऽपि धन्या
यासां स्तन्यामृतमृतमहो ! यत्त्वया पीतमाद्य ! ।
तृप्तस्तस्माद्यपिकृतमखैर्यो न तृप्तोऽधुनापि
गोगोपीनां स्वकृतकशिशुः स त्वमित्थं दयस्व ॥ ४८ ॥

'आदिपुरुष ! वे व्रजकी गौये धन्य-धन्य है और वे गोपियाँ भी धन्य हैं, जिनके स्तनोके वस्तुतः अमृत-स्वरूप दुग्धका आपने पान किया और उससे तृप्ति पायी। अहो ! कैसा आश्चर्य है। आप वही हैं, जो ऋषियो द्वारा किये गए नाना प्रकारके यज्ञोसे आजतक तृप्त नही हो सके है। इससमय इसप्रकार गौओ और गोपियोके कृत्रिम-शिशु बने हुए आप मुझपर दया कीजिये' ॥ ४८ ॥

भाग्यं भूरि व्रजपशुगणा नन्दराजादिकानां
सर्वेषां तान् समनुसरतां चैतदेव प्रशस्यम् ।
यन्मित्रं त्वं विलससि विभो ! तादृशाऽङ्के सुधीभि-
श्चिन्त्यं ब्रह्माऽपि च भवगतं सच्चिदानन्दमात्रम् ॥ ४९ ॥

'प्रभो ! व्रजके गोप नन्दराय आदिका तथा उनका अनुसरण करनेवाले अन्य सब गोपोका भी यही प्रशसनीय एव महान् सौभाग्य है कि आप उनके मित्रके रूपमे सुशोभित हो रहे हैं और उनके वैसे बडभागी अङ्कमे खेलते है। वास्तवमे आप समस्त विश्वमे व्याप्त सच्चिदानन्दमात्र ब्रह्म है, जिसका शुद्ध बुद्धिवाले ज्ञानी एव योगीजन चिन्तन करते हैं' ॥ ४९ ॥

आस्तामेषां नियतिमहिमा वर्णयेत् कोऽत्र मर्त्यो
धन्या एकादश वयमहो इन्द्रियारामदेवाः।
शर्वो ब्रह्माऽहमपि च तथाऽन्ये सुरेशादयोऽपि
त्वल्लीलाब्धौ परमसुखदे यन्निमज्जाम ईड्य ! ॥ ५० ॥

'हे स्तवनीय परमेश्वर ! इन व्रजवासी गोपोके सौभाग्यकी महिमा अलग रहे, कौन मनुष्य यहाँ उसका वर्णन कर सकता है। पाँच ज्ञानेन्द्रिय, पाँच कर्मेन्द्रिय और एक मन, इन ग्यारह इन्द्रियोके अधिष्ठाता, हम ग्यारहो देवता भी धन्य हैं, क्योकि शिव, मै ब्रह्मा, तथा इन्द्र आदि अन्य देवता भी आपके परम सुखदायी लीलामृत सागरमे गोता लगा रहे हैं' ॥ ५० ॥

तत्रापि स्वैर्जगति विततैरिन्द्रियैश्चाऽर्थलुब्धै-
स्त्वत्पादाब्जस्थितमधुरसं तत्पिबामः सुखेन।
यत्पीत्वैवाऽखिलभवपते ! शान्तिमाप्नोति लोको
मत्वा सर्वं भवगतसुखं नश्वरं त्वां समेति ॥ ५१ ॥

'उसपर भी संसारमे फैली हुई अपनी-अपनी विषयलोलुप इन्द्रियोद्वारा हम लोग आपके चरणारविन्दोके मधुर मकरन्द-रसका सुखपूर्वक पान करते है। जिसे पीकर ही हे अखिल विश्वके स्वामिन् ! मनुष्य सांसारिक सुखको नश्वर समझकर शान्ति पा लेता है— आपके स्वरूपको प्राप्त हो जाता है' ॥ ५१ ॥

अस्मद्भाग्यं तदिह भवतात् पूर्णरूपेण नाथ !
अत्रैवाऽस्य व्रजपशुपतेर्गोकुले जन्मरूपम्।
अत्रत्येषु प्रथितमहिमा कोऽपि तैः पद्रजोभि-
रागत्याऽस्मांस्तृणतरुभवान् पावयिष्यत्यमुष्मिन् ॥ ५२ ॥

'हे नाथ ! यही इन व्रज-गोपराज नन्दके गोकुलमे जन्म लेनेका हमे पूर्णत सौभाग्य प्राप्त हो। क्योकि यहाँ तृण, वृक्ष अथवा लता आदिके रूपमे उत्पन्न हुए हम लोगोको इन व्रजवासियोमे-से कोई प्रख्यात महिमावाला भक्त आकर अपने चरणोकी धूलिसे पवित्र कर देगा ॥ ५२ ॥

स्वामिंस्तत्त्वच्चरणकमलादुद्गतं सद्रजोऽपि
मार्गन्ते ताः श्रुतय इह चाऽनन्तमार्गाश्रिताश्च।
एतादृग् त्वं भवसि च सदा गोकुलेऽस्मिन् स्थितानां
तेषां तासामपि च निखिलं जीवनं प्रेय एकम् ॥ ५३ ॥

'स्वामिन् ! अनन्तमार्गोका आश्रय लेनेवाली वे श्रुतियाँ भी यहाँ आपके चरण कमलोकी पवित्र रज ढूँढती रहती है। ऐसी महिमावाले आप इस गोकुलमे सदा निवास करनेवाले उन गोपो और गोपियोके निखिल जीवन-सर्वस्व तथा एकमात्र प्रियतम है' ॥५३॥

एभ्यः प्रेम्णाऽखिलभवमयस्त्वं मखैकस्वरूपो
लोकाध्यक्षोऽमितफलयुतस्तन्मयोऽप्यत्र नाथ ! ।
किं किं दास्यस्यथ विनिमये तत्फलं चेति मत्वा
चेतोऽस्माकं गतभयमपि खिद्यते मोहमाप्य ॥ ५४ ॥

'नाथ ! आप सम्पूर्ण विश्वमय है। यज्ञ एकमात्र आपका स्वरूप है। आप सम्पूर्ण लोकोके अध्यक्ष, अनन्त-फलसे सम्पन्न, तथा स्वय फलस्वरूप है। तो भी आप इन व्रज-वासियोको इनके प्रेमके बदले कौन-कौन सा फल देगे, इस बातका विचार करके हमारा निर्भय-चित्त भी मोहको प्राप्त होकर खिन्न हो जाता है' ॥ ५४ ॥

आश्चर्यं तत्सगरलपयादानदक्षा बकी सा
त्वां ब्रह्मैवाऽखिलभवपतिं द्वेषतोऽप्याप देव ! ।
किं लप्स्यन्ते त इह भगवंस्त्वत्कृते यैः स्वसंज्ञं
सर्वं दत्तं पतिसुतयुतं गेहदेहाशयादि ॥ ५५ ॥

'देव ! भगवन् ! आश्चर्यकी बात है कि विषमिश्रित दूध पिलानेमे दक्ष, वह पूतना आपसे द्वेष रखनेपर भी अखिल ब्रह्माण्डाधिपति आप परम ब्रह्म परमात्माको ही प्राप्त हो गयी। फिर जिन्होने आपके लिए अपनी कही जानेवाली सारी वस्तुयें दे दी हैं, पति-पुत्र, गेह-देह और अन्त करण आदिको भी समर्पित कर दिया है, वे गोप, गोपियाँ यहाँ आपसे उसकी अपेक्षा भी उत्कृष्ट कौन सा फल प्राप्त करेगी ॥ ५५ ॥

रागद्वेषादय इह सुखं तं निबध्नन्ति तावत्
स्वात्मप्रेम्णा तव पदयुगं यो न गृह्णाति यावत् ।
यन्मोक्षाख्यः प्रियविषयदस्तद्गृहस्थाश्रमोऽपि
तावत् कारागृहमिव विभो ! त्वां भजन्ते न यावत् ॥ ५६ ॥

'जो जब तक अपने आन्तरिक प्रेमसे आपके युगल-चरणोको अपना नही बना लेता, तबतक ही उसे राग और द्वेष आदि दोष बाँधते हैं। विभो ! गृहस्थलोग जबतक आपका भजन नही करते हैं, तबतक मोक्षनामक प्रिय-विषयको देनेमे समर्थ गृहस्थ आश्रम भी कारागारके ही तुल्य ( बन्धनकारक ) है' ॥ ५६ ॥

सोऽहं चेमे प्रियविषयकाः स्थायिनो ह्यघरूपा
मन्वानास्ते विततमसा मोहमाप्ता अजस्रम् ।
बध्यन्ते हा ! जगति निगडैस्तैरसन्मोहरूपै-
स्तावत्तत्त्वच्चरणकमलं न प्रगृह्णन्ति यावत् ॥ ५७॥

'यह मै हूँ, ये मेरे प्रिय तथा स्थायो एवं मनोरम विषय है' ऐसा माननेवाले और बढे हुए तमोगुणसे निरन्तर मोहमे डूबे हुए लोग ससारमे असत् मोहरूपी बेडियो द्वारा तभीतक बँधे रहते हैं, जबतक कि आपके चरणकमलोको दृढताके साथ नही पकड लेते हैं ॥ ५७ ॥

निष्कामोऽपि स्वजनवरदस्त्वं सकामश्च भूत्वा
भूयो भूयोऽपरिमितगुणोऽस्यूर्णनाभिर्यथाऽत्र ।
लीलाः कृत्वा बहुतनुगतो निष्प्रपञ्चोऽपि नाथ !
कुर्वन्नित्थं जयसि नितरां सप्रपञ्चो यथेड्य ! ॥ ५८ ॥

'हे नाथ ! आप निष्काम होते हुए भी अपने भक्तजनोको वर देनेके लिए उद्यत हो, सकाम बन जाते है और जैसे मकडी अपने शरीरसे ही विस्तृत जाला प्रकट कर देती है, उसी प्रकार आप बार-बार अनन्तगुण सम्पन्न और असख्य शरीरगत होकर विविध लीलाएँ करते हैं। स्तवनीय परमेश्वर ? यद्यपि आप प्रपञ्चसे दूर है, तथापि प्रपञ्चयुक्त-से हो जाते है। ऐसा करनेवाले आपकी सदा ही जय हो ॥ ५८ ॥

स्वामिन्नित्थंकरण इह चाऽनन्तलील ! त्वयाऽपि
पुण्यो हेतुर्विलसति महान् सच्चिदानन्दरूपः ।
यस्त्वं भक्तान् स्वपदपतितानुद्धरन्नात्ममोहा-
दानन्दाख्यं पदमपि निजं ख्यापयंस्तान् वृणीषे ॥ ५९ ॥

'यहाँ अनन्त लीलाओका विस्तार करनेवाले मेरे नाथ ? आपके ऐसा करनेमे यह महान् सच्चिदानन्द-स्वरूप पवित्र कारण सुशोभित होता है कि आप अपने चरणोमे पडे हुए भक्तजनोका उनके आन्तरिक मोहसे उद्धार करते है और अपने परमानन्दमय-पदको विख्यापित करते हुए उन सबको अपनाते हैं ॥ ५९ ॥

सम्यग् जानाम्यहमिदमदो विश्वरूपं विशालं
सूक्ष्मं तच्चाऽसममभयदं ये ब्रुवन्तीह नाथ !
जानन्तु त्वां त इह भगवन् ! नाहमेवं समर्थो
ज्ञातुं चेष्टा वचनमनसोर्दूरगास्तास्तवेश ! ॥ ६० ॥

हे नाथ ! हे ईश्वर ! जो ऐसा कहते है कि मै इस विशाल विश्वको तथा उस सूक्ष्म, अनुपम एव अभयदायक-तत्त्वको भी अच्छी तरह जानता हूँ। वे ऐसा कहने या जाननेवाले लोग यह जानते रहे। परन्तु भगवन् ! मै तो यहाँ मन और वाणीसे दूरवर्तिनी आपकी चेष्टाओको उस तरह जाननेमे सर्वथा असमर्थ हूँ ॥ ६० ॥

यस्मिन् विश्वं विपरिणमते यश्च विश्वाधिपोऽस्ति
यस्मात् सर्वं प्रभवति जगन्नाशमभ्येति भूयः ।
ज्ञाता स त्वं सकलजगतामेकसारोऽविनाशी
तं त्वाऽनुज्ञापयति विधिवद् गन्तुकामो विरिञ्चिः ॥ ६१ ॥

'प्रभो ! जिसमे यह सारा विश्व विभिन्नरूपोमे परिणत होता रहता है, जो इस विश्वका अधिपति है, जिनसे सारा जगत् प्रकट होता है और फिर जिनमे ही उसका लय होता है, वे आप ही सबके ज्ञाता, समस्त ससारके एकमात्र सार और अविनाशी परमेश्वर है। अब यह ब्रह्मा अपने लोकमे लौट जानेके लिए आपसे विधिवत् आज्ञा माँगता है ॥ ६१ ॥

भक्ताकर्षणशील ! सद्व्रत ! विभो ! त्वं वृष्णिवंशात्मकं
पद्मं हृद्यगुणं स्वतो विकसितं कर्तुं रवी राजसे ।
भूदेवद्विजगोगणोदधिशशी तद्वृद्धिकृन्न्यायत
एवं सत्यरतश्च सत्प्रियहितस्त्वं सत्यदृग् भ्राजसे ॥ ६२ ॥

'भक्तजनोंको अपनीओर आकर्षित करनेवाले श्रीकृष्ण ! उत्तम व्रतका पालन करनेवाले प्रभो ? आप मनोरम गुणोसे युक्त, वृष्णिवशरूपी कमलको विकसित करनेके लिए सूर्यरूपसे सुशोभित हो रहे है। भूमि, देवता, ब्राह्मण तथा गोसमुदायरूपी महासागरके उल्लसित करनेके लिए आप पूर्णचन्द्रके समान शोभा पाते हैं तथा न्यायके अनुसार उन सबका सबर्द्धन करनेवाले है। इतना ही नही, आप सत्यपरायण, सत्पुरुषोके प्रिय एव हितैषी तथा सत्यके द्रष्टारूपसे उद्भासित होते है ॥ ६२ ॥

संवृद्धा भुवने खला बहुविधा धर्मा विनष्टा विभो !
पाखण्डा वितता अधर्मबहुला विश्वं ग्रसन्त्येव ते ।
तांस्तान्नाशयितुं बुधेषु दयितुं तेजोभिरात्मोद्भवै-
रुद्भाव्य स्वत आत्मना स्वमिह भो ! जाताय तत्ते नमः ॥६३॥

'सर्वव्यापी प्रभो ? ससारमे अनेक प्रकारके दुष्टलोग बढ गये है। धर्मका नाश हो रहा है। जिसमे अधर्मकी बहुतायत है, ऐसे पाखण्ड फैल गये हैं और वे ससारको निगले जा रहे है। आप उन दुष्टो और पाखण्डोका नाश करने तथा ज्ञानी-सत्पुरुषो पर दया करनेके लिए अपने तेजसे स्वय ही अपने आपको उस रूपमे प्रकट करके भूतलपर अवतीर्ण हुए है। ऐसे आपको मेरा नमस्कार है' ॥ ६३ ॥

अणोरणीयांसममेयमीशं महन्महीयांसममोघमेनम् ।
भक्त्या परिक्रम्य ततस्त्रिवारं प्रणम्य धाताऽथ ययौ स्वधिष्ण्यम् ॥ ६४ ॥

जो सूक्ष्मसे भी अत्यन्त सूक्ष्म, तथा महान्से भी अत्यन्त महान्, अप्रमेय एवं अमोघ परमेश्वर है, उन श्रीकृष्णकी भक्तिभावसे तीन बार परिक्रमा करके प्रणाम करनेके अनन्तर ब्रह्माजी अपने लोकको चले गये ॥ ६४ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।**
**षट्पञ्चाशोऽप्यभात् सर्गो महाकाव्ये स्तवात्मके ॥ ६५ ॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्ण चरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे यह छप्पनवाँ सर्ग पूरा हुआ ॥ ६५ ॥



# सप्तपञ्चाशः सर्गः

[ ब्रह्मण स्वधामगमनम् । भगवतो वनभोजनम् ।
गृह प्रत्यागमनञ्च । ]

( वसन्ततिलकावृत्तम् )

**एवं सत्यलोकमसमं प्रगते विरिञ्चौ वत्सान् सखींश्च पुरताऽथ निरीक्षमाणः ।**
**ईशोऽहसत् सुमधुरं धृतयोगशक्ति र्गोवत्सपालकमिषेण विहर्तुकामः ॥१॥**

जब ब्रह्माजी अपने अनुपम सत्यलोकको चले गये, तब पहलेके बछडो और अपने सखाओको सामने उपस्थित देख, अपनी योगशक्तिको समेट लेनेवाले ईश्वर श्रीकृष्ण गोवत्स-पालकरूपसे विहार करनेके लिए वहाँ मधुर हास्यच्छटा बिखेरते हुए हँसने लगे ॥ १ ॥

**अन्धेतमस्यथ घटादिपदार्थकानां ज्ञानं स्वतो न भवतीह यथा तथैव ।**
**तन्मित्रवत्सशिशुरूपधरेषु तेषु देवर्षियोगिनिवहेष्वपि नाऽभवत् तत् ॥२॥**

जैसे घने अन्धकारमे रखे हुए घटादि पदार्थोंका ज्ञान किसीको स्वत नही होता है, उसी प्रकार श्रीकृष्णके मित्र, ग्वाल-बालो और बछडोका रूप धारण करनेवाले उन भगवद्-विग्रहोके विषयमे देवर्षियो और योगियोको भी कुछ ज्ञान न हो सका। ( क्योकि उन सबकी बुद्धि मायान्धकारसे मोहित हुई थी। ) ॥ २ ॥

**इत्थं विमोह्य सकलाञ्छिशुवत्सकान् स्वान् पश्यन्नितस्तत उमेशमतिः कृतार्थः ।**
**तानानिनाय यमुनापुलिनं यदस्मिन्नास्थाय भक्ष्यमघसन् ससुखं पुरा ते ॥३॥**

इस प्रकार समस्त ग्वाल-बालो और बछडोको मोहित करके इधर-उधर देखते खोजते हुए भगवान् शिवके समान कल्याणमयी बुद्धिवाले श्रीकृष्ण, मानो उन्हे पाकर कृतार्थ हो गए। फिर वे उन्हे यमुना तटपर ले आए, जहाँ पहले बैठकर उन सब लोगोने सुखपूर्वक भोजन आरम्भ किया था ॥ ३ ॥

**हन्तैकहायनमिते समये प्रयाते-**
**ऽप्यत्र स्थिताः शिशुगणाः परमस्य पुंसः ।**
**मायाविमोहितधियो घटनां समस्तां**
**तां नाऽस्मरन् विधिकृतां विगतां च लीलाम् ॥ ४ ॥**

हर्षकी बात है कि एक वर्षका समय व्यतीत हो जानेपर भी वहाँ बैठे हुए ग्वाल-बाल परमपुरुष श्रीकृष्णकी मायासे मोहितचित्त होनेके कारण ब्रह्माजोके द्वारा घटित हुई सारी घटना तथा बीती हुई लीलाको भी भूल गए ॥ ४ ॥

देवर्षियोगिनिवहाश्च सुबुद्धयस्ते मायाविनोऽपि सुतरां परिपूर्णबोधाः ।
ते ज्ञानिनोऽप्यहह ! नित्यममुष्य मायाबद्धा भ्रमे जगति मूढधिया भ्रमन्ति ॥५॥

देवर्षियों और योगियोके समुदाय उत्तम-बुद्धिसे सम्पन्न, मायावी, परिपूर्ण बोधवान् और ज्ञानी होते है, तो भी इन भगवान्‌की मायासे नित्य बँधे रह कर इस भ्रममय जगत्मे मूढबुद्धिसे भ्रमित होते रहते हैं। (जब इनकी ऐसी दशा है, तब बेचारे ग्वाल-बालोके लिए क्या कहना है?) ॥ ५ ॥

चित्रं न तत्र किमपीश्वरताविमूढा-
स्ते व्यस्मरन्निति कथाऽनुभवात्मिकैव ।
यन्मोहितं जगदिदं पितरः सुतान् स्वान्
दग्ध्वा चितासु किमिह स्वमृतिं स्मरन्ति ? ॥६॥

उसमे कोई आश्चर्यंकी बात नही है। वे ईश्वरकी मायाशक्तिसे मोहित होनेके कारण ही सब कुछ भूल गए थे। यह कथन अनुभवरूप हो है। भगवान्‌की मायासे तो यह सारा जगत् ही मोहित है। यहाँ पिता अपने पुत्रोको चितामे जला कर क्या अपनी अवश्यम्भाविनी मृत्युको याद रखते हैं! ॥ ६ ॥

तद्विस्मृतात्मकमिदं जगदेव सर्वं हन्ताऽऽत्मरूपमपि विस्मृतवद्विभाति ।
तस्मान्न चित्रमिह गोपसुतैः प्रमुग्धैस्तत्कालविस्मरणमस्य हितैः सुकृत्यैः ॥७॥

यह सारा जगत् ही विस्मरणात्मक है। अपने आत्माका स्वरूप भी यहाँ भूला सा ही प्रतीत होता है। अत भोले-भोले गोपशिशुओंके लिए भगवान्‌के हितकारक उत्तम कृत्योद्वारा एक वर्षके समयको भूल जाना कोई विचित्र बात नही है ॥ ७ ॥

प्राणप्रियस्य तदमुष्य वियोगमाप्य वर्षात्मकं समयमप्यतिवाह्य मौग्ध्यात् ।
तत्र स्थिताः शिशव आत्महितं स्वभक्ष्यं ह्यश्नन्त आगतममुं तदनु व्यपश्यन् ॥८॥

अपने प्राणप्यारे सखाका वियोग पाकर उसीमे एक वर्षका समय बिताकर भी भोलेपनके कारण वहाँ बैठे हुए उन ग्वाल-बालोने अपने लिए हितकर भोजन आरम्भ करते हुए देखा कि श्रीकृष्ण आ रहे हैं ॥ ८ ॥

दृष्ट्वैवमत्र शिशवः सहसा तमूचुरेह्येहि कृष्ण ! धृतशक्तिरलौकिकोऽसि ।
स्यात् स्वागतं तव सखे ! यदुरुक्रमोऽसि सर्वज्ञ ईश्वरसमोऽसि शिशुप्रियोऽसि ॥९॥

उन्हे देखते ही वहाँ गोपकुमार सहसा बोल उठे—'कृष्ण! आओ, आओ। तुम अलौकिकशक्ति-सम्पन्न हो। सखे! तुम्हारा स्वागत है। क्योकि तुम लम्बे डग (व्यवसाय) भरनेवाले हो। ईश्वरके समान सर्वज्ञ हो तथा हम ग्वाल-बालोके परम प्रिय हो ॥ ९ ॥

नैकोऽप्यभोजि कवलो विगते त्वयीशे ह्यस्माभिरप्यनघ! साधु कृतं त्वयाऽद्य।
तद्भुङ्क्ष्व तिष्ठ सममत्र यथा पुरा त्वं यद्भुञ्ज्महे वयमपीह सुखं कथाभिः ॥१०॥

'प्रभो ! तुम्हारे चले जानेपर हमने भी यहाँ एक ग्रास (कौर) भी नही खाया है। तुमने अच्छा किया, जो आ गए। अब आओ, हमारे साथ यहाँ बैठो और पहलेकी तरह भोजन करो। हम सब लोग यहाँ सुखपूर्वक बाते करते हुए आहार ग्रहण करें' ॥ १० ॥

प्रत्याहृतानथ निदर्श्य च वत्ससङ्घान् संगम्य तैः सममभोघगतिर्मुकुन्दः।
ईषद्विहस्य पुनरत्र पुरेव तेषां मध्ये स्थितः स शिशुराट् तदिमान् विलोक्य ॥११॥

अपने द्वारा लौटाकर लाये गए बछडोको दिखा कर उन सखाओके साथ मिलकर अमोघगतिवाले शिशुराज मुकुन्द किञ्चित् मुस्कराते हुए पूर्ववत् उन सबके बीचमे उनपर दृष्टिपात करते हुए बैठ गए ॥ ११ ॥

कृत्वा कथा हिततमास्तत एकवर्षपूर्वं कृतं रुचिरकर्म शयोर्वधादि।
तान् स्मारयन् परिनिदर्श्य च चर्म तस्य सोऽन्नाऽघसत् कृतकगोपशिशुस्तदन्नम् ॥१२॥

तदनन्तर हितकारिणी बातें करते और एक वर्ष पूर्व किए गए अघासुरके वध आदि रुचिर कर्मकी याद दिलाते हुए कृत्रिमगोप-शिशु श्रीकृष्ण, उस अजगरके सूखे चमडेको दिखाकर उन सबके साथ वहाँ अन्न भोजन करने लगे ॥ १२ ॥

तृप्तेषु मित्रनिवहेष्वघचर्ममध्यात् प्रस्थाप्य वत्सनिवहाननुगोऽयमेषाम्।
गोष्ठं स्वमागमदितो नवधातुभिस्तैर्बर्हादिभिश्च परिभूषितपूर्ववेषः ॥१३॥

सारी मित्रमण्डलीके तृप्त हो जानेपर अघासुरके चमड़ेके बीचसे बछडोको ले जाकर उनके पीछे-पीछे चलते हुए श्रीकृष्ण, वहाँसे अपने व्रजमे आए। उस समय उन्होने नूतन गैरिक आदि धातुओ तथा मोरपख आदिसे अपनेको विभूषित करके पूर्ववत् वेष धारण कर लिया था॥१३॥

बालास्तथैव परिशोधितपूर्ववेषा मित्रं स्वमन्वगुरमुष्यगुणान् प्रगाय।
आध्माय वेणुदलशृङ्गदलानि हर्षादाजग्मुरुन्नतधियो व्रजमध्यमित्थम् ॥१४॥

ग्वाल-बाल भी उसी प्रकार पूर्ववेषको परिशुद्ध करके अपने उन प्रिय-सखाके पीछे-पीछे उन्हीके गुण गाते हुए चले। वे वशी, सिग, तथा पत्ते आदिके बाजे बजाते, हर्ष एव उत्साहयुक्त चित्तसे व्रजके भीतर आ पहुँचे ॥ १४॥

एवं विधाय विविधान् स्वगतान् विनोदानाब्रह्मकीटभवजीवगणान् प्रतोष्य।
गोष्ठं विवेश भगवान् व्रजगोपगोभिर्गोपीभिरुत्सुकदृशाऽऽत्मनि नीयमानः ॥१५॥

इस प्रकार भाँति-भाँतिके स्वगत लीला-विनोद करते तथा ब्रह्मासे लेकर कीटपर्यन्त, समस्त जीवोको सन्तोष देते हुए भगवान्ने व्रजमे प्रवेश किया। उस समय व्रजके गोप और गोपियाँ उत्कण्ठित नेत्रोसे देखकर उन्हे अपने हृदय-मन्दिरमे ले आ रही थी ॥ १५ ॥

तेषां मध्ये स्फुरितगतयो गोपबालास्तदानीं ।
प्रध्मायैवं तरुदलयुगं वेणुशृङ्गे च हर्षात् ॥
नृत्यन्तश्चाऽसममिह विभोः सद्गुणांस्तानधःस्थान् ।
गायं गायं हृदयविगतं भावमाचख्युरेतान् ॥१६॥

उनके बीचमे फुदकती हुई चालसे चलते हुए ग्वाल-बाल उस समय हर्षसे पत्ते, मुरली और सीग बजाकर अनुपम रीतिसे नाचने लगे। तथा उन भगवान्के इन निम्नाङ्कित सद्‌गुणोका गान करते हुए अपना हार्दिक-भाव प्रकट करने लगे ॥ १६ ॥

शृणुत शृणुत लीला गोपराजप्रियस्य नवजलधरकान्तेर्मित्रवर्यस्य भूयः ।
तमपरिमितरूपं वाहसं योऽवधीद्धो ! वयमपि विपिनेऽस्माद्रक्षिता येन चाऽद्य ॥१७॥

'अरे ओ व्रजके लोगो ! नूतन जलधरके समान श्याम कान्तिवाले, गोपराजके प्रिय-पुत्र तथा हमारे मित्रप्रवर श्रीकृष्णकी पुन नई-नई लीलाये सुनो, सुनो ! जिसने विशाल रूपधारी अजगरका वध किया है और उससे वनमे आज हम लोगोकी भी रक्षा की है' ॥ १७ ॥

आनन्दमग्नाः श्रुततद्गुणास्ते सोत्कण्ठदृष्ट्याऽथ निरीक्ष्य चैनम् ।
नीत्वा निजैर्नेत्रपथैस्तमन्तस्ततस्त्विमे तन्मयतामवापुः ॥१८॥

श्रीकृष्णका गुणगान सुनकर आनन्दमग्न हो, उत्कण्ठित दृष्टिसे उन्हे देखकर अपने नेत्र-मार्गसे अन्त करणमे ले आकर वे सब गोपगण उनके साथ तन्मयताको प्राप्त हो गए ॥१८ ॥

कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते ।
सर्गोऽगात् सप्तपञ्चाशो महाकाव्ये स्तवात्मके ॥१९॥

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे यह सत्तावनवाँ सर्ग पूरा हुआ ॥ १९ ॥



# अष्टपञ्चाशः सर्गः

[ भगवतः स्वरूपनिर्देशनपूर्वकं ग्रन्थनिर्मातुर्ग्रन्थस्याऽस्य प्रथमखण्डमात्रसमाप्तिसूचनम् ।
निष्किञ्चनोऽस्तीत्यादिना सहृदयविद्वद्वरेभ्यः शुभाशीर्वादयाचनञ्च । ]

( वंशस्थेन्द्रवंशयोरुपजातिवृत्तम् )

विद्वांस ! इत्थं ववृधे निरन्तरं प्रेमा तदस्मिन् व्रजवासिनामिह ।
आनन्दसच्चिन्मय एकरूपकः परात्मकोऽगोचर एव वाग्धृदोः ॥१॥

विद्वज्जनो ! इस प्रकार इन श्रीकृष्णमे यहाँ व्रजवासियोका प्रेम निरन्तर बढने लगा। जो सच्चिदानन्दस्वरूप एकरूप तथा मन और वाणीके अगोचर परमात्मा ही हैं ॥ १ ॥

तदत्र पश्यन्तु दिशन्तु सन्मतिं परोद्भवे गोपसुते तथाविधे: ।
कोऽर्थो भवेत् बुद्धिमतां सतामपि स्वप्रेमवृद्धौ किमिदं विचार्यताम् ? ॥२॥

आप लोग इस विषय पर दृष्टिपात करे और इस तुच्छ लेखकको नेक सलाह भी दे कि वैसे गोपनन्दन श्रीकृष्णमे, जिनकी उत्पत्ति दूसरे ( अर्थात् वसुदेव ) से हुई थी, बुद्धिमान् सत्पुरुषोका भी, जो अपने-से अधिक प्रेम बढने लगा, उसमे उनका क्या प्रयोजन था और इसमे क्या कारण है ? । इसपर विचार किया जाय ॥ २ ॥

आब्रह्मकीटेषु विराजते हि यच्चैकं स्वयंज्योतिरनन्यदव्ययम् ।
किमेतदत्रैव बुधाः स्वतो वयं सिद्धान्तदृष्ट्याऽद्य निभालयामहे ॥३॥

ब्रह्मासे लेकर कीटपर्यन्त समस्त प्राणियोमे जो एक अद्वितीय, निर्विकार एव स्वयप्रकाश तत्त्व विराजमान है, वह क्या है ? विद्वानो ! हम इसी विषयमे सिद्धान्तकी दृष्टिसे स्वत विचार करे ॥ ३ ॥

यद्देहिनां जन्मभृतां तनुष्विह स एष आत्मा च विदृश्यते स्थितः ।
नित्यं प्रियः स्वेष्टतरश्च सोऽव्ययः समश्च सर्वेष्वपि सत्यमेव तत् ॥४॥

जन्म लेनेवाले देहधारियोके शरीरोमे वह प्रत्यक्षकी भाँति अनुभवमे आनेवाला यह आत्मा स्थित दिखाई देता है, वही सबको सदा प्रिय है। सबसे अधिक अभीष्ट है। समस्त विकारोसे रहित और सबमे समभावसे स्थित है। यह बात जो कही जाती है, वह सत्य ही है ॥ ४ ॥

हृद्यं यमाश्रित्य विभिन्नया धिया कल्प्य संचेष्टा मनसः समुद्भवाः ।
कुर्वन्ति कामं विविधाः क्रियाश्च ते संकल्पितानां परिपूरणात्मिकाः ॥५॥

इस मनोरम आत्माका ही आश्रय लेकर ससारके लोग विभिन्न बुद्धि-वृत्तिके द्वारा सकल्प करके मनसे होनेवाली चेष्टाओ तथा सकल्पित कार्योंकी पूर्तिके लिए विविध प्रकारकी क्रियाओको इच्छानुसार करते हैं ॥ ५ ॥

**तथैव तस्यैव कृते यथार्थतो भवन्ति तेषां विषया अपि प्रियाः।**
**कलत्रपुत्रप्रियमित्रबान्धवाः स्निह्यन्त एभिश्च तदर्थलब्धये ॥६॥**

उस प्रिय आत्माके लिए ही वास्तवमे उन प्राणियोको वे-वे विषय प्रिय होते हैं। स्त्री-पुत्र, प्रिय-मित्र, तथा बन्धु-बान्धव भी आत्मप्रीतिकी उपलब्धिके लिए ही प्रिय माने गए हैं। आत्माकी प्रसन्नताके लिए ही लोग इन सबके साथ स्नेह करते है॥ ६ ॥

**आत्मा तदेषामखिलात्मधारिणां प्रेष्ठः स्वतः सिद्ध इतीह निश्चितः।**
**प्रियास्तथाऽन्ये तदपेक्षया मता. सिद्धान्त एवैष सतां श्रुतेश्च हि ॥७॥**

अत. इन समस्त शरीरधारियोके लिए आत्मा ही सबसे बढकर प्रिय है। यह बात यहाँ निश्चितरूपसे स्वत सिद्ध हो गयो। अन्य जो प्रिय वस्तुये है, वे आत्माकी अपेक्षासे ही प्रिय मानी गयी है। यही श्रुतियो तथा सत्पुरुषोका सिद्धान्त है॥ ७ ॥

**शरीरमात्मेति वदन्त उद्धता मन्यन्त एवाऽऽत्मशरीरमीदृशम्।**
**तदस्तु, तेषामपि काय ईदृशः प्रियो भवत्येव विदृश्यते स्फुटम् ॥८॥**

जो शरीरको ही आत्मा कहनेवाले हैं, वे उद्धत लोग भी अपने शरीरको ही आत्माके समान प्रिय मानते हैं। उनकी यह मान्यता रहे। उन्हे भी अपना शरीर ही ऐसा ही प्रिय होता है। यह बात स्पष्ट देखी जाती है॥ ८ ॥

**तद्वत् प्रिया नाऽत्र भवन्ति वस्तुतः कलत्रपुत्राः प्रियमित्रबान्धवाः।**
**पूर्वं शरीरं प्रियमात्मनो हितं पश्चात् प्रियास्ते तदपेक्षयैव तु ॥९॥**

उन्हे शरीरके समान वस्तुत प्रिय स्त्री-पुत्र, प्रिय-मित्र और बन्धु-बान्धव भी नही होते हैं। उनके लिए पहले अपना शरीर प्रिय एव हितकर है। पीछे उसकी अपेक्षासे ही वे स्त्री-पुत्रादि भी प्रिय होते हैं॥ ९ ॥

**कायो ममाऽयं तदहं स्वभावतो विशिष्ट एवं ममतामयो यदि।**
**तद्देह आत्मत्वमिदं च दृश्यते यस्मिन् विजीर्यत्यपि सच्चिदात्मकम् ॥१०॥**

'यह मेरा शरीर हैं, मै स्वभावत' दूसरोसे विशिष्ट हूँ'। इस प्रकार यदि शरीरके प्रति ममता हो तो उस शरीरमे उसके जरा-जीर्ण होनेपर भी सच्चित्-स्वरूप इस आत्मत्वका दर्शन स्पष्ट होता है॥ १० ॥

**यदत्र चाशा परिवर्धतेऽक्षया जीयासमित्यादिवृथाभिमानिनी।**
**कैषा ? तदात्मा सकलान्तरस्थितः सच्चित्स्वरूपं प्रकटय्य राजते ॥११॥**

'मै सदा जीवित रहूँ' इत्यादि रूपसे व्यर्थ अभिमानवाली जो अक्षय आशा यहाँ बढती रहती है, यह क्या है ? इससे सिद्ध है कि सबके भीतर अपने सच्चित्स्वरूपको प्रकट करके आत्मा विराजमान है॥ ११ ॥

**तत्स्थावराणां जगतां च देहिनां स्वात्मा प्रियः सर्वमतश्च वस्तुतः।**
**तस्यैव हेतोः सकलाश्चराचरा यतन्त एवाऽत्र समाहिता हि ते ॥१२॥**

इसलिए चराचर देहधारियोको वास्तवमे अपना आत्मा ही प्रिय है। यही सर्व-सम्मत सिद्धान्त है। उसीके लिए समस्त स्थावर-जगम प्राणी यहाँ प्रयत्नशील होते हैं और उसीके हित-साधनमे एकाग्रचित्त रहते है ॥ १२ ॥

**तमात्मरूपं भगवन्तमव्ययं श्रीकृष्णतत्त्वं परिचिन्त्य चाऽर्थतः।**
**निरूपयध्वं स्वहृदि व्यवस्थितं स्वात्मानमेवाऽमुमथाऽऽप्य तद्विदः ! ॥१३॥**

अनात्मवादी विद्वानो ! अब आप लोग यह जान ले कि षड्विध ऐश्वर्यसे सम्पन्न, तथा समस्त भाव-विकारोसे रहित, जो श्रीकृष्णतत्त्व है, वह वास्तवमे सबका आत्मरूप है। उन अपने आत्मभूत श्रीकृष्णको आप लोग अपने हृदयाकाशमे विराजमान देखे ॥ १३ ॥

**मायां गृहीत्वा स्वत उद्भवां निजां छायां यथात्मप्रतिरूपगामिनीम्।**
**स भाति देहीव गुणीव निर्गुणो जगद्धितायाङ्ग ! धृतावतारकः ॥१४॥**

आत्मप्रतिरूपगामिनी अपनी छायाकी भाँति अपने-आपसे ही उत्पन्न मायाका आश्रय लेकर वे श्रीकृष्ण देह-रहित होनेपर भी देहधारीकी भाँति तथा निर्गुण होनेपर भी गुणवान्‌की भाँति प्रतीत होते है। प्रिय सज्जनो ! उन्होने जगत्‌के हितके लिए इस भूतलपर अवतार धारण किया है ॥ १४ ॥

**जानन्ति ये तं विभुमक्षरं हितं चराचरात्मानममेयशक्तिकम्।**
**ते नैव मुह्यन्ति कदापि वस्तुतो ज्ञात्वा जगत्सर्वममुष्य रूपकम् ॥१५॥**

जो उन भगवान् श्रीकृष्णको सर्वव्यापी, अविनाशी, सर्वहितैषी, चराचर जगत्‌के आत्मा और अप्रमेय-शक्तिशाली जानते हैं, वे वस्तुत. सम्पूर्ण जगत्‌को उन्हीका रूप समझ कर कदापि मोहित नही होते हैं ॥ १५ ॥

**यद्वस्तुसत्ताऽत्र विदृश्यते भवे स्थिरेव तस्या अपि तत्त्वरूपणात्।**
**तत्प्राप्यतेऽस्माभिरिमाञ्च संततां जानीत कृष्णं स्वगुरुं महेश्वरम् ॥१६॥**

इस ससारमे जो वस्तु-सत्ता स्थिर सी दिखाई देती है, उसके भी तत्त्वका निरूपण करने पर वह हमे स्वत प्राप्त होती है। इस सत्ताको सर्वत्र व्यापक श्रीकृष्णरूप जानना चाहिए। वे श्रीकृष्ण ही हम सबके अपने गुरु एव महेश्वर हैं ॥ १६ ॥

**तद्ब्रह्मभिन्नं परमार्थकं भवे न दृश्यते वस्त्वपि तद्विचारणे।**
**यन्नामरूपात्मकमेव वस्तुतो विशोभते विश्वमिदं त्वितस्ततः ॥१७॥**

सत्तत्त्वका विचार करनेपर इस ससारमे ब्रह्मसे भिन्न कोई भी वस्तु परमार्थरूप नही दिखाई देती है। क्योकि इधर-उधर सब ओर जो यह विश्व सुशोभित होता है, वह वास्तवमे नाम-रूपमय ही है॥ १७॥

**तदेव नीलं मह उत्तमं स्फुरत् संकीर्त्यते ब्रह्मपदेन सूरिभिः।**
**धृतावतारं परिपूर्णरूपतः श्रीकृष्णनाम्ना प्रबभूव यद्भुवे ॥१८॥**

जो पूर्णावतार लेकर ससारमे श्रीकृष्ण नामसे प्रकट हुआ, उस कान्तिमान् उत्तम नील-तेजको ही ज्ञानीजन ब्रह्म-पदसे प्रतिपादित करते हैं॥ १८॥

**विभुं तमात्मानमिहाऽऽश्रयन्नरो गायंश्च लीला जगतोऽस्य पावनीः।**
**आत्मानमेवोद्धरते हृदिस्थितं विधूय मायातिमिरं गतव्यथम् ॥१९॥**

उन सर्वव्यापी सर्वात्मा श्रीकृष्णका इस जगत्मे आश्रय लेकर जो मनुष्य उनकी जगत् पावनी लीलाओका गान करता है, वह बिना किसी क्लेशके हृदयस्थित मायामय-अन्धकारको दूर करके निश्चय ही अपना उद्धार कर लेता है॥ १९॥

**ये तादृशाः सन्ति त एव वस्तुतो धन्या महान्तश्च विवेकिनो हि ते।**
**उद्धारितं तैरखिलं जगत् स्वतो भूभाररूपा इतरे जनास्त्वहो! ॥२०॥**

जो इस प्रकार भगवान्का आश्रय लेनेवाले हैं, वास्तवमे वे ही धन्य, महापुरुष तथा विवेकी हैं। उन्हीके द्वारा समस्त ससारका उद्धार होता है। अहो! इनसे भिन्न जो दूसरे लोग हैं, वे तो स्वत इस भूतलके भाररूप ही हैं॥ २०॥

**संप्राप्य तद्रूपममोघदर्शनं भूत्वा स्वयं ब्रह्म जगत्सु विस्तृतम्।**
**कुर्वन्ति चाऽस्मानपि ते सदाशिषा तदत्र लग्नानिति मे मतिः स्थिरा ॥२१॥**

वैसे महापुरुष ही, जिसका दर्शन सफल है, ऐसे स्वरूपको पाकर स्वय जगद्व्यापक ब्रह्म होकर हम जैसे लोगोको भी अपने शुभाशीर्वादसे उस ब्रह्मकी आराधनामे सलग्न करते हैं। ऐसा मेरा सुस्थिर विचार है॥ २१॥

**तयैव तत्कृष्णचरित्रवर्णने संप्रेरितोऽहं स्वगुरोः पदाम्बुजम्।**
**आश्रित्य काव्याकृति कृष्णजीवनं व्यवर्णयं तद्गतमानसः स्तुवन् ॥२२॥**

उस विचारसे ही श्रीकृष्ण-चरित्र वर्णनके लिए प्रेरित होकर मैने अपने गुरुदेवके चरणारविन्दका आश्रय ले, तद्गतचित्त हो, स्तुति करते हुए काव्यके आकारमे श्रीकृष्णके जीवन-चरित्रका वर्णन किया है॥ २२॥

**तत्कृष्णपादाम्बुरुहासवामृतं पिबेयुरत्रैव तमाश्रिता बुधाः।**
**यत्प्रीतिभाजां भवतां पदेष्वहं लुठाम्यजस्रं सफलीकृतश्रमः ॥२३॥**

अत उन्हीका आश्रय ले विद्वज्जन इस काव्यमे ही उन भगवान् श्रीकृष्णके चरणारविन्द-रसामृतका पान करे। जिससे उस चरणाविन्द—रसामृतके प्रति प्रेम रखनेवाले आप लोगोके चरणोमे मै सफल-परिश्रम हो निरन्तर लोटता रहूँ ॥ २३ ॥

**निष्किञ्चनोऽस्ति भगवान् हरिरव्ययोऽसौ निष्किञ्चनाः प्रियजनाश्च तदस्य सन्ति।**
**निष्किञ्चनोऽस्म्यहमपीह वदन्तु तद्भो निष्किञ्चनत्वमिदमेव भवेत्त्वयीति ॥२४॥**

वे अविनाशी भगवान् श्रीकृष्ण अकिञ्चन (सग्रहरहित) है। उनके प्रिय भक्तजन भी अकिञ्चन ही होते हैं और मै भी यहाँ अकिञ्चन ही हूँ। अत हे सन्त-महात्माओ! आप लोग मुझसे इतना ही कह दे कि "तुममे यही अकिञ्चनता बनी रहे" ॥ २४ ॥

**ग्रन्थविस्तरभयादतः परं यन्मयाऽस्ति लिखितं मुदावहम्।**
**न प्रकाश्यत इहाऽद्य तत्पुनः प्राकाश्यमानेष्यति स स्वयं प्रभुः ॥२५॥**

इसके बादका आनन्ददायी प्रसङ्ग, जो मैने लिख रखा है, ग्रन्थ बढ जानेके भयसे इस समय यहाँ प्रकाशित नही किया जाता है। उसे पुन कभी स्वय भगवान् ही प्रकाशमे लायेगे॥२५॥

**इत्थं भागवतं पूर्णं लिख्यतेऽत्र मया विभोः।**
**चरित्रं कृष्णसत्कीर्तिं प्रख्यापयितुमव्ययाम् ॥२६॥**

इस प्रकार भगवान् श्रीकृष्णकी अक्षय सत्कीर्तिका प्रचार-प्रसार करनेके लिए मेरे द्वारा पूर्ण-भागवत चरित्र लिखा जा रहा है ॥ २६ ॥

**परिपूर्णा भवेच्छीघ्रं तवेच्छेयमिति स्थिराम्।**
**शुभाशिषमिमां मह्यं तद्विद्वांसो ददत्विह ॥२७॥**

विद्वानो! आप लोग मुझे यह सुस्थिर शुभाशीर्वाद प्रदान करें कि "तुम्हारी यह इच्छा शीघ्र परिपूर्ण हो" ॥ २७ ॥

**सर्वसौन्दर्यसम्पूर्णे नव्ये भव्ये सतां प्रिये।**
**काव्येऽस्मिन् प्रथमः खण्डो गतो मौलिकताश्रिते ॥२८॥**

समस्त काव्योचित—सौन्दर्यसे परिपूर्ण तथा सज्जनोको प्रिय लगनेवाले इस नव्य-भव्य मौलिक-काव्यमे यह प्रथम खण्ड पूरा हुआ ॥ २८ ॥

**कृष्णप्रसादस्य कृतौ श्रीकृष्णचरितामृते।**
**अष्टपञ्चाशसर्गोऽगान्महाकाव्ये स्तवात्मके ॥२९॥**

कृष्णप्रसाद घिमिरेकी कृति 'श्रीकृष्णचरितामृत' नामक इस स्तोत्रात्मक महाकाव्यमे यह अट्ठाबनवाँ सर्ग पूरा हुआ ॥ २९ ॥

**इति प्रथमखण्डः समाप्तः**